श्रीलब्धिसूरीश्वरजैनग्रन्थमालायाः षोडशो मणिः [१६]

अनुयोगद्वाराचारसूत्रकृतस्थानसमवायाङ्गसारसङ्कलनात्मिका

# सूत्रार्थमुक्तावलिः ।

## [ सटीका ]



सङ्कलयिता–

जैनरत्न–व्याख्यानवाचस्पति–कविकुलकिरीट–सूरिसार्वभौम–जैनाचार्य

श्रीमद्विजयलब्धिसूरीश्वरजीमहाराजः



प्रकाशक –

चन्दुलाल जमनादास शाह

कार्याधिकारी, श्रीलब्धिसूरीश्वरजैनग्रन्थमाला छाणी [ वडोदरा राज्य ]



वीरस २४७३ विक्रमस २००३ आत्मस ५१ सन १९४६

प्रतीना पञ्चशतम् ]  [ मूल्य पञ्चरूप्यकम्

# નિવેદન

અમારી ગ્રન્થમાલાના સોળમા મણિ તરીકે પ્રસ્તુત શ્રી સૂત્રાર્થમુક્તાવલિને પ્રકાશિત કરતાં અત્યન્ત આનન્દ થાય છે

જેમના પુનીત નામે અમે અમારી ગ્રન્થમાલાનાં પ્રકાશનો કરી રહ્યા છીએ તે જ પૂ૦ આચાર્યદેવની કૃતિઓના પ્રકાશનનુ સૌભાગ્ય અમને સાંપડે છે તે અમારા માટે ગર્વનો વિષય છે

આ પહેલાં આજ પૂ૦ આચાર્યદેવની કૃતિઓ શ્રીતત્ત્વન્યાયવિભાકર ( મૂલ અને સટીક ), સમ્મતિતત્ત્વસોપાન, વૈરાગ્યરસમંજરી, ચૈત્યવન્દનચતુર્વિંશતિ આદિનુ પ્રકાશન વાચકોની સેવામા રજુ કર્યું હતું

આ ગ્રન્થમાં પૂ૦ આગમો પૈકી શ્રી અનુયોગદ્વારસૂત્ર, આચારાંગસૂત્ર, સૂત્રકૃતાંગસૂત્ર, સ્થાનાંગસૂત્ર અને સમવાયાગસૂત્ર આમ પાચ આગમોના સારનુ સકલન થયુ છે યોગોદ્વહન આદિ શાસ્ત્ર નિર્દિષ્ટ યોગ્યતાના અભાવવાળા લોકો પણ શ્રી જિનાગમના ઉપદેશામૃતનુ પાન કરી શકે એ એકમાત્ર હેતુએ આ ગ્રન્થનુ આ મુજબનુ સંકલન કરાયું છે

આ પુસ્તકના પ્રકાશનમા, મુંબઈની શેઠ મોતિશા લાલબાગ જૈન ચેરીટીઝ વતી જ્ઞાનદ્રવ્યની આવકમાંથી તેના માનવતા ટ્રસ્ટી સાહેબોએ ચાર હજાર રૂપિયાની ઘણી જ ઉદાર મદદ કરી છે અને તેથી જ પ્રકાશનના સાધનોની કારમી મોંઘવારીમા પણ આવુ સુંદર પ્રકાશન કરી શક્યા છીએ ઉદાર સાહાય્ય આપવા બદલ ટ્રસ્ટી સાહેબોના અમે આભારી છીએ

સાથે સાથે એ પણ જણાવી દઈએ કે, પૂ૦ મલ્લવાદિસૂરિજી કૃત અને સિંહવાદિ ક્ષમાશ્રમણજીની ન્યાયાગમાનુસારિણી વ્યાખ્યાથી અલકૃત શ્રી દ્વાદશારનયચક્રનુ સંપાદન, ટીકામાં અસ્ત વ્યસ્ત થયેલા મૂલપાઠના પરિશોધનપૂર્વક અને વિષમપદવિવેચન કરવા પૂર્વક પૂ૦ આચાર્યદેવ કરી રહ્યા છે આ ગ્રન્થનુ ત્રણથી ચાર ભાગોમા અમે પ્રકાશન કરવાના છીએ તેના પહેલા ભાગનુ મુદ્રણ મુંબઈના સુપ્રસિદ્ધ નિર્ણયસાગર પ્રેસમાં, સુંદર ક્રીમ્લી લાયન લેઝર પેપરમાં થઈ રહ્યુ છે આગામી વર્ષમા પ્રથમ ભાગ વાચકોની સેવામાં રજુ કરવાની અમે આશા રાખીયે છીએ

અમને વિશ્વાસ છે કે, અમારા અન્ય પ્રકાશનોની જેમ આ પ્રકાશનનુ પણ વિદ્વાનો સ્વાગત કરશે જ

પ્રકાશક

# प्रास्ताविकम् ।



अयि धीरधिषणाधारितभगवद्वीतरागभारतीसुधासारार्थी धीरा !

भवता करकमलयोर्विनिवेश्यमानेयं गीर्वाणवाणीमूर्तिमयी त्रिजगद्वन्द्यार्हदागमापारपारावारसमुद्धृतामलमुक्ताजालजटिला सूत्रव्याख्यारूपा सूत्रार्थमुक्तावली निःशङ्कममन्दानन्दसन्दोहमुपजनयिष्यतीत्यत्र नास्ति शङ्कालेशोऽपि मे ।

सेयमनुयोगसहिताङ्गचतुष्टयसारार्थी न साकल्येन भगवदर्हद्वचनामृतानुकारिणी नवा निजमतिवैभवप्रसरोद्बद्धपदार्थनिकरकरम्बिता कलिमलमलीमसेऽतिकराले साम्प्रतिके काले निरुद्धसञ्चारप्राये मागधवाक्प्रसरे केवलं जगतीतलं गीर्वाणवाणीपरिकर्मितबहुलविचक्षणविस्तीर्णमपि परमपुरुषार्थानन्यसाधारणसाधनचारित्रैकागारतीर्थपतिप्रवचनसुधास्रोतस्विनीसमुच्छलत्तरङ्गशीतलकणनिकरप्रसारणात् पावयितुकामेन मायोवैराग्योज्जीवयितॄमणिगणं श्रीप्रवचनतद्व्याख्याऽऽकरमध्यविशोभमानमुच्चित्य शब्दतस्तदर्थसूत्रमाप्यवदतिसंक्षिप्तां दर्शनान्तरीयपुराणादिवदतिविस्तृतां च शैलीं परिहाय नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्य इतिवत् सूत्रानुवदनसम्भविष्णुदोषाघपतनं साधु परिहरता मया सूत्रतद्व्याख्यारूपेणामरवचःसंस्कृतजनतासुगमावगाहनक्षमेण पथा सङ्कलिता । चेदेतावतापि दोषभाजनं दोषगृध्नवोऽभिमन्येयुर्न तर्हि प्रवचनपदान्युपादाय विधाय च संस्कृतच्छाया तद्व्याख्यातारोऽपि ततो मुक्ता भवेयुरिति यत्किञ्चिदेतत् । असामर्थ्यादविहितविषयं सुधियः साधवोऽप्यनेन ग्रन्थेन निःशङ्कमङ्गोक्तवस्तुव्रातान् विज्ञाय तावदर्थसूचकैतत्सूत्रराशीन् सुलभतया कण्ठगतान् विधातुं कुशला भवन्त्वित्याशयेनानतिसंक्षेपविस्तरं सूत्रनिकुरम्बमरीरचम् । एतेन च भगवद्वचनामृतमधुररसास्वादनेन पुनः पुनश्चेतसः स्याद्वादवाद्धर्ममपि प्रतिष्ठापितमित्ययमपि मे महान् लाभोऽसंदिग्ध एव ।

तदेवमयं ग्रन्थः स्याद्वादामृतपिपासूनां मुमुक्षूणां पादनिज्ञानबुभुत्सूनां परीक्षकाणां विद्वदग्रेसराणां च मनोविनोदाय बोभवीत्विति रत्नत्रयीरमणं निखिलनैयधिषणं जगदभ्यर्हितचरणं दीनैकशरणं परमसुखाभरणं भगवन्तमभ्यर्थयन्नुपरमामि ।

छाणीवाग जैन उपाश्रय,<br>भुलेश्वर, मुंबई ४<br>कार्तिकपूर्णिमा, २००३

विजयलब्धिसूरिः

# सूत्रार्थमुक्तावल्या विषयानुक्रमणिका ।



## समवयामुक्तासरिकायाम्

इति शुभं भूयात्

## संशोधनीयम्

अस्याः सूत्रार्थमुक्तावल्याः पञ्चमसुखप्रसरिकान्तगत श्लोक (पृ० ११२ गतः) विपश्चिद्भिरेव संशोध्य पठनीयः, यथा—

समवायाङ्गपयोधेरहमहमिकया समुत्थिता मुक्ता ।
कस्य मनस्युत्कण्ठां नोद्दीपयति स्वसात्कर्तुम् ॥

# श्रीलब्धिसूरीश्वरजैनग्रन्थमाला

## प्रकाशितग्रन्थसूची

| | | | |
|---|---|---|---|
| १ जैनतत्वविधिसंग्रह | ०–८–० | १० मूर्तिमंडन ( गुजराती ) | ०–४–० |
| *२ हीरप्रश्नोत्तराणि | ०-१२ ० | *११ मूर्तिमंडन ( हिन्दी ) | भेट |
| *३ श्रीपालचरित्रम् | भेट | १२ आरम्भसिद्धिः ( सटीका ) | २–८–० |
| ४ तत्त्वन्यायविभाकरः ( मूलः ) | ०–८–० | १३ तत्त्वन्यायविभाकरः ( सटीकः ) | ५–०–० |
| *५ पञ्चसूत्रम् ( सटीकम् ) | भेट | १४ दीपालिकाकल्पः | भेट |
| *६ हरिश्चन्द्रकथानकम् | भेट | १५ सम्मतितत्त्वसोपानम् | ५–०–० |
| ७ वैराग्यरसमंजरी | भेट | १६ सूत्रार्थमुक्तावलिः | ५–०–० |
| ८ चैत्यवन्दनचतुर्विंशति. | ०–२–० | १७ सकलार्हत्स्तोत्रम् ( सटीकम् ) | भेट |
| ९ कविकुलकिरीट | ०–८–० | | |

## प्रकाश्यमानग्रन्थसूची

१ द्वादशारनयचक्रम्, मल्लवादिसूरिकृतम्, सिंहवादिक्षमाश्रमणकृतन्यायागमानुसारिणीव्याख्यायुतम्

२ श्रेयांसनाथचरित्रम्, मानतुङ्गसूरिकृतम्

३ श्राद्धविधिप्रकरण मूल अने टीकाना गुर्जरानुवादसहित

४ आत्मानन्दस्तवनावली

५ धन्य नारी



---

* इति चिह्नाङ्किता अप्राप्या

॥ ॐ अर्हम् ॥

जैनाचार्यश्रीमद्विजयलब्धिसूरिसङ्कलिता

सटीका

# सूत्रार्थमुक्तावलिः ।



ॐ अर्हम् ।

श्री आत्मकमललब्धिसूरीश्वरेभ्यो नमः ।

जैनाचार्यश्रीमद्विजयलब्धिसूरिसङ्कलिता

# सटीका

# सूत्रार्थमुक्तावलिः ।



वाचा निर्मलया सुधामधुरया यो मोक्षशिक्षामदात्,
यस्याभूत् पदपङ्कज तरिनिभं संसारवारांनिधौ ।
ध्वस्ताशेषदुरन्तकर्मपटलं लोकैकपूज्यं प्रभुम्,
श्रीनाभेयजिनं दयैकनिलयं भक्त्या सदा नौमि तम् ॥ १ ॥
न्यायव्याकरणार्हदागमलसद्वैदग्ध्यदीक्षागुरुम्,
भूमीकल्पतरुं समस्तजनतासङ्गीतकीर्त्तिं यतिम् ।
ध्यात्वा श्रीकमलाख्यसूरिमनघं सञ्चिन्त्य सूत्राम्बुधिम्,
कुर्वे बालहिताय सङ्ग्रहमयीं सूत्रार्थमुक्तावलिम् ॥ २ ॥

अथ न्यायप्रकाशसमलङ्कृततत्त्वन्यायविभाकरादिभ्यो येभ्यो विदितस्वपरसमयसाराणां सुनिर्मलचरणधर्मविभूषितानामनूद्योगानां भगवदर्हद्वचनस्यानुयोगकरणाभिलाषुकाणां विनेयानामनायासेन तत्र प्रवृत्तिसम्पादनार्थं पूर्वमहर्षिभिरतिगम्भीरतयोपक्रमादिद्वारैर्विचारितत्वेऽपि तेषां अल्पप्रज्ञानामसुज्ञानत्वेन सौलभ्यतया तद्बुबोधयिषयोपक्रमादिद्वारवर्णनपुरस्सरं मूलकृताऽनुपमागमभक्तिजनितौत्सुक्येनानुयोगं कर्तुमारभमाणेन परमनिःश्रेयसनिदानं प्रत्यूहव्यूहविध्वंसकं ज्ञानमादावुपनिबध्यते—

## मतिश्रुतावधिमनःपर्यवकेवलानि पञ्च ज्ञानानि ॥ १ ॥

**मतीति**, मननं मतिः, मन्यते इन्द्रियमनोद्वारेण नियतं वस्तु परिच्छिद्यतेऽनयेति वा मतिः, योग्यदेशावस्थितवस्तुविषय इन्द्रियमनोनिमित्तावगमविशेषः । श्रवणं श्रुतमभिलापप्लावितार्थग्रहणस्वरूप उपलब्धिविशेषः, श्रूयते तदिति श्रुतं प्रतिविशिष्टार्थप्रतिपादनफलं वाग्योगमात्रं भगवन्मुखाभिसृष्ट

आत्मीयश्रवणकोटरप्रविष्टं क्षायोपशमिकभावपरिणामाविर्भावकारणं श्रुतमित्युच्यते कारणे कार्योपचारात्, श्रुतज्ञानम् । शृणोतीति वा श्रुतमात्मनि तदनन्यत्वात् । अवधानमवधिरात्मनस्साक्षादर्थग्रहणमिन्द्रियादिनिरपेक्षम्, अवयवत्वेनानेकार्थत्वादव-अधोऽधो विस्तृतं धीयते परिच्छिद्यते रूपवद्वस्तु येन ज्ञानविशेषेणेत्यवधिः, रूपवद्वस्तु येन ज्ञानेन अव मर्यादया एतावत्क्षेत्र एतावन्ति द्रव्याण्येतावन्तं कालं पश्यतीत्यादिपरस्परनियमितक्षेत्रादिरूपया धीयते परिच्छिद्यत इत्यवधिः, अवधिज्ञानावरणविलयविशेषसमुद्भवो भवगुणप्रत्ययः रूपिद्रव्यविषयो ज्ञानविशेषः । काययोगसहकारेण संज्ञिजीवैर्मनोवर्गणाभ्यो गृहीत्वा मनस्त्वेन परिणमितानि द्रव्याणि मनांसि, तेषां चिन्तनानुगुणा ये पर्यायाः परिणामास्तेषु ज्ञानं मनःपर्यवज्ञानमिति ज्ञानशब्देन सह वैयधिकरण्यमङ्गीकृत्य व्युत्पत्तिः, मनसा मन्यमानमनोद्रव्याणां वा पर्यवः परिच्छेदो मनःपर्यवः इति ज्ञानेन सामानाधिकरण्यमङ्गीकृत्य, मनःपर्ययावरणविलयविलसितचारित्रधनो मानुषक्षेत्रवर्तिप्राणिमनःपरिचिन्तितार्थप्रकटनरूपो ज्ञानविशेषः । इन्द्रियादिसाहाय्यानपेक्षित्वाच्छेषच्छाद्मस्थिकज्ञाननिवृत्तेर्वा केवलमेकमसहायमनितरसाधारणमप्रतिपाति निखिलज्ञेयग्राहिज्ञानविशेषः केवलमिति, पञ्चेति, न न्यूनानि नाप्यधिकानि, ज्ञानानीति, ज्ञायते वस्तु परिच्छिद्यत एभिरिति ज्ञानानि, आवरणद्वयक्षयक्षयोपशमाविर्भूता आत्मपर्यायविशेषास्सामान्यविशेषात्मके वस्तुनि विशेषांशग्राहका सामान्यांशग्राहकाश्चेत्यर्थः । अनेन सूत्रेण प्रबलान्तरायनिकरनिराकरणनिबन्धनं मङ्गलमनुष्ठितं, ज्ञानस्याशेषक्लेशविनाशनहेतुत्वेन परममङ्गलरूपत्वात् । अनुयोगविषयीभूतस्यानोक्तत्वात् द्वितीयसूत्रे च श्रुतस्यैवोद्देशसमुद्देशानुज्ञानुयोगानां वक्ष्यमाणतया श्रुतस्यानुयोगकरणमेव विषयस्तत्प्रकारपरिज्ञानं श्रोतुः प्रयोजनमव्यवहितं, परम्परं तु मोक्षावाप्तिः कर्तुश्च साक्षात्फलं सत्त्वानुग्रहः व्यवहितं तु मोक्ष एव, प्रतिपाद्यप्रतिपादकभावश्च सम्बन्ध इति ॥ १ ॥

ननु किं पञ्चानामेव ज्ञानानामनुयोगः क्रियते किं वाऽन्यतमस्य कस्यापि, तत्रापि किं मतेः श्रुतस्यावधेर्मनःपर्यवस्य केवलस्य वेत्याशङ्कायामाह—

## श्रुतस्यैवोद्देशसमुद्देशानुज्ञाऽनुयोगाः ॥ २ ॥

श्रुतस्यैवेति, भवन्तीति शेषः । एवशब्देन मत्यादिज्ञानचतुष्टयस्यावशिष्टस्य व्युदासः । इदमध्ययनादि त्वया पठितव्यमिति गुरुवचनविशेष उद्देशः, तस्मिन्नेव शिष्येणाहीनादिलक्षणोपेतेऽधीते गुरोर्निवेदिते स्थिरपरिचितं कुर्विदमिति गुरुवचनविशेष एव समुद्देशः, तथाकृत्वा गुरोर्निवेदिते सम्यगिदं धारयान्यांश्चाध्यापयेति तद्वचनविशेष एवानुज्ञा, अनुयोगश्च व्याख्यानमिति । ननु तदितरज्ञानादिचतुष्टयस्य व्यावृत्तिकरणात्तत्र नानुयोगः प्रवर्तत इत्युक्तं भवति, तत्र किं कारणम्, उच्यते असंव्यवहार्यं मत्यादि, यदि लोकस्योपकारकं तदेव व्यवहारनयेन संव्यवहार्यम्, श्रुतमेव च भवति सम्पूर्णं हेयोपादेयेषु प्रवृत्तिनिवृत्तिबोधनद्वारेण लोकस्य साक्षादुपकारि । न च केवलादिज्ञानचतुष्टयदृष्टार्थस्यैव श्रुतेनोपदर्शनात् कथमनुपकारित्वमिति वाच्यम्, तथापि तस्य गौणवृत्त्योपकारित्वात्, न हि श्रुतेन विना मत् स्वस्वरूपमपि बोधयितुं समर्थममुखरत्वात् । अथानुयोगो व्याख्यानं तच्च ज्ञानादिचतुष्टयेऽपि प्रवर्तत एवेति चेन्न, व्याख्यानस्यापि तत्तज्ज्ञानप्रतिपादकसूत्रसन्दर्भ एव प्रवृत्तेः । नन्वनु-

योगस्यैवोपक्रान्तत्वादुद्देशादिकं किमर्थमुपात्तमिति चेदुच्यते, यत्रैवोद्देशादयः क्रियन्ते तत्रैवानुयोगस्य द्वाराण्युपक्रमादीनि च प्रवर्त्तन्ते नान्यत्र, क्रियन्ते चोद्देशादयः श्रुतज्ञाने न तु ज्ञानचतुष्टये, तस्य गुर्वनधीनत्वेनोद्देशाद्यविषयत्वात्। नानार्थत्वादुरहत्वाद्विविधमन्त्राद्यतिशयसम्पन्नत्वाद्धि प्रायः श्रुतज्ञानं गुरूपदेशमपेक्षते, ज्ञानचतुष्टयं तु तत्तदावरणक्षयक्षयोपशमाभ्यां विना गुरूपदेशापेक्षं जायमानत्वेन नोद्देशादिक्रममपेक्षत इति ॥ २ ॥

ननु श्रुतज्ञानं द्विविधमङ्गान्तर्गतमङ्गबहिर्भूतञ्चेति, अङ्गान्तर्गतमाचारादि, अङ्गबहिर्भूतञ्चोत्तराध्ययनादि, तदत्र कस्योद्देशादयः प्रवर्त्तन्त इत्यत्राह—

## ते सकलस्यापि श्रुतस्य ॥ ३ ॥

त इति, उद्देशसमुद्देशानुज्ञानुयोगा इत्यर्थः प्रवर्त्तन्त इति शेषः। तथा च न केवलमङ्गान्तर्गतस्य न वाऽङ्गबहिर्भूतस्योद्देशादयः प्रवर्त्तन्ते, अपि तु सकलस्यापि श्रुतस्येति भावः। सकलस्यापीत्यनेन प्रतिशास्त्रं प्रत्यध्ययनं प्रत्युद्देशकं प्रतिपदञ्च ते प्रवर्त्तन्ते न पुनः समुदायरूपश्रुतस्यैवेति सूच्यते ॥ ३ ॥

ननूपक्रान्तोऽनुयोगो हि द्वादशद्वारसमन्वितः, द्वाराणि च निक्षेपैकार्थनिरुक्तिविधिप्रवृत्तिकर्तृविषयद्वारभेदलक्षणपरिषत्सूत्रार्थरूपाणि, तत्र प्रथमं द्वारप्रदर्शनमुखेनानुयोगस्वरूपं वर्णयन्नर्थतोऽपि कतिचन द्वाराणि सङ्गृह्णाति—

## उपक्रमनिक्षेपानुगमनयैरनुयोगः ॥ ४ ॥

उपक्रमेति, उपक्रमादयो वक्ष्यमाणस्वरूपाः द्वादशविधद्वारान्तर्गतद्वाररूपास्तैरनुयोगः, सूत्रस्य स्वकीयेनाभिधेयेनानुयोजनं सूत्रस्य निजार्थविषये सम्बन्धः प्रतिपाद्यलक्षणव्यापारो वा। अर्थापेक्षया सूत्रमणु लघु सूत्रस्य बह्वर्थत्वात्। अणुना सूत्रेण सहार्थस्य योगोऽनुयोगोऽथवा प्रथममर्थं चेतसि व्यवस्थाप्य पश्चात्सूत्रस्य भावादनु पश्चाद्भाविना सूत्रेणार्थस्य योगोऽनुयोग इति निरुक्तिरनुयोगस्य। ननु सूत्रस्य कथमणुत्वं पश्चाद्भावित्वञ्च तथार्थस्य महत्त्वम्, न हि बहुरत्नाद्याधारभूता पेटिका तदपेक्षयाऽणुभूता भवितुमर्हति, न वा सूत्राभावेऽर्थस्य प्रकाशः, लोकेऽपि प्रथमं सूत्रं ततो वृत्तिस्ततो वार्तिकं वा भाष्यं वेति क्रमो दृश्यते, न चार्थो महान् एकस्यैवार्थस्य क्वचिद्बहुभिस्सूत्रैर्वर्णनादिति चेन्न, पेटिकान्तर्गतैकवस्त्रादेवानेकासां पेटिकानां बन्धदर्शनेन पेटिकास्थानीयस्य सूत्रस्य वस्त्रस्थानीयार्थादणुत्वात्, अर्हद्भाषितस्यैवार्थस्य गणधरैस्सूत्रणात्सूत्रस्य पश्चाद्भावित्वम्, लौकिका अपि हि शास्तारः प्रथमतोऽर्थं दृष्ट्वा सूत्रं कुर्वन्ति, अर्थं विना सूत्रस्यानिष्पत्तेः। सकलस्यापि श्रुतस्येत्यनेन विषयद्वारोऽप्युक्त एव। व्याख्यानार्थकेनानुयोगशब्देनार्थभाषणरूपस्य पर्यायशब्दस्य लाभोऽवसेयः। व्याख्यायामत्यन्तोपयोगित्वेन च द्वारस्य तद्घटितमेव सूत्रमादृतम्। तथापि यथा एकद्वारं कृतैकादिद्वारं वा नगरमनधिगमनीयं दुरधिगमञ्च भवति निर्गमप्रवेशादावसुकरत्वात्, चतुर्द्वारं तु सुखाधिगमं कार्याविनाशकञ्च सम्पद्यते तथैवार्थाधिगमोपायद्वारशून्यमशक्याधिगमं श्रुतविषयं स्यात्, एकादिद्वारानुगतमपि दुरधिगमं भवेत् सपरिकरचतुर्द्वारानुगतन्तु सुखाधिगमं भवतीति द्वारचतुष्टयघटितमेव लक्षणं स्वीकृतम्।

तथाऽनु पश्चात् संहितापदपदार्थपदविग्रहपूर्वकं प्रश्नानां योगः समाधानमनुयोग इति व्युत्पत्त्याश्रयेण लक्षणमपि प्रकटीकृतं तथा च पूर्वसूत्रे विषयोऽत्र चैकार्थनिरुक्तिद्वारलक्षणानि प्रदर्शितानि ॥ ४ ॥

अथ विधिद्वारमादर्शयति—

## सूत्रार्थनिर्युक्तिमिश्रनिरवशेषकथनं तद्विधिः ॥ ५ ॥

**सूत्रार्थेति,** प्रथमं सूत्रार्थस्य ततो निर्युक्तिमिश्रस्य ततो निरवशेषस्य कथनमनुयोगस्य विधिरित्यर्थः । तत्र ग्रहणधारणसमर्थान् शिष्यान् प्रति प्रथमं सूत्रस्य सामान्येनार्थः यावदध्ययनपरिसमाप्ति कथनीयः, ततो द्वितीयस्यां परिपाट्यां निर्युक्तिमिश्रितः पीठिकया सूत्रस्पर्शिकनिर्युक्त्या च समन्वितो यावदध्ययनपरिसमाप्ति कथनीयः । तृतीयस्यां च पदपदार्थचालनाप्रत्यवस्थानादिभिर्निरवशेषोऽनुयोगो वक्तव्य इति भावः । मन्दमतीन् प्रति तु यथाप्रतिपत्ति ससप्रकारोऽनुयोगः कर्त्तव्यः, न चैतावता तिसृभिः परिपाटीभिरेकान् ग्राहयतो रागस्ससभिरपरान् ग्राहयतो द्वेषश्च प्रसज्यते, एकविधपरिपाट्या सर्वेभ्यः सूत्रार्थस्य निरवशेषेण सम्प्रदर्शयितुमशक्यत्वात्, न चाऽतिपरिणामकानपरिणामकांश्च परिहरतो द्वेषः, परोक्षज्ञानी ह्याचार्यस्सूत्रार्थौ वदन् विनेयानां विनयाविनयकरणादिनाऽभिप्रायमुपलभ्यापात्रभूतेभ्यः शिष्येभ्यः श्रुताशातनादिना मा विनश्येयुरित्यनुकम्पया न सूत्रार्थौ कथयति न तु द्वेषेणेति, एवमन्येऽपि विषयोऽनुयोगद्वारादितोऽवसेयाः । एतेनानुयोगे प्रवृत्तिरपि सूचिता, आचार्यस्य शिष्यस्य चोद्यमित्वभावे ईदृशविधेरप्रवृत्तेः, अत्र चत्वारो भङ्गाः, उद्यमी आचार्य उद्यमिनः शिष्याः, आचार्योऽनुद्यमी उद्यमिनश्शिष्याः, उद्यमी आचार्यः अनुद्यमिनश्शिष्याः, आचार्योऽनुद्यमी अनुद्यमिनश्च शिष्या इति, तत्र प्रथमे भङ्गेऽनुयोगस्य प्रवृत्तिः, चरमे तु नैव भवति, मध्यमयोस्तु कस्यचित्कथञ्चिद्भवत्यपीति ॥५॥

सम्प्रति परिषद्द्वारमाचष्टे—

## ज्ञायकाज्ञायकपरिषदो तद्योग्ये ॥ ६ ॥

**ज्ञायकेति,** संक्षेपेण त्रिप्रकारा हि परिषत् ज्ञायकाज्ञायकदुर्विदग्धभेदात् । या परिषत् कुपथप्रवृत्तपाखण्डमतेन न दग्धान्तःकरणा गुणदोषविशेषपरिज्ञानकुशला सतामपि दोषाणामपरिग्राहिका केवलं गुणग्रहणपरायणा सा ज्ञायकपरिषत् । या ताम्रचूडकठोरचकुरकपोतवत् प्रकृत्या मुग्धस्वभावा असंस्थापितवासनाभिरान्तर्विशिष्टगुणसमृद्धा सुखप्रज्ञापनीया च साऽज्ञायकपरिषत् । या तु वासद्गुणग्राहिणोऽपगमनेन पतितपक्षा गुणजीव्य पाण्डित्याभिमानिनी किञ्चिन्मात्रमर्थपदं सारपल्लवमात्रं वा श्रुत्वा तत ऊर्ध्वं निजपाण्डित्यख्यापनायाभिमानतोऽवगणयति पाठकम्, अर्थं कथ्यमानश्चात्मनो बहुज्ञतासूचनायाग्रे त्वरितं पठति सा दुर्विदग्धपरिषत् । तिसृणाममूषां परिषदां मध्ये ज्ञायकाज्ञायकपरिषदावनुयोगयोग्ये, तृतीया त्वयोग्या तत्राचार्यपरिश्रमस्य निष्फलीभवनात्, दुरन्तससारोपनिपातसम्भवाच्च, सा हि पदमर्थं वाऽवज्ञया शृणोति पाण्डित्याभिमानेन च महीयसोऽप्यमन्यते, अवज्ञया च संसारेऽभिष्वक्ता जायत इति । या तु प्रथमा सा अवितथादिगुणसमृद्धा राजहंसः क्षीरमिव गुणानास्वादयति, क्वचिदनुपयोगप्रभवान् दोषान् परित्यजति तस्मात्तस्या योग्यत्वम् । द्वितीया तु प्रकृत्या मुग्धा यथाऽरण्यादानीय मृगादिशावा यथारुचि प्रक्रमाः क्रूरा वा क्रियन्ते तथा या परतीर्थिकैरभाविता

प्रक्त्या मुग्धा यथा भण्यते तथा करोति, यथा वा रत्नमसरकृत यादृशोऽभिप्रायस्तादृश घटित्वा त्रियते, एवमेषापि यथा रोचते तथा त्रियत इति सापि योग्येति भाव॰। उपलक्षणतया तु अनुयोगकर्त्ता मूलोत्तरगुणशतकलितः, यो हि मूलगुणादिषु सुस्थितस्तस्य वचन घृतपरिषिक्तपावक इव दीप्यते, गुणहीनस्य तु स्नेहेन विहीन प्रदीप इव न शोभते वचनम्। आनुपूर्वीनामप्रमाणादिको भेदोऽपे वक्ष्यते। नामस्थापनाद्रव्यक्षेत्रकालवचनभावभेदेन सप्तविधोऽनुयोगस्य निक्षेपः, इन्द्रादिनाम्नो व्याख्यान नामानुयोग॰ यस्य वा वस्तुनोऽनुयोग इति नाम त्रियते तन्नाममात्रेणानुयोगो नामानुयोग॰, स्थापनाया व्याख्यान यत्रैवानुयोग कुर्वन्नाचार्यादि पाषाणादौ स्थाप्यते तत्स्थापनानुयोगः। द्रव्यस्य व्याख्यान द्रव्ये वा निषद्यादौ स्थितस्यानुयोगो द्रव्यानुयोगः, द्रव्यक्षेत्रकालभावैर्जीवद्रव्यस्याजीवद्रव्यस्य वाऽनुयोग द्रव्यानुयोगः। जम्बूद्वीपादिलक्षणक्षेत्रव्याख्यान क्षेत्रानुयोग। उत्पलपत्रशतभेदादिदृष्टान्तै॰ समयादैर्व्याख्यान कालानुयोग। यदा कश्चिदाचार्यादिस्ताध्यादिना सकृद्वचनेन बहुभिर्वा वचनैरभ्यर्थितोऽनुयोग करोति तदा स वचनानुयोग। कथ नामैते शिष्या सूत्रार्थसंग्राहकाः सम्पत्स्यन्ते, तथा कथ नु नाम गीतार्थीभूत्वाऽमी पश्चादुत्पादनेन गच्छस्योपमहकारका भविष्यन्ति ममाप्येतान् वाचयतः कर्मनिर्जरा भविष्यति, तथा श्रुतपर्यवजात ममापि वृद्धिं यास्यति, श्रुतस्य वा अव्यवच्छित्तिर्भविष्यतीत्येव सङ्ग्रहादिभि पञ्चभिरभिप्रायैर्द्धिऽयादिभिर्वा श्रुत सूत्रार्थतो वाचयतो भावानुयोग इत्येव भाव्यम् ॥ ६ ॥

तदेव सपरिकरमनुयोग निरूप्याग्रेऽर्थाधिकारभेदस्यावश्यकमधिकृत्य प्रदर्शितत्वेनावश्यकस्यानुयोग कर्त्तुकामस्तस्य तावदन्तरेणोपक्रमसम्भवादुपक्रमस्वरूपमेवादावाह—

## व्याकरिष्यमाणपदार्थनामनिर्देश उपक्रमः ॥ ७ ॥

**व्याकरिष्यमाणेति,** उपक्रम्यतेऽस्माद्विनीतविनेयविनयादित्युपक्रम, विनेयेनाराधितो हि गुरुरमे यदा कदाचिद्व्याकरिष्यमाण शास्त्रादिपदार्थमत एव दूरस्थ इदानीमिद शास्त्रादि व्याकरोमीति समीपमुपनीय निक्षेपयोग्य करोति स उपक्रम इति भावः। यथा सम्प्रति आवश्यकस्यानुयोगः क्रियत इति निर्देश, निर्देशे कृते च सति तन्निक्षेपयोग्य भवति नेतरथेति ॥ ७ ॥

तस्य प्रकारमाह—

## शास्त्रीयेतरभेदाभ्यां द्विविधस्सः ॥ ८ ॥

**शास्त्रीयेति,** शास्त्रीयः शास्त्रानुगत, इतरो लोकप्रसिद्धः, स उपक्रमः ॥ ८ ॥

इतरोपक्रमस्य भेदानाह—

## इतरो नामस्थापनाद्रव्यक्षेत्रकालभावैष्पोढा ॥ ९ ॥

**इतर इति,** लोकप्रसिद्धोपक्रम इत्यर्थः, नामरूप उपक्रमो नामोपक्रम यस्य कस्यचिज्जीवस्याजीवस्य वा तदुभयस्य वा जीवानां वाऽजीवानां वोभयेषां वा उपक्रम इति यन्नाम त्रियते स नामोपक्रम, नाम्ना य उपक्रमः सोऽपि नामोपक्रम, यस्य जीवादिर्न्स्तुन उपक्रम इति नाम क्रियते तद्वस्तु

नामकारेणोपक्रमरूपत्वान्नामोपक्रम उच्यते, एवमेव नामावश्यकमपि भाव्यम् । तत्र लोके यथा जीवस्य स्वपुत्रादेर्देवदत्तयज्ञदत्तादि नाम करोति तथा पक्षिणामावश्यकमित्यपि नाम करोति स्वाभिप्रायवशात् । जीवस्यावासभूताचित्तबहुकोटराकीर्णवृक्षादिसमुदायस्यावासभूतत्वेन व्यपदेशादजीवस्यावश्यकनाम भवति, आवासकावश्यकशब्दयोरेकार्थत्वात्, इष्टकापाकाद्यग्निर्मूषिकावास इत्युच्यते, अग्नौ मूषकाणां समूर्छनान्तोऽसंख्येयानामग्निजीवानामावासकनाम भवति, पक्ष्यावासभूतनीडस्य बहुभिस्तृणैर्निष्पन्नत्वाद्बहुनामजीवानामावासकनाम भवति, गृहदीर्घिकाऽशोकवनिकाद्युपशोभितः प्रासादादिप्रदेशो राजादेरावास उच्यते तत्र राजादिस्सचेतनः इष्टकाकाष्ठाद्यजीवास्तन्निष्पन्नमुभयमिति तस्यावासकनाम भवति, सम्पूर्णनगरादिरपि राजादीनामावास इति कृत्वा तत्र बहूनां जीवाजीवोभयेषामावासकनाम भवतीति । क्रियाक्रियावतोरभेदोपचारादुपक्रमतत्कर्तृलौकिकसाध्वादेरभेदेन काष्ठकर्मचित्रकर्मपुस्तकर्मादावेको वाऽनेके वोपक्रमक्रिया वा लौकिकसाध्वादयः सद्भावस्थापनयाऽसद्भावस्थापनया वा स्थाप्यन्ते स स्थापनोपक्रमः, एवं स्थापनावश्यकमपि भाव्यम् । सम्प्रत्युपक्रमोपयोगशून्या साध्वादिदेहादयो द्रव्योपक्रम, द्विविधस्स, आगममाश्रित्य नोआगममाश्रित्य च । यस्य कस्यचिदुपक्रमस्वरूपं शिक्षितं गुरुभिः, अविस्मरणेन चेतसि स्थितं परावर्त्तनया शीघ्रोपस्थितिकत्वाज्जितं अहीनाक्षरात्यक्षरादिरूपतया स्थितं स जीवस्तदुपयोगे यदा न वर्त्तते तदा आगममाश्रित्य द्रव्योपक्रम उच्यते, नन्वागमतोऽस्य कथं द्रव्योपक्रमत्वम्, आगमस्य ज्ञानरूपत्वेन भावत्वादिति चेन्न, आगमकारणभूतस्यात्मनस्तदधिष्ठितस्य देहस्योपयोगशून्यतदुच्चारणरूपशब्दस्यैव चात्र सत्त्वेनागमस्य साक्षादसत्त्वात्, कारणे कार्योपचाराद्धि तेषामागमरूपत्वम्, द्रव्यञ्च विवक्षितभावस्य कारणं भवतीत्यागममाश्रित्य द्रव्योपक्रम उक्त इति । नोआगमतो द्रव्योपक्रमस्त्रिविधः ज्ञशरीरभव्यशरीरतदुभयव्यतिरिक्तभेदात्, ज्ञशरीरभव्यशरीरतदुभयव्यतिरिक्तभेदास्सर्वथाऽऽगमाभावमाश्रित्य द्रव्योपक्रम, तत्रोपक्रमपदाभिधेयं जानानस्य यच्छरीरं जीवेन परित्यक्तं तदतीतोपक्रमभावस्य कारणत्वात्तदानीं सर्वथाऽऽगमरहितत्वान्नोआगमतो ज्ञशरीरद्रव्योपक्रमः । यद्यपि व्यपगतचेतनस्य शरीरस्य न द्रव्योपक्रमत्वम्, उपक्रमकारणस्यैव द्रव्योपक्रमत्वात् कारणञ्च चेतनाधिष्ठितमेव भवति, अन्यथाऽतिप्रसङ्गात्तथापि अक्षिप्तापसारितघृतस्य घटस्य घृतघट इति व्यपदेश इवातीतपर्यायानुवृत्त्यभ्युपगमपरनयानुवृत्त्याऽतीतोपक्रमकारणत्वपर्यायमपेक्ष्य द्रव्योपक्रमत्वमस्योच्यत इत्यदोषः । विवक्षितपर्याययोग्यो भव्यः, आगामिकाले हि जिनोपदिष्टेन भावेनोपक्रम इत्येतत्पदमसौ शिक्षिष्यते तज्जीवाधिष्ठितं शरीरं तदानीं तत्र वपुष्यागमाभावेन नोआगमतो भव्यशरीरद्रव्योपक्रमः । यद्यप्यत्र शरीरे आगमाभावेन तत्कारणत्वमपि नास्ति, अतिप्रसङ्गेन कार्याभावे वस्तुन कारणत्वासम्भवस्तथापि भविष्यत्यपि घृताधारत्वपर्याये घटे घृतघटोऽयमिति व्यपदेशवदिदानीमपि भविष्यत्पर्यायानुवृत्त्यभ्युपगमपरनयानुवृत्त्या तथोच्यत इति, एवं द्रव्यावश्यकमपि भाव्यम् । ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यावश्यकन्तु लौकिककुप्रावचनिकलोकोत्तरिकरूपभेदत्रयवत्, अनुयोगद्वारादिभ्यस्तत्स्वरूपमवसेयम् । तदुभयव्यतिरिक्तद्रव्योपक्रमः सचित्ताचित्तमिश्रद्रव्यविषयभेदात् त्रिविधः, द्विपदचतुष्पदापदभेदत आद्योऽपि भेदस्त्रिविधः, नटनर्त्तकादीनां द्विपदानां घृताद्युपयोगेन यद्बलवर्णादिकरणं सोऽवस्थितस्यैव वस्तुनो गुणविशेषाधानरूपत्वात् परिकर्मविषयस्सचित्तद्रव्योपक्रमः । यस्त्वेषां सम्प्रा-

दिभिर्नाश एव सम्पाद्यते तदा वस्तुनाशविषयसचित्तद्रव्योपक्रमः । अश्वादिचतुष्पदानां शिक्षागुणविशेषकरणं परिकर्मविषयः, खड्गादिभिस्तेषां नाशोपक्रमणं वस्तुनाशविषयः सचित्तद्रव्योपक्रमः । वृक्षादीनामपदानां वृक्षायुर्वेदोपदेशाद्वार्धक्यादिगुणापादनं तत्फलानाञ्च गर्त्तप्रक्षेपकोद्रवपलालस्थगनादिनाऽऽश्वेव पाकादिकरणं परिकर्मविषयः शस्त्रादिभिश्च मूलत एव विनाशनं वस्तुनाशविषयसचित्तद्रव्योपक्रमः । खण्डाद्यचित्तद्रव्याणामुपायविशेषतो माधुर्यादिगुणविशेषकरणं सर्वथा विनाशकरणञ्चाचित्तद्रव्योपक्रमः । अश्वादीनां कुङ्कुमादिभिर्मण्डितानां स्थासकादिभिर्विभूषितानां यच्छिक्षादिगुणविशेषकरणं खड्गादिभिर्विनाशकरणं वा स मिश्रद्रव्योपक्रमः, अश्वादीनां सचेतनत्वात्स्थासकादीनामचेतनत्वाच्च । हलकुलिशादिभिः क्षेत्राणि यद्बीजवपनादियोग्यतामानीयन्ते स परिकर्मविषयः क्षेत्रोपक्रमः स एव यदा विनाश्यन्ते स वस्तुनाशविषयः क्षेत्रोपक्रमः, गजेन्द्रमूत्रपुरीषादिदग्धेषु हि क्षेत्रेषु बीजानामप्ररोहणाद्विनष्टानि क्षेत्राणीति व्यपदिश्यन्ते, न चायं द्रव्योपक्रम एव क्षेत्रादिगतपृथिव्यादिद्रव्याणामेव परिकर्मविनाशकरणादिति वाच्यम्, क्षेत्रस्याकाशरूपत्वेनामूर्त्तत्वात्तस्य मुख्यतयोपक्रमासम्भवेन तदाधेयद्रव्योपक्रमस्यैव तत्रोपचारात्, मञ्चाः क्रोशन्तीत्यत्राधेयधर्मोपचारस्य मञ्चाद्याधारे दर्शनात् । नाल्यादिमयघटिकया शङ्कुच्छायादिना नक्षत्रचारादिना वा एतावत्पौरुष्यादिकालोऽतिक्रान्त इति यत्परिज्ञानं स परिकर्मविषयः कालोपक्रमः, यथावत्तत्परिज्ञानस्यैवात्र परिकर्मरूपत्वात् । यच्च नक्षत्रादिचारैः कालस्य विनाशनं स वस्तुनाशविषयः कालोपक्रमः, अनेन ग्रहनक्षत्रादिचारेण कालो विनाशितो न भविष्यत्यधुना धान्यादिसम्पत्तय इति व्यवहारात् । आगमतो नोआगमतश्च भावोपक्रमो द्विविधः, उपक्रमशब्दार्थज्ञस्तत्रोपयुक्तश्चागमतो भावोपक्रमः । प्रशस्ताप्रशस्तभेदेन नोआगमतो भावोपक्रमः, अत्र परकीयाभिप्रायस्य यथावत् परिज्ञानं भावोपक्रमः । ब्राह्मण्या वेश्ययाऽमात्येन च यत्परकीयभावस्य यथावत् परिज्ञानलक्षणमुपक्रमणं कृतं सोऽप्रशस्तभावोपक्रमस्संसारफलत्वात् । श्रुतादिनिमित्तं गुर्वादीनां यद्भावोपक्रमणं स प्रशस्तभावोपक्रमः, गुरुभावोपक्रमस्यैव मुख्यव्याख्याङ्गत्वात्, तेन व्याख्याने यदेवोपकारि तदेव वक्तव्यम्, गुरुभावोपक्रमस्त्वप्रस्तुतो व्याख्यानानुपकारित्वादिति शङ्का व्युदस्ता ॥ ९ ॥

अथ शास्त्रीयोपक्रमभेदानाह—

**आनुपूर्वीनामप्रमाणवक्तव्यताऽर्थाधिकारसमवतारभेदतष्षड्विधः शास्त्रीयः ॥ १० ॥**

आनुपूर्वीति, पूर्वस्यानु पश्चादनुपूर्वं तस्य भावेऽर्थे ष्यञन्तेनानुपूर्व्यशब्देन षित्वात्स्त्रीत्वे ङीपि कृते आनुपूर्वीति निष्पत्तिः द्व्यादिवस्तुसमूहः, आनुपूर्वी अनुक्रमः अनुपरिपाटीति पर्यायाः । जीवगतज्ञानादिपर्यायाजीवगतरूपादिपर्यायानुसारेण प्रतिवस्तु भेदेन नमति तदभिधायकतया प्रवर्त्तत इति नाम वस्त्वभिधानमित्यर्थः । धान्यद्रव्यादि प्रमीयते परिच्छिद्यतेऽनेनेति प्रमाणं, असृतिप्रसृत्यादि, अथवा इदमेवञ्च स्वरूपमस्य भवतीत्येवं प्रतिनियतस्वरूपतया प्रत्येकं प्रमीयते परिच्छिद्यते यत्तत्प्रमाणं अध्ययनादिषु प्रत्यध्ययनं यथासम्भवं प्रतिनियतार्थकथनं वक्तव्यता, यो यस्य सामायिकाद्यध्ययनस्याऽर्थस्तदुत्कीर्तनमर्थाधिकारः । वस्तूनां स्वपरोभयेष्वन्तर्भावचिन्तनं समवतार इत्येवं शास्त्रीयोपक्रमः षट्प्रकार इत्यर्थः ॥ १० ॥

इदानीमानुपूर्व्या दशविधत्वमाविष्करोति—

**नामस्थापनाद्रव्यक्षेत्रकालोत्कीर्तनागणनासंस्थानसामाचारीभावैरानुपूर्वी दशधा ॥ ११ ॥**

**नामेति,** नामानुपूर्वी स्थापनानुपूर्वी च पूर्वोदितनामस्थापनावश्यकसदृशी द्रव्यानुपूर्व्यपि यावत्तदुभयव्यतिरिक्तद्रव्यानुपूर्वी तद्वदेव ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यानुपूर्वी तु औपनिधिक्यनौपनिधिकीभेदतो द्विविधा, तस्याः क्षेत्रादीनाञ्च व्याख्याऽग्रे करिष्यते ॥ ११ ॥

सम्प्रति नामविशास्त्रीयभेदानेवाह—

**एकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवदशभेदैर्दशविधं नाम ॥ १२ ॥**

**एकेति,** एकनाम द्विनाम त्रिनाम चतुर्नाम पञ्चनामेत्यादिभेदेन दशविधं नामेत्यर्थः ॥ १२ ॥

तत्रैकादिनाम विज्ञेयमित्याह—

**नाम्ना जीवाजीवाभ्यां द्रव्यगुणपर्यायैरागमलोपप्रकृतिविकारैर्नामिकनैपातिकाख्यातिकौपसर्गिकमिश्रैरौदयिकौपशमिकक्षायिकक्षायोपशमिकपारिणामिकसान्निपातिकैष्षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादैर्विभक्तिभिर्वीरशृङ्गाराद्भुतरौद्रव्रीडनकबीभत्सहास्यकरुणशान्तैर्गौणनोगौणाऽऽदानपदप्रतिपक्षपदप्रधानतानादिसिद्धान्तनामावयवसंयोगप्रमाणैर्नामभेदाः ॥ १३ ॥**

**नाम्नेति,** येन येनचिदेकेनापि सता नाम्ना सर्वेऽपि विवक्षितपदार्था अभिधातुं शक्यन्ते तदेकनाम, यथा जीवाजीवभेदानां द्रव्याणां ज्ञानादिरूपादिगुणानां नारकत्वादीनामेकगुणकृष्णत्वादीनाञ्च पर्यायाणामभिधानानि यानि कानिचिल्लोके रूढानि तानि सर्वाणि नामत्वसामान्याव्यभिचारादेकेन नामशब्देनोच्यन्त इत्येतदेकनाम, **जीवाजीवाभ्यामिति,** विद्यमानं सर्वमपि वस्तु एकाक्षरेण नाम्ना ह्रीः श्रीरित्यादिरूपेणाभिधीयते कन्यावृद्धिर्देवतेत्याद्यनेकाक्षरेण वा, अतो नामद्वयेनानेन विवक्षितनिखिलपदार्थस्याभिधानाद्द्विनामोच्यते, यद्वा जीवाजीवाभ्यामिति, यदस्ति वस्तु जगति तेन जीवनाम्नाऽजीवनाम्ना वा भवितव्यमिति जीवाजीवनामभ्यां विवक्षितसर्ववस्तुसंग्रहात् द्विनाम भवति, एवं सामान्यनाम्ना विशेषनाम्ना च सर्वेषां संग्रहो भाव्यः । **द्रव्यगुणपर्यायैरिति,** द्रव्यगुणपर्यायभेदात् त्रिविधं वस्तु, द्रव्यं धर्मास्तिकायादयः, गुणाः वर्णगन्धादयः, पर्याया एकगुणकालत्वादयः, तथा च यत्किमपि नाम तेन सर्वेणापि द्रव्यनाम्ना गुणनाम्ना पर्यायनाम्ना वा भवितव्यं नातः परं किमपि नामास्ति ततस्सर्वस्याप्यनेन संग्रहात् त्रिनामैतदुच्यते । एवं द्रव्यादिनाम्नां सामान्यतस्स्त्रीपुंनपुंसकलिङ्गेषु त्रिप्रकारेषु वर्त्तमानत्वात् त्रिविधं नाम भाव्यम् । **आगमलोपप्रकृतिविकारैरिति,** आगमो नुम् सुडादिः, तेन निष्पन्नं नाम यथा पद्मानीत्यत्र 'नपुंसकस्य झलच' इत्यनेन नुमागमविधानात्तेन निष्पन्नं पद्मानीति नाम, संस्कार उपस्कार इत्यादीनि नामानि तु सुडागमेन । मनीषेत्यादिनामानि सकारादिलोपनिष्पन्नानि, सरसिज कण्ठे-

शाल इत्यादीनि प्रकृतिभावनिष्पन्नानि, एवममी एताविल्यादीन्यपि। वर्णस्यान्यथाकरणं विकारस्तेन निष्पन्नं दण्डाग्रं तस्कर षोडशेत्यादिनामानि दीर्घादिना वर्णविकारात्। तथा च वस्तुमात्रमागमनिष्पन्नेन लोपनिष्पन्नेन प्रकृतिभावसिद्धेन विकारजेन वा नाम्ना भवतीति चतुर्नामोच्यते। **नामिकनैपातिकाऽऽख्यातिकौपसर्गिकमिश्रैरिति,** यथा अश्व इत्यादि नामनिष्पन्नं, वस्तुवाचकत्वात्, खल्वित्यादि नैपातिकं निपातगणान्तर्गतत्वात्, धावतीत्यादि आख्यातिकं क्रियाप्रधानत्वात्, परीत्यादि औपसर्गिकं, उपसर्गेषु पठितत्वात्, संयत इत्यादि मिश्रं, उपसर्गनामसमुदायनिष्पन्नत्वात्, एतैरपि सर्वस्य पदार्थस्य क्रोडीकरणात् पञ्चनामत्वम्। **औदयिकौपशमिकक्षायिकक्षायोपशमिकपारिणामिकसान्निपातिकैरिति,** अत्र नाम्न उपक्रमे तदभिधेयभावलक्षणार्थाभिधाने नामनामवतोरभेदोपचारादिति ज्ञेयम्। तत्रोदय एवौदयिकः ज्ञानावरणाद्यष्टविधकर्मप्रकृतीनां स्वस्वरूपेण विपाकतोऽनुभवनम्, उदयेन निष्पन्न औदयिक इति वा, उदयनिष्पन्नोऽयं नामपदार्थो जीवे उदयनिष्पन्नोऽजीवे उदयनिष्पन्नश्चेति द्विविधः, आद्यो नारकतिर्यङ्मनुष्यदेवपृथिवीकायादयः, द्वितीय औदारिकादिशरीराणि तद्व्यापारपरिणमितवर्णगन्धादयश्च। उपशम एवौपशमिकः, उपशमेन निष्पन्नो वौपशमिकः, अष्टाविंशतिभेदभिन्नस्य मोहनीयस्योपशमश्रेण्यामुपशमः प्रथमः, अपरश्च क्रोधादीनामुपशान्ततायां ये व्यपदेशास्ते सर्वे। क्षय एव क्षायिकः क्षयेण निर्वृत्तो वा क्षायिकः, ज्ञानावरणादिकर्मप्रकृतीनामष्टानां सोत्तरभेदानां सर्वथापगमः प्रथमः, अपरस्तु क्षयनिष्पन्नतत्फलरूपः। क्षयोपशमावेव क्षायोपशमिकः क्षयोपशमाभ्यां वा निर्वृत्तः क्षायोपशमिकः, केवलज्ञानप्रतिबन्धकानां चतुर्णां घातिकर्मणां उदयप्राप्तानां क्षयः, अनुदीर्णानामुपशमरूपश्च क्षायोपशमिक आद्यः, द्वितीयस्तु मतिज्ञानलब्धिश्रुतज्ञानलब्ध्यवधिज्ञानलब्धिमनःपर्ययज्ञानलब्धिमत्यज्ञानलब्ध्यादयः। तेन तेन रूपेण वस्तूनां भवनं परिणामस्स एव पारिणामिकस्तेन निर्वृत्तो वा, साधनादिरूपेण पारिणामिको भावो द्विविधः, आद्यो जीर्णत्वशब्दाभ्रवृक्षसन्ध्यागन्धर्वनगरादयः, धर्माधर्माकाशादयो द्वितीयः। औदयिकादिभावानां द्व्यादीनां मिलनं सन्निपातः स एव तेन वा निर्वृत्तस्सान्निपातिकः, यथा द्विकसंयोगे दश, औदयिकौपशमिकनिष्पन्नः, औदयिकक्षायिकनिष्पन्नः, औदयिकक्षायोपशमिकनिष्पन्नः, औदयिकपारिणामिकनिष्पन्नः, औपशमिकक्षायिकनिष्पन्नः, औपशमिकक्षायोपशमिकनिष्पन्नः, औपशमिकपारिणामिकनिष्पन्नः, क्षायिकक्षायोपशमिकनिष्पन्नः, क्षायिकपारिणामिकनिष्पन्नः, क्षायोपशमिकपारिणामिकनिष्पन्नश्चेति, एवं त्रिकसंयोगे दश, पञ्च चतुस्संयोगे, एकस्तु पञ्चकसंयोग इति षड्विंशतिरनुयोगद्वारे द्रष्टव्यास्सर्वे। द्विकसंयोगे नवमभङ्गस्सिद्धस्य, परे नव द्विकयोगा न कचिज्जीवे सम्भवन्ति संसारिणो जघन्यतोऽपि गतिरौदयिकी क्षायोपशमिकानीन्द्रियाणि पारिणामिकं जीवत्वमित्येवं त्रयस्य लाभात् किन्तु ते प्ररूपणामात्रमिति, एतैः षड्भिर्भावैर्धर्मास्तिकायादेः समस्तस्यापि वस्तुनस्सङ्ग्रहात् भावषट्कवाचकनामानि षडिति भावः॥ **षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादैरिति,** नासाकण्ठोरस्तालुजिह्वादन्तैष्षड्भिर्जातस्स्वरः षड्जः, नाभिसमुत्थः कण्ठशीर्षसमाहतो वृषभवन्नर्दतीति ऋषभः, हृत्कण्ठसमाहतनाभिसमुत्थनानागन्धवहवायुजन्यो गान्धारः, उरोहृत्समाहतनाभिसमुत्थनाभिप्राप्तवायुजन्यो मध्यमः, नाभिसमुत्थो हृत्कण्ठशिरोहतवायुजनितः पञ्चमः, पूर्वोदितस्वराननुसन्धयन् स्वरो धैवतः, यस्मिन् स्वरा निषीदन्ति सर्वांश्चाभिभवति स निषादः, जीवाजीवनिश्रितस्वर-

विशेषा एते, मृदङ्गादजीवेषु षड्जादिव्युत्पत्त्यर्थाभावेऽपि तत्सादृश्यात्तत्त्वमवगन्तव्यम्, तदेवमेतैः षड्जादिभिः सप्तभिर्नामभिस्समस्तस्यापि स्वरमण्डलस्याभिधानात्सप्त नामोच्यते । **विभक्तिभिरिति,** विभज्यते प्रकटीक्रियतेऽर्थ आभिरिति विभक्तयस्ताभिरिति विग्रहः नामविभक्तयो ग्राह्या नाख्यातविभक्तयः, ता चाष्टविधाः लिङ्गार्थमात्रप्रतिपादनरूपे निर्देशे प्रथमा विभक्तिर्भवति, अन्यतरक्रियायां प्रवर्त्तनेच्छोत्पादनरूपे उपदेशे द्वितीया, उपलक्षणमिदं करोतीत्याद्युपदेशमन्तरेणापि द्वितीयाया दर्शनात्, एवमग्रेऽपि, विवक्षितक्रियासाधकतमे करणे तृतीया, यस्मै सम्प्रदीयते तस्मिन् गवादिदानपात्रभूते सम्प्रदाने चतुर्थी, वियुज्यमानावधिभूतेऽपादाने पञ्चमी, स्वस्वामिभावादिसम्बन्धे षष्ठी, आधारार्थे सप्तमी, आमन्त्रणार्थे सम्बोधनविभक्तिरिति, एतद्विभक्त्यन्तं नामाप्यष्टविधम्, न च विभक्तिमन्तरेणान्यन्नामास्ति, अतोऽनेन नामाष्टकेन सर्वस्य वस्तुनोऽभिधानद्वारा सङ्ग्रहणादष्टनाम । **वीरशृङ्गाराद्भुतरौद्रव्रीडनकबीभत्सहास्यकरुणशान्तैरिति,** एते काव्येषूपनिबद्धा रसाः तत्तत्सहकारिकारणसन्निधानोद्भूताश्चेतोविकारविशेषाः, उत्तमप्रकृतिपुरुषचरितश्रवणादिहेतुसमुद्भूतो दानाद्युत्साहप्रकर्षात्मको वीरः, कमनीयकामिनीविलोकनादिसम्भवो रतिप्रकर्षात्मकः शृङ्गारः, कुत्र शिल्प त्यागतप शौर्यकर्मादि वा सकलभुवनातिशायि विस्मयपूर्वं रसोऽद्भुतमुच्यते तद्दर्शनश्रवणादिभ्यो जातो रसोऽप्युपचाराद्विस्मयरूपोऽद्भुतः, रिपुजनमहारण्यादिदर्शनात्प्रादुर्भूतो निष्टुराध्यवसायरूपो रसो रौद्रः, लज्जनीयवस्तुदर्शनादिप्रभवो मनःसङ्कोचनादिस्वरूपो व्रीडनकः, शुक्रशोणितोच्चारप्रस्रवणादिदर्शनश्रवणादिप्रभवो जुगुप्साप्रकर्षस्वरूपो बीभत्सः, विकृतासम्बद्धपरवचनवेषालङ्कारादिहास्यार्हपदार्थप्रभवो मनःप्रकर्षादिचेष्टात्मको हास्यः, प्रियविप्रयोगादिदुःखहेतुसमुत्थः शोकप्रकर्षस्वरूपः करुणो रसः, परमगुरुवचनश्रवणादिहेतुसमुत्थसितोपशमप्रकर्षात्मा शान्तो रसः । तथा चैतैर्नवभिर्नामभिर्विवक्षितस्य रसस्य सर्वस्याप्यभिधानान्नव नामेदमुच्यते । **गौणनोगौणाऽऽदानपदप्रतिपक्षपदप्रधानतानादिसिद्धान्तनामावयवसंयोगप्रमाणैरिति,** गुणैर्निष्पन्नं गौणं यथा क्षमणतपनादिपदानि, क्षमालक्षणतपनलक्षणादिगुणनिष्पन्नत्वात् सार्थं पदमिति यावत्, यत्तु न गुणनिष्पन्नं तन्नोगौणम्, अन्वर्थाननुयायीति यावत्, यथा समुद्गसमुद्रादय, समुद्गशब्दो हि कर्पूराद्याधारविशेषे वर्त्तते, स चाविद्यमानमुद्गः, समुद्रो जलराशौ वर्त्तते स चाङ्गुल्याभरणविशेषभूतमुद्रारहित इति । आदीयते तत्प्रथमतयोच्चारयितुमारभ्यते शास्त्राद्यनेनेत्यादानं तच्च तत्पदञ्चादानपदं, शास्त्रस्याध्ययनोद्देशकादेश्चादिपदमित्यर्थस्तेन हेतुभूतेन किमपि नाम भवति, यथा आवन्तीत्याचारस्य पञ्चमाध्ययनं तत्र ह्यादावेव 'आवन्ती केयावन्ती'त्यालापको विद्यत इत्यादानपदेनैतन्नाम, एवमन्यदपि भावनीयम् । विवक्षितधर्मस्य विपरीतः प्रतिपक्षस्तद्वाचकं पदं प्रतिपक्षपदं यथा शृगाली अशिवाऽपि अमाङ्गलिकशब्दपरिहारार्थं शिवा भण्यते, नोगौणं प्रवृत्तिनिमित्ताभावमात्रेणोक्तं, प्रतिपक्षपदं तु प्रतिपक्षधर्मवाचकत्वसापेक्षमिति विशेषः । प्रधानस्य भावः प्रधानता यया नाम किमपि भवति, यथा अशोकवृक्षबहुलमल्पाम्रादिवृक्षयुतं वनमशोकवनमिति, गुणव्याप्तपदार्थवाचकं गौणपदं, अनेकसङ्घटितपदार्थवाचकमिदमिति विशेषः । अनादिकालादारभ्येदं वाच्यमिदं वाचकमिति वाच्यवाचकभावेन सिद्धो यः परिच्छेदः सोऽनादिसिद्धान्तः तेन निष्पन्नं नाम, यथा धर्मास्तिकायादिपदं एतत्पदवाच्योऽर्थः कदाऽप्यन्यथात्वं न भजते,

परिणमन्नपि प्रदीपादिपदवाच्यो भवतीति विशेषः । नाम पितृपितामहादेर्वाचकमभिधानं तेन हेतुभूतेन पुत्रपौत्रादिनाम भवति, पित्रादेर्यद्बन्धुदत्तादि नामासीत् पुत्रादेरपि तदेव विधीयमानं नाम्ना नामोच्यते । अवयविन एकदेशोऽवयवस्तेन नाम, शृङ्गी द्विपदं चतुष्पदमित्यादि, इदमवयवप्राधान्यतया प्रवर्त्तते गौणनाम तु सामान्यरूपतया प्रवर्त्तत इति भेदः । संयोगस्सम्बन्धः, स चतुर्विधो द्रव्यसंयोगः क्षेत्रसंयोगः कालसंयोगः भावसंयोगश्चेति, आद्यः सचित्ताचित्तमिश्रद्रव्यभेदात्त्रिविधः गोमानित्यादि सचित्तद्रव्यसंयोगेन, छत्रीत्यादि अचित्तद्रव्यसंयोगेन, हालिक इत्यादि मिश्रद्रव्यसंयोगेन, हलस्याचेतनत्वाद्बलीवर्दानां सचेतनत्वात् । क्षेत्रसंयोगो यथा भारतो भरते जातत्वाभिवासाद्वा, ऐरवतो हैमवत इत्यादि, सुषमसुषमजः सुषमज इत्यादि कालसंयोगः, भावः पर्यायः, स च द्विधा प्रशस्तो ज्ञानादिस्तेन ज्ञानी दर्शनीत्यादि, अप्रशस्तः क्रोधादिस्तेन क्रोधी मानीत्यादिरिति भावसंयोगः संयोगप्रधानतया प्रवृत्तत्वादस्य गौणाद्भेदः । नामस्थापनाद्रव्यभावभेदेन प्रमाणं चतुर्विधम्, जीवादीनां प्रमाणमिति यन्नाम तन्नामप्रमाणं, नक्षत्रदेवताकुलपाषण्डगणादीनि वस्तून्याश्रित्य यस्य कस्यचिन्नामस्थापनं क्रियते सेह स्थापना, सैव प्रमाणं स्थापनाप्रमाणं तेन नाम भवति, यथा कार्त्तिकः कृत्तिकादत्त इत्यादि, कृत्तिकायां जातत्वात् कृत्तिकाभिर्दत्तत्वात्, एवं देवतादिप्रयुक्तान्यपि भाव्यानि । द्रव्यप्रमाणं धर्मास्तिकायादिनामानि षट्, तद्द्रव्यरूपप्रमाणनिष्पन्नत्वात् । युवार्यत्वादिको गुणो भावः तेन वस्तुनः परिच्छिद्यमानत्वात्प्रमाणं तेन निष्पन्नं नाम भावप्रमाणम्, समासजतद्धितजधातुजनैरुक्तभेदाच्चतुर्विधम्, समासस्य सप्तविधत्वेन समासजं सप्तविधं दन्तोष्ठपुष्पितकुटजकदम्ब्यादिरूपम् । दौविधस्सौत्रिक इत्यादि तद्धितजम् । भूरयं परस्मैपदी धातुः सत्तालक्षणार्थस्य वाचकत्वेन धातुजं नामेति, अभिधानाक्षरानुसारतो निश्चितार्थस्य वचनं निरुक्तं तत्र भवं नैरुक्तम्, तच्च मह्यां शेते महिष इत्यादिरूपम् । एवैर्दशभिर्नामभिस्सर्वस्यापि वस्तुनोऽभिधानद्वारेण सङ्ग्रहाद्दशनामेति दिक् ॥ १३ ॥

अथ शास्त्रीयोपक्रमान्तर्गतं तृतीयं प्रमाणमाह—

## द्रव्यक्षेत्रकालभावैश्चतुर्विधं प्रमाणम् ॥ १४ ॥

**द्रव्येति,** प्रस्थतिप्रस्थत्यादि प्रमाणं यद्वा धान्यद्रव्यादेः परिच्छेदः प्रमाणं, प्रस्थत्यादिकञ्च तद्धेतुत्वात् प्रमाणम्, तच्च द्रव्यविषयकत्वात्क्षेत्रविषयकत्वात्कालविषयकत्वाद्भावविषयकत्वाच्च चतुःप्रकारमित्यर्थः ॥ १४ ॥

द्रव्यादिप्रमाणानां प्रदेशसम्बन्धित्वेन विभागसम्बन्धित्वेन द्वैविध्यमित्याह—

## प्रदेशविभागाभ्यां द्रव्यक्षेत्रकालानां परिच्छेदा द्रव्यादिप्रमाणानि ॥ १५ ॥

**प्रदेशेति,** सर्वसूक्ष्मो भागः प्रदेशः, स्वगतप्रदेशान् विहायापरो विशिष्टः प्रकारो विभागः ताभ्यां द्रव्यादेर्यः परिच्छेदः स्वरूपावगमः स द्रव्यादिप्रमाणरूपः, भावप्रमाणस्यान्याद्दृशत्वाद्द्रव्यक्षेत्रकालानामिति, द्रव्यादीत्यादिना क्षेत्रकालयोर्ग्रहणम् ॥ १५ ॥

अथ द्रव्यादीनां स्वार्थ्या परिच्छेद इत्याह—

**एकद्वित्र्याद्यणवः प्रदेशा मानोन्मानावमानगणिमप्रतिमानानि च विभागा द्रव्यस्य ॥ १६ ॥**

एकेति, एकप्रदेशनिष्पन्न परमाणु, द्विप्रदेशनिर्वृत्तो द्विप्रदेशिकः प्रदेशत्रयघटितः त्रिप्रदेशिक इत्येव यावदनन्तैः प्रदेशैरसम्बद्धोऽनन्तप्रदेशिक, ननु सर्वेषामेषां द्रव्यत्वेन प्रमेयत्वात्कथं प्रमाणत्वमिति चेन्नैवम्, प्रत्यक्षादिप्रमाणेन मितस्य पुञ्जीकृतस्य द्रव्यादेर्लोके प्रत्यक्षादिरिव पुञ्जीकृतस्थितप्रतीत्या- दिव्यवहारेण द्रव्यस्यापि धर्मसाधनप्रमाणशब्दवाच्यत्वात्, तत्तत्प्रदेशनिष्पन्नत्वलक्षण स्वरूप करण- व्युत्पत्त्या मुख्य प्रमाण द्रव्य तु तत्स्वरूपयोगादुपचारेण, भावव्युत्पत्तौ तु प्रमितिर्मुख्य प्रमाण, प्रमाण- प्रमेये चोपचारत इति । धान्यमानादेस्स्वरूपन्तु न स्वगतप्रदेशाश्रयेण, किन्तु मानोन्मानादिपञ्चविध विभागेन, तत्र मान धान्यविषय रसविषयञ्च, धान्ये असृतिप्रसृत्यादिः, अधोमुखहस्ततलरूपाऽसृतिः, तत्परिच्छिन्न धान्यमपि तथा, असृतिद्वयनिष्पन्ना नावाकारतान्यवस्थापितप्राञ्जलकरतलरूपा प्रसृति, एव सेतिकाकुडवप्रस्थकादयो विज्ञेया । रसो मद्यादिस्तद्विषय मान रसमानप्रमाण, धान्यस्याद्रवत्वाच्छिखा भवति, रसस्य द्रवरूपत्वान्न शिखासम्भव, अतो बहिःशिखाभावाद्धान्यमानाच्चतुर्भागवृद्धियुक्त सेति- कादेर्यन्मीयते तद्रसमानप्रमाणमुच्यते, षट्पञ्चाशदधिकशतद्वयपलमाना मणिकानाम रसमान तस्या एव द्वात्रिंशत्तमभागवर्तित्वादष्टपलप्रमाणा द्वात्रिंशिका, मणिकाया एव षोडशभागवर्तित्वात् षोडश- पलप्रमाणा षोडशिका इत्यादिमानमनुयोगद्वारेण भाव्यम् । यदुन्मीयते प्रतिनियतस्वरूपतया व्यवस्था- प्यते तदुन्मानम्, यथा पलस्याष्टमाशोऽर्धकर्ष, पलस्य चतुर्भाग कर्ष पलस्यार्धमर्धपलमित्यादि । अव- मीयते परिच्छिद्यते हस्तादिना यत्तदवमान रात्रादि, चतुर्विंशत्यङ्गुलमानो हस्तस्तच्चतुर्भिर्दण्डधनुर्युग- नालिकाक्षमुशलरूपा षट् सज्ञा लभ्यन्ते, वास्तु हस्तेन मीयते कृषिकर्मादिविषयभूत क्षेत्र दण्डेन मीयते, मार्गविषये धनुरेव मान, कूपादि नालिकया मीयते, एव युगादिरपि यस्य यत्र व्यापारो रूढ- स्तस्य तत्र वाच्य इति नैवेन चरितार्थत्वादवतरोपादान व्यर्थमिति भाव्यम् । गण्यते तद्गणिम यथा एक दश शत सहस्र दशसहस्र शतसहस्र दशशतसहस्र कोट्यादि । मेयस्य सुवर्णादे प्रतिरूप सदृश मान प्रतिमान यथा गुञ्जा, सपादा गुञ्जा काकिणी, त्रिभागोनगुञ्जाद्वयेन निष्पाव इत्यादि ॥ १६ ॥

अथ क्षेत्रस्य परिच्छेदक दर्शयति—

**क्षेत्रान्तिमभाग प्रदेश, अङ्गुलवितस्तिरत्निकुक्षिधनुर्गव्यूतयोजनश्रेणि- प्रतरलोकालोका विभागा. क्षेत्रस्य ॥ १७ ॥**

क्षेत्रेति, क्षेत्रस्य निर्विभागा ये भागास्तैरेकादिक्रमेण निष्पन्न प्रदेशनिष्पन्न, एकप्रदेशावगाढा- द्यसंख्येयप्रदेशावगाढपर्यन्त भावनीयम्, विभागे अङ्गुल त्रिविध, आत्माङ्गुलमुत्सेधाङ्गुल प्रमाणाङ्गुल- श्चेति, तत्र ये यस्मिन् काले भरतसगरादयो मनुष्याः प्रमाणयुक्ता भवन्ति तेषा सम्बन्ध्यत्रात्मा गृह्यते, आत्मनोऽङ्गुलमात्माङ्गुलं इदमनियतप्रमाण, पुरुषाणां कालादिभेदेनानवस्थितमानत्वात्, एतदङ्गुल- प्रमाणेन षडङ्गुलानि पादमध्यप्रदेश द्वौ पादौ पुञ्जीकृतौ वितस्ति, द्वे वितस्ती रत्निः रत्निद्वय कुक्षिः,

कुक्षिद्वयनिष्पन्नं धनुरिति, षट् प्रमाणविशेषाः दण्डधनुर्युगनालिकाऽक्षमुशला, द्वे धनुः सहस्रे गव्यूतं चत्वारि गव्यूतानि योजनं, वक्ष्यमाणप्रमाणाङ्गुलेन यद्योजनं तेनासंख्येया योजनकोटीकोट्यः सर्वतः समचतुरस्रीकृतलोकस्यैका श्रेणिर्भवति, इयमेव श्रेणिस्तयैव गुणिता प्रतरः सोऽपि श्रेण्या गुणितो लोकः, अयमपि संख्येयेन राशिना गुणितस्संख्येया लोकाः, अनन्तैश्च लोकैरलोक इति, सवर्त्त्यलोकस्य घनीकरणमनुयोगद्वारादिभ्योऽवसेयम्। नारकादिशरीराणामुच्चैस्त्वनिर्णयार्थमङ्गुलमुत्सेधाङ्गुलम्, तच्चानेकविधं तत्कारणस्य उत्तरोत्तरमष्टभिर्गुणितस्य परमाणुत्रसरेणुरथरेणुवालाग्रलिक्षायूकायवानामनेकविधत्वात्। परमाणुर्हि द्विविधः, सूक्ष्मो व्यावहारिकश्च। सूक्ष्मश्च 'कारणमेव तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः। एकरसवर्णगन्धो द्विस्पर्शः कार्यलिङ्गश्चे'ति लक्षितः परमाणुर्निश्चयनयाभिमतो निर्विभागः परमाणुः, यस्त्वनैरनेकैर्जायते स सांशत्वात् स्कन्धमेवाय नयो व्यपदिशति, नैश्चयिकोऽत्र परमाणुर्न विवक्षितः किन्तु व्यावहारिक एव। व्यवहारनयो हि तादृशानेकपरमाणुनिष्पन्नोऽपि यश्शस्त्रच्छेदाग्निदाहादिविषयो न भवति तमथापि तथाविधस्थूलताऽप्रतिपत्तेः परमाणुत्वेन व्यवहरति, एभिरष्टभिः श्लक्ष्णश्लक्ष्णिका, आभिरष्टाभिरूर्ध्वरेणुः, अष्टभिरेभिस्त्रसरेणुः, अष्टाभिश्चैभिः रथरेणुरित्येवं द्रष्टव्यम्। प्रमाणाङ्गुलन्तु सहस्रगुणितादुत्सेधाङ्गुलप्रमाणाज्जातं, परमप्रकर्षरूपं प्रमाणं प्राप्तमङ्गुलं वा प्रमाणाङ्गुलं नातःपरं बृहत्तरमङ्गुलमस्तीति, यद्वा समस्तलोकव्यवहारराज्यादिस्थितिप्रथमप्रणेतृत्वेन प्रमाणभूतोऽस्मिन्नवसर्पिणीकाले तावद्युगादिदेवो भरतो वा तस्याङ्गुलं प्रमाणाङ्गुलम्, विशेषोऽत्रानुयोगद्वारादितो विज्ञेयः ॥ १७ ॥

अथ कालस्य परिच्छेदकं दर्शयति—

**निर्विभाज्यकालभागः प्रदेशः समयावलिकोच्छ्वासनिःश्वासप्राणस्तोकलवमुहूर्त्ताहोरात्रपक्षमासर्त्वयनसंवत्सरयुगपूर्वाङ्गादयो विभागाः कालस्य ॥१८॥**

**निर्विभाज्येति**, कालस्य निर्विभागा ये भागास्तैरेकादिक्रमेण निष्पन्नः परमाणुः स्कन्धो वा, एकसमयस्थितिकमारभ्य यावदसंख्येयसमयस्थितिकः प्रदेशनिष्पन्नो भाव्यः, **समयेति**, समयः परमसूक्ष्मः कालः, समयानां समुदायादावलिका, संख्येयावलिकाभिरुच्छ्वासः, संख्येयावलिकाभिश्च निःश्वासः तुष्टस्य जराऽपीडितस्य व्याध्यनभिभूतस्य च जन्तोरेक उच्छ्वासयुक्तो निःश्वास एकः प्राणः, सप्त प्राणा एकस्स्तोकः सप्त स्तोका एको लवः, सप्तसप्ततिलवा मुहूर्त्तः, त्रिंशता मुहूर्त्तैरहोरात्रः, पञ्चदशभिस्तैः पक्षः ताभ्यां द्वाभ्यां मासः, मासद्वयेन ऋतुः, ऋतुत्रयमानमयनं, अयनद्वयेन संवत्सरः पञ्चभिस्तैर्युगं, चतुरशीत्या लक्षैः पूर्वाङ्गं तदपि चतुरशीत्या लक्षैर्गुणितं पूर्वं, एवं पूर्वपूर्वराशिः चतुरशीतिलक्षैर्गुणित उत्तरोत्तरं त्रुटिताङ्गत्रुटिताटटाङ्गाटटावयवाङ्गावयवहुहुकाङ्गहुहुकोत्पलाङ्गोत्पलपद्माङ्गपद्मनलिनाङ्गनलिनार्थनिपूराङ्गार्थनिपूरायुताङ्गायुतनयुताङ्गनयुतप्रयुताङ्गप्रयुतचूलिकाङ्गचूलिकाशीर्षप्रहेलिकाङ्गशीर्षप्रहेलिकारूपो भवति, एतावत्पर्यन्तं गणितस्य विषयः, अतः परं सवमौपमिकम्, उपमानमन्तरेण यत्कालप्रमाणमनतिशायिना गृहीतुं न शक्यते तदौपमिकम्। तच्च द्विधा पल्योपमं सागरोपमञ्च, तत्र पल्यो धान्यपल्य इव स्यात्, तत्र वृत्तत्वाद्दैर्घ्यविस्ताराभ्यां प्रत्येकमुत्सेधाङ्गुलनिष्पन्नं योजनं, उच्चत्वेनापि तद्योजनं किञ्चिन्न्यूनयोजनषड्भागाधिकयोजनत्रयं परिधिः स पल्यः, तेनोपमा यस्मिन् तत्पल्योपमं,

एतच्च त्रिविधं उद्धारपल्योपममद्धापल्योपमं क्षेत्रपल्योपमञ्चेति, एतेषां स्वरूपाणि अनुयोगद्वारादवसेयानि। पल्योपमानां दशभिः कोटाकोटीभिरेकं सागरोपमं भवति। दशसागरोपमकोटाकोटिमाना त्ववसर्पिणी, तावन्मानैवोत्सर्पिणी, अनन्ता उत्सर्पिण्यवसर्पिण्यः पुद्गलपरावर्त्तः, अनन्तास्तेऽतीताद्धा, तावन्मानैवानागताद्धा अतीतानागतवर्त्तमानकालस्वरूपा सर्वाद्धेति ॥ १८ ॥

अथ भावप्रमाणमाचष्टे—

## गुणनयसङ्ख्यारूपं भावप्रमाणम् ॥ १९ ॥

गुणेति, भावो वस्तुपरिणामः यथा ज्ञानादिर्वर्णादिश्च, प्रमीयते यत्तत्प्रमाणं भाव एव प्रमाणं भावप्रमाणम्। तच्च त्रिविधं गुणप्रमाणं नयप्रमाणं सङ्ख्याप्रमाणञ्चेति, प्रमीयते हि गुणैर्द्रव्यं, गुणाश्च गुणरूपतया, अतः प्रमाणता गुणानाम्, गुणप्रमाणञ्च जीवगुणप्रमाणमजीवगुणप्रमाणमिति द्विविधम्। जीवस्य गुणा ज्ञानदर्शनचारित्राणि तदेव प्रमाणमाद्यम्, तत्र ज्ञानरूपो गुणः प्रत्यक्षानुमानोपमानागमभेदतश्चतुर्विधः प्रत्यक्षमपि इन्द्रियनोइन्द्रियभेदेन द्विविधम्, ऐन्द्रियमपि पञ्चेन्द्रियापेक्षया पञ्चविधम्। नोइन्द्रियजञ्चावधिमनःपर्यवकेवलरूपम्, इन्द्रियजस्य प्रत्यक्षत्वं व्यवहारापेक्षया विज्ञेयम्। अनुमानञ्च पूर्ववत् शेषवत् दृष्टसाधर्म्यवच्चेति त्रिविधम्। पूर्वदृष्टलिङ्गद्वारा गमकमनुमानं पूर्ववत्, यथा मत्सुनोऽयमनन्यसाधारणक्षतादिलक्षणविशिष्टलिङ्गोपलब्धेरिति, अत्र हि बाल्यावस्थायां कोऽपि स्वदेशात्कुत्रापि पलायितः, पुनः कालान्तरे युवा सन् कथमपि प्रत्यागतः, स तन्माता पूर्वदृष्टेन क्षतादिविशिष्टलिङ्गेनानुमिनोति पूर्ववदिदम्। न चायं हेतुस्साधर्म्यवैधर्म्यदृष्टान्ताभावादगमक इति वाच्यम्, अन्यथाऽनुपपत्तिमात्रस्यैव गमकत्वेन तस्या अत्र सत्त्वात्। जिज्ञासितार्थाद्योऽर्थविशेषः, सो यस्य गमकस्तच्छेषवत्, तच्च पञ्चविधं, यथा हेषाशब्देन कार्येण तत्कारणमश्वमनुमिनुते, विशिष्टमेघोन्नत्या कारणेन तत्कार्यस्य वृष्टेरनुमानम्, गन्धादिना प्रतिनियतेन गुणेन तद्धेतुपुष्पादेरनुमानम्, विशिष्टशृङ्गाद्यवयवोपलम्भेनावयविनो महिषादेरनुमानम्, धूमबलाकाद्याश्रयेणाश्रयिणो वह्निजलादेरनुमानमिति। पूर्वोपलब्धार्थेन सह साधर्म्यं गमकन्तया यस्य तदनुमानं दृष्टसाधर्म्यवत्, पूर्वमर्थस्य सामान्यतो विशेषतो वा दृष्टत्वादिदं सामान्यदृष्टं विशेषदृष्टं चेति द्विविधम्, आद्यं यथा नालिकेरद्वीपादायातः कश्चित्, कञ्चनैकं पुरुषं दृष्ट्वाऽनुमिनोति यथाऽयमेकः पुरुषः परिदृश्यमान एतदाकारविशिष्टस्तथाऽत्र बहवोऽपरिदृश्यमाना अपि पुरुषा एतदाकारसम्पन्ना एव, एतत्स्थानीयपुरुषत्वाविशेषात्, अन्याकारत्वे सति पुरुषत्वहानिप्रसङ्गात्, गवादिवत्, एवं यदि प्रथमं बहवः पुरुषा वीक्षितास्तदा यथाऽमी परिदृश्यमानाः पुरुषा एतदाकारवन्तः तथाऽपरोऽप्येकः पुरुष एतदाकारवानेव, एतत्स्थानीयपुरुषत्वात्, अपराकारत्वे तद्धानिप्रसङ्गादश्वादिवदिति। द्वितीयं यथा कोऽपि कञ्चन पुरुषं क्वचिद्दृष्ट्वा तद्दर्शनाद्धितसंस्कारोऽसञ्जाततत्प्रमोषस्समयान्तरे बहुपुरुषसमाजमध्ये तमेव पुरुषविशेषमुपलभ्य मानयति य पूर्वं मयोपलब्धस्स एवायं पुरुषः, तथैव प्रत्यभिज्ञायमानत्वात्, उभयाभिमतपुरुषवदिति। सदृशवस्तुग्राहकमुपमानं साधर्म्योपनीतवैधर्म्योपनीतभेदतो द्विविधम्, उभयमपि किञ्चित्साधर्म्येण वैधर्म्येण चोपनीतं, प्रायः साधर्म्येण तद्वैधर्म्येण चोपनीतं, सर्वसाधर्म्येण तथाविधवैधर्म्येण चोपनीतमिति त्रिविधम्, किञ्चित्साधर्म्येणोपमानोपमेयभावः मूर्त्तत्वेन मन्दरसर्षपयोः सोदकत्वमात्रेण समुद्रगोष्पदयोरित्यादि,

प्रायस्साधर्म्येण गोगवययोः खुरककुदविषाणलाङ्गूलादिभिः, एषामुभयोस्समानत्वात्, सकम्बलत्वाद्गोः वृत्तकण्ठत्वाद्गवयस्य प्रायः साधर्म्यं बोध्यम्, सर्वसाधर्म्येण अर्हता अर्हत्सदृशं कृतमित्यादि। किञ्चिद्वैधर्म्यात् यादृशः शाबलेयो न तादृशो बाहुलेयो यथा चायं न तथेतर इत्यादि, अत्र च शेषधर्मतुल्यत्वात्किञ्चिन्निमित्तजन्मादिमात्रतस्तु वैलक्षण्यात् किञ्चिद्वैधर्म्यम्। प्रायोवैधर्म्यं यथा वायसो न तथा पायसः, यथा च पायसो न तथा वायस इति, अत्र सचेतनत्वाचेतनत्वादिभिर्बहुभिर्धर्मैर्विसदृशत्वात् शब्दगतवर्णद्वयेन सत्त्वादिमात्रतश्च साम्यात्प्रायो वैधर्म्यम्। सर्ववैधर्म्यन्तु न कस्यचित्केनापि सम्भवति, सत्त्वप्रमेयत्वादिभिस्सर्वभावानां समानत्वात्, वैषम्यसमानत्वेऽसत्त्वप्रसङ्गात्, किन्तु नीचेन नीचसदृशं गुरुघातादिकृतमित्युदाहरणम्, न च सादृश्यस्यैवेदं निदर्शनं न वैधर्म्यस्येति वाच्यम्, नीचोऽपि प्रायो नैवंविधं महापापमाचरति किं पुनरनीचस्तस्मात्सकलजगद्विलक्षणप्रवृत्तत्वविवक्षया वैधर्म्योक्तेः। लौकिकलोकोत्तरभेदेनागमो द्विविधः सूत्रार्थतदुभयागमभेदेन, आत्मागमानन्तरागमपरम्परागमभेदेन वा त्रिविधश्च। मिथ्यादृष्टिसन्दृब्धो भारतादिर्लौकिकः, अर्हदादिभिः प्रोक्तो लोकोत्तरः। सूत्रमेव सूत्रागमः, तदर्थश्चार्थागमः सूत्रार्थोभयरूपस्तु तदुभयागमः। विना गुरूपदेशेनात्मन एवाऽऽगम आत्मागमो यथा तीर्थकराणामर्थस्यागमः, स्वयमेव केवलेनोपलब्धेः। गणधराणां सूत्रस्यात्मागमः, स्वयमेव ग्रथितत्वात्, अर्थस्य त्वनन्तरागमोऽनन्तरमेव तीर्थकरादागतत्वात्। गणधरशिष्याणां जम्बूस्वामिप्रभृतीनां सूत्रस्यानन्तरागमः, अव्यवधानेन गणधरादेव श्रुतेः, अर्थस्य गणधरेण व्यवहितत्वात् परम्परागमः। तत ऊर्ध्वकालीनानां सर्वेषां सूत्रस्यार्थस्य नात्मागमो नानन्तरागमो वा किन्तु परम्परागम एवेति॥ दर्शनावरणक्षयोपशमादिजं सामान्यमात्रग्रहणं दर्शनं तदेवात्मनो गुणस्तद्रूपं प्रमाणं दर्शनगुणप्रमाणं चक्षुरचक्षुरवधिकेवलदर्शनरूपचतुष्टयभेदवत्। तत्तदावरणक्षयोपशमादिसमुद्भूतानि तत्तल्लब्धिमतो जीवस्य तत्तद्दर्शनरूपाण्येतानि। सावद्यविरतिरूपं चारित्रं तदेवात्मनो गुणस्तद्रूपं प्रमाणं सामायिकादिभेदात्पञ्चविधम्। प्रपञ्चितमेतत्सर्वं तत्त्वन्यायविभाकरे सटीके। अनन्तधर्मात्मके वस्तुन एकांशेन नयनं नयः स एव प्रमाणं नयप्रमाणं प्रस्थकदृष्टान्तेन वसतिदृष्टान्तेन प्रदेशदृष्टान्तेन च हेतुभूतेन त्रिविधम्, नैगमादयश्च विस्तरतस्तत्त्वन्यायविभाकरे प्रपञ्चिताः, सामान्येन चाग्रे निरूपयिष्यन्ते। प्रस्थकदृष्टान्तश्च प्रस्थको धान्यमानहेतुद्रव्यविशेषः, यः कश्चित् पुरुषः प्रस्थकहेतुभूतकाष्ठच्छेदाय कुठारकरो वनं गच्छन् पथि केनचित्पृष्टः क भवान् व्रजतीति प्रस्थकार्थं यामीति यद्ब्रवीति असौ नैगमव्यवहाराभ्यामविशुद्धाभ्यां प्रथमो वने उपचारः, न च प्रस्थकार्थं वने गच्छतः प्रस्थकेच्छाया मुख्यार्थस्याबाधितत्वात्कथं प्रस्थकपदस्योपचार इति वाच्यम्, प्रस्थकयोग्यवृक्षप्राप्तिरूपक्रियाविशिष्टवनस्यैव बोधात्, अधिकरणाकाङ्क्षोत्थापकशब्दसामर्थ्यात्। न च तर्हि सप्तम्यन्तप्रश्ने सप्तम्यन्तमेवोत्तरमुचितमिति वाच्यं, तथापि प्रस्थकेऽहं व्रजामीत्यत्र प्रस्थकपदस्य वने उपचारस्यावश्यकत्वात्। वृक्षं छिन्दन्तं दृष्ट्वा किं भवान् छिनत्तीति प्रश्ने प्रस्थकं छिनद्मीत्युत्तरे प्रस्थकपदस्य छेदनयोग्ये काष्ठे उपचारः काष्ठस्य प्रस्थकं प्रति कारणत्वात्, अयमुपचारः पूर्वस्माच्छुद्धः नैगमव्यवहारयोः, पूर्वस्मात् किञ्चिन्निर्मलत्वाद्विशुद्धत्वम्। एवमेवाग्रेऽपि पूर्वपूर्वापेक्षया यथोत्तरस्य विशुद्धता भाव्या। एवं क्रमेण किं भवान् तक्ष्णोति, उत्किरति, उल्लिखति, करोतीति प्रश्नेषु प्रस्थकं तक्ष्णोमि उत्किरामि उल्लिखामि

रोमीत्युत्तरेषु प्रस्थकपदस्य तक्षणादिक्रियायोग्यकाष्ठेषूपचारो भवति, तथा च नैगमव्यवहारावति-शुद्धौ उत्कीर्णनामानं प्रस्थकपर्यायमेव प्रस्थकमाहतुः । सङ्ग्रहनयस्तु आसादितप्रस्थकपर्यायं धान्येन भरितं प्रस्थकमाह, धान्यापूर्णमितरद्रव्यविशिष्टं विहाय नैगमोपदर्शितार्थसङ्कोचकत्वेन स्वनाम्नोऽन्वर्थत्व-सिद्धेः । अयं हि विशुद्धत्वात्कारणे कार्योपचारं कार्यान्तरणकारे च प्रस्थकत्वं नाङ्गीकुरुते, न चार्थ-क्रियाभावाभावाभ्यां द्रव्यभेदाभ्युपगमे ऋजुसूत्रमतानुप्रवेश इति वाच्यम्, नैगममतार्थसङ्कोचनाय क्वचित्तथोपगमेऽपि सर्वत्र तथाभ्युपगमाभावेन तदनुप्रवेशाभावात् । इत्थञ्चार्थक्रियाकारित्वदकारि-प्रस्थकव्यक्तिभेदार्थं क्रियाऽजनकप्रस्थकव्यक्तौ प्रस्थकत्वसामान्यमपि नास्तीत्यभ्युपगमेऽपि न कश्चि-द्दोषः । ऋजुसूत्रस्य मानं मेयञ्च द्वयमेव प्रस्थकस्वरूपम्, तन्मेयधान्ये च समुपहिते एव प्रस्थ-कव्यवहारादेकतरविनाभावे तत्परिच्छेदासम्भवात् । किञ्च मेयारूढं प्रस्थकत्वेन व्यपदेश्यं इति सम्भवनयमते मेयारूढं प्रस्थकारूढं मेयं वा तथेत्यत्र विनिगमकाभावादुभयत्रैव प्रस्थकपदशक्ते-र्व्यासज्यवृत्तित्वं युक्तं, कथं तर्हि प्रस्थकेन धान्यं मीयत इति प्रयोगः, एकत्रोभयवाचकपदेनैक-स्यानुपस्थापनादिति चेन्न, एतन्नयेन कथञ्चित् प्रस्थकपदशक्यतावच्छेदकस्य व्यासज्यवृत्तित्वेन विवक्षाभेदात्करणरूपानुप्रवेशस्यापि सम्भवात् । शब्दसमभिरूढैवम्भूतानां नयानां मते प्रस्थकस्वरू-पपरिज्ञानगतात्प्रस्थकर्तृगताद्वा प्रस्थकोपयोगाद्भिन्नं प्रस्थकं नास्ति, निश्चयमानात्मकप्रस्थकस्य जड-वृत्तित्वायोगात्, बाह्यप्रस्थकस्याप्यनुपलम्भकालेऽसत्त्वेन उपयोगानतिरेकाश्रयणादिति । वसतिदृष्टा-न्तश्च—कुत्र भवान् वसतीति पृष्टेऽशुद्धनैगमव्यवहारवादी लोके वसामीति ब्रूते स्थितिपर्यायात्मक-वसतेरधर्मास्तिकायव्याप्ताकाशात्मकलोकस्यैव निरूपकतावच्छेदकत्वात् । ततः शुद्धशुद्धतरशुद्ध-तमरूपा नैगमव्यवहारवादिनस्तु क्रमेण ऊर्ध्वाधस्तिर्यग्लोकभेदभिन्ने सर्वत्रापि किं भवान् वसती-त्यादिप्रश्ने तिर्यग्लोके जम्बूद्वीपे भारतक्षेत्रे तद्दक्षिणार्धे पाटलिपुरपत्तने गृहे वा वसामीति क्रमेणो-त्तरयन्ति तथा गर्भगृहपर्यन्तवसतिविषया नैगमव्यवहारभेदाः, विशुद्धतरनैगमव्यवहारयोस्तु वसन्नेव वसति नान्यथा, यत्र हि गृहादौ सर्वदा निवासित्वेनाऽसौ विवक्षितस्तत्र तिष्ठन्नेवैष तत्र वसतीति व्यपदिश्यते, यदि पुनः कारणवशतोऽन्यत्र रथ्यादौ वर्त्तते तदा तत्र विवक्षिते गृहादौ वसतीति न प्रोच्यतेऽतिप्रसङ्गादिति । तथा प्रयोगे केत्याद्याकाङ्क्षाबाहुल्याबाहुल्यकृतमत्र विशुद्ध्यविशुद्धिवैचित्र्यम् विशुद्धतरत्वञ्च व्युपरताकाङ्क्षप्रयोगकर्तृत्वात् । सङ्ग्रहस्तु संस्तारकारूढ एव वसतीत्यभ्युपैति, अन्यत्र वासार्थस्यैवाघटमानत्वात्, चलनादिक्रियावत्त्वात्, मार्गादिप्रवृत्तवत्, ऋजुसूत्रनयश्च येष्वाकाशप्रदेशेषु देवदत्तोऽवगाढस्तेष्वेवायं वर्त्तमानः समभ्युपैति, संस्तारके तद्वसत्यभ्युपगमे तु गृहकोणादावपि तदुपगम-प्रसङ्गः, संस्तारकावच्छिन्नव्योमप्रदेशेषु च संस्तारक एवावगाढो न तु देवदत्तोऽपीति न तेष्वपि तद्वस-तिमननमुपपद्यते, संस्तारकगृहकोणादौ तद्वसतिव्यवहारस्तु प्रत्यासत्तिदोषाद् भ्रान्तिमूलक एवेति । तत्रापि विवक्षितवर्त्तमानकाल एव वसति नातीतानागतयोः, विनष्टानुत्पन्नत्वेनैतन्मतेऽसत्त्वात् । शब्दनयास्त्रयः स्वस्मिन् वसति प्राहुः, मुख्याया वसतेः स्वप्रदेशेष्वेव सम्भवात्, आकाशप्रदेशानामपि परद्रव्यत्वेन तत्र स्वसम्बन्धस्य विचार्यमाणस्याघटनात् । प्रदेशदृष्टान्तश्च—तत्र **नैगमो** धर्माधर्माकाश-जीवस्कन्धतद्देशानां षण्णां प्रदेशमाह—**सङ्ग्रहो** धर्मादीनां पञ्चानां न तु तद्देशानां, तद्देशे स्वाभेदात्,

यथा दासक्रीत खरो मदीय एव, दासस्य मदीयत्वादिति, **व्यवहारश्च** यथा पञ्चाना वित्ते स्वामित्व साधारण न तथा प्रदेशे पञ्चवृत्तित्वमिति पञ्चाना न प्रदेश किन्तु पञ्चविध प्रदेश इति वाच्यमिति मन्यते। **ऋजुसूत्रो** ब्रूते पञ्चविध॰ प्रदेश इति न सम्भवति, प्रत्येक धर्मादिप्रदेशाना पञ्चविधत्वप्राप्ते, शब्दाद्धि प्रकृते वस्तु यथस्था, शब्दार्थेकमेव प्रतीतिर्भवति, एवञ्च सति पञ्चविंशतिविध प्रदेश प्राप्नोति तस्मात्प्रदेशो भजनीय, स्याद्धर्मास्तिकायस्य प्रदेश स्यादधर्मास्तिकायस्येत्यादि। **शब्दनयश्च** प्राह भजनाया विकल्परूपत्वेनैकतरमादाय विनिगन्तुमशक्यत्वाद्यो यदीय प्रदेश स तदीय एवेति व्यवस्थाया विलोपप्रसङ्ग, धर्मास्तिकायादिप्रदेशस्याधर्मास्तिकायादित्वेनापि भजनीयत्वप्रसङ्गात् किन्तु धर्मास्तिकाये य प्रदेश स धर्मास्तिकायात्मक, धर्मास्तिकायात्मको य प्रदेशस्स धर्मास्तिकाय इत्येवमधर्माकाशास्तिकाययोरपि, सोऽपि प्रदेश सकलधर्मास्तिकायादव्यतिरिक्तो धर्मास्तिकायस्यैकद्रव्यत्वात्। जीवे य प्रदेशो जीवात्मको वा य प्रदेशस्स तु नोजीव सकलजीवास्तिकायैकदेशवृत्ति, तथा स्कन्धे यः प्रदेश स्कन्धात्मको वा य प्रदेशस्स नोस्कन्ध, एकजीवाद्यात्मकस्य समस्तजीवाद्यस्तिकाये वृत्त्यसम्भवात्, जीवाना स्कन्धानाञ्चानन्त्यत्वादिति। **समभिरूढस्तु** धर्मे प्रदेश इति कुण्डे बदरमित्यादेरिव भेदबुद्धिप्रसङ्गात् सप्तमीसमासाभिलापक वचन न ब्रूते। यद्यपि घटे रूपमित्यादावभेदेऽपि सप्तमी दृष्टा तथापि भेदेऽभेदे च सप्तमीदर्शनेनात्र सशयलक्षणो दोषो दुर्वार एव, एतच्चाभेदप्रकारस्बोधार्थं धर्मश्चासौ प्रदेशश्चेति समानाधिकरणः कर्मधारय एवावश्यमाश्रयणीय। तत्पुरुषेऽभेदबोधाय पदलक्षणाया आवश्यकत्वात् कर्मधारये चाभेदस्य ससर्गविधयैव लाभाल्लक्षणाभावेन लाघवादिति। **एवम्भूतनयस्य** मते तु देशप्रदेशकल्पनारहितमखण्डमेव वस्तु सत्, देशप्रदेशकल्पना तु भ्रममात्रमिति। एते नया परस्परं निरपेक्षा दुर्नया, परस्परसापेक्षास्तु सुनया इति। सख्यान सख्यैव प्रमाण सख्याप्रमाणम्, सख्याशब्देन सख्याशङ्खयोर्द्वयोरपि ग्रहण प्राकृतमधिकृत्य समानशब्दाभिधेयत्वात्, एतच्च वनामस्थापनाद्रव्यौपम्यपरिमाणज्ञानगणनाभावसख्याभेदादष्टविधम्, अत्र सख्याशङ्खा वा यत्र घटन्ते ते तत्र योजनीया। ज्ञशरीरभव्यशरीरद्रव्यशङ्खपर्यन्त पूर्ववत्, व्यतिरिक्त तु एकभविकबद्धायुष्काभिमुखनामगोत्रभेदतस्त्रिविधम्, इह यो जीवो मृत्वाऽनन्तरभवे शङ्खेषूत्पत्स्यते स बद्धायुष्कोऽपि जन्मदिनादारभ्य एकभविक स शङ्ख उच्यते, यत्र भवे वर्तते स पर्यन्तो भव शङ्खेपूत्पत्तेरन्तरेऽस्तीति कृत्वा। शङ्खप्रायोग्यबद्धायुर्बद्धायुष्क, शङ्खभवप्राप्तस्य जन्तोर्येऽवश्यमुदयमागच्छतस्ते द्वीन्द्रियजात्यादिनीचैर्गोत्राख्ये अभिमुखे जघन्यतस्समयेनोत्कृष्टतोऽन्तर्मुहूर्तमात्रेणैव व्यवधानादुदयाभिमुखप्राप्ते नामगोत्रे कर्मणी यस्य सोऽभिमुखनामगोत्र.। उपमया वस्तुपरिच्छेद औपम्यसख्या, इयमुपमानोपमेययोस्सत्त्वासत्त्वाभ्या चतुर्धा, सत् सतोपमीयते, सदसतोपमीयते, असत्सतोपमीयते, असदसतोपमीयत इति, तीर्थंकरवक्षआदेरुपमेयस्य कपाटादिनोपमानेन सख्यानमाद्य, नैरयिकतिर्यग्योनिजमनुष्यदेवानामायूषि पल्योपमसागरोपमैरुपमीयन्ते, पल्योपमादीना कल्पनामात्रेण प्ररूपितत्वयाऽसत्त्वादिति द्वितीयम्, किसलयपत्रावस्थया वसन्तसमये पाण्डुपत्रावस्था उपमीयते तत्रोपमान तत्कालभावित्वात्सत्, उपमेयञ्च भूतपूर्वत्वादसत्, सत्या पाण्डुपत्रावस्थया भविष्यत्वादसती किसलयपत्रावस्था यदोपमीयते तदा तृतीयो भेद। असता खरविषाणेनासतश्शश-

विषाणस्योपमानं चतुर्थमिति । कालिकश्रुतपरिमाणसंख्यादृष्टिवादश्रुतपरिमाणसंख्यारूपेण द्विविधा परिमाणसंख्या प्रत्येकं पर्यवाक्षरादिसंख्याभेदेनानेकविधाऽनुयोगद्वारादितो विज्ञेया । ज्ञानरूपा संख्या ज्ञानसंख्या, यो देवदत्तादिर्यावच्छब्दादिकं जानाति स तावज्जानाति तज्ज्ञानज्ञस्याभेदोपचाराज्ज्ञानसंख्या । एतावन्त एते इति संख्यानं गणनसंख्या द्व्यादिसंख्या, एकस्तु न गणनसंख्यामवतरति, एकस्मिन् घटादौ दृष्टे घटादिवस्त्विदं तिष्ठतीति प्राय प्रतीते, न तु एकसंख्याविषयत्वेन, अल्पत्वाद्वा, आदानसमर्पणादिव्यवहारकाले हि एकं वस्तु प्रायो न कश्चिद्गणयतीति । सा च संख्येयकासंख्येयानन्तकभेदवती, संख्येयकं जघन्यादिभेदात् त्रिविधम् । असंख्येयकं परीतासंख्येयकं युक्तासंख्येयकं असंख्येयासंख्येयकमिति त्रिविधमपि प्रत्येकं जघन्यादिभेदान्नवविधम्, अनन्तकं तु परीतानन्तकं युक्तानन्तकमनन्तानन्तकञ्चेति त्रिविधमपि प्रथमयोर्द्वयोर्जघन्यादित्रिभेदतोऽन्त्यस्य जघन्योत्कृष्टभेदद्वयतश्चाष्टविधम् । विस्तरतं एषां स्वरूपमनुयोगद्वारादितोऽवसेयम् । भावशङ्खाश्च शङ्खप्रायोग्य तिर्यग्गत्यादिनामकर्म नीचैर्गोत्रकर्म च ये विपाकतो जीवा वेदयन्ति ते भावसंख्या, संख्याशब्देन शङ्खस्यापि ग्रहणाद्गुणप्रमाणादस्य भेदेन कथनमिति दिक् ॥ १९ ॥

अथ प्रमाणात् वक्तव्यताद्वारमाचष्टे—

## स्वपरोभयसमयभेदतस्त्रिविधा वक्तव्यता ॥ २० ॥

स्वेति, अध्ययनादिषु प्रतिनियतार्थकथनं वक्तव्यता, स्वसमयः स्वसिद्धान्तः, तस्याऽऽख्यानं यथा पञ्चास्तिकायाः धर्मादिरूपा इति, तथा प्रज्ञापनं यथा गत्यपेक्षाकारणं धर्मास्तिकाय इत्यादि, प्ररूपणं यथा सोऽसंख्यातप्रदेशात्मकादिस्वरूप इत्यादि, तथा दृष्टान्तद्वारेण दर्शनं यथा गतिमतां मत्स्यादीनां गत्युपष्टम्भकं जलमित्यादि, एवमुपनयद्वारेण निदर्शनम्—यथा तथैवैषोऽपि गतिमतां जीवपुद्गलानां गत्युपष्टम्भक इत्यादि, इत्येवंरूपतो यथासम्भवमर्थकथनं स्वसमयवक्तव्यता, परसमयवक्तव्यता तु यस्यां परसमय आख्यायते प्रज्ञाप्यते प्ररूप्यते दर्श्यते निदर्श्यते सा । यथा नास्तिकानामतेन पृथिव्यादिपञ्चमहाभूता लोके विद्यन्ते नान्ये, त एव कायाकारपरिणताश्चिद्रूपजीवव्यपदेशमश्नुवते नातिरिक्तः कश्चित्परलोकगामी जीवः भूतानामेव विनाशे एव जीवस्य विनाश इत्यादिरूपेण कथनं परसमयवक्तव्यता । स्वसमयः परसमयश्च यत्राख्यायते यथा गृहमावसन्तो गृहस्थाः, वनमावसन्तस्तापसा आरण्याः प्रव्रजिताश्च शाक्यादयः, मतमिदमस्मदीयमाश्रितास्सर्वदुःखेभ्यो विमुच्यन्त इति सांख्यादयो यदा प्रतिपादयन्ति तदेयं परसमयवक्तव्यता भवति, यदा तु जैनस्तदा स्वसमयवक्तव्यता, तत्रासौ स्वसमयपरसमयवक्तव्यतोच्यत इति भावः ॥ २० ॥

अथ नयैर्वक्तव्यतां विचारयति—

## नैगमसङ्ग्रहव्यवहाराणां त्रिविधा वक्तव्यता ॥ २१ ॥

नैगमेति, नैगमस्यानेकगमत्वाद् व्यवहारस्य लोकव्यवहारपरत्वात् सङ्ग्रहस्य सामान्यवादिनैगमांशत्वाच्च वक्तव्यतात्रैविध्यमप्येते स्वीकुर्वन्तीति भावः ॥ २१ ॥

ऋजुसूत्रादिकमाश्रित्याह—

## ऋजुसूत्रस्य द्विविधा शब्दनयस्य त्वेका ॥ २२ ॥

**ऋजुसूत्रस्येति,** विशुद्धतरो हि ऋजुसूत्रः स्वसमयपरसमयवक्तव्यतारूपा द्विविधामेव वक्तव्यतामिच्छति, तृतीयभेदस्य द्विविधेष्वेवान्तर्भावसम्भवेनासत्त्वान्न त्रैविध्यं वक्तव्यताया इति, शब्दनयस्य तु शब्दसमभिरूढैवम्भूतरूपस्य शुद्धतमत्वेनैकविधत्वमेव वक्तव्यतायास्सम्मतत्वम् । नास्त्येवात्मेत्याद्यनर्थप्रतिपादकत्वेन परसमयस्यानर्थकत्वेन नास्त्येव परसमयवक्तव्यता, आत्मन एव ह्यभावे कस्य नास्तीति प्रतिषेधः क्रियेत, अत्यन्तानुपलब्ध्या नास्त्येवाऽऽत्मेत्यपि न सम्यक्, तद्गुणस्य ज्ञानादेरुपलब्धेः युक्तिविरोधाच्चैकान्तक्षणभङ्गादेरसद्भूतत्वमेव, इत्येवमेतेषां मिथ्यादर्शनत्वेन नास्ति परसमयवक्तव्यता, स्यात्पदलाञ्छनसापेक्षत्वे चैषा स्वसमयवक्तव्यतान्तर्भाव एवेति ॥ २२ ॥

अथावश्यकमाश्रित्यार्थाधिकारं निरूपयति—

## सावद्यविरत्युत्कीर्त्तनगुणवत्प्रतिपत्तिस्खलितनिन्दाव्रणचिकित्सागुणधारणाभिरावश्यकस्यार्थाधिकाराष्षट् ॥ २३ ॥

**सावद्यविरतीति,** यो यस्य सामायिकाध्ययनस्यात्मीयोऽर्थस्तदुत्कीर्त्तनविषयोऽर्थाधिकारः, आवश्यकस्य षड्विधार्थाधिकारयोगात् षडध्ययनानि, तत्र सामायिकलक्षणं प्रथममध्ययनं, तत्र प्राणातिपातादिसर्वसावद्ययोगविरतिरर्थाधिकारः, क्रोधादयश्चत्वारोऽवद्यं, तेषां सर्वावद्यहेतुतया कारणे कार्योपचारात्, तेनावद्येन सह यो योगो व्यापारस्तस्माद्विरतिरित्यर्थः । चतुर्विंशतिस्तवरूपं द्वितीयमध्ययनं, तत्र तीर्थकराणां गुणोत्कीर्त्तनमर्थाधिकारः, प्रधानकर्मक्षयकारणत्वात् लब्धबोधिविशुद्धिहेतुत्वात् पुनर्बोधिलाभफलत्वात् सावद्ययोगविरत्युपदेशकत्वेनोपकारित्वाच्च । तृतीयं वन्दनाध्ययनं तत्र गुणवत्प्रतिपत्तिरर्थाधिकारः, व्रतपिण्डविशुद्ध्यादिरूपमूलोत्तरगुणवतो वन्दनादिकरणं पुष्टालम्बनेऽगुणवतोऽपि वन्दनादिकरणञ्चेति । चतुर्थे प्रतिक्रमणे स्खलितनिन्दाऽर्थाधिकारः, मूलोत्तरगुणेषु प्रमादाचीर्णस्य प्रत्यागतसंवेगस्य जन्तोर्विशुद्ध्यमानाध्यवसायस्याकार्यमिदमिति भावयतो निन्देत्यर्थः । कायोत्सर्गाख्ये पञ्चमेऽध्ययने व्रणचिकित्साऽर्थाधिकारः, चारित्रपुरुषस्य योऽयमतिचाररूपो भावव्रणस्तस्य दशविधप्रायश्चित्तभेषजेन चिकित्साप्रतिपादनमित्यर्थः । षष्ठे तु प्रत्याख्यानाध्ययने गुणधारणाऽर्थाधिकारः, निरतिचारं मूलोत्तरगुणप्रतिपत्तिधारणाप्ररूपणमित्यर्थः । अर्थाधिकारः प्रतिपदमनुवर्त्तते, वक्तव्यता तु देशादिनियतेति विशेषः ॥ २३ ॥

अथान्तिमं शास्त्रीयभेदं समवतारमाह—

## नामादिभिस्समवतारः षड्धा ॥ २४ ॥

**नामादिभिरिति,** आदिना स्थापनाद्रव्यक्षेत्रकालभावानां ग्रहणम् । अविरोधेन वर्त्तनं समवतारः, वस्तूनां स्वपरोभयेष्वन्तर्भावचिन्तनमिति यावत् स षोढा नामादिभिः । भव्यशरीरद्रव्यसमवतारं यानत्प्राग्वदूहनीयं ।

त्रिविध । अथ भाव , निखिलानि द्रव्याण्यात्मसमवतारेण निश्चयतश्चिन्त्यमानानि आत्मभावे स्वकीय-स्वरूप एव वर्त्तन्ते, तेषां ततोऽव्यतिरेकात्, व्यवहारतस्तु परसमवतारेण परभावे समवतरन्ति यथा कुण्डे बदराणि, तदुभयसमवतारेण च स्वात्मभावे परस्मिंश्च वर्त्तते, यथा घटकुड्यदेहलीपट्टादिसमुदायात्मके गृहे स्तम्भो वर्त्तते, आत्मभावे च तथैव दर्शनात् । कुण्डे बदराणीत्यत्र परभावे समवतारवर्णन नात्मभावे वर्त्तमानताया विवक्षामकृत्वैव, कुण्डादौ वर्त्तमानानां बदरादीनां स्वात्मन्यपि वृत्ते । शुद्धस्तु परसमवतारो नास्त्येव तस्माद्वस्तुतस्तदुभयव्यतिरिक्तद्रव्यसमवतारो द्विविध एव । क्षेत्रसमवतारोऽपि आत्मतदुभयभेदेन द्विविध , भरतादीनां लोकपर्यन्तानां क्षेत्रविभागानां यथापूर्वं लघुप्रमाणस्य यथोत्तरो बृहत्क्षेत्रे समवतारो भाव्य , अत्रापि सर्वेषां क्षेत्रविभागानां स्वस्वरूपेऽवस्थानमात्मसमवतार , एव कालसमवतारोऽपि द्विविधो लघुभूतसमयादिकालविभागस्य बृहति काल विभागे आवलिकादौ समवतार स्वपरसमवतारः स्वस्मिन्नेव समवतारस्तु आत्मसमवतार । भावसमवतारोऽपि द्विविधः, क्रोधस्य माने समवतारो विनाऽहङ्कारं क्रोधासम्भवात्, मायायामेव किल लुभ्यति, मानस्य मायायां, क्षपणकाले मानदलिकस्य मायायां प्रक्षिप्य क्षपणात्, मायाया लोभे, अस्या अपि तथात्वात्, लोभस्य रागे, लोभात्मकत्वाद्रागस्य, रागस्य मोहे, तस्य मोहविशेषत्वात्, मोहस्याष्टसु कर्मप्रकृतिषु, मोहस्य कर्मप्रकारत्वात्, तासामपि औदयिकादिषड्भावेषु, तासां तद्भाववृत्तित्वात्, भावाश्च जीवे, तदाश्रितत्वात्, जीवोऽपि जीवास्तिकाये, तद्भेदत्वात्, सोऽपि समस्तद्रव्यसमुदाये समवतरति द्रव्यभेदत्वात् । एते सर्वेऽप्यात्मसमवतारेणात्मभावेषु समवतरन्तीति ॥२४॥

इत्थं शास्त्रीयं षड्विधं निरूप्यानुपूर्वीभेदान्तर्गतां द्रव्यानुपूर्वीं निरूपयितुमुपक्रमते—

## औपनिधिक्यनौपनिधिकीभेदा व्यतिरिक्तद्रव्यानुपूर्वी ॥ २५ ॥

औपनिधिकीति, प्रसिद्धे नामस्थापनानुपूर्व्यौ, द्रव्यानुपूर्व्यपि आगमतो नोआगमतश्च, यस्य कस्यचिदानुपूर्वीतिपदं शिक्षितं स्थितं जितादि च स च जीवोऽनुपयुक्तस्तदा स द्रव्यानुपूर्वी आगमतः, नोआगमतो द्रव्यानुपूर्वी च ज्ञशरीरभव्यशरीरतदुभयव्यतिरिक्तभेदतस्त्रिविधा, आनुपूर्वीपदाभिज्ञस्य जीवविमुक्त शरीरमतीतानुपूर्वीभावस्य कारणत्वात्सम्प्रति सर्वथाऽऽगमरहितत्वाच्च नोआगमतो ज्ञशरीरद्रव्यानुपूर्वी, आगामिनि काले जिनोपदिष्टेन भावेनानुपूर्वीतिपदं शिक्षिष्यते, इदानीन्तु तत्र वपुषि आगमाभावेन नोआगमतो भव्यशरीरद्रव्याऽऽनुपूर्वी । एतदुभयव्यतिरिक्ता च द्रव्यानुपूर्वी औपनिधिक्यनौपनिधिकी चेति द्विधा, निधानं निधिर्निक्षेपो न्यासो विरचना प्रस्तारः स्थापनेति पर्यायाः, उप सामीप्येन निधिरुपनिधिः विवक्षित एकस्मिन्नर्थे पूर्वं व्यवस्थापिते तत्समीप एवापरापरस्य पूर्वानुपूर्व्यादिक्रमेण यन्निक्षेपण स उपनिधि , स प्रयोजनं यस्या आनुपूर्व्यां सौपनिधिकी, सामायिकाध्ययनादिवस्तूनां पूर्वानुपूर्व्यादिप्रस्तारप्रयोजनाऽऽनुपूर्वी अनौपनिधिकीत्युच्यते । पूर्वानुपूर्व्यादिक्रमेणानिरूपितन प्रयोजनं यस्या इत्यनौपनिधिकी, यस्यां पूर्वानुपूर्व्यादिक्रमेण विरचना न क्रियते सा द्व्यादिपरमाणुनिष्पन्नस्कन्धविषया आनुपूर्वी अनौपनिधिकीत्युच्यते । ननु परिपाटिरानुपूर्वी, अनौपनिधिकी चानुपूर्वी द्व्यणुकादिकोऽनन्ताणुकावसान एकैकः स्कन्धोऽभिप्रेतः, न च स्कन्धगतद्व्यादिपरमाणूनां नियता काचित् परिपाटिरस्ति, तेषां विशिष्टैकपरिणामपरिणतत्वात्, तथाच कथमत्रानुपूर्वीत्वमिति

चेत्त्वम्, तेषामादिमध्यावसानभावेन नियतपरिपाट्या व्यवस्थापनयोग्यतासद्भावात्, तदाश्रयेणानुपूर्वीत्वाविरोधात् ॥ २५ ॥

अथ बहुतरवक्तव्यतागोचरामनौपनिधिकीमाह—

**अनौपनिधिकी द्वेधा नैगमव्यवहारयोः सङ्ग्रहस्य च ॥ २६ ॥**

**अनौपनिधिकीति,** अस्या आनुपूर्व्या नयवक्तव्यताश्रयणाद्द्रव्यास्तिकनयमतेन नैगमव्यवहारसम्मता सङ्ग्रहसम्मता चेति द्वैविध्यं भवतीति भावः, पर्यायविचारस्याप्रक्रान्तत्वेन पर्यायास्तिकमतेन तस्या अनिरूपणादिति ॥ २६ ॥

तत्र नैगमव्यवहारसम्मतामाद्यामाह—

**प्रथमाऽर्थपदप्ररूपणताभङ्गसमुत्कीर्त्तनताभङ्गोपदर्शनतासमवतारानुगमभेदात् पञ्चधा ॥ २७ ॥**

**प्रथमेति,** नैगमव्यवहारसम्मताऽनौपनिधिकी द्रव्यानुपूर्वीत्यर्थः । पञ्चधेति, अर्थपदप्ररूपणता भङ्गसमुत्कीर्त्तनता भङ्गोपदर्शनता समवतारोऽनुगमश्चेति पञ्चविध इत्यर्थः, उक्तद्रव्यानुपूर्व्या उक्तनयद्वयमतेन स्वरूपस्य निरूपणादिति भावः ॥ २७ ॥

अर्थपदप्ररूपणतामाह—

**सञ्ज्ञासंज्ञिकथनमर्थपदप्ररूपणता ॥ २८ ॥**

**सञ्ज्ञेति,** आनुपूर्व्यादिपदं सञ्ज्ञा संज्ञी त्र्यणुकस्कन्धादिः, तयोः कथनं यथा परमाणुत्रयघटितस्त्रिप्रदेशिकः स्कन्ध आनुपूर्वीत्युच्यते चतुःप्रदेशिकस्स्कन्ध आनुपूर्वीत्युच्यते, एवमेव दशप्रदेशिकः स्कन्धः सङ्ख्येयप्रदेशिकोऽसङ्ख्येयप्रदेशिकोऽनन्तप्रदेशिकश्च स्कन्ध आनुपूर्वीत्युच्यते, परमाण्वन्तरासङ्गः परमाणुरेकोऽनानुपूर्वीत्युच्यते द्विप्रदेशिकश्चावक्तव्यकमित्युच्यते बहवस्त्रिप्रदेशिकादयः स्कन्धा आनुपूर्व्यः, बहवश्चैकाकिनः परमाणवोऽनानुपूर्व्यः, बहवो द्व्यणुकस्कन्धा अवक्तव्यकानीत्येवरूपसंज्ञासंज्ञिसम्बन्धकथनमर्थपदप्ररूपणतेति भावः । आदिमध्यान्तरूपानुक्रमस्य यत्र सम्भवस्स एवानुपूर्वीशब्दवाच्यः, स च त्रिप्रदेशिकादिस्कन्धस्वरूप एव, नैकः परमाणुस्तत्रादिमध्यान्तव्यवहाराभावात्, नापि द्व्यणुकस्कन्धः, तत्रापि मध्यव्यवहाराभावात्, आदिश्च हि यस्मात् परमस्ति न पूर्वं तत्त्वम् । अन्तश्च यस्मात् पूर्वमस्ति न परं तत्त्वम् । मध्यत्वञ्चाद्यन्तयोरन्तरत्वम् । यद्यपि द्व्यणुकस्कन्धे सम्पूर्णगणनानुक्रमाभावेऽपि परमाणुद्वयस्य परस्परं पूर्वपश्चाद्भावस्य सत्त्वेनानुपूर्वीत्वप्रसङ्गशङ्का स्यात्तथापि मध्यस्य कस्यचिदभावेनासाकर्येण पूर्वपश्चाद्भावोऽसिद्ध एव, परस्परापेक्षया पूर्वपश्चाद्भावस्य सत्त्वादेव न द्व्यणुकस्कन्धस्यानानुपूर्वीत्वमपि, तस्मादानुपूर्वीत्वेनानानुपूर्वीत्वेन वा वक्तुमशक्यत्वेनावक्तव्यक एव द्व्यणुकस्कन्धः । यद्यपि च सञ्ज्ञासंज्ञिसम्बन्धकथनरूपाया एकवचनमात्रेण त्रिप्रदेशिकादिस्कन्ध आनुपूर्वीत्येवमभिधानादेवार्थपदप्ररूपणाया निष्पन्नत्वात्त्रिप्रदेशिकाः स्कन्धा आनुपूर्व्य इत्यादिबहुवचननिर्देशो व्यर्थस्तथापि आनुपूर्व्यादिद्रव्याणां प्रतिभेदमनन्तव्यक्तिख्यापनार्थं नैगमव्यवहारयोरित्थंभूताभ्युपगमप्रदर्शनार्थञ्च तन्निर्देशः । अत्र त्र्यणुकचतुरणुकादीन्यानुपूर्वीद्रव्याण्य-

नानुपूर्व्यवक्तव्यकद्रव्येभ्यो बहूनि, तेभ्योऽनानुपूर्वीद्रव्याण्यल्पानि, तेभ्योऽप्यवक्तव्यकद्रव्याण्यल्पतराणीति बोध्यम् । अर्थपदप्ररूपणताया भङ्गसमुत्कीर्तनं प्रयोजनं, अष्टते सङ्घातसङ्घातिनिरूपणे संज्ञामन्तरेण निर्विषयाणां भङ्गानां निरूपयितुमशक्यत्वादिति ॥ २८ ॥

केयं भङ्गसमुत्कीर्तनतेत्यत्राह—

**पदसम्बन्धिप्रत्येकसंयुक्तविकल्पवर्णनं भङ्गसमुत्कीर्तनता ॥ २९ ॥**

**पदसम्बन्धीति,** आनुपूर्व्यनानुपूर्व्यवक्तव्यकपदनिष्पन्नानां सम्भविनां प्रत्येकभङ्गानां द्व्यादिसंयोगजभङ्गानाञ्च समुच्चारणं भङ्गसमुत्कीर्तनतेत्यर्थः, तत्फलन्तु भङ्गोपदर्शनता, वाचकमन्तरेण वाच्यस्य कथयितुमशक्यत्वादिति ॥ २९ ॥

अथ भङ्गोपदर्शनतां प्रतिपादयति—

**वर्णितभङ्गानामर्थेन प्रत्येकं प्रदर्शनं भङ्गोपदर्शनता ॥ ३० ॥**

**वर्णितेति,** पूर्वं समुत्कीर्तितानां भङ्गानां स्वाभिधेयेन त्र्यणुकाद्यर्थेन सह प्रत्येकमुपदर्शनं भङ्गोपदर्शनता, भङ्गसमुत्कीर्तनताया हि पदमात्रमेव केवलं प्रत्येकं वा द्व्यादिसंयोगजा वा भङ्गा उच्यन्ते, यथाऽस्त्यानुपूर्वी, अस्त्यनानुपूर्वी अस्त्यवक्तव्यकं, सन्त्यानुपूर्व्यः, सन्त्यनानुपूर्व्यः सन्त्यवक्तव्यकानीति प्रत्येकं षड्भङ्गाः । अस्त्यानुपूर्वी चानानुपूर्वी च, अस्त्यानुपूर्वी चानानुपूर्व्यश्च, सन्त्यानुपूर्व्यश्चानानुपूर्वी च, सन्त्यानुपूर्व्यश्चानानुपूर्व्यश्चेत्यादि । भङ्गोपदर्शनतायाञ्चैत एव भङ्गाः स्वस्वाभिधेयैरर्थैरुच्यन्ते यथा—त्रिप्रदेशिकः स्कन्ध आनुपूर्वी, परमाणुपुद्गलोऽनानुपूर्वी, द्विप्रदेशिकोऽवक्तव्यकः, त्रिप्रदेशिका आनुपूर्व्यः, परमाणुपुद्गला अनानुपूर्व्यः, द्विप्रदेशिका अवक्तव्यकाः, त्रिप्रदेशिकश्च परमाणुपुद्गलश्चानुपूर्वी चानानुपूर्वी च । त्रिप्रदेशिकश्च परमाणुपुद्गलाश्चानुपूर्वी चानानुपूर्व्यश्च, त्रिप्रदेशिकाश्च परमाणुपुद्गलश्चानुपूर्व्यश्चानानुपूर्वी च । त्रिप्रदेशिकाश्च परमाणुपुद्गलाश्चानुपूर्व्यश्चानानुपूर्व्यश्चेत्यादि । एवंरूपेण भङ्गानां साभानां वर्णनं भङ्गप्रदर्शनतेति भावः ॥ ३० ॥

अथ समवतारमाख्याति—

**तेषां स्वपरस्थानान्तर्भावचिन्तनप्रकारः समवतारः ॥ ३१ ॥**

**तेषामिति,** आनुपूर्व्यादिद्रव्याणामित्यर्थः, आनुपूर्व्यादिद्रव्याणि सर्वाणि स्वस्वजातावेवाविरोधेन वर्त्तन्ते न पुनः स्वजातिमुल्लङ्घ्य, तथात्वे विरोधादेवञ्चानेकदेशवृत्तीन्यप्यानुपूर्वीद्रव्याणि नियतान्यानुपूर्वीद्रव्येष्वेव वर्तन्ते, अनानुपूर्वीद्रव्याण्यनानुपूर्वीद्रव्येष्वेव, अवक्तव्यकद्रव्याणि चावक्तव्यकद्रव्येष्वेव वर्त्तन्त इति विचिन्तनं समवतार इति भावः ॥ ३१ ॥

अथ वक्ति सम्प्रत्यनुगमम्—

**अनुयोगद्वारैस्तद्विचारणमनुगमः ॥ ३२ ॥**

**अनुयोगद्वारैरिति,** सत्पदप्ररूपणाद्रव्यप्रमाणक्षेत्रस्पर्शनाकालान्तरभागभावाल्पबहुत्वरूपैरानुपूर्व्यादिद्रव्याणां प्ररूपणमनुगम इत्यर्थः । आनुपूर्व्यनानुपूर्व्यवक्तव्यकशब्दाभिधेयानि त्र्यणुकादि

स्कन्धपरमाणुद्व्यणुकानि नियमेन सन्ति, न तु पदान्येतानि शशशृङ्गादिपदवदसदर्थविषयाणीति पर्यालोचना सत्पदप्ररूपणा। एकस्मिन्नप्याकाशप्रदेशे आनुपूर्व्यादिद्रव्याणि प्रत्येकमनन्तानि प्राप्यन्ते किं पुनः सर्वलोके, तस्मात् संख्येयासंख्येययोर्निषेधात्त्रिष्वपि स्थानेष्वनन्तत्वमेवेति विचारो द्रव्यप्रमाणम्। पुद्गलपरिणामस्याचिन्त्यत्वादसंख्येयप्रदेशात्मकेऽपि लोकेऽनन्तद्रव्यस्थितिर्न विरुद्धा प्रदीपप्रभावत्। आनुपूर्वीद्रव्यमेकमाश्रित्य किञ्चिल्लोकस्य संख्याततमं भागं किञ्चित्तदसंख्येयभागं किञ्चिद्बहून् तत्संख्येयभागान् अन्यच्च बहून् तदसंख्येयभागानवगाह्य तिष्ठति, अनन्तानन्तपरमाणुप्रचयनिष्पन्नमचित्तमहास्कन्धलक्षणमानुपूर्वीद्रव्यन्तु समुद्घातवर्त्तिकेवलिवत्सकललोकावगाहि। आनुपूर्वीद्रव्याणि नानाद्रव्यापेक्षया नियमेन सर्वलोक एव भवन्ति न संख्येयादिभागेषु, सूक्ष्मपरिणामपरिणतानन्तानुपूर्वीद्रव्यरहितस्यैकस्यापि लोकाकाशप्रदेशस्याभावात्। अनानुपूर्वीद्रव्यं एकद्रव्यापेक्षया लोकस्यासंख्येयभाग एव वर्त्तते, तस्य परमाणुरूपत्वेनैकाकाशप्रदेशावगाढत्वात्, एवमेकद्रव्यापेक्षयाऽवक्तव्यकद्रव्यमपि, द्व्यणुकस्कन्धात्मकत्वेन तस्यैकप्रदेशावगाढत्वाद्द्विप्रदेशावगाढत्वाद्वा। नानाद्रव्याणि प्रतीत्य त्वेते नियमेन सर्वलोक एवेति विचिन्तनं क्षेत्रद्वारम्। एकद्रव्यापेक्षयाऽऽनुपूर्वीद्रव्यं संख्येयभागमसंख्येयभागं संख्येयान् भागानसंख्येयान् भागान् सर्वलोकं वा स्पृशति, अनेकद्रव्यापेक्षया तु नियमेन सर्वलोकं स्पृशति, एकद्रव्यापेक्षयाऽनानुपूर्वीद्रव्यं न संख्येयादिभागं स्पृशति किन्त्वसंख्येयभागमेव, नानाद्रव्यापेक्षया तु नियमेन सर्वलोकम्, एवमवक्तव्यकद्रव्यमपि। परन्तु स्पर्शना षड्दिक्के प्रदेशैस्तद्बहिरपि भवति तथा च परमाणुद्रव्यमाश्रित्य परमाणुद्रव्यमेकस्मिन्नेवाकाशप्रदेशेऽवगाढं स्पर्शना तु तस्य सप्तप्रादेशिकी, एवमन्यत्रापि भाव्यमिति स्पर्शनाद्वारम्। एकद्रव्यापेक्षयाऽऽनुपूर्वीद्रव्यस्य जघन्यत एकसमयोऽवस्थितिकालः, तदूर्ध्वमेकस्य परमाण्वादेस्संयोगे वियोगे वा परिणामान्तरप्राप्ते, यदा च तदेवानुपूर्वीद्रव्यं तदूर्ध्वेऽसंख्यातं कालं स्थित्वा ततः परमाण्वादिभिर्वियुज्यते तस्योत्कृष्टतोऽसंख्येयोऽवस्थितिकाल, उत्कृष्टाया अपि पुद्गलसंयोगस्थितेरसंख्येयकालमानत्वेन नानन्तं कालं तस्यावस्थितिः। अनेकद्रव्यापेक्षया च सर्वाद्धा स्थितिरानुपूर्वीद्रव्यरहितकालस्याभावात्। अनानुपूर्व्यवक्तव्यकद्रव्येष्वप्येवमेव कालो विज्ञेय इति कालद्वारम्। आनुपूर्वीद्रव्यस्यैकद्रव्यापेक्षया समयोऽन्तरं जघन्येन, उत्कर्षेण त्वनन्तं कालं प्राप्यते आनुपूर्वीत्वपरित्यागपुनर्लाभयोरन्तरे। यदानुपूर्वीद्रव्यं भिन्नं भित्वा च तदीयाः परमाणवोऽन्येषु परमाणुद्व्यणुकत्र्यणुकादिस्कन्धेषु अनन्ताणुकस्कन्धपर्यन्तेषु अनन्तस्थानेषूत्कृष्टान्तराधिकारादसकृत् प्रतिस्थानमुत्कृष्टां स्थितिमनुभवन्तः पर्यटन्ति, कृत्वा चेत्थं पर्यटनं कालस्यानन्तत्वात् विस्रसादिपरिणामतो यदा तैरेव परमाणुभिस्तदेवानुपूर्वीद्रव्यं निष्पद्यते तदाऽनन्त उत्कृष्टान्तरकालः प्राप्यते कालस्यानन्तत्वादिति, नानाद्रव्यापेक्षया नास्त्यन्तरम्, अनन्तानामानुपूर्वीद्रव्यैर्लोकस्य सर्वदाऽशून्यत्वात्। अनानुपूर्वीद्रव्यस्यैकद्रव्यापेक्षया जघन्येनैकसमयोऽन्तरम्, उत्कर्षेणासंख्येयः कालः, तदेवानानुपूर्वीद्रव्यमन्येन परमाणुद्व्यणुकादिना येनचिद्द्रव्येण संयुज्यासंख्येयं कालं स्थित्वा यदा पुनस्तदेव स्वरूपं भजति तदाऽसंख्यात उत्कृष्टान्तरकालो लभ्यत इति, नानाद्रव्यापेक्षया नास्त्यन्तरम्। अवक्तव्यकद्रव्यस्यैकद्रव्यापेक्षया जघन्येनैकस्समयः उत्कर्षेणानन्तः कालोऽन्तरं भवति, नानाद्रव्यापेक्षया तु नास्त्यन्तरं, लोके सर्वदैव तद्भावादित्यन्तरद्वारम्। आनुपूर्वीद्रव्याणि सर्वाणि शेषद्रव्येभ्यो नियमेनासंख्येयैर्गुणैरधिकानि,

शेषद्रव्याणि तु तदसंख्येयभागे वर्तन्ते, अनानुपूर्वीद्रव्याण्यवक्तव्यकद्रव्याणि च शेषद्रव्याणामसंख्यात-तम एव भागे वर्तन्ते न संख्याततमादिभागेष्विति भागद्वारम् । आनुपूर्वीद्रव्याणि सादिपारिणामिके भाव एव भवन्ति न तु औदयिकादिभावेषु, नाप्यनादिपारिणामिकभावे वा, आनुपूर्वीत्वपरिणतेरनादित्वासम्भवात्, विशिष्टैकपरिणामेन पुद्गलानामसंख्येयकालमात्रमवस्थानात्, एवमेवानानुपूर्व्यवक्तव्यकद्रव्याण्यपीति भावद्वारम् । अवक्तव्यकद्रव्याणि द्रव्यार्थतापेक्षयाऽन्येभ्यो निखिलेभ्यः स्तोकानि, अनानुपूर्वीद्रव्याणि विशेषाधिकानि, वस्तुस्थितिस्वभावात् । आनुपूर्वीद्रव्याणि च तेभ्योऽप्यसंख्येयगुणानि, आनुपूर्वीद्रव्येषु त्र्यणुकादिस्थानानामेकोत्तरवृद्ध्याऽनन्ताणुकस्कन्धपर्यन्तानामनन्तस्थानावाप्तेः । अनानुपूर्वीद्रव्येषु परमाणुलक्षणस्यैकस्यैव स्थानस्यावक्तव्यकद्रव्येषु द्व्यणुकलक्षणस्य चैकस्यैव स्थानस्य प्राप्तेः । प्रदेशार्थतया चानानुपूर्वीद्रव्याणि सर्वेभ्यः स्तोकानि, परमाणो स्वव्यतिरिक्तप्रदेशान्तराभावात्, तेन पुद्गलास्तिकायस्य सर्वसूक्ष्मभागरूपस्य प्रदेशत्वेऽपि न क्षतिः, तेभ्योऽवक्तव्यकद्रव्याणि विशेषाधिकानि, द्विप्रदेशत्वात् । आनुपूर्वीद्रव्याणि त्ववक्तव्यकद्रव्येभ्योऽनन्तगुणानि, संख्यातप्रदेशिकानामसंख्यातप्रदेशिकानामनन्ताणुकानां स्कन्धानां प्रदेशेषु विवक्षितेषु महाराशित्वेनानन्तगुणत्वात् । उभयार्थताभिलापेऽवक्तव्यकद्रव्याणि सर्वस्तोकानि, द्रव्यार्थतया अप्रदेशार्थतया च विशिष्टान्यनानुपूर्वीद्रव्याणि तेभ्यो विशेषाधिकानि, आनुपूर्वीद्रव्याणि द्रव्यार्थतयाऽसंख्येयगुणानि प्रदेशार्थतयाऽनन्तगुणानीति अल्पबहुत्वद्वारम् । एवमनुयोगद्वारैरानुपूर्व्यादिद्रव्याणां विचारोऽनुगम इति भावः । इत्येवमुक्ता नैगमव्यवहारसम्मताऽनौपनिधिकी द्रव्यानुपूर्वी ॥ ३२ ॥

अथ सङ्ग्रहसम्मतां तामाह—

## एवमेव सङ्ग्रहसम्मतापि ॥ ३३ ॥

**एवमेवेति,** पञ्चभिरर्थपदप्ररूपणतादिभिरिव द्रव्यानुपूर्व्यपि विचार्यत इति पूर्वसदृशत्वं भाव्यम् । परन्तु सङ्ग्रहस्य सामान्यवादित्वेन सर्वेऽपि त्रिप्रदेशिका एकैवाऽऽनुपूर्वी, सर्वेऽपि चतुष्प्रदेशिका एकैवानुपूर्वी, एवं यावदनन्तप्रदेशिकास्तावद्वाच्यम्, इदञ्चाविशुद्धसङ्ग्रहमतेन । विशुद्धसङ्ग्रहमतेन तु सर्वेषां त्रिप्रदेशिकादीनामनन्ताणुकपर्यन्तानां स्कन्धानामानुपूर्वीत्वसामान्याव्यतिरेकादखिलाऽप्येकैवानुपूर्वीति, एवमेवानानुपूर्व्यवक्तव्यकयोर्भाव्यम्, एवञ्चैतन्मते सर्वत्र बहुवचनाभाव एव । भङ्गाश्च प्रत्येकमेकवचनान्तास्त्रय एव, द्विकसंयोगास्त्रय, त्रिकसंयोग एक इति सप्तैवानुपूर्व्यादिपदानां भङ्गा बोध्याः । एत एवार्थकथनपुरस्सरास्सप्त भङ्गोपदर्शनता । समवतारश्च स्वस्वजातावेवैते वर्तन्ते न त्वन्यजातिं व्यभिचरन्तीति । आनुपूर्व्यादिद्रव्याणि नियमेन सन्ति, तेषामेकैको राशिः न संख्येयादिप्रमाणानि, सर्वलोकव्यापीनि, न तु संख्येयभागादिवर्तीनि । सर्वलोकमेव स्पृशन्ति, न संख्येयादिभागम्, सर्वाद्धाऽवस्थितिकाः, नास्ति चान्तरम्, त्रयाणां राशीनामेको राशिस्त्रिभाग एव वर्तते । सादिपारिणामिकभाव एव वर्तन्ते त्रीण्यपि द्रव्याणि । अल्पबहुत्वं तु न सङ्ग्रहमते सम्भवति, सामान्यस्य सर्वत्रैकत्वादित्येवमनुगमो भाव्यः ॥ ३३ ॥

कस्य नयस्य कियन्तो भङ्गास्संमता इत्यत्राह—

## षड्विंशतिभङ्गा नैगमव्यवहारयोस्सप्त भङ्गास्सङ्ग्रहस्य ॥ ३४ ॥

**षड्विंशतीति,** एकवचनान्तेनानुपूर्व्यादिपदत्रयेण त्रयो भङ्गा, बहुवचनान्तेनापि तेन पदत्रयेण त्रयो भङ्गा इति षड्भङ्गा असंयोगजाः, संयोगपक्षे तु पदत्रयस्यास्य त्रयो द्विकसंयोगाः, एकैकस्मिन् द्विकसंयोगे एकवचनबहुवचनाभ्यां चतुर्भङ्गीसद्भावेन त्रिष्वपि द्विकयोगेषु द्वादशभङ्गाः सम्पद्यन्ते, त्रिकयोगस्त्वेक एव, तत्र चैकवचनबहुवचनाभ्यामष्टौ भङ्गाः सर्वेऽप्यमी षड्विंशतिः नैगमव्यवहारयोरिष्टाः, सङ्ग्रहेण बहुवचनानङ्गीकारेण तद्घटितभङ्गपरिहारेण सप्तैव भङ्गा इष्यन्त इति भावः ॥ ३४ ॥

अथौपनिधिकीं द्रव्यानुपूर्वीमाह—

**पूर्वानुपूर्वीपश्चानुपूर्व्यनानुपूर्वीरूपतस्त्रिधौपनिधिकी द्रव्यानुपूर्वी ॥ ३५ ॥**

**पूर्वानुपूर्वीति,** विवक्षितधर्मास्तिकायादिद्रव्यसमुदाये पूर्वस्मात्प्रथमादारभ्यानुक्रमेण विरचनं यस्यां सा पूर्वानुपूर्वी, यथा धर्मास्तिकायोऽधर्मास्तिकाय आकाशास्तिकायो जीवास्तिकायः पुद्गलास्तिकायोऽद्धासमय इति, आगमे इत्थमेव पठितत्वात्, माङ्गलिकत्वाद्धर्मस्यादौ तत्प्रतिपक्षत्वात्ततोऽधर्मस्य तदुभयाधारत्वादाकाशस्यामूर्तत्वसामान्यात्ततो जीवस्य तदुपयोगित्वात्पुद्गलस्य जीवाजीवपर्यायत्वात्ततोऽद्धासमयस्येति चाऽयमेव क्रमः पूर्वानुपूर्वी नान्यथा । पाश्चात्यादारभ्य व्युत्क्रमेणानुक्रमविरचना यस्यां सा पश्चानुपूर्वी यथा प्रोक्तसमुदायस्याद्धाकालः पुद्गलास्तिकायो जीवास्तिकाय आकाशास्तिकायोऽधर्मास्तिकायो धर्मास्तिकाय इति व्युत्क्रमः । विवक्षितपदानां प्रोक्तक्रमद्वयोल्लङ्घनेन परस्परासदृशैः सम्भवद्भिर्भङ्गकैर्विरचनं यस्यां साऽनानुपूर्वी, सा च विवक्षितसमुदायघटकगत यत्तत्पदार्थसङ्ख्यानाम् योऽन्योन्यगुणनेन लब्धसङ्ख्यासदृशभङ्गेष्वाद्यन्तभङ्गपरित्यागेनावशिष्टैर्भङ्गैर्भवति यथा विवक्षितसमुदायो धर्माधर्माकाशजीवपुद्गलाद्धासमयरूपः तद्घटकत्वमपि यत्तत्पदार्थसङ्ख्या एकद्वित्रिचतुःपञ्चषड्रूपा, तासां परस्परं गुणनं एकेन द्विके गुणिते द्वौ, ताभ्यां त्रिके गुणिते षट् तैश्चतुष्के गुणिते चतुर्विंशतिः तया पञ्चके गुणिते विंशोत्तरं शतं तेन षट्कस्य गुणने विंशत्यधिकसप्तशतानि भवन्ति, इयन्तो भङ्गास्तत्र प्रथमभङ्गस्य पूर्वानुपूर्वीत्वेन चरमभङ्गस्य पश्चानुपूर्वीत्वेन तयोस्त्यागेनावशिष्टैरष्टादशोत्तरसप्तशतरूपैर्भङ्गैरनानुपूर्वी भवति, एवमेवान्यसमुदायेष्वपि भाव्यम् । भङ्गकस्वरूपानयनं यथा—पूर्वानुपूर्व्या अध प्रस्तुतभङ्गरचनव्यवस्थानतिक्रमेणैकादीनि पदानि यथाज्येष्ठं न्यसेत् यो हि यस्यादौ भवति स तस्य ज्येष्ठः यथा द्विकस्याव्यवहितपूर्ववर्त्येकको ज्येष्ठो द्विकस्य, यो यदीयज्येष्ठाव्यवहितपूर्ववर्त्ती स तस्यानुज्येष्ठः, यथा त्रिकस्यैकः, यश्च यदीयानुज्येष्ठाव्यवहितपूर्ववर्त्ती स तस्य ज्येष्ठानुज्येष्ठ इत्येवमन्यत्रापि भाव्यम् । व्यवस्थाभेदश्च न कार्यः, व्यवस्थाभेदो हि तदा भवति यदा तस्मिन्नेव भङ्गके निक्षिप्ताङ्कसदृशोऽपरोऽङ्क आपतेत् निक्षिप्ताङ्कस्य पुरतो यथासम्भवमुपरितनाङ्कसदृशानेवाङ्कान् पूर्वक्रमेण स्थापयेत् पूर्वक्रमश्च पूर्वानुपूर्व्यां यथा दृष्टस्तथा यस्सङ्ख्यया लघुः स प्रथमं स्थाप्यते यस्तु तया महांश्च पश्चादिति । अत्र त्रीणि पदान्याश्रित्य भङ्गका दर्श्यन्ते, तेषां हि परस्पराभ्यासे षड्भङ्गा भवन्ति, तत्र पूर्वानुपूर्वी प्रथमो भङ्गो यथा १२३ इति, अस्याधस्तात् भङ्गकरचने क्रियमाणे एककस्य ज्येष्ठाभावात् द्विकस्यैककरूपज्येष्ठस्य सत्त्वात्स एव तस्याऽधो निक्षिप्यते, तस्य पुरत उपरितनाङ्कतुल्यत्वात्त्रिको दीयते तस्य पृष्ठतस्तु स्थापितशेषो द्विको दीयत इति २१३ भङ्गोऽयं निष्पन्नः, अथाधस्य द्विकस्यैको ज्येष्ठो वर्त्तते परन्तु स न निक्षिप्यते तस्यामत उपरितनाङ्कतुल्याङ्कस्य विन्यसनापत्त्या तत्र च सदृशाङ्कपातेन व्यवस्थाभेदप्रस-

ज्ञात् । ततो द्वितीयाङ्कस्यैकस्य ज्येष्ठाभावात्तृतीयाङ्कस्य त्रिकस्य ज्येष्ठो द्विकस्तदधो निक्षिप्यते, अत्र वामभागस्य तावदसम्भव एव पदत्रयाश्रयेण भङ्गरचना, तस्मात्पृष्ठतः स्थापितशेषावेकत्रिकौ क्रमतो निक्षिप्येते पूर्वक्रमेण, तथा च १३२ भङ्गोऽयं जातः, अत्रापि एककस्य ज्येष्ठो नास्ति, त्रिकस्यास्ति द्विकः परं न स्थाप्यते, अग्रे सदृशाङ्कपातेन व्यवस्थाभेदप्रसङ्गादतोऽस्यैवानुज्येष्ठ एककः स्थाप्यते, तत उपरितनाङ्कतुल्यो द्विकः, पृष्ठतः स्थापितशेषस्त्रिको दीयत इति ३२१ चतुर्थो भङ्गो जातः, एवमेव २३१,३२१ पञ्चमषष्ठभङ्गावपि भाव्यौ, भङ्गेष्वेषु षट्सु प्रथमः पूर्वानुपूर्वी चरमः पश्चानुपूर्वी मध्यमाश्चत्वारोऽनानुपूर्व्य इति भाव्यम्, इति द्रव्यानुपूर्वी ॥ ३५ ॥

द्रव्यानुपूर्वीव्याख्यया क्षेत्रकालानुपूर्व्योरप्यतिदिशति—

## एवमेव क्षेत्रकालानुपूर्व्यौ ॥ ३६ ॥

एवमेवेति, द्रव्यानुपूर्वीव्याख्यावदेवेत्यर्थः, तथा च क्षेत्रानुपूर्व्यप्यौपनिधिक्यनौपनिधिकीभेदाद्द्विविधा, अनौपनिधिकी चार्थपदप्ररूपणतादिभिः पञ्चधा भवति, त्र्यादिक्षेत्रप्रदेशावगाहपर्यायविशिष्टत्र्यणुकादिद्रव्यस्कन्ध क्षेत्रानुपूर्वी, असंख्यातप्रदेशावगाहनाविशिष्टश्चासंख्याताणुकस्कन्धोऽनन्ताणुको वा द्रव्यस्कन्धो भवति, एकप्रदेशावगाढः परमाणुसंघातः स्कन्धसंघातश्च क्षेत्रतोऽनानुपूर्वी, प्रदेशद्वयावगाढो द्विप्रदेशिकादिस्कन्ध क्षेत्रतोऽवक्तव्यकम् । बहुवचननिर्देशभङ्गसमुत्कीर्तनतादिविचारः पूर्ववत् । अनुगमे च सत्पदप्ररूपणाद्वारमपि पूर्ववत्, द्रव्यप्रमाणद्वारे—आनुपूर्वीद्रव्याण्यसंख्यातानि, त्र्यादिप्रदेशावगाढद्रव्यस्यैव क्षेत्रत आनुपूर्वीत्वेनासंख्यातप्रदेशात्मके लोके त्र्यादिप्रदेशविभागानामसंख्यातत्वात्, तुल्यप्रदेशावगाढानां बहूनामपि क्षेत्रावगाहापेक्षयैकत्वात् । एवमनानुपूर्वीद्रव्याण्यप्यसंख्येयानि, लोके प्रदेशानामसंख्यातत्वात्, अवक्तव्यकद्रव्याण्यपि तथा, द्विप्रदेशात्मकविभागानामप्यसंख्यातत्वात् । क्षेत्रद्वारे स्कन्धद्रव्याणां विचित्रत्वादेकद्रव्यापेक्षया कश्चित्स्कन्धो लोकस्य संख्येयं भागमवगाह्य तिष्ठति कश्चिदसंख्येयमन्यः संख्येयानपरोऽसंख्येयान् कश्चित्तु देशोनलोकव्यापी च, क्षेत्रत आनुपूर्व्याः सकललोकव्यापित्वेऽनानुपूर्व्यवक्तव्यकद्रव्याणां निरवकाशत्वप्रसङ्गः, न चेष्टापत्तिः, लोकस्य सदाऽऽनुपूर्व्यनानुपूर्व्यवक्तव्यकद्रव्यैरशून्यत्वस्य शास्त्रानुमतत्वाद्तो देशोनेति । द्रव्यानुपूर्व्यां द्रव्याणामेवानुपूर्व्यादिभाक्त्वेन द्रव्याणाञ्च परस्परं भिन्नानामपि एकत्रापि क्षेत्रेऽवस्थानसम्भवाच्च सर्वलोकव्यापित्वं तस्य विद्यते, नानाद्रव्यापेक्षया सर्वलोकव्यापित्वमानुपूर्व्यादिद्रव्याणां, त्र्यादिप्रदेशावगाढद्रव्यभेदतोऽत्रानुपूर्वीणां नानात्वम् । एकद्रव्यापेक्षयाऽनानुपूर्वीद्रव्यं लोकस्यासंख्येयभागवर्त्येव, एकप्रदेशावगाढस्यैवानानुपूर्वीत्वात् । नानाद्रव्यापेक्षया समस्तलोकव्यापित्वम्, एवमवक्तव्यकद्रव्यमपि । स्पर्शनाद्वारमप्येवमेव, कालद्वारे—त्र्यादिप्रदेशावगाढद्रव्यरूपाऽऽनुपूर्वी एकद्रव्यापेक्षया जघन्येनैकसमयं उत्कर्षेणासंख्येयः कालं तिष्ठति, नानाद्रव्यापेक्षया तु सर्वकालमेव भवति । त्र्यादिप्रदेशावगाढद्रव्यभेदानां सर्वदा सद्भावात्, एवमनानुपूर्व्यवक्तव्यकद्रव्येष्वपि भाव्यम् । अन्तरद्वारे—एकद्रव्यापेक्षयाऽऽनुपूर्वीद्रव्यं किमपि यदा समयमेकं विवक्षितक्षेत्राद्न्यत्रावगाह्य प्रतिपद्य पुनरपि केवलमन्यद्रव्यसंयुक्तं वा तेष्वेव विवक्षितत्र्याद्याकाशप्रदेशेष्ववगाहते तदैकानुपूर्वीद्रव्यस्य समयो जघन्योऽन्तरकालः प्राप्यते । तदैव यदाऽन्येषु क्षेत्रेष्वसंख्येयं कालं परिभ्रम्य केवलमन्यद्रव्यसंयुक्तं वा समागत्य पुनरपि तेष्वेव

विवक्षितन्यायाकाशप्रदेशेष्ववगाहते तदोत्कृष्टतोऽसंख्येयोऽन्तरकालः प्राप्यते । न च द्रव्यानुपूर्व्यामिव कुतो नानन्तकालः प्राप्यत इति वाच्यम्, तत्र द्रव्यविशेषाणां विवक्षितद्रव्यातिरिक्तानामनन्तत्वात् तैश्च सह क्रमतस्संयोगादनन्तकालप्राप्तेः, अत्र तु विवक्षितक्षेत्रावगाहक्षेत्रादन्यक्षेत्रस्यासंख्येयत्वात् । नानाद्रव्यापेक्षया नास्त्यन्तरमेवमेवानानुपूर्व्यवक्तव्यकद्रव्याणां भाव्यम् । भागद्वारे—आनुपूर्वीद्रव्याणि शेषद्रव्येभ्योऽसंख्येयैर्भागैरधिकानि शेषद्रव्याणि तु तेषामसंख्येयभागे वर्त्तन्ते, अवक्तव्यकानि स्तोकानि, द्विकसंयोगानां तत्र स्तोकत्वात्, अनानुपूर्व्योऽपि स्तोका एव लोकप्रदेशसंख्यामात्रत्वात् । भावद्वारे—आनुपूर्व्यादीनि सर्वाणि द्रव्याणि सादिपारिणामिकभाव एव सन्ति । अल्पबहुत्वद्वारमिह द्रव्यार्थतया प्रदेशार्थतया उभयार्थतया च विचार्यते, तत्रानुपूर्व्यो विशिष्टद्रव्यावगाहोपलक्षितास्त्र्यादिनभःप्रदेशसमुदाया द्रव्याणि, समुदायारम्भकास्तु प्रदेशाः । अनानुपूर्व्यो त्वेकैकप्रदेशावगाहिद्रव्योपलक्षितास्सकलनभःप्रदेशाः प्रत्येकं द्रव्याणि, प्रदेशास्तु न सम्भवन्ति, एकैकप्रदेशद्रव्ये प्रदेशान्तरायोगात् । अवक्तव्यकेषु तु यावन्तो लोके द्विकसंयोगास्सम्भवन्ति तावन्ति प्रत्येकं द्रव्याणि तदारम्भकास्तु प्रदेशा इति । अवक्तव्यकद्रव्याणि द्रव्यार्थतया सर्वस्तोकानि, अनानुपूर्वीद्रव्याणि विशेषाधिकानि, आनुपूर्वीद्रव्याणि चासंख्येयगुणानि । अप्रदेशार्थतया सर्वस्तोकान्यनानुपूर्वीद्रव्याणि, प्रदेशार्थतयाऽवक्तव्यकद्रव्याणि विशेषाधिकानि, आनुपूर्वीद्रव्याणि चासंख्येयगुणानि । उभयार्थतया तु—अवक्तव्यकद्रव्याणि द्रव्यार्थतया सर्वस्तोकानि प्रदेशार्थतया च विशेषाधिकानि । अनानुपूर्वीद्रव्याणि द्रव्यार्थतयाऽप्रदेशार्थतया च विशेषाधिकानि, आनुपूर्वीद्रव्याणि द्रव्यार्थतया प्रदेशार्थतया चासंख्येयगुणानि इतीयमनौपनिधिकी क्षेत्रानुपूर्वी नैगमव्यवहारसम्मता ॥ एवमेव संग्रहाभिमतद्रव्यानुपूर्व्यनुसारेण सङ्ग्रहाभिमतक्षेत्रानुपूर्व्यपि क्षेत्रप्राधान्याद्भाव्या । औपनिधिकी क्षेत्रानुपूर्व्यपि पूर्वानुपूर्व्यादिरूपेण त्रिविधा, पूर्वानुपूर्वी चाधोलोकस्तिर्यग्लोक ऊर्ध्वलोक इति क्षेत्रानुपूर्व्यधिकारात्, एतेषाञ्च क्षेत्रविशेषत्वात् । अधोलोकस्य जघन्यपरिणामद्रव्ययोगाज्जघन्यतया गुणस्थानेषु प्रथमं मिथ्यादृष्टिगुणस्थानस्येवादावुपन्यासः, ततो मध्यमपरिणामद्रव्यत्वान्मध्यमतया तिर्यग्लोकस्य तदुपरिष्टात् उत्कृष्टपरिणामिद्रव्यत्वादूर्ध्वलोकस्योपन्यास इति पूर्वानुपूर्वीत्वसिद्धिः । पश्चानुपूर्वी चोर्ध्वलोकस्तिर्यग्लोकोऽधोलोक इति, अनानुपूर्व्यान्तु पदत्रयस्य पूर्वोक्तक्रमेण षड्भङ्गा भवन्ति तत्र प्रथमचरमपरित्यागेन माध्यमिकाश्चत्वारो भङ्गा अनानुपूर्व्यः । एवमधआदिलोकेष्वपि प्रत्येकं रत्नप्रभादिपृथिवीमादाय पूर्वानुपूर्व्यादय ऊहनीयाः । कालानुपूर्व्यनौपनिधिकी नैगमव्यवहारसम्मता अर्थप्ररूपणादिविषये द्रव्यानुपूर्वीवदेव, समयत्रयादिरूपकालपर्यायविशिष्टद्रव्याणि आनुपूर्व्यः, समयत्र्यादीनामेव मुख्यमिहानुपूर्वीत्व तद्विशिष्टद्रव्यस्य त्वभेदोपचारात् पर्यायपर्यायिणोः कथञ्चिदभेदात् । अत्रापि द्रव्यस्यानन्तसमयस्थितिर्नास्ति स्वाभाव्यात्, तेन यावदसंख्येयसमयविशिष्टद्रव्यमानुपूर्वी भवति । एकसमयस्थितिकं परमाण्वाद्यनन्ताणुकस्कन्धपर्यन्तं द्रव्यमनानुपूर्वी द्विसमयस्थितिकं तादृशं द्रव्यमवक्तव्यकम् । द्रव्यद्वारे आनुपूर्वीद्रव्याण्यसंख्येयान्येव नानन्तानि, समयक्रमादिरूपस्थितेरेकैकरूपत्वात् द्रव्यस्यात्र गौणत्वाच्च त्रिसमयस्थितिकानामनन्तानामपि द्रव्याणामेवानुपूर्वीद्रव्यत्वात्, एवं चतुःसमयलक्षणस्थित्यादीनामपि भाव्यं यावदसंख्येयसमयलक्षणस्थितिम् । एवमनानुपूर्व्यवक्तव्यकद्रव्याण्यपि प्रत्येकमसंख्येयानि वाच्यानि । क्षेत्रद्वारे एकद्रव्या-

पेक्षया लोकस्य संख्येयभागेऽसंख्येयभागे संख्येषु भागेष्वसंख्येयेषु भागेषु देशोने वा लोकेऽवगाहते । अचित्तमहास्कन्धस्तु सर्वलोकव्याप्यपि तन्नापितावेकमेकसमयमवतिष्ठते तत ऊर्ध्वमुपसंहारात् । एक-समयस्थितिकत्वादानुपूर्वीद्रव्यं न सम्भवति, तस्य त्र्यादिसमयस्थितिकत्वात्, तस्मात् त्र्यादिसमयस्थितिक-मध्यद्रव्यं नियमादेकेनापि प्रदेशेन ऊन एव लोकेऽवगाहते । अनानुपूर्वीद्रव्यन्तु क्षेत्रानुपूर्व्यां यथाऽना-नुपूर्व्यां एकं द्रव्यं लोकस्यासंख्येयभाग एव वर्तते यद्वि कालत एकसमयस्थितिकं तत्क्षेत्रतोऽप्येक-प्रदेशावगाढमेवेहानानुपूर्वीत्वेन विवक्ष्यते, तच्च लोकासंख्येयभाग एव भवति, नानाद्रव्याणि तु सर्वत्र लोके, एकसमयस्थितिकद्रव्याणां सर्वत्र सत्त्वात् । अवक्तव्यकद्रव्यचिन्तायां क्षेत्रानुपूर्व्यामिवैकद्रव्यं लोकस्यासंख्येयभाग एव स्यात्, अथवा द्विसमयस्थितिकं द्रव्यं स्वभावादेव लोकस्यासंख्येयभाग एवा-वगाहते न परतः । स्पर्शनाद्वारे—एकद्रव्यापेक्षयाऽऽनुपूर्वीद्रव्यं जघन्येन त्रीणि समयानि यावद्वर्तते जघन्य-तोऽपि त्रिसमयस्थितिकस्यैवानुपूर्वीत्वेनोक्तत्वात्, उत्कर्षेणासंख्येयं कालं वर्तते, तत्कालात् परत एकेन परिणामेन द्रव्यस्यावस्थानाभावात् । नानाद्रव्याणि तु लोकस्य प्रतिप्रदेशं सर्वदा तेषां सद्भावात्सर्वकालं भवन्ति । अनानुपूर्वीद्रव्याणि चैकद्रव्यापेक्षया जघन्योत्कृष्टचिन्तामुक्त्वैकं समयं नानाद्रव्याणि प्रतीत्य सर्वदा भवन्ति । एकद्रव्यापेक्षया जघन्योत्कृष्टचिन्तामुक्त्वाऽवक्तव्यकद्रव्याणि द्वौ समयौ नाना-द्रव्यापेक्षया सर्वकालं भवन्ति, न हि एकसमयस्थितिकस्येवानानुपूर्वीत्वे द्विसमयस्थितिकस्यैव चावक्त-व्यकत्वेऽभ्युपगम्यमाने जघन्योत्कृष्टचिन्ता सम्भवति । अन्तरद्वारे—एकद्रव्यापेक्षयाऽऽनुपूर्वीद्रव्यस्य जघन्येनान्तरमेकः समयः, त्र्यादिसमयस्थितिकस्य द्रव्यस्य तत्परिणामपरित्यागेन परिणामान्तरेण समय-मेकं स्थित्वा पुनस्तत्परिणामप्राप्तौ त्र्यादिसमयस्थितिकत्वेन जघन्यतया समयस्यैवान्तरप्राप्तेः । उत्कर्षेण तु द्वौ समयौ, मध्ये द्विसमयं स्थित्वा पुनस्तस्यैव परिणामस्य प्राप्ते मध्ये त्र्यादिसमयं यावदवस्थाने तु तत्राप्यानुपूर्वीत्वमनुभवेदित्यन्तरमेव न भवेत् । नानाद्रव्याणान्तु नास्त्यन्तरम्, लोकस्य कदापि तच्छू-न्यताभावात् । अनानुपूर्वीद्रव्यस्य चान्तरं द्वौ समयावेकद्रव्यापेक्षया, एकसमयस्थितिकं हि द्रव्यं यदा परिणामान्तरेण समयद्वयमनुभूय पुनस्तमेवैकसमयस्थितिकं परिणाममासादयति तदा समयद्वयं जघन्ये-नान्तरकालः, यदि तु परिणामान्तरेणैकसमयमेव तिष्ठेत्तदाऽन्तरमेव न स्यात्, तत्राप्यनानुपूर्वीत्वात् । अथ समयद्वयात् परतस्तिष्ठेत्तदा जघन्यतरं न स्यात् । उत्कर्षेण त्वसंख्येयं कालं, तावन्तं कालं परि-णामान्तरेण मध्ये स्थित्वा पुनरेकसमयस्थितिकपरिणामावाप्तेः, नानाद्रव्याणां तु नास्त्यन्तरम् । अव-क्तव्यकद्रव्यस्य तु द्विसमयस्थितिकं किञ्चिदवक्तव्यकद्रव्यं परिणामान्तरेण समयमेकं स्थित्वा पुनस्तमेव पूर्वपरिणामं यदाऽश्नुते तदा जघन्योऽन्तरकालः समयः, असंख्येयं कालं स्थित्वा पुनस्तद्यथोक्तेऽत्कृष्टान्तर-कालोऽसंख्यातः, नानाद्रव्यान्तरन्तु नास्त्येव । भागद्वारे—आनुपूर्वीद्रव्याणि शेषद्रव्येभ्योऽसंख्येयै-र्भागैरधिकानि द्रव्यक्षेत्रानुपूर्व्योरिव, शेषद्रव्याणि त्वानुपूर्वीद्रव्याणामसंख्येयभाग एव वर्तन्ते । भाव-द्वारे—त्रयाणामपि सादिपारिणामिकभाववर्तित्वम् । अल्पबहुत्वद्वारे सर्वस्तोकान्यवक्तव्यकद्रव्याणि द्विसमयस्थितिकद्रव्याणां स्वभावत एव स्तोकत्वात्, अनानुपूर्वीद्रव्याणि तु तेभ्यो विशेषाधिकानि, एकसमयस्थितिकद्रव्याणां निसर्गत एव पूर्वेभ्यो विशेषाधिकत्वात् । आनुपूर्वीद्रव्याणां तु पूर्वेभ्योऽसंख्या-तगुणत्वमिति नैगमव्यवहारसम्मतौपनिधिकी कालानुपूर्वी । संग्रहमतेन सा क्षेत्रानुपूर्व्यामिव वाच्या ।

कालानुपूर्वी चौपनिधिकी पूर्वानुपूर्वी पश्चानुपूर्वी अनानुपूर्वी चेति त्रिधा, पूर्वानुपूर्वी समयावलिकोच्छ्वासनिःश्वासादय. । सर्वाद्धाऽनागताद्धाऽतीताद्धादिरूपा पश्चानुपूर्वी। एवमनानुपूर्व्यपि भाव्या ॥३६॥

अथोत्कीर्त्तनानुपूर्वीमाह—

## ऋषभादीनां पूर्वपश्चाद्व्युत्क्रमतो नामोच्चारणमुत्कीर्त्तनानुपूर्वी ॥ ३७ ॥

ऋषभादीनामिति, ऋषभ पूर्वमुत्पन्नत्वादादावुच्चार्यते ततोऽजित· ततस्सम्भवस्ततोऽभिनन्दनस्तत· सुमतिस्तत· पद्मप्रभ इत्येव क्रमेण नामोच्चारण पूर्वानुपूर्व्युत्कीर्त्तनानुपूर्वी । वर्द्धमान पार्श्व अरिष्टनेमि। नमिः मुनिसुव्रतो मल्लिरित्यादिपश्चादारभ्य प्रतिलोममुच्चारण पश्चानुपूर्व्युत्कीर्त्तनानुपूर्वी । उक्तक्रमद्वयमुल्लङ्घ्य परस्परासदृशसम्भवद्भङ्गै ऋषभादिनामोच्चारणमनानुपूर्व्युत्कीर्त्तनानुपूर्वी । नामोच्चारणमित्युक्त्या औपनिधिकीद्रव्यानुपूर्वीतो भेदः सूचित , तत्र हि केवल पूर्वानुपूर्व्यादिविभागेन द्रव्याणा विन्यासमात्र क्रियते, अत्र च तेषामेव तथैव नामोच्चारणमिति ॥ ३७ ॥

अथ गणनानुपूर्वीमाह—

## तथैवैकादिसंख्याभिधानं गणनानुपूर्वी ॥ ३८ ॥

तथैवेति, पूर्वपश्चाद्व्युत्क्रमत इत्यर्थः, एक द्वे त्रीणि चत्वारीत्येवक्रमेणाभिधान पूर्वानुपूर्वीगणनानुपूर्वी, दशकोटिशतानि कोटीशत दशकोटयः कोटिरित्येव वर्णन पश्चानुपूर्वीगणनानुपूर्वी, उक्तक्रमद्वयातिरेकेण सम्भवद्भिर्भङ्गै संख्यानमनानुपूर्वीगणनानुपूर्वीत्यर्थः ॥ ३८ ॥

सम्प्रति संस्थानानुपूर्वीमाह—

## एवमेव पञ्चेन्द्रियसंस्थानानुपूर्वी ॥ ३९ ॥

एवमेवेति, पूर्वपश्चाद्व्युत्क्रमत इत्यर्थ , आकृतिविशेषा संस्थानानि, समचतुरस्र-न्यग्रोधमण्डल-सादिकुब्जवामनहुण्डरूपाणि षट्, तत्र सर्वप्रधानत्वात्समचतुरस्रस्यादावुपन्यासः, शेषाणा तु यथाक्रम हीनत्वाद्द्वितीयादित्वमित्थमेव पूर्वानुपूर्वी, शेषभावना पूर्ववत् । संस्थानानि जीवाजीवसम्बन्धित्वेन द्विधा भवन्ति, इह च जीवसम्बन्धीनि तत्रापि पञ्चेन्द्रियसम्बन्धीनि विवक्षितानीति पञ्चेन्द्रियेति विशेषितम् ॥ ३९ ॥

सामाचार्यानुपूर्वीमाचष्टे—

## ओघदशविधपदविभागसामाचार्यपि तथा ॥ ४० ॥

ओघेति, समाचरण समाचारस्तस्य भावः सामाचारी, त्रिधा सा ओघदशविधपदविभागभेदात् । ओघनिर्युक्त्यभिहितार्थरूपा ओघसामाचारी । इच्छाकारादिदशविधा सामाचारी दशविधसामाचारी । निशीथकल्पाद्यभिहितप्रायश्चित्तपदविभागविषया पदविभागसामाचारी । दशविधा सामाचारी च विवक्षितक्रियाप्रवृत्त्यभ्युपगमात्करणमिच्छाकारः, अकृत्ये विषये यन्मयाऽऽचरितमसदेतदितीयमसत्क्रियानिवृत्त्यभ्युपगमो मिथ्याकारः, अविकल्पगुर्वाज्ञाभ्युपगमस्तथाकार , ज्ञानाद्यालम्बनेनोपाश्रयाद्बहिरवश्य गमने समुपस्थितेऽवश्य कर्त्तव्यमिदमतो गच्छाम्यहमित्येव गुरु प्रति निवेदनमावश्यकी, बहिःकर्त्तव्यव्यापारेष्ववसितेषु पुनस्तत्रैव प्रविशतः साधोः शेषसाधूनामुत्रासादिदोषपरि-

जिहीर्षया बहिर्व्यापारनिषेधेनोपाश्रयप्रवेशसूचनार्थं नैषेधिकी, भदन्त ! करोमीदमित्येव गुरोः प्रच्छनमापृच्छना, ग्रामादौ प्रेषितस्य गमनकाले पुनः प्रच्छनं प्रतिप्रच्छना, पूर्वानीताशनादिपरिभोगविषये साधूनामुत्साहना छन्दना, दास्यामीत्येवमद्याप्यगृहीतेनाशनादिना साधूनामामन्त्रणं निमन्त्रणा, त्वदीयोऽहमित्येवं श्रुताद्यर्थमन्यदीयसत्ताभ्युपगम उपसम्पत् ॥ ४० ॥

अथ भावानुपूर्वीमाह—

## औदयिकादिभावानुपूर्व्यप्येवम् ॥ ४१ ॥

**औदयिकादीति,** औदयिकादयो हि भावास्तेषामानुपूर्वी पूर्वपश्चानुपूर्व्यनानुपूर्वीभेदतस्त्रिधा, नारकादिगतिरौदयिको भावस्तत्सत्त्वे शेषभावा यथासम्भवं प्रादुर्भवन्तीति प्रधानत्वादादावुपन्यासः, ततः शेषपञ्चकमध्ये स्तोकविषयत्वादौपशमिकस्य ततो बहुविषयत्वात्क्षायिकस्य ततो बहुतरविषयत्वात् क्षायोपशमिकस्य ततो बहुतमविषयत्वात् पारिणामिकस्य ततोऽप्येषामेव भावानां द्विकादिसंयोगसमुत्थत्वात् सान्निपातिकस्य पूर्वानुपूर्व्यामुपन्यास इत्युपक्रमद्वारम् ॥ ४१ ॥

अथ निक्षेपद्वारमाह—

## ओघनामसूत्रालापकनिष्पन्नभेदो निक्षेपः ॥ ४२ ॥

**ओघेति,** ओघः सामान्यमध्ययनादिकं श्रुताभिधानं तेन निष्पन्नः, नाम श्रुतस्यैव सामायिकादिविशेषाभिधानं तेन निष्पन्नो नामनिष्पन्नः, सूत्रालापकाः 'करेमि भंते ! सामाइअ'मित्यादिकास्तैर्निष्पन्नः सूत्रालापकनिष्पन्न इत्येवं त्रिविधो निक्षेपः ॥ ४२ ॥

ओघनिष्पन्नमाह—

## अध्ययनाक्षीणायक्षपणालक्षणः प्रथमः ॥ ४३ ॥

**अध्ययनेति,** सामायिकचतुर्विंशतिस्तवादिश्रुतविशेषाणां सामान्यनामानि अध्ययनादीनि चत्वारि, यदेव हि सामायिकमध्ययनमुच्यते तदेवाक्षीणं निगद्यते, इदमेवाऽऽयः प्रतिपाद्यते, एतदेव क्षपणाऽभिधीयते, एवं चतुर्विंशतिस्तवादिष्वपि चिन्तनीयम् । एषां नामादिनिक्षेपोऽनुयोगद्वारतो विज्ञेयः ॥ ४३ ॥

अथ नामनिष्पन्नमाह—

## सामायिकादिर्नाम ॥ ४४ ॥

**सामायिकादिरिति,** आदिना चतुर्विंशतिस्तवादीनां ग्रहणम्, सामायिकस्य नामस्थापनाद्रव्यभावभेदाच्चतुर्विधो निक्षेपः, नामस्थापने स्पष्टे, द्रव्यमपि भव्यशरीरद्रव्यसामायिकं यावत्स्पष्टमेव, उभयव्यतिरिक्तञ्च पत्रकपुस्तकलिखितम्, नोआगमत इदम् । भावसामायिकं तु आगमतो ज्ञातोपयुक्तस्य । नोआगमतश्च यस्य मूलगुणे उत्तरगुणेऽनशनादौ च सर्वकालं व्यापारात् सन्निहित आत्मा तस्य सामायिकं भवति, यस्सर्वभूतेषु त्रसेषु स्थावरेषु च मैत्रीभावात्समः, यथा ह्यात्मनो हननादिजं दुःखं न प्रियं तथा सर्वजीवानामिति चेतसि भावयित्वा समस्तानपि जीवान्न स्वयं हन्ति नान्यैर्घातयति घ्नतश्चान्यान्न समनुजानीते सर्वजीवेषु च तुल्यं वर्त्तते तस्य सामायिकं भवति, यस्य च न कश्चि-

द्वेष्य प्रियो वा सर्वत्र समनस्कत्वात् तस्य सामायिकं भवति। यदि द्रव्यमनः आश्रित्य श्रमणः सुमना भवेत् भावेन च पापमना न भवति स्वजने परजने मानापमानयोश्च समो भवति तदा श्रमणो भवेत्। अत्र च ज्ञानक्रियारूपं सामायिकाद्यध्ययनं नोआगमतो भावसामायिकम्, ज्ञानक्रियासमुदाये आगमस्यैकदेशवृत्तित्वात्, नोशब्दस्य च देशवचनत्वात्, तथा च सामायिकवतः साधोरपि नोआगमतो भावसामायिकत्वम्, सामायिकवद्वस्तोरभेदोपचारात् ॥ ४४ ॥

अथ सूत्रालापकनिष्पन्नमाह—

## सूत्रालापकानां नामादिभिर्निक्षेपस्सूत्रालापकनिक्षेपः ॥ ४५ ॥

सूत्रेति, 'करोमि भदन्त! सामायिक'मित्यादीनां सूत्रालापकानां नामस्थापनादिभेदभिन्नो यो न्यासः स सूत्रालापकनिष्पन्नो निक्षेप इत्यर्थ इति निक्षेपद्वारम् ॥ ४५ ॥

अथ तृतीयमनुयोगद्वारमनुगममाख्याति—

## सूत्रनिर्युक्त्यनुगमभेदोऽनुगमः ॥ ४६ ॥

सूत्रेति, सूत्रव्याख्यानं सूत्रविभजना चेति द्विविधोऽनुगमः, नितरां युक्ताः सूत्रेण सह लोलीभावेन सम्बद्धा निर्युक्ता अर्थाः, तेषां युक्तिः स्फुटरूपतापादनं एकस्य युक्तशब्दस्य लोपान्निर्युक्तिः नामस्थापनादिप्रकारैः सूत्रविभजनेत्यर्थः, तद्रूपोऽनुगमो निर्युक्त्यनुगम इत्यर्थः ॥ ४६ ॥

तत्र निर्युक्त्यनुगममाह—

## निक्षेपोपोद्घातसूत्रस्पर्शिकनिर्युक्त्यनुगमलक्षणो द्वितीयः ॥ ४७ ॥

निक्षेपेति, पूर्वं नामस्थापनादिभेदेनावश्यकादिपदानां यद्व्याख्यानं कृतं तेन निक्षेपनिर्युक्त्यनुगमः प्रोक्त एव, उपोद्घातनिर्युक्त्यनुगमश्च व्याख्येयस्य सूत्रस्य व्याख्याविधिसमीपीकरणमुपोद्घातस्तस्य निर्युक्तिस्तद्रूपोऽनुगमः। तथाहि प्रथमं सामान्याभिधानरूप उद्देशो वक्तव्यः, यथा अध्ययनमिति, तथा विशेषाभिधानरूपो निर्देशः, यथा सामायिकमिति, ततः कुतः सामायिकं निर्गतमित्येवंरूपो निर्गमो वक्तव्यः, यथा तदुत्पत्तिक्षेत्रपालौ, ततः कुतः पुरुषान्निर्गतमिति वक्तव्यं तथा येन कारणेन गौतमादयो भगवतः समीपे सामायिकं शृण्वन्तीत्येव कारणं वाच्यम्, तथा येन प्रत्ययेन भगवतोपदिष्टमिदम्, येन वा प्रत्ययेन गणधरास्तदुपदिष्टं तच्छृण्वन्तीत्येनद्वक्तव्यम्, ततो लक्षणं सम्यक्त्वसामायिकस्य तत्त्वश्रद्धा लक्षणं श्रुतसामायिकस्य जीवादिपरिज्ञानं चारित्रसामायिकस्य सावद्यविरतिः देशविरतिसामायिकस्य तु विरत्यविरतिस्वरूपं मिश्रमिति, एवं नैगमादयो नया वाच्याः, तेषां च समवतारो यत्र सम्भवति तत्र वर्णनीयः, तथा कस्य व्यवहारादेः किं सामायिकमनुमतमित्यभिधानीयम्, तथा किं सामायिकं कतिविधं कस्य तत्, क्व वा येषु द्रव्येषु कथं कियच्चिरं कालं तद्भवति कियन्तस्तस्य युगपत् प्रतिपद्यमानका पूर्वप्रतिपन्ना वा लभ्यन्त इति वक्तव्यम्, तत आन्तरं तथा कियन्तं कालं सामायिकप्रतिपत्तारो निरन्तरं लभ्यन्त इति वाच्यम्, कियतो भवानुत्कृष्टतस्तदवाप्यत इति तथा एकस्मिन्नानाभवेषु वा पुनः पुनः सामायिकस्याकर्षा इति, तथा कियत्क्षेत्रं ते स्पृशन्तीति, तथा

निश्चिता निरुक्तिश्च वक्तव्या, तथा चोपोद्घातनिर्युक्तिः समर्थिता भवति, अस्याश्च प्रस्तुताध्ययनस्याशेषविशेषेषु विचारितेषु सत्सु सूत्रं व्याख्यानयोग्यमानीतं भवति, ततः प्रत्यवयवं सूत्रव्याख्यानरूपाया सूत्रस्पर्शिकनिर्युक्तेरवसरः सम्पद्यते, सूत्रश्च सूत्रानुगमे सत्येव भवति सोऽप्यवसरप्राप्त एवेति ॥ ४७ ॥

अथ सूत्रस्पर्शिकनिर्युक्त्यनुगममाह—

**अस्खलितामिलिताव्यत्याम्रेडितप्रतिपूर्णघोषादिशुद्धं सूत्रमुच्चारणीयम् ॥ ४८ ॥**

अस्खलितेति, सूत्रानुगमे समस्तदोषविप्रमुक्तं लक्षणयुक्तञ्च सूत्रमस्खलितादि यथा भवेत्तथोच्चारणीयम्, तथाहि उपलशकलाद्याकुलभूभागे लाङ्गलमिव स्खलति यत्तत् स्खलितं न तथाऽस्खलितम्। अनेकशास्त्रसम्बन्धीनि सूत्राण्येकत्र मीलयित्वा यत्र पठति तन्मीलितमसदृशधान्यमेलनवत्, अथवा परावर्त्तमानस्य यत्र पदविच्छेदो न प्रतीयते तन्मीलितं न तथाऽमीलितम्। एकस्मिन्नेव शास्त्रेऽन्यान्यस्थाननिबद्धान्येकार्थानि सूत्राण्येकस्थाने समानीय पठतो व्यत्याम्रेडितम्, अथवा आचारादिसूत्रमध्ये स्वमतिपरिकल्पितानि तत्सदृशानि सूत्राणि कृत्वा प्रक्षिपतो व्यत्याम्रेडितम्, अस्थानविरतिकं वा, न तथाऽव्यत्याम्रेडितम्। सूत्रतो बिन्दुमात्रादिभिरनूनम्, अर्थतश्चाध्याहाराकाङ्क्षारहितं प्रतिपूर्णम्। उदात्तादिघोषैरविकलं प्रतिपूर्णघोषम्। आदिना कण्ठोष्ठविप्रमुक्तं बालमूकभाषितवदव्यक्तं न भवति तथा गुरुप्रदत्तवाचनया प्राप्तं न तु कर्णाघाटकेन शिक्षितं न वा पुस्तकात्स्वयमेवाधीतमेव विशेषणयुतं शुद्धं द्वात्रिंशद्दोषविरहितमष्टाभिर्गुणैरुपेतमल्पग्रन्थं महार्थं लक्षणयुतं सूत्रमुच्चारणीयम्, उक्तञ्च 'अल्पग्रन्थं महार्थं द्वात्रिंशद्दोषविरहितं यच्च। लक्षणयुक्तं सूत्रमष्टभिश्च गुणैरुपेत'मिति, दोषाश्च 'अनृतमुपघातजनकं निरर्थकमपार्थकं छलं द्रुहिलम्। निःसारमधिकमूनं पुनरुक्तं व्याहतमयुक्तम्। क्रमभिन्नवचनभिन्नं विभक्तिभिन्नञ्च लिङ्गभिन्नञ्च। अनभिहितमपदमेव च स्वभावहीनं व्यवहितञ्च। कालयतिच्छविदोषं समयविरुद्धं वचनमात्रञ्च। अर्थापत्तिदोषो ज्ञेयोऽसमासदोषश्च। उपमारूपकदोषौ निर्देशपदार्थसन्धिदोषश्च। एते च सूत्रदोषा द्वात्रिंशद्भवन्ति ज्ञातव्या' इति, गुणाश्च 'निर्दोषं सारवन्तञ्च हेतुयुक्तमलङ्कृतम्। उपनीतं सोपचारं मितं मधुरमेव चे'ति। एतेषां स्वरूपाण्यन्यत्रावलोकनीयानि ॥ ४८ ॥

अस्य फलमाह—

**एतेन स्वपरसमयपदज्ञानं बन्धमोक्षसामायिकनोसामायिकपदज्ञानञ्च ॥ ४९ ॥**

एतेनेति, एवंविधसूत्रोच्चारणेनेत्यर्थः, एतेन हि पदमिदं स्वसमयगतजीवाद्यर्थप्रतिपादकमिदञ्च परसमयगतप्रधानेश्वराद्यर्थप्रतिपादकमिति विज्ञायते, तथा परसमयपदं प्राणिनां कुवासनाहेतुत्वेन बन्धपदमितरत्तु सद्बोधकारणत्वान्मोक्षपदमिति ज्ञानं जायते, अथवा प्रकृतिस्थित्यनुभावप्रदेशलक्षणबन्धस्य प्रतिपादकमिदं पदमिदञ्च कृत्स्नकर्मक्षयलक्षणमोक्षप्रतिपादकमिदं सामायिकप्रतिपादकमिदन्तु तद्व्यतिरिक्तानां नारकतिर्यगाद्यर्थानां प्रतिपादकमिति विज्ञायते ॥ ४९ ॥

फलान्तरमाह—

## अनधिगतस्य पदस्य व्याख्यानम् ॥ ५० ॥

**अनधिगतस्येति,** सूत्रे समुच्चारित एव केषाञ्चिद्भगवता साधुना यथोक्तनीत्या केचिदर्थाधिकारा परिज्ञाता भवन्ति, केचित्तु क्षयोपशमवैचित्र्यादनधिगता भवन्ति ततस्तेषामनधिगतानामर्थाधिकाराणामधिगमार्थं पदेन पदस्य व्याख्या भवति, तल्लक्षणञ्च 'संहिता च पदञ्चैव पदार्थः पदविग्रहः । चालना च प्रसिद्धिश्च षड्विधं विद्धि लक्षणम् ॥' इति, तत्रास्खलितपदोच्चारणं संहिता, यथा 'करोमि भयान्त ! सामायिक'मित्यादि । पदन्तु करोमीत्येकं पदं भयान्त ! इति द्वितीयं सामायिकमिति तृतीयमित्यादि । पदार्थस्तु करोमीत्यभ्युपगमो भयान्त इति गुर्वामन्त्रणं समस्यायः सामायिकमित्यादिकं । पदविग्रहः समासः, स चानेकपदानामेकत्वापादनविषयो यथा भयस्यान्तो भयान्त इत्यादि, सूत्रस्यार्थस्य वाऽनुपपत्त्युद्भावनं चालना, तस्यैवानेकोपपत्तिभिस्तथैव स्थापनं प्रसिद्धिः, एवं षड्विधं व्याख्याया लक्षणम्, तत्र सपदच्छेदसूत्रवर्णने सूत्रानुगमः, सूत्रालापकानां नामस्थापनादिनिक्षेपे कृते सूत्रालापकनिक्षेपः, पदार्थपदविग्रहादिषु सर्वेषु कृतेषु सूत्रस्पर्शिकनिर्युक्तिः कृतार्था भवति । नैगमादिनयानामपि प्राय स एव पदार्थादिविचारो विषय इति वस्तुतस्ते सूत्रस्पर्शिकनिर्युक्त्यन्तर्भाविनः । तदेवंविधिना सूत्रे व्याख्यायमाने सूत्रं सूत्रानुगमादयश्च युगपत्समाप्यन्ते ॥ ५० ॥

अथ नयद्वारमाह—

## नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूता मूलनयाः ॥ ५१ ॥

**नैगमेति,** महासत्तासामान्यविशेषादिज्ञानैरनेकैर्यो वस्तूनि परिच्छिनत्ति स नैगमः, क्रोडीकृतसामान्यविषयः संग्रहः, सर्वद्रव्यविषये सामान्याभावाय यो यतते स व्यवहारः, नासौ सामान्यमिच्छति लोकव्यवहारानङ्गत्वात्, तत्प्रधानत्वात्तस्य, वर्त्तमानकालभाविवस्तुग्रहणशील ऋजुसूत्रः, अयमतीतानागतवस्तुतिरस्कारप्रवणः, लिङ्गवचनभेदेनैकशब्दवाच्यानामपि भेदाभ्युपगन्ता शब्दः, लिङ्गावचनाभेदे तु बहूनामपि शब्दानामेकमेव वाच्यमसौ मन्यते, प्रवृत्तिनिमित्तभेदेन भिन्नाभिधेयाभ्युपगन्ता समभिरूढः, यथेन्द्रशक्रादिपदवाच्यानाम्, शब्दप्रतिपाद्यक्रियां कुर्वद्वस्तुविषय एवम्भूतनयः, यदा योषिन्मस्तकाद्यारूढतया जलाहरणक्रियावान् भवति तदैवासौ घटो नान्यदेति । तदेव मूलभूता सप्त नयाः, एषां विस्तृतविचार उत्तरोत्तरभेदप्रभेदा अन्यत्रावलोकनीयाः । नयानां प्रयोजनञ्चोपक्रमेणोपक्रान्तस्य निक्षेपेण च यथासम्भवं निक्षिप्तस्यानुगमेनानुगतस्य सामायिकाद्यध्ययनादेर्विचारणम् । तथा नयैः कचित्कश्चित् सूत्रविषयः समस्ताध्ययनविषयश्च विचार्यते, न तु प्रतिसूत्रं नयविचारनियमः, येन 'न नया समोयरंति इहमि'त्यादिना विरोधो भवेत् ॥ ५१ ॥

ननु किं नयैर्विचार्यमाणमध्ययनं सर्वैरेव नयैर्विचार्यं किंवा कियद्भिरेव, नाद्यः, तेषामसङ्ख्येयत्वेन तैर्विचारस्य कर्त्तुमशक्यत्वात्, यावन्तो हि वचनमार्गास्तावन्त एव नयाः । न द्वितीयः सङ्ख्यातीतत्वान्नयानां कतिभिर्विचार्यमाणे कतिभिरपि कथं न विचार्यमिति पर्यनुयोगप्रसङ्गात् । न च तेषाम-

सत्येवत्वेऽपि सकलनयसङ्ग्राहिभिर्नयैर्विचारो विधीयत इति वाच्यम्, सङ्ग्राहिनयानामप्यनेकविधत्वात्, तथाहि पूर्वविद्भिः सप्तनयशतानि सकलनयसङ्ग्राहीण्युक्तानि यत्प्रतिपादकं सप्तशतारं नयचक्राध्ययनमासीत्, तेषां सङ्ग्राहकाः पुनरपि द्वादशनयाः यत्प्ररूपकमिदानीमपि द्वादशारं नयचक्रमस्ति, एवन्तत्सङ्ग्राहिणोऽपि सप्त नैगमादिनयाः, तत्सङ्ग्राहिणौ द्रव्यपर्यायास्तिकौ नयौ ज्ञानक्रियानयौ वा निश्चयव्यवहारौ वा शब्दार्थनयौ चेति सङ्ग्राहकनयानामप्यनेकविधत्वात् पर्यनुयोगानवसरत्वमित्याशङ्कायामाह—

## ज्ञानक्रियोभयसाध्या मुक्तिरिति ॥ ५२ ॥

**ज्ञानेति**, ज्ञानक्रियोभयसाध्यैव मुक्तिर्न पुनरेकेन केनचित्साध्या, साधकोऽपि ज्ञानक्रियाभ्यां द्वाभ्यामपि युक्तः साधुरेवेति स्थितपक्षः, न हि ज्ञानमात्रात् पुरुषार्थसिद्धिः क्वापि दृष्टा, पाकार्थिनामपि दहनपरिज्ञानमात्रादेव न हि पाकसिद्धिः किन्तु दहनानयनसंधुक्षणज्वालनादिक्रियानुष्ठानादपि, न च तीर्थकरोऽपि केवलज्ञानमात्रान्मुक्तिं साधयति किन्तु यथाख्यातचारित्रक्रियातोऽपि, क्रियाकालेऽपि ज्ञानावश्यम्भाविनया तदनन्तरभावित्वलक्षणसाधर्म्योभयत्र तुल्यतया न क्रियामात्रात् पुरुषार्थसिद्धिः प्रत्येकं च तयोर्देशोपकारित्वेन समुदाये सम्पूर्णा हेतुताऽस्तीति न काचित् क्षतिः । प्रकरणान्ते मङ्गलसूचनाय मुक्तिशब्दः, इतिशब्दश्चानुयोगद्वारशास्त्रसारस्य समाप्तिसूचकः, उपक्रमादिद्वारचतुष्टयस्य निरूपणादिति संक्षेपः ॥ ५२ ॥

अनुयोगसार एषः प्रदर्शितो बालमतितुष्ट्यै ।
प्रौढधियामप्यस्माल्लाभश्चेयन्तु [illegible] तेऽपि ॥

इति श्रीतपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
लब्धिसूरिणा सङ्कलितायां सूत्रार्थमुक्तावल्यामनुयोग-
लक्षणा प्रथमा मुक्तासरिका वृत्ता ।

# अथ आचारमुक्तासरिका



तदेवमवसितेऽनुयोगनिरूपणे सम्प्रति चरणकरणानुयोगं यथाक्रमेणाऽऽचारानुयोगं प्रारभ्यते—

## अथाऽऽचारसारानुयोगः ॥ १ ॥

**अथेति,** सामान्यतोऽनुयोगनिरूपणोत्तरकालमित्यर्थः । यद्यप्यनुयोगश्चतुर्विधो भवति धर्मकथा-गणितद्रव्यचरणकरणानुयोगभेदात् तथापि चरणकरणानुयोगभूतस्याऽऽचारादेरनुयोगः क्रियते प्रधानत्वात्, इतरेषां तदर्थत्वात् । आचारेति, आ मर्यादया कालादिनियमादिलक्षणया चारश्चरणमाचारो मोक्षार्थमनुष्ठानविशेषः, तत्प्रतिपादकग्रन्थोऽप्याचारः, आचार इति ग्रन्थस्य विशेषनाम, तस्य सारतया प्रभूतार्थसङ्ग्रहरूपतयाऽनुयोगो व्याख्यानं क्रियत इति शेषः, अशेषविशेषाविरोधेन सामान्यरूपतया व्यावर्णने कृते सुकोमलमतीनां तत्रानायासतः प्रवेशः सम्पद्यत इति भावः । अनेन च सूत्रेण व्याचिख्यासितशास्त्रस्य समीपानयनरूपोपक्रमः कृतो भवतीति ॥ १ ॥

अथ तस्य निक्षेपं सूचयन्नाह—

## एकार्थप्रवर्त्तनप्रथमाङ्गत्वगणिपरिमाणसमवतारसारैर्भावाचारस्य विशेषः॥२॥

**एकार्थेति,** एकार्थाः पर्यायशब्दाः, यथाऽऽचाराऽऽगालाऽऽकराऽऽश्वासाऽऽदर्शाङ्गाऽऽचीर्णाऽऽजातामोक्षा भावाचारस्य । भावाचारस्येत्यनेन नामस्थापनाद्रव्याचाराणामेते न पर्याया इत्युक्तं भवति, तथाहि आचारस्य नामस्थापनाद्रव्यभावभेदतश्चतुर्धा निक्षेपो भवति, नामाचारस्थापनाचारौ प्रसिद्धौ तथा ज्ञशरीरभव्यशरीरलक्षणद्रव्याचारभेदोऽपि । उभयव्यतिरिक्तस्तु द्रव्याचारो नामनधावनवासनशिक्षापणसुकरणाविरोधीनि यानि लोके द्रव्याणि तद्रूपः । नामनं प्रवनतिकरणं तत्प्रति च द्रव्यं द्विविधं भवति, आचारवदनाचारवच्च, तिनिशलतादिकं ह्याचरितभावं तेन रूपेण परिणमति न त्वेरण्डादिद्रव्यम्, हरिद्रारक्तं वस्त्रं धावनं प्रत्याचारवत्, सुखेन प्रक्षालनात्, कृमिरक्तरागमनाचारवत्, तद्वस्त्रलोऽपि रागानपगमात् । वासनं प्रति कवेलुकाद्याचारवत् सुखेन पाटलकुसुमादिभिर्वास्यमानत्वात्, वैडूर्याद्यनाचारवत् अशक्यत्वात् । शिक्षां प्रति शुकसारिकाद्याचारवत्, सुखेन मानुषभाषादिसम्पादनात्, शकुन्ताद्यनाचारवत् । सुकरणं प्रति सुवर्णादिकमाचारवत् सुखेन तस्य कटकादिकरणात्, अनाचारवद्घटलोहादिकम् । अविरोधं प्रत्याचारवन्ति गुडदध्यादीनि, रसोत्कर्षाद्युपभोगगुणत्वाच्च, विपर्ययादनाचारवन्ति तैलक्षीरादीनि । पाषण्डिकादिकर्षकपञ्चरात्राद्याचारो लौकिको भावाचारः, अलौकिकस्तु स ज्ञानदर्शनचारित्रतपोवीर्याचारभेदात् पञ्चविधः, तत्र ज्ञानाचारोऽपि कालविनयबहुमानोपधानानिह्नवव्यञ्जनार्थतदुभयभेदतोऽष्टविधः, निःशङ्कितत्वं निष्काङ्क्षितत्वं निर्विचिकित्सताऽमूढदृष्टित्वमुपबृंहः स्थिरीकरणं वात्सल्यं प्रभावना चेत्यष्टविधो दर्शनाचारः ॥ तिस्रो गुप्तयः पञ्च समितयश्चेति चरणाचारोऽष्टधा, द्वादशधा तपआचारः, वीर्याचारस्त्वनेकधा, इत्येवं पञ्चविधा-

चारप्रतिपादकोऽयं ग्रन्थविशेषश्च भावाचारः । आचाल्यतेऽनेनातिनिबिडं कर्मादीत्याचालः तदुभयव्यतिरिक्तद्रव्याचालस्तु वायुः, भावाचालश्च ज्ञानादिपञ्चविधः । आगालनं समप्रदेशावस्थानमित्यागालः, उभयव्यतिरिक्तद्रव्यागालोऽम्भोदकादेर्निम्नप्रदेशावस्थानम् । ज्ञानादिकस्तु भावागालो रागादिरहितात्मन्यवस्थानात् । आगत्य तस्मिन् कुर्वन्तीत्याकरः, उभयव्यतिरिक्तद्रव्याकरो रजताकरादिः, ज्ञानादिरेव भावाकरः, अत्र निर्जरादिरत्नानां लाभात् । आश्वसन्त्यस्मिन्नित्याश्वासः, उभयव्यतिरिक्तश्च यानपात्रद्वीपादिः, ज्ञानादिरेव भावाश्वासः । आदृश्यतेऽस्मिन्नित्यादर्शः, उभयव्यतिरिक्तद्रव्यादर्शश्च दर्पणादिः, ज्ञानादिश्च भावादर्शः । अज्यते व्यक्तीक्रियतेऽस्मिन्नित्यङ्गम्, शिरोबाह्वादिकमुभयव्यतिरिक्तद्रव्याङ्गं भावाङ्गं ज्ञानादि । आचीर्णमासेवितमिदन्तु षोढा निक्षेप्यम्, उभयव्यतिरिक्तद्रव्याचीर्णं सिंहादेस्तृणादिपरिहारेण पिशितभक्षणम्, क्षेत्राचीर्णं वाह्लीकेषु सक्तवः कोङ्कणेषु पेया, कालाचीर्णं सरसचन्दनपङ्कादि, ज्ञानादिकमेव भावाचीर्णम् । आ जायन्तेऽस्यामित्याजातिः, उभयव्यतिरिक्तद्रव्याजातिर्मनुष्यादिजातिः, भावाजातिश्च ज्ञानादिनिदानभूतोऽयं ग्रन्थः । आमुच्यन्तेऽस्मिन्नित्यामोक्षणम्, उभयव्यतिरिक्तद्रव्यामोक्षश्च निगडादेर्मोक्षणम्, भावामोक्षस्तु कर्माष्टकोद्वेष्टनमशेषम्, एतत्साधकश्चायमेवाचार इति । तदेवं भावाचारस्य किञ्चिद्विशेषेणैकार्थप्रतिपादकत्वाच्छक्रपुरन्दरादिशब्दवत्पर्यायत्वं विज्ञेयम् । आचारोऽयं कदा भगवता विनिर्मित इत्यस्य निर्णयाय प्रवर्त्तनाविशेषो वाच्यः, स च तीर्थकराणां निखिलानां तीर्थप्रवर्त्तनादौ आचारार्थः प्रथमतया अभवत् भवति भविष्यति च, ततः इतरेऽङ्गार्थाः, गणधरैरप्यनयैवाऽऽनुपूर्व्या स सूत्रतया ग्रथ्यते । अत्र मोक्षोपायभूतचरणकरणप्रतिपादकत्वेन प्रवचनसारभूतत्वादितराङ्गाध्ययनयोग्यतापादकत्वाच्च द्वादशाङ्गेष्वस्य प्रथमाङ्गत्वमित्यपरो विशेषो बोध्यः । तथाऽयमाचारो गणित्वकारणानां प्रधानं गणिस्थानम्, अध्ययनादस्य क्षान्त्यादिरूपाणां चरणकरणात्मकानां वा श्रमणधर्माणां परिज्ञानादिति गणित्वं विशेषः । अस्याध्ययनतः पदतश्च परिमाणं क्रमेण नवब्रह्मचर्याभिधानाध्ययनात्मकत्वमष्टादशसहस्रपदात्मकत्वम्, पदपरिमाणेन च चतुश्चूलिकात्मकद्वितीयश्रुतस्कन्धप्रक्षेपाद्बहुत्वं निशीथाख्यपञ्चमचूलिकाप्रक्षेपाद्बहुतरत्वमनन्तगमपर्यायात्मकतया बहुतमत्वञ्च बोध्यम् । उपक्रमान्तर्गतसमवतारश्चैवमित्थम्—पञ्चचूलिकायां नवसु ब्रह्मचर्याध्ययनेषु तेषां पिण्डितार्थः शस्त्रपरिज्ञायां तदर्थः षट्स्वपि कायेषु षड्जीवनिकायार्थः पञ्चस्वपि व्रतेषु तानि च सर्वद्रव्येषु पर्यायाणाञ्चानन्तभागे समवतारः, प्रथमव्रतस्य षड्जीवनिकायाश्रितत्वाद्द्वितीयचरमव्रतयोः सर्वद्रव्याश्रितत्वात् शेषमहाव्रतानाञ्च तदेकदेशाश्रितत्वान्महाव्रतानां सर्वद्रव्येष्ववतारः, सर्वस्याः संयमस्थानश्रेणेः ज्ञानदर्शनचारित्रपर्याये परिपूर्णत्वेन सर्वाकाशानन्तगुणप्रमाणत्वेन व्रतानाञ्च चारित्रमात्रोपयोगित्वात् पर्यायानन्तभागवृत्तित्वमवसेयम् । कस्य च सार इति चेदित्थम्—अङ्गानामाचारस्तस्यानुयोगार्थस्तस्य यथावद् विनियोगस्तस्य चरणं तस्य च निर्वाणं तस्यापि चाव्याबाधस्थितिः सार इति ॥ २ ॥

अथाचारग्रन्थस्य प्रविभागमाह—

## अस्य द्वौ श्रुतस्कन्धावाचारतदग्रभेदात् ॥ ३ ॥

अस्येति, आचारश्रुतस्येत्यर्थः, श्रूयते तदिति श्रुतं प्रतिविशिष्टार्थप्रतिपादनफलं वाग्योगमात्रं भगवता निसृष्टमात्मीयश्रवणकोटरप्रविष्टं क्षायोपशमिकभावपरिणामाविर्भावकारणं श्रुतमित्युच्यते, तदग्र-

विपाकग्रन्थोऽपि श्रुतम्, श्रुतग्रन्थसिद्धान्तप्रवचनाज्ञोपदेशागमादीनि श्रुतैकार्थिकनामानि, स्कन्दति शुष्यति क्षीयते पुष्यते च पुद्गलसंयोगवियोगाभ्यामिति स्कन्धोऽणुसमुदायः, श्रुतरूपी स्कन्धो श्रुतस्कन्धो, तथाचाचाररूप एक श्रुतस्कन्धः आचाराग्ररूपोऽपरः श्रुतस्कन्ध इति भावः । श्रुतस्य चतुर्धा निक्षेपः, तत्र नामस्थापने प्रसिद्धे, आगमतो द्रव्यश्रुतं श्रुतोपयोगेऽवर्त्तमानः श्रुतपदाभिधेयाऽऽचारादिशिक्षावान् । नोआगमतो ज्ञशरीरभव्यशरीरे स्फुटे, उभयव्यतिरिक्तञ्च द्रव्यश्रुतं पत्रकपुस्तकादिलिखितम्, अस्य भावश्रुतसाधकत्वाद्द्रव्यत्वमागमकारणभूतात्मादेरभावान्नोआगमत्वञ्च बोध्यम् । भावश्रुतमपि आगमतो नोआगमतश्च द्विभेदम्, श्रुतपदार्थज्ञस्तत्र चोपयुक्त आगमतो भावश्रुतं श्रुतोपयोगसद्भावात् । नोआगमतस्तल्लौकिकलोकोत्तरभेदेन द्विविधम्, मिथ्यादृष्टिभिः स्वच्छन्दमतिबुद्धिविकल्पितं भारतादिकं लौकिकम् । लोकप्रधानैरर्हद्भिः प्रणीतं द्वादशाङ्गं लोकोत्तरम्, अनेनैव च भावश्रुतेनात्राधिकारः । स्कन्धनिक्षेपोऽपि यावद्भव्यशरीरं स्फुट एव, उभयव्यतिरिक्तद्रव्यस्कन्धस्तु सचित्ताचित्तमिश्रभेदेन त्रिविधः, तत्राद्यस्तुरगगजकिन्नरकिम्पुरुषादिरूपोऽनेकविधः, तुरगादीनां विशिष्टैकपरिणामपरिणतत्वात्स्कन्धता भाव्या । द्विप्रदेशादिस्कन्धा अचित्तद्रव्यस्कन्धाः । मिश्रश्च हस्त्यश्वरथपदातिसन्नाहखड्गकुन्तादिसमुदायात्मकसेनाया अग्रमध्यपश्चिमस्कन्धरूपोऽनेकविधः, एषु हस्त्यादीनां सचित्तत्वात् खड्गादीनामचित्तत्वात् मिश्रता । यद्वा कृत्स्नाकृत्स्नानेकद्रव्यस्कन्धभेदादुभयव्यतिरिक्तद्रव्यस्कन्धस्त्रिविधः, हयस्कन्धगजस्कन्धादय कृत्स्नस्कन्धाः, तदन्यबृहत्तरस्कन्धाभावात्, जीववदधिष्ठितशरीरावयवलक्षणसमुदायोऽत्र कृत्स्नस्कन्धत्वेन विवक्षितः । न च हयादिस्कन्धो न कृत्स्नस्कन्धरूपस्तदपेक्षया गजस्कन्धस्य बृहत्तरत्वादिति वाच्यम्, शरीरानुगतजीवस्यासंख्येयप्रदेशात्मकत्वेन समुदायत्वेन चात्र हयादिस्कन्धत्वेन विवक्षणात् सर्वत्र जीवस्यासंख्येयप्रदेशात्मकतया तुल्यत्वात्, यदि जीवप्रदेशपुद्गलसमुदायानां सामस्त्येन वृद्धिर्भवेद्गजादिस्कन्धस्य तदा भवेद्वृद्धिः, तदेव नास्तीति । द्विप्रदेशिकाद्यावदनन्तप्रदेशिकस्कन्धं सर्वे स्कन्धा अकृत्स्नस्कन्धाः, सर्वान्तिमानन्तप्रदेशात्मकस्कन्धं विहाय सर्वेषामकृत्स्नत्वात् । यस्य यस्य चिरस्कन्धस्य नखदन्तकेशादिरूपो देशो जीवप्रदेशैर्विरहितस्तस्यैव च यो देशः पृष्ठोदरचरणादिलक्षणो जीवप्रदेशैर्व्याप्तो देशयोस्तयोर्विशिष्टैकपरिणामपरिणतयोर्देहरूपो यः समुदायः सोऽनेकद्रव्यस्कन्धः, सचेतनाचेतनानेकद्रव्यात्मकत्वात्, जीवप्रदेशाव्याप्तदेशस्याप्यत्र विवक्षणात् कृत्स्नस्कन्धापेक्षया वैलक्षण्यम् । स्कन्धपदार्थाभिज्ञस्तत्र चोपयुक्तो भावस्कन्धः आगममाश्रित्य । नोआगममाश्रित्य तु प्रस्तुताचाराङ्गस्य नवानामध्ययनानां चूलिकानाञ्च समुदायस्य परस्परमन्यद्धतया यो विशिष्टैकपरिणामस्तेन निष्पन्नः श्रुतस्कन्धो भावस्कन्ध इति ॥ ३ ॥

अथाद्यश्रुतस्काध्ययनान्याह—

**शस्त्रपरिज्ञालोकविजयशीतोष्णीयसम्यक्त्वलोकसारधूतमहापरिज्ञाविमोक्षोपधानश्रुतभेदाद्ब्रह्मचर्यश्रुतस्कन्धस्याद्यस्य नवाध्ययनानि ॥ ४ ॥**

शस्त्रपरिज्ञेति, शस्यन्ते हिंस्यन्तेऽनेन प्राणिन इति शस्त्रं खड्गादि, तस्य जीवशस्त्राद्द्धेतोः परिज्ञा, ज्ञानपूर्वकं प्रत्याख्यानं यत्रोच्यते सा शस्त्रपरिज्ञा जीवास्तित्वतद्धिंसादिपरिहारप्रतिपादनपरा ।

शस्त्रनिक्षेपे व्यतिरिक्तं द्रव्यशस्त्रं खड्गाग्निविषादिकम् । भावशस्त्रं दुष्प्रयुक्तमन्तःकरणं वाक्कायौ विरतिभावश्च, जीवोपघातकारित्वात् । द्रव्यपरिज्ञा च ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञेति द्विविधा, उभयविधापि आगमनोआगमभेदद्वयवती, आगमतो ज्ञाताऽनुपयुक्तः । नोआगमतो ज्ञशरीरभव्यशरीरोभयव्यतिरिक्तभेदतस्त्रिधा, उभयव्यतिरिक्ता ज्ञपरिज्ञा च यो यत्सचित्तादि द्रव्यं जानीते सा परिच्छेद्यद्रव्यप्राधान्या द्रव्यपरिज्ञा । उभयव्यतिरिक्तप्रत्याख्यानपरिज्ञापि देहोपकरणपरिज्ञानम्, उपकरणं रजोहरणादि, साधकतमत्वात् । भावपरिज्ञा द्विविधा ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा चेति, आगमतस्तु पूर्ववत्, नोआगमतो ज्ञपरिज्ञा ज्ञानक्रियारूपमिदमेवाध्ययनम् । प्रत्याख्यानपरिज्ञा च मनोवाक्कायकृतकारितानुमतिभेदात्मिका प्राणातिपातनिवृत्तिः । भावलोकस्य रागद्वेषलक्षणस्य विजयो निराकरणं यत्राभिधीयते स लोकविजयः, शब्दादिविषयलोकस्य वा विजयस्य प्रतिपादनपरः । शीतश्चोष्णश्च शीतोष्णे ते अधिकृत्य कृतमध्ययनं शीतोष्णीयं शीतोष्णादिस्पर्शजनितवेदनादिप्रतिपादकपरम् । तत्त्वार्थश्रद्धानरूपसम्यक्त्वदार्ढ्यप्रतिपादनपरमध्ययनं सम्यक्त्वम् । चतुर्दशरज्ज्वात्मकस्य लोकस्य सारं परमार्थस्तत्प्रतिपादकमध्ययनं लोकसारः । धूतं सङ्गानां त्यजनं तत्प्रतिपादकमध्ययनं धूतम् । महती प्रतिज्ञा अन्तःक्रियालक्षणा सम्यग्विधेया यत्र प्रतिपाद्यते तदध्ययनं महापरिज्ञा, अध्ययनमिदं सम्प्रति व्यवच्छिन्नमतो नोच्यते । विमोक्षः परित्यागोऽसमनोज्ञावस्त्रपात्रादीनां तत्प्रतिपादकमध्ययनं विमोक्षः । उप मोक्षं प्रति सामीप्येन दधातीत्युपधानं महावीरासेवितस्योपधानस्य तपसः प्रतिपादकं श्रुतं ग्रन्थ उपधानश्रुतमेतेषां द्वन्द्वः, साम्येव भेदो विशेषस्तस्मादाद्यस्य प्रथमश्रुतस्कन्धस्याध्ययनानि नव भवन्ति, आद्यस्य पर्यायान्तरमाह—ब्रह्मचर्यश्रुतस्कन्धस्येति, एतस्वध्ययनेषु कुशलानुष्ठानरूपब्रह्मचर्यस्य प्रतिपादनादाचाराङ्गप्रथमश्रुतस्कन्धस्य ब्रह्मचर्यसंज्ञेति भावः । अध्ययनानीति, विशिष्टार्थध्वनिसन्दर्भरूपाणीत्यर्थः, अधिगम्यन्ते परिच्छिद्यन्तेऽर्था जीवादय एभिरित्यध्ययनानीति व्युत्पत्तेरिति । सूत्रेणानेन अध्ययनानामन्वर्थाभिधानप्रतिपादकेनोपक्रमान्तर्गतार्थाधिकारः सूचितः, तत्र प्रथमाध्ययनस्य सप्तोद्देशाः, प्रथमोद्देशे सामान्यतो जीवास्तित्वमभिधीयते, शेषेषु षट्सु विशेषेण पृथिवीकायादीनामस्तित्वं सर्वेषां चान्ते बन्धस्य विरतेश्च प्रतिपादनमिति उद्देशार्थाधिकारोऽपि विज्ञेयः ॥ ४ ॥

तत्र शस्त्रपरिज्ञां स्फुटीकर्तुमाह—

**केचिदिह नोसञ्ज्ञिनः प्रज्ञापकभावदिग्गमनावेदनात् ॥ ५ ॥**

केचिदिति, प्रथमोद्देशार्थाधिकारानुसारेण नोसंज्ञिन इति विधेयानुसारेण वा केचित्पदेन प्राणिनां ग्रहणम्, तथा च ज्ञानावरणीयावृताः केचित्प्राणिन इत्यर्थः, इह—संसारे, नोसंज्ञिन इति, नोसंज्ञा—प्रतिविशिष्टसंज्ञानिषेधोऽस्त्येषामिति नोसंज्ञिनः प्रतिविशिष्टसंज्ञाविधुराः, एवञ्च नोशब्देन केषाञ्चिज्ज्ञानरूपा संज्ञा न जायत इति देशस्यैव निषेधो न संज्ञामात्रस्य, सर्वप्राणिनामाहारादिदशसंज्ञाया शास्त्रे प्रतिपादनादिति भावः । संज्ञानिक्षेपश्चतुर्विधः, उभयव्यतिरिक्तद्रव्यसंज्ञा सचित्ताचित्तमिश्रभेदतस्त्रिधा, सचित्तेन हस्तादिनाऽचित्तेन ध्वजादिना मिश्रेण प्रदीपादिना पानभोजनादिसंज्ञाभाव्याः संज्ञा संज्ञाऽवगम इति कृत्वा । ज्ञानसंज्ञाऽनुभवनसंज्ञा चेति भावसंज्ञा द्विविधा, मतिज्ञानादिपञ्चविधा ज्ञानसंज्ञा, स्वकृतकर्मोदयादिसमुत्थाऽनुभवसंज्ञा च आहारभयपरिग्रहमैथुनसुखदुःख-

मोहनिचिवित्साक्रोधमानमायालोभशोकलोकधर्मौघसंज्ञाभेदेन षोडशधा भवति, प्रकृते च ज्ञानसंज्ञया विचार । केषाञ्चिन्न सा सञ्ज्ञेत्यत्र हेतुमाह प्रज्ञापकेति, प्रज्ञापिका भावरूपाश्च या दिशस्ताभ्य आगमनस्य स्वसंवेदनादिरर्थः, प्रज्ञापको व्याख्याता तदाश्रयेण या दिक् सा प्रज्ञापकदिक् प्रज्ञापको यस्यां दिशोऽभिमुखस्तिष्ठति सा पूर्वा, शेषास्त्वाग्नेय्यादिका दिशो नियमात्तस्यैव प्रज्ञापकस्य प्रदक्षिणातोऽनुगन्तव्याः, ताश्च दिग्विदिगन्तरालरूपा ऊर्ध्वाधोरूपाश्चेत्यष्टादशविधाः । सम्मूर्छनकर्मभूम्यकर्मभूम्यन्तरद्वीपजा मनुष्या द्वित्रिचतुःपञ्चेन्द्रियास्तिर्यञ्चः पृथिव्यप्तेजोवायुकायिका अग्रमूलस्कन्धपर्वबीजास्तथा देवनारका इत्यष्टादशभावैर्भेदनात्तथाविधा जीवा भावदिशः, आभिरत्र प्रज्ञापकभावदिग्भिरधिकारः । तथाचाहममुष्या दिशः पूर्वस्या दक्षिणाया पश्चिमाया उत्तराया वा समागतोऽस्मि पूर्वस्मिन् जन्मन्यहं किं देव आसं मनुष्यो वा तिर्यङ् वा नारको वा, मृत्वा चास्माज्जन्मान्तरे किं देवो वा मनुष्यो वा तिर्यङ् वा नारको वा भविष्यासीत्यादिप्रज्ञापकभावदिगागमनादिपरिज्ञानं केषाञ्चिन्न जायते ज्ञानावरणीयकर्मप्रभावात्, यथा कोऽपि मदिरातिपानमदघूर्णितलोललोचनोऽव्यक्तमनोविज्ञानो रथ्यामार्गनिपतितः केनचिद्गृहमानीतो मदात्यये कुतोऽहमागत इति न जानाति तथायमपीति भावार्थः ॥ ५ ॥

ननु विशिष्टसंज्ञानिषेधस्तदोपपद्येत यदि सामान्यसंज्ञावद्धर्मी प्रमाणपथमारूढो यदा भवेत्, तस्यैव मात्मनः पश्यामः, न हि स प्रत्यक्षगम्यः, स्वभावतो विप्रकृष्टत्वेनातीन्द्रियत्वात्, अत एव तदव्यभिचारिकार्यादिहेतुसम्बन्धग्रहणासम्भवान्नानुमानगम्यः, नाप्युपमानगम्यः, तस्यातीन्द्रियत्वेन सामान्यग्रहणासम्भवात्, न वाऽऽगमवेद्यः, तेन सह पदशक्तिग्रहासम्भवात्, नाप्यर्थापत्त्या, तमन्तरेण सकलार्थोपपत्तेः, पञ्चानुपलब्धिविषयत्वात्तदभाव एव सिद्धयतीत्याशङ्कायामाह—

## अस्त्यात्माऽसाधारणाहम्प्रत्ययात् ॥ ६ ॥

अस्तीति, तथा चात्मनि प्रमाणं नास्तीति न, किन्तु प्रत्यक्षेणाहम्प्रत्ययेन स विषयीक्रियत इति भावः । न ह्ययमहम्प्रत्ययो लिङ्गजः शब्दजो वा, तदनुसन्धानमन्तरेणापि जायमानत्वात्, एवञ्चात्मा प्रत्यक्षविषयः, तद्गुणस्य ज्ञानस्य स्वसंवित्सिद्धत्वात्, विषयव्यवस्था हि स्वसंवेदननिष्ठा, घटपटादीनामपि रूपादिगुणप्रत्यक्षादेवाध्यक्षविषयत्वमिति तत्सिद्धिरनुमानादपि । ननु शरीरादिविषय एवाहम्प्रत्ययो भवत्वित्याशङ्कायामुक्तमसाधारणेति, यदि ह्यहम्प्रत्ययः पृथिव्यादौ भवेत् तर्ह्यहं पृथिवी अहमाप इत्याद्याकारः प्रत्ययो भवेत्, न चैवम्, न च सामान्यतो मा भूत्, विशेषतस्तु गौरोऽहं कृष्णोऽहमिति भवत्येवेति वाच्यम्, अहङ्कारस्य प्रतिसन्धानविषयत्वात्, शरीरस्य च भेदेनाप्रतिसन्धानत्वात्, भवति हि प्रतिसन्धानं योऽहं सुखसाधनं स्रक्चन्दनादिकमुपलभ्य तदुपादित्सुः प्रयतमानस्तदुपात्तवान् सोऽहं सुखी, योऽहं दुःखसाधनमहिकण्टकादिकमुपलभ्यापि न परिहृतवान् सोऽहं दुःखीत्यादिरूपम् । विरुद्धयते चैतदनेकाश्रितत्वे, चैत्रमैत्रसुखादिषु तददर्शनात्, शरीराणाञ्च प्रत्यहं परिणतिभेदेन भिन्नत्वात् । न च यथाऽहं गौरः स्थूलो ह्रस्व आसं सोऽहमिदानीं श्यामः कृशो दीर्घ इति शरीरगुणा अपि प्रतिसन्धीयन्त एवेति वाच्यम्, तस्य भ्रान्तत्वात् । प्रकृतमपि प्रतिसन्धानं भ्रान्तमिति चेन्न, स्मर्तुरभ्रान्तेः, अन्येन दृष्टस्यान्येन स्मरणासम्भवात्, अन्यथाऽतिप्रसङ्गात् ।

किञ्च ज्ञानस्य शरीरधर्मत्वे तत् परैरपि प्रत्यक्षेण गृह्येत, ये हि प्रत्यक्षविषयाश्शरीरगुणास्ते स्वेनेव परैरपि गृह्यन्ते यथा रूपादय, ज्ञानं तु प्रत्यक्षमपि सन्न परप्रत्यक्षमाह्य तस्मान्न शरीरगुण, ततोऽन्यस्य गुणेनैतेन भाव्य स एवात्मा। किञ्चैवं भूतचैतन्यवादी प्रष्टव्यः पञ्चभूतात्मके शरीरे किं सर्वाणि चेतयन्ते किं वैकमिति, आद्ये सर्वेषां समत्वात् परस्परमसम्बन्धापत्तिः। द्वितीये त्वितरेण विनापि लोष्टादिपृथिव्यादेश्चैतन्यं स्यात्, न हि तस्य चैतन्येऽन्यदपेक्षणीयमस्ति, तथा च येयं शरीरगता पृथिवी सा न चेतयते पृथिवीत्वाल्लोष्टवदित्यनुमानम्, एवं जलादावपि, तत् कथं समुदायस्य चैतन्यं भवेत्। तथा व्यतिरेकबुद्धिरपि दृश्यते ममेदं शरीरं कृशमिति षष्ठ्याऽस्मदर्थस्य शरीरव्यतिरेकात्, शरीरस्य च परविषयेदङ्कारास्पदत्वात्, अभेदावगमस्य च सरागदोषवतो भ्रान्त्याप्युपपत्ते, पूर्वाभ्यस्तस्मृत्यनुबन्धेन च विना जातस्य हर्षभयशोकसम्प्रतिपत्त्यनुपपत्ते। जातिस्मराश्च केचिदद्यत्वेऽपि देहान्तरदृष्टश्रुतवृत्तान्तं सम्बोधयन्त उपलभ्यन्त इत्युपलब्धिसिद्धः शरीरात्मनोर्भेदः। यद्यपि चानेन प्रकारेण शरीरात्मनोर्विस्पष्टो भेदो न सिद्ध्येत्तथापि तावदभेदोऽपि न विस्पष्टः किन्तु कथञ्चिद्भेदाभेद एवेति। एवं योऽहं रूपमद्राक्षं सोऽहं स्पृशामीति, योऽहममद्राक्षं सोऽहं स्मरामीतीन्द्रियाभावेऽपि प्रत्यभिज्ञानादेको ज्ञाता इन्द्रियादिव्यतिरिक्तः सिद्धः। हेयोपादेयपरिहारोपादानप्रवृत्त्या च परात्मसिद्धिः। एवं भगवत्प्रणीतागमेनैव विशिष्टसंज्ञानिषेधद्वारेणाऽऽगमित्यात्मोक्तेरिमप्रत्ययेन चात्मसिद्धिर्भाव्या, नान्यागमेन, तस्यानाप्तप्रणीतत्वेनाप्रामाण्यात्। एवमशीत्युत्तरशतभेदा क्रियावादा चतुरशीतिविकल्पा अक्रियावादा सप्तषष्टिभेदा अज्ञानिकवादा द्वात्रिंशद्भेदा वैनयिकवादाश्च निराकर्त्तव्या इति ॥ ६ ॥

ननु केषाञ्चित्संज्ञा न जायत इत्युक्तं तेन केषाञ्चिद्विशिष्टसंज्ञा भवतीत्युक्तं भवति सा च संज्ञा कथं तेषामुत्पद्यत इत्यत्राह—

## कश्चित्तज्जानाति स्वभावात् परोपदेशाद्वा ॥ ७ ॥

कश्चिदिति, कश्चिदनादिसंसारे परिभ्रमन् विशिष्टक्षयोपशमादिमान् सत् प्रज्ञापकदिग्विदिगागमनं भावदिगागमनञ्च जानाति, तथा च कश्चिद्विशिष्टक्षयोपशमी प्राणी कस्या दिशोऽहमागतोऽस्मि पूर्वस्मिन् जन्मनि कोऽहं देवो वा मनुष्यो वा तिर्यग्वा नारको वाऽभूवम्, जन्मनोऽस्माच्च प्रेत्य किं देवो वा मनुष्यो वा तिर्यग् वा नारको वा भविष्यामीत्येतदवगच्छतीति भावः। कथमवगच्छतीत्यत्राह—स्वभावादिति, स्वस्य योऽयं भावो मतिः स्वभावः, आत्मानन्यभूतेन ज्ञानेनेत्यर्थः, एतेन मतिरात्मस्वभावः, न तु वैशेषिकाणामिव व्यतिरिक्ता समवायेन तत्र समवैतीत्यावेदितम्, युक्तयोऽत्र सम्मतितत्त्वसोपानादौ विलोक्याः। यद्यपि स्वभावभूता मतिरात्मनः सदा सन्निहिता तथापि प्रबलतरज्ञानावरणावृतत्वाद्वलात्त न विशिष्टावबोधः। अत्र मतिश्चतुर्विधा माह्या, अवधिमनःपर्ययकेवलज्ञानजातिस्मरणभेदात्, तत्रावधिज्ञानी मनःपर्ययज्ञानी च संख्येयानसंख्येयान् वा भवान् केवली नियमतोऽनन्तान् जातिस्मरो नियमतस्संख्येयान् जानाति, एवं चतुर्विधया निजस्वभावभूतया मत्या कश्चिदात्मनो विशिष्टदिग्गत्यागती जानाति। ननु किं यो जानाति स स्वभावे-

नैव जानाति उतान्येनापि येनचित्कारणेनेत्यत्राह परोपदेशाद्वेति, स्वस्माद्यः परः तीर्थकृत् तद्व्यतिरिक्तातिशयज्ञानी वा तस्योपदेशाज्जीवान् पृथिव्यादीन् प्रतिविशिष्टदिगागमनं शरीराधिष्ठातारं कथञ्चिद्भिन्नमात्मानं भवान्तरसङ्क्रान्तिमन्तमसर्वगं भोक्तारममूर्त्तमविनाशिनं शरीरमात्रव्यापिनञ्च जानातीति भावः। ईदृक्षज्ञानसङ्क्रान्तोऽल्पा एवेति सूचयितुं कश्चिदित्येकवचनान्तपदमुपात्तम् ॥ ७ ॥

ईदृशसद्भावत्वे जीवस्य किमायातमित्यत्राह—

## स एव विवेकी ॥ ८ ॥

**स एवेति,** यो ह्यसाधारणाहम्प्रत्ययतोऽविच्छिन्ननारकतिर्यगादिसन्तानपातिनं द्रव्यार्थतो नित्यं पर्यायार्थतया चानित्यमात्मानं जानाति स्वभावात् परोपदेशाद्वा स एव वस्तुतो विवेकी, विवेक आत्मवद्बहुत्वतत्कर्मतत्क्रियापरिज्ञानं तद्वानित्यर्थः, एवशब्देनानात्मैकविभुकालयदृच्छादिवादिव्यावृत्तिः, सर्वथा जडनित्यविभ्वनित्यात्मनो भवान्तरसङ्क्रान्त्याद्यसम्भवात्, तथा च य एवात्मानात्मविवेकज्ञः स एव परमार्थतः प्राणिगणान् जानाति य एव च दिगागमनादिपरिज्ञानेनात्मवेत्ता प्राणिगणज्ञश्च स एव कर्मज्ञः, मिथ्यात्वादिभिर्हि जीवाः प्रथमं गत्यादियोग्यानि कर्माण्यादाय पश्चाद्विरूपासु तासु तासु योनिषु सञ्चरन्ति, एवमात्मनः प्राणिसङ्घातस्य कर्मणश्च य एव परमार्थतो वेत्ता स एव तत्तत्कर्मनिमित्तक्रिया जानाति, क्रियायाः कर्मबन्धहेतुत्वादिति भावः ॥ ८ ॥

अथ कालत्रयसंस्पर्शिना मतिज्ञानेनापि तद्भव एवात्मसद्भावं प्रदर्शयन् परिज्ञातव्यक्रियाभेदान् दर्शयति—

## कालकरणयोगक्रियाः परिज्ञातव्याः ॥ ९ ॥

**कालेति,** अतीतानागतवर्त्तमानलक्षणकालेत्यर्थः, करणेति, कृतकारितानुमोदनरूपकरणेत्यर्थः, योगेति, मनोवाक्कायरूपयोगेत्यर्थः, एतन्निमित्तकाः क्रियाविशेषा अवश्यं परिज्ञातव्याः, यो हि प्राणी आत्मानं क्रियाश्च न जानाति सोऽविज्ञातात्मक्रियात्वेन जीवोपमर्दनादिक्रियासु प्रवृत्तोऽष्टविधकर्मबन्धकस्तद्उदयप्रभावेण नानादिग्विदिक्षु सञ्चरन्नानाविधयोनीः सन्धावति, विरूपरूपांश्च स्पर्शाननुभवतीति भावः। अत्र क्रियाः सप्तविंशतिभेदाः, यथा भूतवर्त्तमानभविष्यत्कालापेक्षया कृतकारितानुमतिभिर्नव विकल्पाः, अकार्षमहमचीकरमहम्, कुर्वन्तमहमनुजिज्ञासिषमिति भूतकालापेक्षया करणत्रयो विकल्पाः करोमि कारयामि कुर्वन्तमनुजानामीति वर्त्तमानकालापेक्षया करणत्रय, करिष्यामि कारयिष्यामि कुर्वन्तमनुज्ञास्यामीति भविष्यत्कालापेक्षया च करणत्रय, एत एव प्रत्येकं मनोवाक्कायैश्चिन्त्यमानाः सप्तविंशतिविकल्पा भवन्ति, एतावत्य एव क्रिया लोके कर्मोपादानभूता, नान्या, एतावन्त्य एव च परिज्ञेयाः। एष यौवनावस्थायामिन्द्रियवशीभूतो विषयमदोन्मत्तमानसस्तत्तत्कार्यानुष्ठानपरायणोऽस्य देहादेरानुकूल्यमकार्षमकार्योद्यो वा प्रवर्त्तमानमन्यं प्रवृत्तिमचीकरं कुर्वन्तं वाऽनुज्ञातवान् सोऽहमित्याद्यनुभवेन त्रिकालस्पर्शिदेहादिव्यतिरिक्तात्मनो भूतवर्त्तमानभविष्यत्कालपरिणतिरूपस्यैकस्यास्तित्वमवगम्यते, क्रियापरिणामेनात्मनः कथञ्चित् परिणामित्वस्वीकारात्, ईदृशात्मास्तित्वावगमो नैकान्तक्षणिकनित्यत्ववादिना सम्भवति, प्रमाणैरेवमेव तदवगतेरेकान्तक्षणिकादिरूप आत्मा खपुष्पसदृश एवेति ते नात्मवादिनो न कर्मवादिनो न वा क्रियावादिन इति भावः ॥ ९ ॥

ननु परिज्ञा हि द्विविधा ज्ञप्रत्याख्यानपरिज्ञाभेदात्, तत्रैतावता ग्रन्थेन ज्ञपरिज्ञयाऽऽत्मनो बन्धस्य चास्तित्वमेतावद्भिरेव क्रियाविशेषैर्ज्ञात भवति, ज्ञात्वा च तत्र विधेय किमित्यत्राह—

## एतत्प्रत्याख्याता मुनिः ॥ १० ॥

**एतदिति,** ज्ञपरिज्ञया विज्ञाताना क्रियाविशेषाणा ससारपरिभ्रमणनिदानाना कर्मबन्धकानां प्रत्याख्यानपरिज्ञया य प्रत्याख्याता स मुनि , मन्यते मनुते वा जगतस्त्रिकालावस्थामिति मुनिः, ज्ञानावरणीयादिकर्मोपादानहेतुक्रियाविशेषाणा परिज्ञानपूर्वं प्रत्याख्यानेन दिगादिभ्रमणान्मोक्ष , अपरिज्ञातारम्भादिस्वरूपा हि जीवा दिगादिषु नानाविधयोनिषु पुन पुनः परिधावंति सरूपविरूपस्पर्शादीन् विपाकेन सवेदयन्ति जीवोपमर्दादौ प्रवर्तन्ते येनाष्टविधकर्मबन्धो भवतीति भाव , अनेन प्रबन्धेन ज्ञानक्रिये मोक्षाङ्गभूते उक्ते, ताभ्या विना मोक्षासम्भवादिति ॥ १० ॥

नन्वपरिज्ञातकर्मणो मुनित्वाभावादविरतस्य पृथिव्यादिसत्त्वापरिवर्त्तनशीलत्वमुक्त तत्र के पृथिव्यादयो जीवाः किं वा तत्र प्रमाणमित्यत्राह—

## निक्षेपप्ररूपणालक्षणपरिमाणोपभोगशस्त्रवेदनावधनिवृत्तिभिर्विचार्या पृथिवी ॥ ११ ॥

**निक्षेपेति,** निक्षिप्यते शास्त्रमध्ययनोद्देशादिकञ्च नामस्थापनाद्रव्यादिभेदैर्व्यवस्थाप्यतेऽनेनास्मिन्नस्माद्वेति निक्षेपः, प्रकर्षेण प्रभेदाद्विकथनतो रूपणा स्वरूपवर्णना प्ररूपणा, लक्ष्यते तदन्यव्यावृत्त्याऽवधार्यते वस्त्वनेनेति लक्षणम्, परिमाणमियत्तावर्णनम्, उपेत्य—अधिकमुपयुज्यमानतया भुज्यत इत्युपभोगः, शस्यते हिंस्यतेऽनेन प्राणिन इति शस्त्र जीवोपघातकारि खड्गादिकम्, वेदन वेदना, स्थितिक्षयादुदयप्राप्तस्य कर्मण उदीरणाकरणेन चोदयभावमुपनीतस्यानुभवनम् । वधो हनन शिरश्छेदादिसमुद्भूता पीडा, निवृत्तिरारम्भाद्विवर्त्तनम्, एभिः पृथिवी विचार्यत इत्यर्थ , तथाहि निक्षेपस्तावन्नामस्थापनयोः प्रसिद्धत्वाद्द्रव्यपृथिवी आगमनोआगमभेदतो विचार्या, आगमतो ज्ञाताऽनुपयुक्तः, पृथिवीपदार्थज्ञस्य जीवापेत शरीरं नोआगमतो द्रव्यपृथिवी, तथा भाविपृथिवीपदार्थज्ञत्वेन भव्यो बालादि , उभयव्यतिरिक्तश्च द्रव्यपृथिवीजीव एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्च, भावपृथिवीजीवस्तु य उदीर्णं पृथिवीनामादिकर्म वेदयति सः । प्ररूपणा—सूक्ष्मबादररूपेण पृथिवीजीवा द्विविधा सूक्ष्मबादरनामकर्मोदयासादितस्वरूपा न त्वापेक्षिका बदरामलकयोरिव । समुद्गकप्रक्षिप्तगन्धावयववत् सकललोकव्यापिन सूक्ष्माः, प्रतिनियतदेशचारिणो बादराः श्लक्ष्णखरभेदेन द्विभेदा चूर्णितलोष्टकल्पमृदुपृथिव्यात्मका जीवा उपचारात् श्लक्ष्णाः, तत्कायिका वा श्लक्ष्णपृथिवीकायिका , ते च कृष्णनीललोहितहारिद्रशुक्लमृत्तिकारूपा पञ्चविधाः वर्णभेदाश्रयेण, देशविशेषे पाण्डुमृत्तिकेति प्रसिद्धा या धूलीरूपा पृथिवी तदात्मका पनकापरपर्यायपनकमृत्तिकात्मकाश्च जीवा इति सप्तविधा अपि, काठिन्यविशेषमापन्ना पृथिवी खरा तदात्मकास्तत्कायिका वा जीवाः खरबादरपृथिवीकायिकाः, ते च शुद्धशर्करावालुकोपलशिलालवणादिभेदेन षट्त्रिंशद्भेदाः, सप्तयोनिलक्षप्रमाणा पृथिवी

भावनीया । लक्षणम्—उपयोगादीन्येतेषां लक्षणानि, तत्रोपयोगो ज्ञानदर्शनरूपोऽव्यक्तोपयोगशक्तिरूपः, स्त्यानर्द्ध्युदयात् । योगः औदारिकतन्मिश्रकार्मणात्मकः कायलक्षण एक एव न मनोवचोरूपो । अनभिव्यक्ताध्यवसायः, अष्टविधकर्मोदयभावश्च तद्बन्धभावश्च कृष्णनीलकापोततेजोलेश्यानुगतत्वं दशविधसंज्ञावत्त्वं सूक्ष्मोच्छ्वासनिःश्वासानुगतत्वं सूक्ष्मकषायवत्त्वञ्च, एवंविधलक्षणैः पृथिव्याः सचित्तत्वं मनुष्यादिवत् । न चोपयोगादीनां पृथिवीकायेषु व्यक्ततयाऽप्रतीतेरुक्तलक्षणान्यसिद्धानि न साध्यसाधनसमर्थानीति वाच्यम्, चेतनाचिह्नस्य समानजातीयाङ्कुरस्योद्भेदादेरुपलम्भतस्तत्राव्यक्तचेतनायाः सद्भावात्, मदिरादिपानमत्तस्य श्वासोच्छ्वासादिचेतनाचिह्नेनाव्यक्तचेतनासद्भाववत् । परिमाणम्—पृथिवीकायिका बादरपर्याप्ता बादरापर्याप्ताः, सूक्ष्मपर्याप्तास्सूक्ष्मापर्याप्ताश्चेति चतुर्विधाः, तत्र बादरपर्याप्तास्संवर्तितलोकप्रतरासंख्येयभागवर्त्तिप्रदेशराशिप्रमाणाः, शेषास्त्रयोऽपि प्रत्येकमसंख्येयलोकाकाशप्रदेशराशिप्रमाणा भवन्ति, ततो बादरापर्याप्ता असंख्येयगुणाः, सूक्ष्मपर्याप्तास्ततोऽसंख्येयगुणाः ततः सूक्ष्मापर्याप्ता असंख्येयगुणाः । उपभोगः—चङ्क्रमणोर्ध्वस्थाननिषीदनत्वग्वर्त्तनोच्चारप्रस्रवणोपकरणनिक्षेपालेपनप्रहरणभूषणक्रयविक्रयकृषीकरणभण्डकघट्टनादिरूपभोगविधिर्मनुष्यादीनां पृथिवीकायेन भवति । कारणैरेभिर्विमूढचेतसो निष्प्रयोजनं वेपयन्तः परदुःखान्यजानाना पृथिवीजीवान् हिंसन्ति । शस्त्रम्—तद्धि द्रव्यभावभेदतो द्विविधम्, द्रव्यशस्त्रमपि द्विविधम्, समासविभागभेदात्, हलकुलिकविषकुद्दालादिकं समासतो द्रव्यशस्त्रम् । स्वपरकायोभयभेदेन विभागद्रव्यशस्त्रं त्रिविधम्, पृथिव्याः पृथिव्येव स्वकायशस्त्रम्, उदकादि परकायशस्त्रम्, मृदक मिलितञ्चोभयशस्त्रम् । भावशस्त्रन्तु दुष्प्रयुक्तमनोवाक्कायाः, अङ्गप्रत्यङ्गेषु पादादिकेषु छेदनभेदनादिना यथा नरस्य वेदनाः भवन्ति तदनुरूपा वेदनाः पृथिवीकायिकानामपीति वेदना । यथाश्च प्रकारान्तरेणापि निर्लेपनिर्गन्धत्वादिकरणसम्भवेन ये स्वात्मानमनगारवादिनः कुतीर्थिका यतिवेषधारिणो गुह्यपाणिपादप्रक्षालनार्थं पृथिवीजन्तुविपत्तिमहर्निशं कुर्वन्ति न ते निरवद्यानुष्ठानरूपेष्वनगारगुणेषु प्रवर्त्तन्ते ते गृहस्थतुल्या एव, कलुषितहृदयत्वेन सदोषत्वेऽपि निर्दोषताभिमानात्, तथोऽयं कृतकारितानुमतिभिर्भवति, तद्व्यापादने चान्यानप्यप्कायप्रभृतीन् व्यापादयति, उदुम्बरवटफलभक्षणप्रवृत्तस्य तदन्तर्गतत्रसजन्तुभक्षणवत् । निवृत्तिस्तु—पृथिवीजीवान् सद्रूप मन्थश्च विज्ञाय ये यावज्जीवं कृतकारितानुमतिभिः पृथिवीसमारम्भात् व्युपरमन्ति तेषामनगाराणां भवतीति ॥ ११ ॥

एतदेव परिसमाप्योपसंहरति—

## पृथिवीकायसमारम्भणं कर्मबन्धाय तद्विरतो मुनिः ॥ १२ ॥

**पृथिवीकायेति**, कृतकारितानुमतिभिर्यः पूर्वव्यावर्णितशस्त्रविशेषैर्निजपरिपोषणजीवितादिरक्षणार्थं पृथिवीकायसमारम्भणमपरानेकप्राणिसमारम्भणाविनाभाविनं योगैर्विदधाति सोऽष्टविधकर्मबन्धको भवति, कर्मबन्धायेति नाम्ना येनोक्तं पृथिवीकायसमारम्भोऽष्टविधस्यापि कर्मणो बन्धस्य निमित्तमिति सूचितम् । ननु ये न पश्यन्ति शृण्वन्ति जिघ्रन्ति गच्छन्ति च ते कथं वेदनामनुभवन्तीति शङ्कनीयम्, नैवम्, यथाहि कश्चिज्जात्यन्धो बधिरो मूकः कुष्ठी पङ्गुस्त्वग्भिर्निर्वृत्तपाण्याद्यवयवविभागो मृगापुत्रवत् पूर्व-

कृताशुभकर्मोदयाद्धिंसादिप्राप्तिपरिहारविमुखोऽतिकरुणा दशामुपगतस्तमेवंविधमन्धादिगुणोपेतं कश्चित्कुन्ताग्रेण भिंद्यात् छिन्द्यात् स च भिन्नमानोऽयमस्मान्न पश्यति न शृणोति मूकत्वान्नोचैः रारटीति किमेतावता तस्य वेदनाभावो जीवाभावो वा शक्यो विज्ञातुमेवं पृथिवी जीवा अपि, तस्मादस्ति तेषां वेदना । एवञ्च पृथिवीकायसमारम्भणं बन्धहेतुरेवेति ज्ञात्वा प्रत्याख्यानपरिज्ञया ततो निवृत्तो यः स एव मुनिः, उभयविधपरिज्ञाशालित्वात्, निःशङ्कमनगारगुणपालनाच्च ॥ १२ ॥

अथ यथावसरमप्कायस्य निरूपणमाचष्टे—

## प्ररूपणालक्षणपरिमाणोपभोगशस्त्रैरप्कायस्य विशेषः ॥ १३ ॥

प्ररूपणेति, विशेष इति, पृथिवीकायजीवस्वरूपाधिगमनिमित्तद्वारनयवादविशेषेऽपि केचिद्विशेषा एभिरस्य सन्तीति भावः, तथाहि प्ररूपणा तावत्—अप्कायजीवास्सूक्ष्मबादररूपेण द्विविधाः, सूक्ष्माः सर्वलोकव्यापिनः । बादराः पञ्चविधा शुद्धोदकावश्यायहिममहिकाहरतनुभेदात्, तडागसमुद्रनदीप्रभृतिगतमवश्यायरहितं शुद्धोदकम्, रजन्यां यः स्नेहः पतति सोऽवश्यायः, शिशिरसमये शीतपुद्गलसम्पर्कात् कठिनीभूतं जलं हिमम्, गर्भमासादिषु सायं प्रातर्वा धूमिकापातो महिका, वर्षाशरत्कालयोर्हरिताङ्कुरमस्तकस्थितो जलबिन्दुर्भूमिस्नेहसम्पर्कोद्भूतो हरतनुरिति । एते बादराप्काया पर्याप्तापर्याप्तभेदेन द्विविधाः, वर्णगन्धादीनसम्प्राप्ता अपर्याप्ताः, पर्याप्तास्तु वर्णगन्धरसस्पर्शादेशैः सहस्रशो भिद्यन्ते, ततश्च सङ्ख्येयानि योनिप्रमुखाणि शतसहस्राणि भेदाना भवन्ति, संवृतयोनयश्चैते, सा च योनिः सचित्ताचित्तमिश्रभेदात्त्रिधा, पुनश्च शीतोष्णोभयभेदात्त्रिविधा, एवं गण्यमाना योनीनां सप्तलक्षा भवन्ति । परिमाणम्—पृथिवीवत्, परन्तु बादरपृथिवीकायपर्याप्तकेभ्यो बादराप्कायपर्याप्तका असङ्ख्येयगुणाः, बादरपृथिवीकायापर्याप्तकेभ्यो बादराप्कायापर्याप्तका असङ्ख्येयगुणाः, सूक्ष्मपृथिवीकायापर्याप्तकेभ्यः सूक्ष्माप्कायापर्याप्तका विशेषाधिका, सूक्ष्मपृथिवीकायपर्याप्तकेभ्यः सूक्ष्माप्कायपर्याप्तका विशेषाधिका इति विशेषः । लक्षणम्—ननु नाप्कायो जीवस्तल्लक्षणायोगात् प्रस्रवणादिवत्, नैवम्, सचेतना आपः, शस्त्रानुपहतत्वे सति द्रवत्वात्, प्रस्रवणादौ व्यभिचारवारणाय सत्यन्तम्, हस्तिशरीरोपादानभूतकललवत्, अनुपहतद्रवत्वादण्डकमध्यस्थितकललवदित्यनुमानेन तल्लक्षणायोगादिति हेतोरसिद्धेः, तथाऽऽपो जीवशरीराणि, छेद्यत्वभेद्यत्वादिभ्य, सास्नाविषाणादिसङ्घातवदित्येवमपां शरीरत्वे सिद्धे सचेतना हिमादयः क्वचिदप्कायत्वात्, इतरोदकवत्, सचेतना आपः क्वचित् खातभूमिस्वाभाविकसम्भवात्, दर्दुरवदित्येवंविधलक्षणयोगित्वादप्काया भवन्ति जीवाः । उपभोगः स्नानपानधावनभक्तकरणसेकयानपात्रोडुपगमनागमनादिः, एवदुपभोगेच्छया जीवा अप्कायवधे प्रवर्त्तन्ते करणत्रयैः । शस्त्रमपि कोशादिना उत्सेचनगालनधावनादिकं समासतो द्रव्यशस्त्रम्, विभागतो द्रव्यशस्त्रं स्वकायशस्त्रलक्षणं नादेयं जलं तडागस्य, परकायशस्त्रं मृत्तिकास्नेहक्षारादि, उभयशस्त्रं तु उदकमिश्रितमृत्तिकाऽम्भः, भावशस्त्रञ्चासंयमः प्रमत्तस्य दुष्प्रणिहितमनोवाक्कायलक्षणः ॥ १३ ॥

नन्वेवमाप एव जीवास्तत्परिभोगे सत्यवश्यं साधूनामपि प्राणातिपातदोषप्रसङ्ग इत्याशङ्कायामाह—

## अचित्तोदकमेव परिभोग्यम् ॥ १४ ॥

**अचित्तेति,** अप्कायो हि त्रिविधः सचित्ताचित्तमिश्रभेदात्, तत्र निश्चयव्यवहाराभ्यां सचित्तो द्विधा, घनोदधिघनवलयादयो निश्चयतस्सचित्ता –एकान्तेन सचित्ता, अवटवापीतडागादिस्था व्यवहारनयमतेन सचित्ताः, अनुद्धृतेषु दण्डेपूत्कालेषु यदुष्णोदकं तन्मिश्रम्, प्रथमे दण्डे जायमाने कश्चित्परिणमति कश्चिन्नेति मिश्रः, द्वितीये प्रभूतः परिणमति स्तोकोऽवशिष्ट इति मिश्रः, तृतीये तु सर्वोऽप्यचित्तो भवति, तथा वृष्टौ पतितमात्रं यज्जलं ग्रामनगरादिषु प्रभूततिर्यङ्मनुष्यप्रचारसम्भविषु भूमौ वर्त्तते तदायमावाप्यचित्तीभवति तावन्मिश्रम्, ग्रामनगरादिभ्योऽपि बहिर्यदि स्तोकं मेघजलं निपतति तदानीं तदपि पतितमात्रं मिश्रम्, तण्डुलोदकमप्यबहुप्रसन्नं मिश्रमिति । तत्राचित्तोऽप्कायः साधूनां परिभोगयोग्यो न सचित्तादिरूपः, अचित्तता च स्वभावाच्छस्त्रसम्बन्धाच्च, तत्र यः स्वभावादचित्तीभवति सोऽपि साधूनां परिभोगाय न कल्पते, किन्तु बाह्यशस्त्रसम्पर्कोद्वर्णादिभिः परिणामान्तरमापन्नः, शस्त्रं तुत्सेचनागालनोपकरणधावनादि स्वकायादि पूर्वावस्थाविलक्षणवर्णाद्यापत्तयो वा, अग्निपुद्गलानुगतत्वाद्धि जलमीषत्पिङ्गलं धूमगन्धि विरसमुष्णञ्च जायते, तथोद्धृतत्रिदण्डम् । एवंविधावस्थासादितजलोपभोग एव साधूनां योग्यः, नान्यादृशः । शाक्यादयस्तु अप्कायभोगप्रवृत्ता नियमतोऽप्कायं द्रव्यभावशस्त्रैर्विहिंसन्ति तदाश्रितानन्यांश्च, तल्लेपा प्राणातिपातादयोऽवश्यम्भाविनः, अत एवैते ज्ञपरिज्ञया न परिज्ञातसमारम्भाः, येन तु ज्ञपरिज्ञया समारम्भाः परिज्ञाताः प्रत्याख्यानपरिज्ञया च परिहृताः स एव परिज्ञातकर्मा भवतीति ॥ १४ ॥

अमुमेव न्यायमन्यत्राप्यतिदिशति—

## तेजोवायुवनस्पतिकायान् विजानीयात् ॥ १५ ॥

**तेज इति,** एतेऽपि अप्काय इव प्ररूपणालक्षणपरिमाणोपभोगशस्त्रैर्विशिष्टतया विज्ञेया इत्यर्थः, तथा हि तेजसः प्ररूपणा–तेजस्कायाः सूक्ष्मबादररूपेण द्विविधाः, एवं वायुवनस्पतिकाया अपि, सूक्ष्माः सर्वलोकव्यापिनः, अङ्गारार्चिर्ज्वालामुर्मुरभेदतः पञ्चविधाः बादरतेजस्कायाः, एते व्याघातानङ्गीकरणान्मनुष्यक्षेत्रेऽर्धतृतीयेषु द्वीपसमुद्रेष्वव्याघातेन पञ्चदशसु कर्मभूमिषु व्याघाते सति पञ्चसु विदेहेषु नान्यत्र, उपपाताङ्गीकरणे तु लोकासंख्येयभागवर्तिनः, यत्र बादराः पर्याप्तकास्तत्रैव बादरा अपर्याप्तका अपि, तन्निश्रया तेषामुत्पद्यमानत्वात्, तदेवं सूक्ष्मा बादराश्च प्रत्येकं पर्याप्तकापर्याप्तकभेदेन द्विधा भवन्ति, एते च वर्णादिभिः सहस्राग्रशो भिद्यमानाः संख्येययोनिप्रमुखशतसहस्रभेदपरिमाणा भवन्ति, एतेषां संवृता योनिरुष्णा च सचित्ताचित्तमिश्रभेदात्त्रिधा, सप्त चैषां योनिलक्षा भवन्ति । सूक्ष्मवायुजीवाश्च सर्वलोकव्यापितया पृथक्कपाटसकलवातायनद्वारगेहान्तर्भूमवस्थिताः । बादरा एते पञ्चविधाः, उत्कलिकामण्डलिकागुञ्जाघनशुद्धवातभेदात्, सप्त च वायुकायानां योनिलक्षा भवन्ति । सूक्ष्मवनस्पतयश्च सर्वलोकापन्नाः अचक्षुर्ग्राह्या एकाकारा एव, प्रत्येकसाधारणभेदतो बादरवनस्पतिकाया द्विविधाः, पत्रपुष्पफलमूलादीन् प्रति प्रति एको जीवो येषान्ते प्रत्येकजीवाः, वृक्षगुल्मगुच्छलतावल्लीपर्वगतृणवलयहरितौषधिजलरुहकुहणभेदेन द्वादशविधाः । परस्परानुविद्धानन्तजीवसङ्घातरूपशरीरावस्थानाः साधारणा अनेकभेदाः, समासेन तु सर्वेऽप्येते अग्रमूलस्कन्धपर्वबीजरुहसम्मूर्च्छनज-

भेदात् षोढा भवन्ति । प्रत्येकवनजीवा पर्याप्तका सवर्त्तितचतुरस्रीकृतलोकश्रेण्यसंख्येयभागवर्त्यो-काशप्रदेशराशितुल्यप्रमाणा बादरतेजःकायपर्याप्तराशेरसंख्येयगुणाश्च । अपर्याप्तकालेऽसंख्येयलोक-प्रदेशप्रमाणा, एतेऽपि बादरतेजःकायजीवराशेरसंख्येयगुणा । साधारणाः सूक्ष्मबादरपर्याप्तका-पर्याप्तकभेदेन चतुर्विधा अपि पृथक् पृथगनन्तानां लोकानां यावन्तः प्रदेशास्तावन्त इति, परन्तु साधारणबादरपर्याप्तकेभ्यो बादरापर्याप्तका असंख्येयगुणा तेभ्यः सूक्ष्मा अपर्याप्तका असंख्येयगुणा-स्तेभ्योऽपि सूक्ष्मपर्याप्तका असंख्येयगुणाः, योनिश्च वनस्पतीनां संवृता, सा च सचित्ताचित्तमिश्रभेदेन त्रिधा, शीतोष्णमिश्रलक्षणभेदत्रयवती च, एवं प्रत्येकतरूणां योनिभेदा दशलक्षाः साधारणानाञ्च चतुर्दशलक्षा इति । लक्षणं तेजस्कायस्य, यथाहि रात्रौ खद्योतकादेर्देहपरिणामो जीवप्रयोगनिर्वृत्तश-क्तिराविर्भवति एवमङ्गारादीनामपि प्रतिविशिष्टप्रकाशादिशक्तिर्जीवप्रयोगविशेषाविर्भावितेत्यनुमी-यते यथा ज्वरोष्मा जीवप्रयोगं नातिवर्तते जीवाधिष्ठितशरीरानुपात्येव भवति एवैवोपमा आग्नेयजन्तू-नाम्, न हि मृता ज्वरिणः क्वचिदप्युपलभ्यन्ते, एवमन्वयव्यतिरेकाभ्यामग्नेः सचित्तता भाव्या, एवं छेद्यत्वादिहेतुभ्योऽपि । वायोर्लक्षणञ्च, सचेतनो वायुः, अपरप्रेरिततिर्यगनियमितगतिमत्त्वाद्ग-वाश्वादिवदिति, तिर्यगेव गमननियमाभावादनियमितेति विशेषणोपादानाच्च न परमाणुषु व्यभिचारः, तेषां नियमितगतिमत्त्वात्, जीवपुद्गलयोरनुश्रेणिगतिश्रवणात्, एष वायू रूपरसगन्धस्पर्शात्मकोऽपि सूक्ष्मपरिमाणात् परमाणोरिव चक्षुरविषयोऽपि न तस्याभावोऽचेतनत्वं वा, अन्यथा चक्षुरविषयश-रीराणां स्वशक्तिमहिम्ना तथाविधरूपकारिणां देवादीनामप्यभावोऽचेतनत्वञ्च स्यात्, न चैतदिष्टमिति । वनस्पतिलक्षणमपि—यथा हि मनुष्यशरीरं जातं बालकुमारादिपरिणामविशेषवत् प्रस्फुटचेतनामु-पलभ्यते तथेदमपि वनस्पतिशरीरम्, यतो जातः केतकतरुर्बालको युवा वृद्धश्च संवृत्त इति जात्यादि-धर्मत्वमनुभूयते, समानेऽप्युत्पत्त्यादिधर्मकत्वे मनुष्यादिशरीरमेव सचेतनं न वनस्पतिशरीरमित्यभ्यु-पगमो न युज्यते, तथा यथा मनुष्यादिशरीरं ज्ञानवत्तथा वनस्पतिशरीरमपि, धात्रीपुन्नागादीनां हि स्वापविबोधसद्भावः अधोनिखातद्रविणराशेः स्वप्ररोहेणावेष्टनं प्रावृड्जलधरनिनादश्रवणशिशिर-वायुसंस्पर्शनादङ्कुरोदयः कामिनीचरणताडनादशोकतरोः पल्लवकुसुमोद्गमः, एवं सुरभिसुरागण्डूषसेकाद्ब-कुलस्य, स्पष्टप्ररोहिकादीनाञ्च हस्तसंस्पर्शात् सङ्कोचिकादिकाः क्रियाविशेषा दृश्यन्ते, न ह्येते ज्ञानमन्त-रेण घटन्त इति । तत्र सूक्ष्माश्चक्षुर्ग्राह्या जीवाः केवलभरतद्धिष्टभगवदाज्ञारूपागमादेव प्रत्येतव्याः । अनन्तकायानां जीवानामाहारप्राणापानग्रहणमेकमेव भवति, एकस्मिन् ह्याहारितवति उच्छ्वसिते निःश्व-सिते वा सर्वेऽप्यागृहीताहारोच्छ्वासनिःश्वासा भवन्ति बहुभिर्वाऽऽहारादिग्रहणे कृते तदेव स्यापि भवति एवंलक्षणास्साधारणजीवा भवन्ति, परिमाणं तेजस्कायस्य क्षेत्रपल्योपमासंख्येयभागमात्रसूचिप्रदेशरा-शिपरिमाणा ये बादरपर्याप्तानलजीवास्ते बादरपृथिवीकायपर्याप्तकेभ्योऽसंख्येयगुणहीनाः, बादरापर्याप्त-सूक्ष्मपर्याप्तसूक्ष्मापर्याप्तानलजीवाः पृथिवीसङ्ख्याः किन्तु बादरपृथिवीकायापर्याप्तकेभ्यो बादराग्न्य-पर्याप्तका असंख्येयगुणहीनाः सूक्ष्मपृथिवीकायापर्याप्तकेभ्यः सूक्ष्माग्नेयापर्याप्तका विशेषहीनाः, सूक्ष्म-पृथिवीकायपर्याप्तकेभ्यः सूक्ष्माग्नेयपर्याप्तका विशेषहीना इति । बादरपर्याप्तका वायवस्संवर्त्तितलोक-प्रतरासंख्येयभागवर्त्तिप्रदेशराशिपरिमाणाः, शेषास्त्रयश्च प्रत्येकमसंख्येयलोकाकाशप्रदेशपरिमाणाः,

तथापि बादराप्कायपर्याप्तकेभ्यो बादरवायुपर्याप्तका असंख्येयगुणाः, बादराप्कायापर्याप्तकेभ्यो बादरवायुकायापर्याप्तका असंख्येयगुणाः सूक्ष्माप्कायापर्याप्तकेभ्यः सूक्ष्मवाय्वपर्याप्तका विशेषाधिकाः, सूक्ष्माप्कायपर्याप्तकेभ्यः सूक्ष्मवायुकायपर्याप्तका विशेषाधिका इति । वनस्पतिकायपरिमाणञ्च यथा कश्चित्सर्वधान्यानि प्रस्थकुडवादिना मित्वाऽन्यत्र प्रक्षिपेत्तथा यदि कश्चित्साधारणजीवराशिं लोककुडवेन मित्वाऽन्यत्र निक्षिपेत्तत एव मीयमाना अनन्तलोका भवन्ति । पर्याप्तबादरनिगोदाश्च संवर्तितचतुरस्रीकृतसकललोकप्रतरासंख्येयभागवर्तिप्रदेशराशिपरिमाणाः, प्रत्येकशरीरबादरवनस्पतिपर्याप्तकजीवेभ्योऽसंख्येयगुणाश्च । अपर्याप्तबादरनिगोदा अपर्याप्तसूक्ष्मनिगोदाः पर्याप्तकसूक्ष्मनिगोदाश्च प्रत्येकमसंख्येयलोकाकाशप्रदेशपरिमाणाः क्रमशो बहुतरास्तेभ्योऽनन्तगुणाः साधारणजीवा इति । तेजस उपभोगः—दहनप्रतापनोद्योतकरणस्वेदनादिरन्नस्वेदाद्यनेकप्रयोजनेषु मनुष्याणां बादरतेजस्काय उपयुज्यते, एतन्निमित्तं गृहिणस्सततमारम्भप्रवृत्ता जीवान् व्यापादयन्ति । व्यजनभस्त्राध्मानाभिधारणोत्सिञ्चनफूत्करणादिभिर्वायुकाय उपयुज्यते तदर्थञ्च मनुष्यास्तदारम्भप्रवृत्तास्तान् हिंसन्ति । पत्रफलाद्याहारव्यजनागुपकरणपल्यङ्कादिशयनयानशिबिकादिभिर्वनस्पतिकायस्योपभोगः, एतत्प्रयोजनाय सुखैषिणः प्रत्येकसाधारणवनस्पतिजीवान् बहून् विहिंसन्ति भूम्युदकाग्निवायुवनस्पतित्रसादयस्तेजस्कायस्य समासतो द्रव्यशस्त्रम्, स्वकायरूपं विभागशस्त्रमग्निकाय एवाग्निकायस्य, यथा तार्णाग्निः पार्णाग्नेः । परकायरूपन्तूदकादि, उभयरूपमपि तुषकारीषादिव्यतिमिश्रोऽग्निरपराग्नेः । भावशस्त्रं दुष्प्रणिहितमनोवाक्कायलक्षणासंयम इति । वायुकायस्य व्यजनसूर्यचामरादयः परकायशस्त्रम्, प्रतिपक्षवातः स्वकायशस्त्रम् । दुष्प्रणिहितमनोवाक्कायलक्षणं भावशस्त्रम् । वनस्पतेः कुद्दालवासीपरश्वादयः समासतो द्रव्यशस्त्रम्, लगुडादि स्वकायशस्त्रम्, पाषाणवह्न्यादि परकायशस्त्रं दात्रकुठारादिरूपमुभयशस्त्रञ्च विभागतो द्रव्यशस्त्रं विज्ञेयम्, दुष्प्रणिहितमनोवाक्कायरूपासंयमो भावशस्त्रमिति ॥ १५ ॥

अथ सुखाभिलाषिणो जीवानां दुःखमुदीरयन्ति तन्मूले च दुःखगहने संसारसागरे परिभ्रमन्तीत्येवं विदिततद्दुष्टविपाको निखिलजीवविमर्दनाद्वतस्तं निवर्त्तयेत्याह—

## प्राप्य प्रव्रज्यामवबुध्य जीवान् समारम्भान्निवर्त्तेत ॥ १६ ॥

प्राप्येति, सर्वज्ञोपदिष्टमार्गानुसारेण प्रव्रज्यां परित्यक्ताखिलसावद्यारम्भकलापं सन् तेजस्कायादिप्राणिषु न स्वसमारम्भं वा न करिष्यामीत्येवं संयमक्रियामवाप्येत्यर्थः, न केवलं क्रियामात्रेण मोक्षावाप्तिरपि तु विशिष्टमोक्षकारणभूतज्ञानादपीत्याशयेनोक्तमवबुध्य जीवानिति, यथावत् जीवगणान् ज्ञात्वेत्यर्थः, पूर्वोक्तहेतुभिरम्मस्कायादिजीवान् विज्ञायेति भावः, अथवा यथाऽसद्वेद्यकर्मोदयात् स्वस्य प्राप्तं स्वानुभवेनातिकटु दुःखं सद्वेद्यकर्मोदयात् सुखरूपं सुखं वेत्ति तथा परेऽपि जीवाः सुखाभिलाषिणो दुःखोद्वेजिनश्चेति सुखदुःखाभ्यां जीवानवबुध्येत्यर्थः, यस्य हि स्वात्मन्येवंविधं ज्ञानमस्ति स एव हि परत्रापि नानाविधोपक्रमजनितं स्वपरसमुत्थं योगाश्रयं सुखं दुःखं वाऽनुमिनोति यस्त्वेवं स्वात्मानमेव न जानाति स कथं परत्र जानीयात्, यश्च परत्र जानाति स स्वात्मानमपि यथावदवैति, परस्परान्यभिचारादिति भावः । ज्ञपरिज्ञया विज्ञाते जीवगणे यद्विधेयं तदाह—समारम्भाभि-

वर्त्तेतेति, सर्वस्मादारम्भात् करणत्रयेणोपरमेत्, स चोपरमभाक् च आहतप्रवचने निरतो नान्यत्र, तथा च शाक्यादयो यथाप्रतिज्ञं निरवद्यानुष्ठायित्वाभावान्नोपरतव्यपदेशभाजः । प्रव्रज्याप्रतिपत्त्युत्तरकालमपि ज्ञानक्रियोक्तेर्निःशङ्कितत्वसुदृढश्रद्धावत्त्वमपि भवेदिति सूचितम्, यादृशेन ज्ञानेन श्रद्धया च प्रव्रज्यां प्रपन्नः तां तथैव संरक्षेत्, न तु शाक्यादिदर्शनवैभवादिना जैनेन्द्रे शासने शङ्कितो भवेत्, देशसर्वभेदेन हि द्विविधा शङ्का, किमस्त्यार्हतो मार्गो न वेति सर्वशङ्का, पृथिवीकायादयो जीवा विद्यन्ते न वेति देशशङ्का, उभयविधाऽपीयं शङ्काऽनर्थकारिणी, तस्मान्मौनीन्द्रवचनेन पृथिवीकायादिजीवान् विज्ञाय सम्यक् यावज्जीवं समारम्भनिवृत्तो भवेत्, यतः प्रव्रज्याप्रतिपत्तिकाले प्रायः प्रवृद्धपरिणामित्वेऽपि संयमश्रेणिं प्राप्तो वर्द्धमानपरिणामो हीयमानपरिणामोऽवस्थितपरिणामो वा भवेत्, तत्र वृद्धिकालो हानिकालो वा समयो जघन्यत उत्कर्षेणान्तर्मौहूर्त्तिकः, अवस्थितिकालश्च द्वयोर्वृद्धिहानिलक्षणयोर्यवमध्यवज्रमध्ययोरष्टौ समयाः, तत ऊर्ध्वमवश्यं पातात्, तस्मात्प्रव्रज्याप्राप्त्युत्तरकालं श्रुतसागरमवगाहमानः संवेगवैराग्यभावनाभावितान्तरात्मा प्रवर्द्धमानपरिणाम एव भवेत्, शङ्कामवधूय निखिलानगारगुणान् परिरक्षेदिति भावः ॥ १६ ॥

अथ पृथिवीजलवह्निवायुवनस्पतिकायनिरूपणोत्तरं क्रमप्रसिद्धं त्रसकायस्वरूपमाह—

## एवं त्रसानष्टविधयोनिभाजो विचिन्त्य परिपालयेत् ॥ १७ ॥

**एवमिति,** पूर्वमभिहितद्वारैरित्यर्थः, तत्र तावत्—त्रसन्ति उष्णाद्यभितप्ताः सन्तोऽभिलषितस्थानादुद्विजन्ते गच्छन्ति च छायाद्यासेवनार्थं स्थानान्तरमिति त्रसाः, अनया च व्युत्पत्त्या त्रसनामकर्मोदयवर्त्तिन एव त्रसा भवन्ति, त्रसन्त्यभिसन्धिपूर्वकमनभिसन्धिपूर्वकं वा ऊर्ध्वमधस्तिर्यक्षु चलन्तीति त्रसाः, तेजोवायू द्वीन्द्रियादयश्च । प्ररूपणा—लब्धिगतित्रसभेदेनासौ द्विविधः, तेजोवायू लब्ध्या त्रसौ तौ नेह विवक्षितौ, तयोः पूर्वं निरूपितत्वात्, गतित्रसाश्च नारकतिर्यङ्मनुष्यामरभेदेन चतुर्विधाः, प्रत्येकं पर्याप्तापर्याप्तभेदभाजो नामकर्मोदयप्रभावेणासादितगतयः, सर्वे जीवा मिलित्वा चतुरशीतिलक्षयोनिकाः । सर्वेषां जीवानान्त्वेका कोटीकोटी सप्तनवतिश्च शतसहस्राणि पञ्चाशत्सहस्राणि कुलकोटीनां परिमाणं भवतीति । लक्षणं—दर्शनज्ञानचारित्राणि देशविरतिर्लब्धिद्विक साकारानाकारोपयोगौ योगोऽध्यवसायः पृथग्लब्ध्युदयः कर्माष्टकोदय इत्येवमादयः । परिमाणञ्च क्षेत्रतः सर्वतिर्यग्लोकप्रतरासंख्येयभागवर्तिप्रदेशराशिपरिमाणास्त्रसकायपर्याप्तकाः एते च बादरतेजस्कायपर्याप्तकेभ्योऽसंख्येयगुणाः, त्रसकायपर्याप्तकेभ्यस्त्रसकायिकापर्याप्ता असंख्येयगुणाः, कालतः प्रत्युत्पन्नत्रसकायिकाः सागरोपमलक्षपृथक्त्वसमयराशिपरिमाणा जघन्यपदे, उत्कृष्टपदेऽपि सागरोपमलक्षपृथक्त्वपरिमाणा एव, उद्वर्त्तनमुपपातश्च जघन्येनैको द्वौ त्रयो वा, उत्कृष्टतस्तु प्रतरस्यासंख्येयभागप्रदेशपरिमाण एव । त्रसेषु सततमुत्पत्तिर्निष्क्रमो वा जीवानां जघन्येनैकं समयं द्वौ त्रीन् वेत्यादि, उत्कर्षेणावलिकासंख्येयभागमात्रं कालं सततमेव निष्क्रमः प्रवेशो वा । एकजीवापेक्षया तु—एकजीवो हि त्रसभावेन जघन्यतोऽन्तर्मुहूर्त्तमासित्वा पुनः पृथिव्याद्येकेन्द्रियेषूत्पद्यते, प्रकर्षेणाधिकं सागरोपमसहस्रद्वयं सततं त्रसभावेनावतिष्ठत इति । उपभोगो मांसचर्मकेशरोमनखपिच्छ-

द्वतकाष्ठास्थिविषाणादिभिस्त्रसजीवसम्बन्धिभिर्भवति । शस्त्रमप्यस्य स्वकायपरकायोभयद्रव्यभावभेदभिन्नमनेकप्रकारम् । शेषद्वाराणि पृथिवीवत् । अष्टविधयोनिभाज इति, अण्डपोतजजरायुरससंस्वेदसम्मूर्च्छनोद्भिदुपपातजभेदेनाष्टविधं जन्म त्रसानाम्, तत्राण्डजाः पक्ष्यादयः, पोतजा हस्त्यादयः, जरायुजा गोमनुष्यादयः, रसजास्तक्रादौ पायुकृम्याकृतयोऽतिसूक्ष्मजीवाः, संस्वेदजा मत्कुणादयः, सम्मूर्च्छनजाः शलभपिपीलिकादयः, उद्भिज्जा पतङ्गखञ्जरीटादयः, उपपातजा देवा नारकाश्च, त्रसाः सर्व एतेष्वेवाष्टविधेषु जन्मसु निपतन्ति, एते त्रसाः सर्वज्ञप्रत्यक्षसमधिगम्याः त्रैकालिकाश्च । अर्चामधसाधनाजिनमांसशोणितपित्तवसापिच्छपुच्छवालाद्यर्थमातुरा हिताहितप्राप्तिपरिहारशून्यमनस एतान् हिंसन्ति, अतस्त्रासपरिगतमनस एत इति विज्ञाय प्रत्याख्यानपरिज्ञया संवृतो सत्वाऽनगारगुणान् रक्षेत्, ये तु परित्यक्तानगारगुणा विषयप्रवृत्तास्ते न जीवानपेक्षन्ते रागद्वेषकलुषितलोचनत्वात्, अतस्ते नारकादिचतुर्विधगत्यन्तःपातिनः । तदेवं षड्जीवनिकायदक्ष करणैर्योगैर्न समारभेत, अन्यथा प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहक्रोधमानमायालोभप्रेमद्वेषकलहाभ्याख्यानपैशुन्यपरपरिवादरत्यरतिमायामृषामिथ्यादर्शनशल्यरूपाष्टादशविधपापभाक् स्यादिति भावः ॥ १७ ॥

तदेवं सामान्यतो निक्षेपतश्च जीवास्तित्वं प्रसाध्य तच्च विरतिञ्च वर्णयित्वा तच्छ्रद्दधानस्य तद्रक्षापरिणामिनोऽधिगतमहाव्रतस्य मुनेश्चारित्राङ्ग रागादिरूपभावलोकस्य शब्दादिविषयलोकस्य वा विजयं वक्तुमुपक्रमते—

## औदयिकभावलोक औपशमिकादिभावलोकेन विजेयः ॥ १८ ॥

औदयिकेति, लोको हि पञ्चास्तिकायात्मकः, स च नामस्थापनाद्रव्यक्षेत्रकालभवभावपर्यवभेदैरष्टभिर्निक्षिप्यते, तत्र नामस्थापने सुप्रसिद्धे, द्रव्यलोको जीवाजीवरूपः, क्षेत्रलोक आकाशमात्रम्, काललोकः समयावलिकादिः, भवलोको नारकादिः, स्वस्मिन् स्वस्मिन् भवे वर्त्तमानो यथा मनुष्यलोको देवलोक इत्यादि । भावलोकस्तु औदयिकौपशमिकक्षायिकक्षायोपशमिकपारिणामिकसान्निपातिकरूपः, पर्यायलोको द्रव्याणां पर्यायमात्ररूपः, अत्र त्वौदयिकभावलोको ग्राह्य इत्येतत्सूचनायैव औदयिकभावलोक इत्युक्तम्, तन्मूलो हि संसारोऽतस्तद्विजयः कर्त्तव्यः, विजयश्च नामस्थापनाद्रव्यक्षेत्रकालभावभेदैः षड्भिर्निक्षेप्यः, तत्र नामस्थापने प्रसिद्धे, व्यतिरिक्तद्रव्यविजयो द्रव्येण द्रव्यात् द्रव्ये वा विजयो यथा कटुतिक्तकषायादिना श्लेष्मादेर्नृपतिमल्लादेर्वा, क्षेत्रविजयः षड्भरतखण्डादेः, यस्मिन् क्षेत्रे विजयः प्ररूप्यते स वा, कालविजयः कालेन विजयो यथा षष्टिभिर्वर्षसहस्रैर्भरतेन भारतं जितम्, कालस्य प्राधान्यात्, यस्मिन् वा काले विजयो व्याख्यायते सः । भावविजयः औदयिकादेर्भावस्य भावान्तरेणौपशमिकादिना विजयः, अत्र भावेनैवाधिकारः, एवञ्चौदयिकभावपदेन तथाविधकषायो ग्राह्यः, औदयिकभावकषायलोकस्यौपशमिकादिभावलोकेन विजयः कर्त्तव्यः, तथाविधलोकस्य संसारकारणत्वेन तज्जये झटिति संसारान्मुच्यत इति भावः ॥ १८ ॥

ननु विजितकषायलोकत्वात्त्वरया संसारान्मुच्यत इत्युक्तं तत्र कोऽसौ संसारः किं वा तत्कारणमित्यत्राह—

## संसारकषायकामानां मोहनीयं मूलम् ॥ १९ ॥

**संसारेति**, परम्परया संसारस्य कषायाणां कामानाञ्च मोहनीयं प्रधानं कारणं तथा संसारस्य कषायाः तेषां कामाः तेषाञ्च मोहः कारणम्, एतत्सूचनाय तथा क्रमोपन्यासः, भवति हि इष्टेतरशब्दादिविषयरूपाः कामाः कषायाणां मूलम्, शब्दादीनामिष्टानिष्टानां प्राप्तौ रागद्वेषाभिहतचेतसः कषायाणां प्रादुर्भावात्, ते च कषायाः संसारस्य कारणम्, कषाया हि कर्मस्थितेर्मूलम्, सत्याञ्च तस्यां संसारोऽवश्यम्भावीति, तस्माच्छब्दादिविषयोद्भूताः कषायाः कर्मस्थितिद्वारेण संसारस्य मूलम् । कर्मणश्च कषाया मूलम्, मिथ्यात्वाविरतिप्रमादकषाययोगानां बन्धहेतुत्वात्, अष्टविधस्यापि कर्मणो मोहनीयान्तर्गताः कषायाः कारणम्, कामानाञ्च मोहनीयम्, कामोऽनङ्गरूपः, तद्गुणाः शब्दादयोऽपि कामपदवाच्याः, वेदोन्यप्रयुक्तो हि कामो वेदश्च मोहनीयान्तर्गत एवेति मोहनीयं संसारस्याद्यं कारणम् । मोहनीयं तु दर्शनचारित्रमोहनीयभेदेन द्विविधम्, अर्हत्सिद्धचैत्यतपःश्रुतगुरुसाधुसङ्घप्रत्यनीकतया दर्शनमोहनीयस्य कर्मणो बन्धः, येन जीवोऽनन्तसंसारसमुद्रान्तःपातेयावतिष्ठते । तीव्रकषायबहुरागद्वेषमोहाभिभूतो देशसर्वविरत्युपघातकारिचारित्रमोहनीयं कर्म बध्नाति, दर्शनमोहनीयञ्च मिथ्यात्वमिश्रसम्यक्त्वभेदतस्त्रिविधम्, चारित्रमोहनीयं तु षोडशकषायनवनोकषायभेदात् पञ्चविंशतिविधम् । तत्र कामाः शब्दादयः पञ्च चारित्रमोहं, न एवात्र विवक्षिताः, तेषां कषायस्थानत्वात्, संसारतरोर्हि शारीरमानसोपचिततीव्रतरदुःखसम्प्राप्तिफलस्य प्रियविप्रयोगाप्रियसम्प्रयोगार्थहानिनानाव्याधिकुसुमस्य दारिद्र्याद्यनेकव्यसनोपनिपातपत्रगहनस्य गर्भनिषेककललार्बुदमांसपेश्यादिजन्मजरामरणशाखस्य नरकतिर्यङ्नरामरगतिस्कन्धस्याष्टप्रकारं कर्म कारणम्, तस्यापि च कर्मणः क्रोधादिकषाया मूलमिति भावः । अथ संसारस्य निक्षेपः, व्यतिरिक्तद्रव्यसंसारो द्रव्यसंसृतिरूपः, क्षेत्रसंसारो द्रव्यसञ्चाराधारक्षेत्रम्, कालसंसारो द्रव्यसंसरणकालः, भवसंसारो नारकतिर्यङ्नरामरगतिचतुर्विधानुपूर्व्युदयाद्भवान्तरसङ्क्रमणम्, भावसंसारस्तु औदयिकादिभावपरिणतिः संसृतिस्वभावा, नामस्थापनाद्रव्योत्पत्तिप्रत्ययादेशरसभावभेदेनाष्टधा कषायस्य निक्षेपः, नामस्थापने स्पष्टे, व्यतिरिक्तद्रव्यकषायाः कर्मद्रव्यनोकर्मद्रव्यकषायभेदेन द्विधा, आदिरिसत्तानुदीर्णोदीर्णाः पुद्गला द्रव्यप्राधान्यात् कर्मद्रव्यकषायाः, नोकर्मद्रव्यकषायास्तु बिभीतकादयः, शरीरोपधिक्षेत्रवास्तुस्थाण्वादयो येषामाश्रयेण कषायाणामुदयस्ते उत्पत्तिकषायाः, कषायाणां बन्धकारणभूता मनोज्ञेतरशब्दादयः प्रत्ययकषायाः, कृत्रिमकृतभृकुटीभङ्गादय आदेशकषायाः, रसकषायस्तु मधुराम्लकटुतिक्तकषायपञ्चकान्तर्गतः कषायः, भावकषायाः शरीरोपधिक्षेत्रवास्तुस्वजनप्रेष्याचार्योत्थितिनिमित्ताविर्भूताः शब्दादिकामगुणकार्यभूतकषायकर्मोदयादात्मपरिणामविशेषाः क्रोधमानमायालोभाः प्रत्येकमनन्तानुबन्ध्यादिभेदतः षोडशविधाः, विवेचिताश्चैते तत्त्वन्यायविभाकरे । नामस्थापनाद्रव्यक्षेत्रकालभावभेदान्मूलस्य षोढा निक्षेपः, उभयव्यतिरिक्तद्रव्यमूलञ्चौदयिकोपदेशादिमूलभेदेन त्रिविधम्, वृक्षादेर्मूलत्वेन परिणतद्रव्याणि औदयिकद्रव्यमूलानि, आतुराय चिकित्सकोपदिष्टं रोगविनाशनसमर्थं मूलं पिप्पलीमूलादिरूपमुपदेशद्रव्यमूलम्, वृक्षादिमूलोत्पत्तिप्रथमकारणं स्थावरनामगोत्रप्रकृतिप्रत्यया मूलनिर्वर्त्तनोत्तरप्रकृतिप्रत्ययाञ्च यन्मूलमुत्पद्यते तदादिमूलम्, औदारिकशरीरत्वेन मूलनिर्वर्त्तकानामुदयिष्यतां पुद्गलानां कार्मणं शरीरमाद्यं कारणमिति यावत् । मूलोत्पत्तेस्तद्व्याख्याया वाऽऽधारभूतं क्षेत्रं क्षेत्रमूलम्, तदुत्पत्तिव्याख्यानयोर्निमित्तभूत

थाल' पाठमूलम् । भावमूलं तु त्रिविधम्—औदयिकभावमूलमुपदेष्टृमूलमादिमूलञ्चेति, नामगोत्रकर्मोदयादनन्तपतिशयमूलमनुभवन्मूलजीव एवौदयिकभावमूलम्, ये धर्मैर्भि प्राणिनो मूलत्वेनोत्पद्यन्ते तेषामुपदेष्टा मोक्षससारयोरादिमूलस्योपदेष्टा सामान्येनोपदेष्टा वाऽऽचार्य उपदेष्टृभावमूलम्, मोक्षस्य ज्ञानदर्शनचारित्रतपऔपचारिकरूपेण पञ्चप्रकारो विनय आदिमूलम्, विषयकषाया ससारस्यादिमूलम् ॥ १९ ॥

अथ ससारस्य नारकादिगतिरूपस्य कषायमूलत्वात्तदुन्मूलनमवश्यं विधेयमन्यथा दोषमाह—

## स्वजनादिषु रागद्वेषाभ्यां जन्मादिप्राप्तिः ॥ २० ॥

**स्वजनेति**, यो ह्यात्मा शब्दादिविषये वर्त्तते स कषाये वर्त्तेत इति तस्य गुणानुरागितया तत्प्राप्तौ विनाशे वा काङ्क्षाशोकाभ्यां कायिकमानसदुःखेनात्यन्तमभिभूतस्तत्र तज्जोत्पन्नो रागाग्निज्वालो मातापित्रादिलक्षणस्वजनादावनुरज्यते, स्वभावादुपकारकर्तृत्वाद्वा, एतेषां क्षुत्पिपासादिवेदना मा भूदिति कृषिवाणिज्यसेवादिकां प्राण्युपघातमयीं क्रियां विदधाति, तद्विघ्नकर्त्तरि जन्तौ सेवा याऽकार्यप्रवृत्तत्वे द्वेष आविर्भवति, तदेव मातापित्राद्यर्थं कषायेन्द्रियविषयप्रवृत्तोऽर्थोपार्जनरक्षणनिरतोऽहर्निशमशुभाध्यवसायपरिणतः समन्तात्सन्तप्यमानः काले कर्त्तव्यमकाले करोति, अवसरेऽपि न विधत्ते, अकर्त्तव्यं च करोति, तथा च दुःखमेव केवलमनुभवति, विक्षिप्तमनस्त्वात्, धनधान्यहिरण्यद्विपदचतुष्पदराज्यभार्यादिसंयोगार्थिनराम । अर्थातिलुब्धश्चातिशयार्थोपार्जनसमर्थतया अपि सम्भृतसमारोऽपि प्रबलजलधारावर्षनिरुद्धाखिलप्राणिसञ्चारायां प्रावृषि महानदीजलपूरानीतदारूणि जिघृक्षुः शुभपरिणामनिवृत्तो मम्मण इव तदुपार्जने प्रवर्त्तते, तथा निर्गतकर्त्तव्याकर्त्तव्यविवेचनोऽतिमात्रार्थलोभदष्टत्वादैहिकामुष्मिकदुर्विपाककारिणीगलकर्त्तनचौर्यादिक्रियां करोति, तदेव मातापित्रादिस्वजनेष्वनुरक्तो धनगृद्धः स्वपरकायादिभेदभिन्नेदशकैर्नि काक पृथ्वीकायादिप्राणिसमारम्भप्रवृत्तो जन्ममरणादीनि प्राप्नोति, अतिक्रान्तयौवनश्च यदा जरामवाप्नोति देशतस्सर्वतो वेन्द्रियैः परिहीयमाणशिथिलीभूतनिखिलावयवो विपरीतबुद्धिः पराधीनो भवति तदा त एव स्वजनास्तद्वचनमवधीरयन्ति न च तं शुश्रूषन्ते, मर्यैश्चावनीतो वचनमात्रेणापि केनाप्यननुवर्त्तमानोऽविदुःस्थितो यावदायु दीप कष्टतरां दशामनुभवतीति ॥ २० ॥

तदेवमप्रशस्तं स्थानमुक्त्वा प्रशस्तमाह—

## तस्मात्प्राप्तावसर आत्मार्थं प्रयतेत ॥ २१ ॥

**तस्मादिति**, यतो जन्ममरणप्रवाहेण जरया चाभिभूतो महादुःखमनुभवति जीवस्तस्मादिदर्थं, प्राप्तावसर इति, आर्यक्षेत्रसुकुलोत्पत्तिबोधिलाभसर्वविरत्यादिकं समारे पुनरतीव दुर्लभमवसरं लब्ध्वेत्यर्थः, विवेकिभि प्रोक्तावसरमवाप्य यावदिन्द्रियैः क्षीयमाणशक्तिकैर्व्याकुलं जराजीर्णं न स्वजनादयः परिवदन्ति यावदनुकम्पया न पोषयन्ति रोगाभिभूतञ्च न परित्यजन्ति तावदात्मार्थं यत्नो विधेयः, आत्मनोऽर्थः, स च ज्ञानदर्शनचारित्रात्मकः, अन्यस्त्वनर्थ एव, अवसरो द्रव्यक्षेत्रकालभावभेदभिन्नः, तत्र द्रव्यावसरो जङ्गमत्वपञ्चेन्द्रियत्वविशिष्टजातिकुलरूपबलारोग्यायुष्कादिको मनुष्यभवः समारोपरणसमर्थचारित्रप्राप्तियोग्य, देवनारकभवयोः सम्यक्त्वश्रुतसामायिके एव,

तिर्यक्षु च कस्यचिद्देशविरतिरेव । क्षेत्रावसरो यस्मिन् क्षेत्रे चारित्रप्राप्तिः, तत्र सर्वविरतिसामायिकस्याधोलौकिकग्रामसमन्वितं तिर्यक्क्षेत्रमेव, तत्राप्यर्धतृतीयद्वीपसमुद्राः, तत्रापि पञ्चदशसु कर्मभूमिषु, तत्रापि भरतक्षेत्रमपेक्ष्यार्धषड्विंशेषु जनपदेष्वित्यादिकं क्षेत्ररूपोऽवसरः, अन्यस्मिंश्च क्षेत्रे आद्ये एव सामायिके । कालावसरः कालरूपः स चावसर्पिण्यां सुषमदुःषमादुःषमसुषमादुःषमासु तिसृषु समासु, उत्सर्पिण्यां तु तृतीयचतुर्थारकयोः सर्वविरतिसामायिकस्य प्रतिपाद्यमानस्यापेक्षया, पूर्वप्रतिपन्नास्तु सर्वत्र सर्वासु समासु । भावावसरश्च कर्मभावनोकर्मभावावसरभेदेन द्विविधः, कर्मभावावसरः कर्मणामुपशमक्षयोपशमान्यतराद्यावसर उच्यते, तत्रोपशमश्रेण्यां चारित्रमोहनीय उपशमितेऽन्तर्मौहूर्तिक औपशमिकचारित्रक्षणो भवति, तस्यैव मोहनीयस्य क्षयेणान्तर्मौहूर्तिक एव छद्मस्थयथाख्यातचारित्रक्षणो भवति, क्षयोपशमेन तु क्षायोपशमिकचारित्रावसरः, स चोत्कृष्टतो देशोनपूर्वकोटिं यावत् । सम्यक्त्वक्षणस्त्वजघन्योत्कृष्टस्थितावायुषो वर्त्तमानस्य, शेषाणां तु कर्मणां पल्योपमासंख्येयभागन्यूनायां सागरोपमकोटीकोटिस्थितिकस्य जन्तोर्भवति । नोकर्मभावक्षणस्तु आलस्यमोहावर्णवादस्तम्भाद्यभावे सम्यक्त्वाद्यवाप्त्यवसरः, आलस्याद्युपहतस्य संसारसंतरणयोग्यमनुष्यभवप्राप्तावपि बोध्याद्यप्राप्तेः । तदेवं विषयकषायभावापन्नादिकमात्मनेऽहितमुत्सृज्य ज्ञानदर्शनचारित्रात्मके आत्मानमधिष्ठापयेदिति भावः ॥ २१ ॥

अथावाप्तसंयमस्य कदाचिन्मोहनीयोदयात् प्रसक्तायामरतौ अज्ञानकर्मलोभोदयाद्वा संयमस्य शैथिल्यप्रसङ्गेऽरत्यादिव्युदासेन तदार्ढ्यं सम्पादनीयमित्याशयेनाह—

## संयमरत्याऽरतिमज्ञानं ज्ञानेन लोभमलोभेन परिहरेत् ॥ २२ ॥

**संयमरत्येति**, सम्प्राप्तचारित्रावसरो नारतिं विदध्यात्, स्वजनादिसमुद्भाविता मोहोदयात् कषायाभिष्वङ्गजनिता पञ्चविधाचारविषयाऽरतिः तां संयमरत्या परिहरेत्, दशविधसामाचारीविषयकरत्या निवर्त्तयेत्, न चैव रात्रे किञ्चिद्बाधायै । संयमे चारतिरध्यात्मदोषैरज्ञानलोभादिभिर्भवतीत्याशयेनाहाज्ञानं ज्ञानेनेत्यादि, ननु विदितसंसारस्वभावस्य साधोर्नारतिसम्भवः, सम्भवे वा नासौ विदिततत्त्व इति ज्ञानारत्योः शीतोष्णस्पर्शवत्सहानवस्थानलक्षणो विरोधः, अज्ञानी हि मोहाभिभूतमानसत्वाद्विषयाभिष्वङ्गतः संयमे रत्यभावं कुर्यान्न तु ज्ञानीति चेन्न, सम्प्राप्तचारित्रं प्रत्येवोपदेशात्, चारित्राप्तिश्च यद्यपि न ज्ञानं विना तथापि न ज्ञानारत्योर्विरोधोऽपि तु रत्यरत्योरेव, अरत्या संयमरतेरेव बाध्यमानत्वात्, तस्माज्ज्ञानिनोऽपि चारित्रमोहोदयात्संयमे स्यादेवारतिः, ज्ञानस्याज्ञानं प्रत्येव बाधकत्वात्, न तु संयमारतिं प्रति । संयमारतिनिवृत्तश्चाष्टप्रकारेभ्यः कर्मभ्यस्संसारबन्धनेभ्यो विषयाभिष्वङ्गस्नेहादिभ्यो वा मुक्तो भवति । अज्ञानं ज्ञानेनेति, न ज्ञानमज्ञानं सम्यग्ज्ञानादितरज्ज्ञानमनवबोधो वा, संशयविपर्ययादिरूपमिथ्याज्ञानं वा मिथ्यात्वसवलितशास्त्रसंस्कारो वा, मोहनीयोदयात्तदापन्नाः केचिदवाप्तचारित्रा अपि परीषहोपसर्गैः स्पृष्टाः कर्तव्याकर्तव्यज्ञानविधुरा निखिलद्वन्द्वप्रतिद्वन्द्विसंयमात् परावर्त्तन्ते मिथ्यात्वमोहनीयावृतत्वात् कण्डरीकादय इव । परे तु निजधिषणापरिकल्पितवृत्तयोऽनेकैरुपायैर्लोकादर्थं राजिपृथवो वयं संसारोद्विग्ना मुमुक्षवोऽपरिग्रहिणो यथार्थभाषिण इत्येव

स्थापयन्तश्शाक्यादयो गैरिकचीवरादिकं प्रतिपद्य ततो लब्ध्वा कामानासेवन्ते, ते विषयाभिषक्ता मोहेऽज्ञानमदे निमग्नाः केनापि कारणेन परिहृतनिकेतनकलत्रसुतसम्पद्भिभवा अपरिग्रहत्वाहिंसकत्वादि प्रतिज्ञायापि कामोपायाद्यारम्भेषु वर्त्तन्ते, ते न गृहिणो नापि प्रव्रजिता , निर्गतगृहवाससौख्यत्वात् यथोक्तसंयमाभावाच्च, किन्तूभयभ्रष्टा भवन्ति, तदेतदज्ञानं षड्विधजीवोपघातकारित्वेन विषयकषायाद्यप्रशस्तमूलञ्च ज्ञपरिज्ञया सम्यग्विज्ञाय प्रत्याख्यानपरिज्ञया परिहरेत् । सर्वकषायेषु लोभस्य प्राधान्यादाह—लोभमलोभेनेति, सर्वसङ्गानां हि लोभो दुस्त्यजः क्षपकश्रेण्यन्तर्गतस्यापगताशेषकषायस्यापि खण्डशः क्षिप्यमाणस्यापि तस्यानुबध्यमानत्वात्, अतः केनचिल्लोभादिना सहापि प्रव्रज्यामुपगतेन पुनर्लोभादिपरिग्रहो नैव कार्यः, अलोभेन लोभं निन्दन् स प्राप्तानपि कामान्न सेवेत । लोभजयेन हि जीवः सन्तोषमुत्पादयति, लोभवेदनीयं कर्म न बध्नाति, पूर्वनिबद्धञ्च कर्म निर्जरयति, तस्मादलोभेन लोभं निन्दन् प्राप्तानपि कामादीन्न सेवेत, यो हि शरीरादावपि निवृत्तलोभः स कामाभिष्वङ्गवान्न भवति, यस्तु लोभे प्रवर्त्तते स कार्याकार्यविचारवैधुर्येणार्थैकदत्तदृष्टिः पापोपादानमाश्रित्य सर्वाः क्रिया ऐहिकामुष्मिकोपघातकारिणीः करोति, अलोभं न पश्यति जुगुप्सते च, लोभविपाकापर्यालोचनया च लोभमभिलषति, ततश्चाहोरात्रं परितप्यमानोऽर्थलोभी शस्त्रे प्रवर्त्तते, प्राप्नोति च जन्मजरामरणादिप्रपञ्चगतः सज्वलनसंज्ञकमपि लोभं विनीयाकर्मा भवेत्, लोभक्षये मोहनीयक्षये चावश्यं घातिकर्मक्षयाभिरावरणज्ञानसम्भवेन भवोपग्राहिकर्मापगमादकर्मताप्राप्तेरिति ॥ २२ ॥

अथ जात्याद्युपेतेन साधुना मदादयो न कार्या इत्येव वर्णयति—

## सम्प्राप्योच्चावचादिकं तोषखेदौ न निधेयौ ॥ २३ ॥

**सम्प्राप्येति,** उच्चनीचगोत्रजातिकुलरूपबलादिकमवाप्य कथञ्चित् हेयोपादेयतत्त्वज्ञो न हर्षं खेदं वा विदध्यात्, तदनादौ संसारे परिभ्रमता प्राणिना तत्तत्कर्मायत्तानि उच्चावचान्स्थानान्यनुभूतान्येव, यदि तान्यननुभूतानि स्युस्तदा युज्येतापि कदाचित्तत्र सन्तोषखेदौ, तानि चानेकशः प्राप्तपूर्वाण्यतस्तल्लाभालाभयोर्नोत्कर्षापकर्षौ कार्यौ, तदुक्तं 'सर्वसुखान्यपि बहुशः प्राप्तान्यटता मयात्र संसारे । उच्चैः स्थानानि तथा तेन न मे विस्मयस्तेषु ॥ अवमानात्परिभ्रंशाद्वधबन्धधनक्षयात् । प्राप्ता रोगाश्च शोकाश्च जात्यन्तरशतेष्वपि ॥' इति, तदेवमुच्चनीचगोत्रादिषु समचेतसा सर्वे प्राणिनः सुखमभिलषन्ति दुःखं जुगुप्सन्ते, शुभप्रकृतित्वात्, तथाच्छुभनामगोत्रायुषां कर्मप्रकृतीरभिलषन्ति अशुभाश्च नाकाङ्क्षन्त इति शुभाशुभकर्माणि विचिन्त्यात्मौपम्यमाचरता परित्यक्तोच्चैर्गोत्रोद्भावितमानेन भूतानामप्रियमनाचरताऽऽत्मा पञ्चमहाव्रतेषु संस्थाप्यः, तत्पालनाय च समित्यादिभिः समितेन भाव्यम्, तत्रेर्यासमितिः प्राणव्यपरोपणव्रतपरिपालनाय, भाषासमितिरसदभिधाननियमसंसिद्धये, एषणासमितिरस्तेयव्रतपरिपालनाय, आदाननिक्षेपोत्सर्गसमिती च समस्तव्रतप्रपञ्चस्याहिंसाव्रतस्य संसिद्धये, तदेवं भावत प्राणिनः सातादिकमनुपश्येत्, एवमेषा चक्षुष्मत्त्वादावपि भावनीयम्, तत्र द्रव्यान्धा एकद्वित्रीन्द्रियादयो मिथ्यादृष्टय , उपहतनयनाश्च सम्यग्दृष्टयो द्रव्यान्धा , अनुपहतनयनास्ते न द्रव्यतो न वा भावतोऽन्धाः, एवमन्यत्रापि, यस्तूच्चैर्गोत्राद्यभिमानी नीचैर्गोत्रकृतदीनभावो वा स न जानाति कर्मेत्य

नावबुध्यते कर्मविपाकं संसारासारतां नावगच्छति हिताहिते न गणयति, अतो मूढस्तैर्मोहनीयकर्मोदयादिभिर्विषयासमनुभवन् सत्त्वोपमर्दिकाः क्रिया विदधत् जन्मजरामरणप्रवाहपतितो दुरन्तदुःखभाग्भवतीति भावः ॥ २३ ॥

अथ भोगासक्तिर्न कार्येत्याह—

# भोगा दुःखाय तत्र नीरपारयायी सज्जेत ॥ २४ ॥

**भोगा इति,** भोगाः कामादयस्तत्साधनभूता वनिताहिरण्यपशुगृहादयश्च, ते दुःखाय भवन्ति, तत्प्राप्तावप्राप्तौ च दुःखमेव, शब्दादिविषयविपाकज्ञानशून्या हि विषयाननुशोचन्ति कथमस्यामप्यवस्थायां वयं न भोगान् भुञ्ज्महे कीदृशी वा दशाऽस्माकं यत प्राप्ता अपि विषया नोपभोगायेति, यथा ब्रह्मदत्तस्य, न चैव सर्वेषामध्यवसायः, सनत्कुमारादिना व्यभिचारात्, किन्त्वनवगततत्त्वानामेव, विवेकिनस्तु तान् दुःखसाधनभूतानेव मन्यन्ते, रुपादयोऽपि दुःखात्मका एव, तदासक्तस्य कर्मोपचयो रोगाद्युत्पत्तिस्ततो मरणं ततोऽपि नरकभवस्तस्मादपि तिर्यक्षु निषेकचलार्बुदपेशीव्यूहगर्भप्रसवादयो महान्तः क्लेशा आविर्भवन्ति, तथा प्रियजीवितार्थमुपार्जनक्लेशमविगणय्य रक्षणपरिश्रममनालोच्य तदुपभोगानर्थाय धनसञ्चयं कुर्वते, तदप्यन्तरायोदयान्न तेषामुपभोगाय भवति, दायादा विलुम्पन्ति चौरा अपहरन्ति राजानो वाऽवच्छिन्दन्ति गृहदाहेन वा दह्यते, एभिश्च महादुःखमनुभवन्ति, तथा यैरेवार्थोपार्जितैर्भोगोपभोगो भवति कर्मपरिणतिवैचित्र्यात् कदाचित्तैरेव सह भवति, तथा स्वीकृतभ्रूविक्षेपादिविभ्रमैर्मुग्धा भूयो भोगुप्रतारो नरककटुविपाकफलमप्यवगणय्य वशीभूता स्वयमपि विनष्टाः स्त्रिय उपभोगायतना एताभिर्विना शरीरस्थितिरेव न भवतीत्याद्युपदेशप्रदानेन परानपि विनाशयन्ति, तदेवमेतान् मोहहेतून् विचिन्त्य तीरपारयायी मुनिस्तत्र नाभिषक्तिं कुर्यात्, तीरं मोहनीयक्षय, पारं शेषघातिक्षयः, यद्वा तीरं घातिचतुष्टयापगमः पारं भवोपग्राह्यभावः, तत्प्राप्त्यभिलाषुको मुनिरिन्द्रियः, भोगापेक्षाविधुरः पञ्चमहाव्रतारूढ आत्मस्वरूपाखिलावारककर्मप्रध्वंससमुज्ज्वलदखिलवस्तुजालसमुद्भासिज्ञानानन्तसुखसाधनाय संयमानुष्ठानाय जुगुप्सा न कार्या, अलाभादौ न वा खेदमुपेयात्, लाभान्तरायोऽयं मम, अनेन चालाभेन कर्मक्षपणायोद्यतस्य मे तत्क्षपणसमर्थं तपो भावीति निचिन्तयेत्, न वाऽपर्याप्तमुपलभ्य दातारं निन्देत्, समुपलब्धपरिपूर्णभिक्षादिलाभो नोत्सावचालापैः स्तुतिं विदध्यादिति ॥ २४ ॥

अथ परिहृतभोगाभिलाषो व्रती दीर्घसंयमयात्रार्थं शरीरपरिपोषणाय लोकनिश्रया विहरेत् निराश्रयस्य देहसाधनलाभासम्भवात्, तदभावे च धर्मस्याप्यसम्भवादतो वृत्तिनियममाह—

# शस्त्रोपरतः कालज्ञो भिक्षुरशुद्धमाहारादि गृह्णीयात् ॥ २५ ॥

**शस्त्रोपरत इति,** पचादिवनानाशस्त्रकर्मसमारम्भरहित इत्यर्थः, एतेन पाकादि न स्वयं करोति न कारयति न चाऽन्यमादिशतीति सूचितम्, करणत्रये समारम्भनिवृत्तत्वात्, अनवगतयाथार्थ्ये सुष्ठु सम्प्राप्तिपरिहाराय जीवोपमर्दकैर्व्यादिभेदभिन्ने शस्त्रे कायिकाधिकरणिकादिपृथिव्यादिरूपा वा क्रिया संरम्भसमारम्भारम्भलक्षणा अनुष्ठीयन्ते। तत्र संरम्भ इष्टानिष्टप्रा

परिहाराय प्राणातिपातादिसङ्कल्पावेश , तत्साधनसन्निपातकायवाग्व्यापारजनितपरितापनादिलक्षण समारम्भ, दण्डत्रयव्यापारापादितचिकीर्षितप्राणातिपातादिक्रियानिर्वृत्तिरारम्भः । कालज्ञ इति, सर्वा प्रत्युपेक्षणादयः क्रिया कर्त्तव्ये काले परस्पराबाधया करोति कर्त्तव्यावसरं वेत्ति विधत्ते चैवंविध परमार्थदर्शी कालज्ञो भिक्षुर्धर्मोपकरणमपि करणत्रयेण क्रयविक्रयादिनाऽगृह्णानश्शुद्धमुद्गमादिदोषरहितमाहारादि गृह्णीयात्, शरीरपोषणार्थमभ्यवहरेत, तथा कालज्ञ —भिक्षार्थमुपसर्पणाद्यवसरवेदी काले समुपस्थितप्रश्नानामुत्तरदानकुशल , यथा गोचरप्रदेशादौ पृष्टो भिक्षादोषान् सुत्रेणैवाचष्टे, एवं केनचित् किमिति भवता सर्वजनाचीर्णं स्नानं न सम्मतमिति ग्रीष्ममध्याह्नतीव्रतरतरणिकरसंसर्गाद्गलत्स्वेदबिन्दुक साधु पृष्टो यतीनां सर्वथा प्रायः कामाङ्गत्वाज्जलस्नानं प्रतिषिद्धमित्याद्युत्तरं ददाति, तदेव कालज्ञोऽसंयम्य ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया च परिहृत्य निर्दुष्टमाहारं यावता गृहीतेन गृही पुनरारम्भे न प्रवर्त्तेत यावन्मात्रे चात्मनो विवक्षितकार्यनिष्पत्तिस्तावन्मात्रमेव गृह्णीयात्, न तु यावल्लाभं तावत्, लाभालाभयोश्च मदशोकौ न कुर्यात्, संयमोपकरणातिरिक्तञ्च वस्त्रपात्रादिकं न गृह्णीयात्, संयमोपकरणान्यपि न मूर्च्छया धारयेत्, अपि तु संयमोपकारितया बिभृयात्तादृशस्यापरिग्रहत्वप्रसङ्गात्, परिग्रहश्च दूरतः परिहर्त्तव्यस्तत्परिहरणञ्च न विना निदानोच्छेदेन, निदानन्तु शब्दादिपञ्चगुणानुगामिनः कामा, तत्र प्रमादवता न भाव्यमिति ॥ २५ ॥

संयमदेहयात्रार्थलोकमनुसरन् कामादिविपाकवेत्ता ज्ञातसंसारस्वभावो ज्ञानाद्यपवर्गैककारणं सम्यग्जानानो भावतो ग्रहणयोग्यसम्यग्दर्शनज्ञानचारित्राण्यादाय सर्वं सावद्यं कर्म न मयाऽनुष्ठेयमित्येवं कृतप्रतिज्ञोऽष्टादशपापकर्मसमारम्भात् करणत्रयैर्निवृत्तः कर्मक्षयप्रत्यूहस्य प्राणिनां शारीरमानसदुःखोत्पादनस्य मूलभूतममत्वमाग्रहं परित्यजेदित्याह—

## निर्ममत्वः प्राणिपीडारम्भे न यतेत ॥ २६ ॥

**निर्ममत्व इति**, ममेदमिति मतिरहित , परिग्रहफलज्ञो हि परिग्रहं दूरीकरोति, ममेदमित्यध्यवसायस्तु द्रव्यतो भावतश्च परिग्रहनिबन्धन , येन स्वेतत्परिग्रहाध्यवसायमलिनं ज्ञानमपनीतं स एव परमार्थतो बाह्याभ्यन्तरपरिग्रहपरित्यागी, तस्य च जिनकल्पिकस्येव नगरादिसम्बन्धिपृथ्वीसम्बन्धेऽपि निष्परिग्रहतैव, चित्तस्य परिग्रहकालुष्याभावात्, अत एवासौ विदितसप्तभय संयमानुष्ठानपरायणः कदाचिन्मोहनीयोदयादपि संयमेऽरतिरसंयमे विषयेषु वा रतिराविर्भवेत्सदा न विमनीभूतो विषयेषु रमयति, न वाऽमनोज्ञान् द्वेष्टि, एष एव परिग्रहान्मुक्तो भवौघं तरति, तस्माद्विषयशरीररूपफलादौ न ममत्वं विदध्यात् । ममत्वं हि कर्मक्षयविघ्नभूतायाः प्राणिपीडाया मूलम्, तदाविष्टश्च पृथिवीकायादिसमारम्भं करोति, एकत्र च समारम्भे प्रवृत्तस्यापरकायसमारम्भोऽष्टादशप्रकारपापकर्माणि चाऽवश्यं वर्त्तन्त एव, यथा कुम्भकारशालोदकप्लावनदृष्टान्तेनैककायसमारम्भेणापरकायसमारम्भो भवति, प्रतिज्ञालोपाच्चानृतः, व्यापाद्यमानप्राणिना स्वात्मनो व्यापादकायाप्रदानात्तीर्थकरेणाननुज्ञातत्वाच्चादत्तादानम्, सामग्र्योपादानाच्च परिग्रह , तस्माच्च मैथुनरात्रिभोजने प्रसज्येते, तस्मात् परिग्रहात् साक्षात् परम्परया वा मम सम्पनीपद्यत इति विचिन्त्य तमाग्रहं परिहृत्य संयमानुष्ठाने सम्यक् प्रयतेतेति भावः ॥ २६ ॥

ए० सू० ८

अयमेव मुक्तिगमनयोग्यः परोपदेशकश्चेत्याह—

## अयमेवाज्ञानुवर्त्त्युपदेशकश्च ॥ २७ ॥

**अयमेवेति,** धनधान्यादिभी रागद्वेषादिभिश्चातिक्रान्तः साधु कषायतृणपटलदावानलरूपाया असिधारारूपायाश्च भगवदाज्ञाया अनुवर्त्तनशीलः, आज्ञाप्यते जन्तुगणो हितप्रवृत्तौ यया साऽऽज्ञा, सा च द्रव्यार्थादेशादनाद्यनिधना जीवानुपरोधिनी हितकारिण्यकुशलदुरवगमा च, एतज्ज्ञानवर्त्ती साधुर्दृढधर्मा जितेन्द्रियकषायो भवति, अत एवोपदेशकः, तीर्थकरावेदितप्राणिदुःखकारणवेदी धर्मकथालब्धिसम्पन्नः स्वपरसमयविदुग्रविहारी यथावादी तथाकारी देशकालादिज्ञः ज्ञपरिज्ञयोपादानकारणपरिज्ञानं निरोधकारणपरिच्छेदञ्च स्त्रीस्त्रोत्युदाहरति च, प्रत्याख्यानपरिज्ञया च परिहरति परिहारयति च, तथा मानुषस्य यद्दुःखं प्रवेदितं यस्य च दुःखस्य परिज्ञा कुशलः उदाहरति तद्दुःख कर्मकृतं तत्कर्माष्टप्रकारं तदाश्रवद्वाराणि च ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया प्रत्याख्याय तदाश्रवद्वारेषु सर्वं प्रकारैर्योगत्रिककरणत्रिकैर्न वर्त्ततेति सर्वशः परिज्ञाय कथयति, ईदृशः सर्वशः परिज्ञानं केवलिनो गणधरस्य चतुर्दशपूर्वविदो वा, एवंविध उपदेशको न मोक्षमार्गादन्यत्र रमते, अरक्तद्विष्टत्वाद्देवानुमहबुद्ध्या क्रमकथननत्र्यादरेफरूपतया सति ग्रहणसामर्थ्ये उपदेशो दीयते, अयमेव चाष्टप्रकारेण कर्मणा बद्धानां जन्तूनां प्रतिमोचकः, पुण्यापुण्ययतोर्धर्मकथासमदृष्टित्वाद्विधिज्ञत्वाच्छ्रोतृविवेचकत्वाच्च । एवंविधो धर्मकथाविधिज्ञो बद्धप्रतिमोचकः कर्मापनयनिपुणः सत्पथव्यवस्थितः कुमार्गं निराचिकीर्षुः सर्वसंवरचारित्रोपेतो मुनिः केवलिभिर्विशिष्टमुनिभिर्यो यदनारब्धं तन्नारभते यच्च मोक्षाङ्गमाचीर्णं तत्करोतीति ॥ २७ ॥

अथ प्रतिनं संयमव्यवस्थितस्य विजितकषायादिलोकस्य मुमुक्षोरनुकूलप्रतिकूलपरीषहसम्भवे तेऽविघ्नचेतसा सोढव्या इत्याख्याति—

## सुप्तजाग्रद्दोषगुणज्ञः शीतोष्णसहः कर्ममोचकः ॥ २८ ॥

**सुप्तेति,** साधुर्हि निरन्तरं जागृतः, सज्ज्ञानवत्त्वान्मोक्षमार्गाविचलत्वादनवरतं हिताहितप्राप्तिपरिहारव्यापृतत्वाच्च, सुप्तश्च द्रव्यतो भावतश्चेति द्विविधः, निद्राप्रमादवान् द्रव्यसुप्तः, मिथ्यात्वाज्ञानसंयमहानिरूपाभ्यामोहितो भावसुप्तः, मिथ्यादृष्टिस्तु सततं भावसुप्तः, सद्विज्ञानानुष्ठानविकलत्वात्, निद्रया तु भजनीयः, द्रव्यनिद्रोपगतोऽपि क्वचिद्द्वितीयपौरुष्यादौ साधुः सततं जागरूक एव भावतः, अपगतमिथ्यात्वादिनिद्रयाऽवाप्तसम्यक्त्वविबोधत्वादेवञ्च धर्मं प्रतीत्य सुप्तजाग्रदवस्थे उक्ते । द्रव्यनिद्रासुप्तस्य तु धर्मः स्याद्वा न वा, भावतो जागरणे निद्रासुप्तस्यापि धर्मः स्यादेव, भावतोऽजाग्रतो निद्राप्रमादावष्टब्धान्तःकरणस्य न स्यादपि, द्रव्यभावसुप्तस्य तु न स्यादेव । कथं द्रव्यसुप्तस्य धर्मो न भवतीति चेदुच्यते, द्रव्यसुप्तो हि निद्रया भवति, सा च दुरन्ता, स्त्यानर्द्धित्रिकोदये भवसिद्धिकस्यापि सम्यक्त्वावाप्तेरभावात्, तच्च चत्र मिथ्यादृष्टिसास्वादनयोरनन्तानुबन्धिचतुष्कसहचरितं, क्षयस्त्वनिवृत्तिबादरगुणस्थानकालसंख्येयभागेषु कियत्स्वपि गतेषु सत्सु भवति, निद्राप्रचलयोरप्युदयो दुरन्त एव, बन्धोपरमस्त्वपूर्वकरणकालसंख्येयभागान्ते भवति, क्षयश्च क्षीणकषायद्विचरमसमये, उदयस्तूपशमकोप-

शान्तमोहयोरपि भवतीत्यतो दुरन्तो निद्राप्रमादः । योऽज्ञानोदयाद्दर्शनमोहनीयमहानिद्रासुप्तः स महादुःखमनुभवति, अज्ञानं हि दुःखहेतुत्वाद् दुःखम्, अज्ञानञ्च मोहनीयं नरकादिभवव्यसनोपनिपातायेह च बन्धवधशारीरमानसपीडायै, अयञ्च भोगलिप्सुर्जीवोपमर्दादिकषायहेतुकं कर्मोपादाय नरकादियातनास्थानेषूत्पद्यते, ततः कथञ्चिदुत्थाय निखिलक्लेशोन्मूलनदक्षं धर्मकारणमार्यक्षेत्रादौ मनुष्यजन्म प्राप्य पुनरपि तत्तदारभते येन येनाधोऽधो व्रजति न संसारान्मुच्यते, यस्त्वमुं लोकाचारं ज्ञात्वा शस्त्रोपरतो धर्मजागरणेन जागृतश्शब्दादीन् कामगुणान् दुःखैकहेतून् ज्ञपरिज्ञया विदित्वा प्रत्याख्यानपरिज्ञया प्रत्याचष्टे सोऽयमात्मवेत्ता जन्मजरामरणशोकव्यसनोपनिपातात्मकसंसारलक्षणस्य भावावर्त्तस्य शब्दादिकामगुणविषयाभिलाषात्मकभावस्रोतसश्च कारणं रागद्वेषसङ्गं ज्ञात्वा परिहरति, तदेव मुनिनामधेयोपगुणज्ञो बाह्याभ्यन्तरग्रन्थरहितश्शीतोष्णरूपौ परीषहावत्यन्तं सहमानः कर्मक्षपणायोद्यतस्य परीषहाणामुपसर्गाणां वा कठोरतां साहाय्यं मन्यमानत्वात् पीडाकारित्वेन न गृह्णाति । तत्र शीतोष्णयोर्नामस्थापनाद्रव्यभावभेदेन प्रत्येकं चतुर्धा निक्षेपः, ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यशीतं हिमतुषारकरकादिकम्, द्रव्यप्राधान्याच्छीतकारणद्रव्यस्य शीतत्वोक्तिः । जीवाश्रितत्वपुद्गलाश्रितत्वाभ्यां भावशीतं द्वेधा, पुद्गलस्य शीतं गुणो भावशीतं पुद्गलाश्रितम्, गुणप्राधान्यविवक्षणात्, एवमुष्णमपि भाव्यम् । जीवस्य तु शीतोष्णरूपोऽनेकविधो गुणः, तद्यथा औदयिकादयष्षड्भावाः, तत्रौदयिक उष्णः, कर्मोदयाविर्भूतनारकादिभवकषायजन्यत्वात्, औपशमिकश्शीतः, कर्मोपशमावाप्तसम्यक्त्वविरतिरूपत्वात्, क्षायिकोऽपि शीत एव, क्षायिकसम्यक्त्वचारित्रादिरूपत्वात् । अथवा स्त्रीसत्कारपरीषहौ शीतौ भावमनोऽनुकूलत्वात्, शेषास्तु विंशतिरुष्णा मनसः प्रतिकूलत्वात्, तथा धर्मेऽर्थे वाऽनुद्यमः शीतलः, तपस्युद्यम उष्णमिति ब्रुवते, उपशान्तकषायः शीतो भवति, क्रोधादिपरितापोपशमात्, सप्तदशभेदः संयमश्शीतः, जीवानामभयकरणशीलत्वात्, एतद्विपरीतोऽसंयमः उष्णः, निर्वाणसुखं शीतं समस्तकर्मोपतापाभावात्, एतद्विपरीतं तु त्वसुखमुष्णमिति । तथा च यो मुनिः प्रमादरहितश्शब्दरूपादिविषयेषु रागद्वेषरहितो गुप्तात्मा शस्त्राशस्त्रवेदी तत्प्राप्तिपरिहारविधायी ज्ञानावरणीयादिकर्मणश्शस्त्रभूतस्य तपसोऽनुष्ठानकुशलत्वाच्छस्त्रभूतसंयमानुष्ठानकुशलस्तस्याश्रवनिरोधादनादिभवोपात्तकर्मणा क्षयो भवति, तथा चायं मतिश्रुतावधिमनःपर्यायवान् मन्दमतिस्तीक्ष्णः, चक्षुर्दर्शनी, अचक्षुर्दर्शनी, निद्रालुः सुखी दुःखी वा, मिथ्यादृष्टिः सम्यग्दृष्टिः सम्यङ्मिथ्यादृष्टिः, स्त्रीपुमान्नपुंसकः, कषायी, सोपक्रमायुष्को निरुपक्रमायुष्कोऽल्पायुः, नारकस्तिर्यग्योनिक एकेन्द्रियो द्वीन्द्रियः पर्याप्तकोऽपर्याप्तकः सुभगो दुर्भगः, उच्चैर्गोत्रो नीचैर्गोत्रः कृपणस्त्यागी निरुपभोगो निर्वीर्य इत्येवं न कर्मनिमित्तव्यपदेशभाग्भवति । तस्माज्ज्ञानावरणादिकर्म प्रत्युपेक्ष्य बद्धं च तत्सत्ताविपाकापन्ना प्राणिनो यथा भावनिद्रया शेरते तथाऽवगम्याकर्मतोपाये भावजागरणे यतितव्यम्, भावनिद्रासुप्तो हि कामभोगाभिलाषी महारम्भपरिग्रहपरिकल्पितजीवनोपायः कामासक्तस्तदुपादानजनितकर्मणा परिपूर्णो गर्भाद्गर्भान्तरमुपयाति संसारचक्रवालेऽरघट्टघटीयन्त्रन्यायेन, स प्राणिनं हत्वाऽपि क्रीडेति मन्यते, एते पशवो मृगयायै सृष्टाः, मृगया च सुखिनां क्रीडायै भवतीत्येवं मदन्नात्मनो वैरमेव वर्धयते, तस्माज्जागरूकस्सम्यग्दर्शनज्ञानचारित्राणि परमं मोक्षपदमिति ज्ञात्वा पापानुबन्धिकर्म न करोति न कारयति न वाऽनुमन्यते, अत आत्मनोऽग्रमूले पृथ-

कुर्यात्, भवोपग्राहिकर्मचतुष्टयमग्रम्, घातिकर्मचतुष्टय मूलम्, मोहनीय वा मूल शेषाणि त्वग्रम्, मोहनीयनाशाच्छेषनाशनिबन्धात्, मिथ्यात्व वा मूल शेष त्वग्रम् । यद्वाऽसयम. कर्म वा मूल सयम-तपसी मोक्षो वाऽग्रम्, एते अग्रमूले दु खसुखकारणतयाऽवधारयेत्, सोऽय तपस्सयमाभ्या रागादीनि बन्धनानि तत्कार्याणि वा कर्माणि छित्त्वा निष्कर्मा निरावरण सर्वज्ञानी सर्वदर्शी च भवति अत एव ससारात् प्रमुच्यत इति भाव. ॥ २८ ॥

अथ सयमानुष्ठायैव मुनिर्न केवल परीषहोपसर्गादिदु खसह पापकर्मानुष्ठायी चेत्याह—

## सन्धिज्ञो मुनिर्विज्ञाय गत्यागती रागद्वेषाभ्यां न लिप्येत ॥ २९ ॥

**सन्धिज्ञ इति,** सन्धिर्विवरमवसरो वा, त जानातीति सन्धिज्ञ , स सम्यक्त्वावाप्तिलक्षण सम्यग्ज्ञानावाप्तिरूप चारित्रमोहनीयक्षयोपशमात्मक वा कर्मविवर धर्मानुष्ठानस्यावसर विज्ञाय जीव-घातस्य दु खोत्पादनानुष्ठान न विदध्यात्, सर्वत्रात्मौपम्य समाचरेत्, निखिला हि प्राणिनो दुःख द्विषन्ति सुखमभिलषन्ति चातस्तेषा न करणत्रयैर्व्यापादको भवेत्, एव समताव्यवस्थित आगम पर्यालोचनयाऽऽत्मान विविधैरुपायैरिन्द्रियप्रणिधानाप्रमादादिभि प्रसन्न विदध्यात्, आत्मप्रसन्नता च सयमस्थस्य भवति, अयमेव च मुनिर्नैश्चयिक , न तु पापकर्माकरणमात्रतया मुनि , तत्र मुनित्वस्या-निमित्तत्वात्, परस्परतो भयेन लज्जया वा हि पाप कर्म न करोत्यपर , न तु मुनित्वात्, अद्रोहाध्य वसायो हि मुनिः, स च तत्र नास्ति, अपरोपाध्यावेशात्, शुभान्त करणपरिणामव्यापारापादितक्रिय-स्यैव मुनिभावो ना यथेति निश्चयनयाभिप्राय । व्यवहारनयापेक्षया तु यो हि सम्यग्दृष्टिरुत्क्षिप्तपञ्च महाव्रतभारस्तद्वहने प्रमादनप्यपरसमानसाधुलज्जया गुर्वाचार्याद्यभयेन गौरवेण वा केनचिदाधा-कर्मादि परिहरन् प्रत्युपेक्षणादिका क्रिया करोति, यदि च तीर्थोद्भासनाय मासक्षपणातापनादिका जनविज्ञाता क्रिया करोति तत्र तस्य मुनिभाव एव कारणम्, तद्व्यापारापादितपारम्पर्येण शुभाध्यव-सायोपपत्तेरिति । तदेव शब्दादिविषयपञ्चकेषु विगतरागद्वेषोऽत एव गुप्त आगतिगतिपरिज्ञाता राग-द्वेषाभ्यामनपदिश्यमानो न कायस्थादिना छेद्यते कुन्तादिना भिद्यते पावकादिना वा दह्यते, किन्तु रागद्वेषाभावादस्तित्वस्यैव । आगतिर्हि तिर्यङ्मनुष्ययोश्चतुर्धा, चतुर्विधनरकादिगत्यागमनसद्भावात्, देवनारकयोर्द्वेधा, तिर्यङ्मनुष्यगतिभ्यामेवागमनसद्भावात्, मनुष्येषु पञ्चधा, तत्र मोक्षगतिसद्भावात् । तदेवमागतिगतिपरिज्ञानाद्रागद्वेषपरित्यागः, तदभावाच्च छेदनादिससारदु खाभाव । यस्तु कुतो वय-मागता क्व यास्याम किं वा तत्र नः सम्पत्स्यत इति न विचारयति तस्य ससार एव इति स्यात् ॥ २९ ॥

य एव निष्प्रत्यूह मोक्षमार्गानुष्ठाता स एवात्मनो मित्रमित्याह—

## स एव समदर्श्यात्मनो मित्र क्रोधादीन् वमितेति सर्वज्ञोपदेश. ॥ ३० ॥

**स एवेति,** यो रागद्वेषविप्रमुक्तो विषयसुखभोगादिक पूर्वमनुभूत न स्मरति न वाऽनागत-मभिवाञ्छति भगवद्वचनाश्रवणपानादविश्रान्तससारमिवानागतमपि ससार मन्यते स पूर्वोपचितकर्म-क्षपणाय प्रवृत्तो धर्मध्यायी शुक्लध्यायी चेष्टाप्राप्तिविनाशजनितमानसविकारलक्षणाऽरतिविशेषेऽभि-लषितार्थप्राप्तिजनितानन्दस्वरूपे रतिविशेषे चोपसर्गनप्राये तदाग्रहमतिरहितस्सत्वमनुचरति, तत्र च

मुमुक्षोस्संयमानुष्ठानमात्मसामर्थ्यात् फलवद्भवति न परोपरोधेन, परो हि मित्रादिः स्यात्, स च मित्रादिः संसारसाहाय्योपकारितया मित्राभास एव, वास्तविकोपकारित्वं तु पारमार्थिकात्यन्तिकैकान्तिकसुखादिगुणोपेतः सन्मार्गपतित आत्मैव, तस्यैव तादृशसुखोत्पादनिमित्तत्वात्, बाह्यस्य मित्रामित्रविकल्पोऽदृष्टोदयनिमित्तत्वादौपचारिकः । यो हि सन्मार्गानुष्ठाता स कर्मणा तन्निबन्धनाद्वा दुःखापनेता, बाह्यविषयाभिष्वङ्गाय प्रवर्त्तमानमात्मानमेवाभिगृह्य धर्मध्यानादिना दुःखाद्विमोचनात् । तस्मादासेवनापरिज्ञया संयममेवानुतिष्ठेत्, गुरुसमक्षपरिगृहीतप्रतिज्ञां परिपालयेत्, तदेव भगवदाज्ञोपस्थितो मेधावी रोगेणोपसर्गेण व्याधिना वा स्पृष्टोऽपि न व्याकुलमतिस्तद्दूरीकरणाय यतेत, इष्टविषयावाप्तौ रागस्यानिष्टप्राप्तौ च द्वेषस्य सम्भवात्, एवंविधश्च विवेकी चतुर्दशजीवस्थानावस्थरूपदेशाल्लोकात् प्रमुच्यते, अत एवाचिरात् स्वपरापकारिक्रोधादीन् वमिता भवति, तस्यैव च पारमार्थिकश्रमणभावः, तदुक्तम् 'श्रामण्यमनुचरतः कषाया यस्योत्कटा भवन्ति । मन्ये इक्षुपुष्पवन्निष्फलं तस्य श्रामण्यम् ॥ यदर्जितं चारित्रं देशोनयाऽपि पूर्वकोट्या । तदपि कषायितमात्रो हारयति नरो मुहूर्तेन' ॥ इति । तदेव कषायवमनमवश्यं कार्यम्, तदौत्कट्ये श्रामण्यस्य नैष्फल्यादिति यथावस्थितवस्तुवेदिनो भगवत उपदेशः, कषायवमनमन्तरेण तीर्थकृतोऽपि न निरावरणाखिलपदार्थसाक्षात्कारिपरमज्ञानावाप्तिः, तदभावे च मोक्षसुखाभावः, एवमन्येनापि मुमुक्षुणा तदुपदेशवर्त्तिना सन्मार्गानुयायिना कषायवमनं विधेयमिति भावः ॥ ३० ॥

यस्तु प्रमादी स द्रव्यतः सर्वात्मप्रदेशैः क्षेत्रतः षड्दिग्व्यवस्थितः कालतोऽनुसमयं भावतो हिंसादिभिः कर्मोपचिनोति, अत एव तस्येह परत्र च महाभयम्, आत्महितेषु जाग्रतोऽप्रमत्तस्य तु नास्त्यैहिकादामुष्मिकाद्वा भयं, अप्रमत्तता च कषायाभावात्, तदभावाच्चाशेषमोहनीयाभावस्ततोऽशेषकर्मक्षय इत्याह—

## वर्द्धमानशुभाध्यवसायस्यैकाभावे बह्वभावान्मोक्षः ॥ ३१ ॥

वर्द्धमानेति, प्रवर्द्धमानशुभाध्यवसायस्येत्यर्थः, अनेन यथावदवस्थिततीर्थकरप्रणीतागमानुसारेण यथोक्तानुष्ठानविधायी श्रद्धावानप्रमत्तयतिरबद्धायुष्कः क्षपकश्रेणियोग्यो नापर इति सूचितम् । एकाभाव इति, एकस्यानन्तानुबन्धिनः क्रोधस्याभाव इत्यर्थः, अभावश्चोपशमेन क्षयेण वा भवति, अत्र तु क्षयेण विशेषो मोक्ष इत्युक्तेः । बह्वभावादिति, बहूनां मानादीनां क्षयेणाभावादित्यर्थः । तथा च यः प्रवर्द्धमानशुभाध्यवसायोऽनन्तानुबन्धिनमेकं क्रोधं क्षपयति स बहूनपि मानादीनप्रत्याख्यानादीन् वा स्वभेदान् क्षपयति, मोहनीयं वैकं यः क्षपयति स शेषा अपि प्रकृतीः क्षपयति । उपलक्षणेनान्योऽर्थोऽपि भाव्यः, यो बहून् स्थितिविशेषान् क्षपयति सोऽनन्तानुबन्धिनमेकं मोहनीयं वा क्षपयति, तथा ह्येकोनसप्ततिभिर्मोहनीयस्य स्थितिकोटीकोटीभिः क्षयमुपगताभिर्ज्ञानावरणीयदर्शनावरणीयवेदनीयान्तरायाणामेकोनत्रिंशद्भिर्नामगोत्रयोरेकोनविंशतिभिश्शेषैकस्थितिकोटीकोट्यापि देशोनया मोहनीयस्य क्षपणार्हो भवति नान्य इति । एवमेवोपशमश्रेण्याश्रयेण य एकोपशमकस्स बहूपशमको यो बहूपशमकस्स एकोपशमको भाव्यः । तदेवमात्मव्यतिरिक्तपुत्रधनादि संयोगं ममतामयुक्तं शारीरदुःखादिहेतु तद्धेतुकर्मोपादानकारणं वा विहाय मुमुक्षवोऽनेकभवकोटिदुर्लभं रत्नत्रयमुपलभ्याप्रमत्ता मोक्षं यान्ति,

तावाप्ततद्योग्यक्षेत्रकालस्य लघुकर्मणस्तेनैव भवेन मोक्षप्राप्तिः, यथाशक्तिप्रतिपालितसंयमास्त्वपरे आयुषः क्षये सौधर्मादिदेवलोकमवाप्य ततः पुण्यशेषतया धर्मभूम्यार्यक्षेत्रसुकुलोत्पत्त्यारोग्यश्रद्धासंयमादिकमवाप्य विशिष्टतरं स्वर्गमनुत्तरोपपातिकपर्यन्तमधितिष्ठन्ति, ततश्च्युता अवाप्तमनुष्यादिसंयमभावा अशेषकर्मक्षये मोक्षमुपयान्तीति भावः ॥ ३१ ॥

अथ सम्यग्दर्शनादीनाह—

## तीर्थंकरवचनश्रद्धालुर्धीरो न लोकैषणां कुर्यात् ॥ ३२ ॥

**तीर्थंकरेति**, तीर्थं कुर्वन्तीति तीर्थंकराः, तेषां वचने श्रद्धालुरप्रकम्पितरुचिमान्—अवाप्तसम्यक्त्व इत्यर्थः, भगवान् यद्वस्तु यथैवाभिहितवान्, तद्वस्तु तथैवाम्ने नापरप्रोक्तवचसामिव सद्भावाधितमेव श्रद्धाति इति यावत्। तत्र तीर्थंकरा अतीता अनन्ताः कालस्यानादित्वात्, अनागता अप्यनन्ताः, तत्कालस्यानन्तत्वात्, तेषाञ्च सर्वदैव भावात्, वर्तमानतीर्थकृतः प्रज्ञापकापेक्षयाऽनवस्थिताः, तथाप्युत्कृष्टजघन्यपदेन इत्थम्, उत्कृष्टेन समयक्षेत्रसम्भविनस्सप्तत्युत्तरं शतम्, यथा पञ्चस्वपि विदेहेषु प्रत्येकं द्वात्रिंशत्, प्रत्येकं द्वात्रिंशत्क्षेत्रात्मकत्वात्, पञ्चस्वपि भरतेषु पञ्च, एवमैरवतेष्वपि, एवं सप्तत्यधिकं शतमिति। जघन्यतश्च पञ्चसु महाविदेहेषु प्रत्येकं चत्वारस्तीर्थंकरा इति विंशतिः। भरतैरावतयोस्त्वेकान्तसुषमादावभाव एवेति। एते सर्व एव परमभावसरे सामान्यतो वा सदेवमनुजाया सभायामर्धमागधया सर्वसत्त्वभाषानुगामिन्या भाषया जीवादिसप्तपदार्थान् सम्यग्दर्शनादीनि मोक्षमार्गाणि मिथ्यात्वादीन् बन्धहेतून् सदसदनेकान्तात्मकं तत्त्वं पृथिव्यादिप्राणिगणाश्च प्ररूपयन्ति, तत्सर्वं सत्यमेवेति विहितश्रद्धानो धीरः—तथाविधसंसर्गादिनिमित्तोत्थापितमिथ्यात्वोऽपि श्रुतचारित्रात्मकधर्ममवगम्यापरित्यक्तसम्यक्त्वो लोकैषणामिष्टेषु शब्दादिषु प्रवृत्तिमनिष्टेषु द्वेषबुद्धिञ्च न कुर्यात्, लोकैषणायाः सावद्यानुष्ठानप्रवृत्तिमूलत्वात्। ये चाविदितपरमार्था इन्द्रियार्थेषु प्रलीनास्ते पुनः पुनर्जन्मादिषु रभाजो भवन्ति, तस्मादप्रमत्तः सन् निद्राविकथादिप्रमादरहितोऽक्षिनिमेषोन्मेषमात्रावपि सदोपयुक्तः कर्मरिपून् मूलनाय यत्नं प्रकुर्यादिति भावः। नामस्थापनाद्रव्यभावभेदेन सम्यक्त्वं चतुर्धा निक्षेप्यम्, नामस्थापने प्रसिद्धे, ज्ञशरीरभव्यशरीरभिन्नं द्रव्यसम्यक्त्वञ्चापूर्वनिर्वर्त्तितं रथादि, भरतस्थादेरवयवसंस्कार, गुणान्तराधानाय विहितो द्रव्यसंयोगः, यत्प्रयुक्तं द्रव्यं लाभहेतुत्वादात्मनः समाधानाय भवति तद्द्रव्यं, यच्च परित्यक्तं भारादि तत्, भग्नदध्यादिभाण्डशकलानि, छिन्नमांसादिश्च यथाक्रमं कृतसंस्कृतसंयुक्तप्रयुक्तोपयुक्तपरित्यक्तभिन्नछिन्नद्रव्यसम्यगुच्यते तत्त्वमनःसमाधानहेतुत्वात्। दर्शनज्ञानचारित्रभेदाद्भावसम्यक् त्रिविधम्, दर्शनचरणे अपि प्रत्येकमौपशमिकक्षायोपशमिकक्षायिकभेदेन त्रिविधं भवति, उपशमश्रेण्यामौपशमिकं दर्शनं, सम्यक्त्वपुद्गलोपष्टम्भजनिताध्यवसायः क्षायोपशमिकदर्शनम्, दर्शनमोहनीयक्षयात् क्षायिकदर्शनम्। तथोपशमश्रेण्यामौपशमिकचारित्रं कषायक्षयोपशमात् क्षायोपशमिकं चारित्रं चारित्रमोहनीयक्षयात् क्षायिकचारित्रमिति, ज्ञानं तु क्षायोपशमिकं क्षायिकञ्चेति द्विविधम्, चतुर्विधज्ञानावरणीयक्षयोपशमान्मत्यादिचतुर्विधं क्षायोपशमिकज्ञानम्, समस्तघातिक्षयात् क्षायिकं केवलज्ञानमिति। इदं सम्यग्दर्शनमन्तरेण यमनियमाद्याचरतां स्वजनधनभोगान् परित्यजतामपि न कर्मक्षयः, अतस्तज्जिगीषुः सम्यग्दर्शने प्रयतेतेति ॥ ३२ ॥

अथ शस्त्रपरिज्ञया परिज्ञातजीवाजीवपदार्थेन मुमुक्षुणा संसारमोक्षकारणे निर्णेतव्ये, सम्यक्त्वस्य सप्तपदार्थश्रद्धानरूपत्वात्, अतस्तन्निर्णयायाह—

## बन्धनिर्जरास्थानानि विज्ञाय निर्विकल्पो न प्रमाद्येत् ॥ ३३ ॥

**बन्धेति,** कर्मबन्धस्थानानि तन्निर्जरास्थानानि च संसारमोक्षकारणानि, स्रगादीनि हि सुखकारणतया सामान्यजनैः परिगृहीतानि कर्मबन्धहेतुत्वादास्रवरूपाणि भवन्ति, तान्येवावगततत्त्वानां सम्परित्यक्तविषयाणां वैराग्यजनकतया कर्मनिर्जरास्थानानि भवन्ति, तथा यान्येवार्हत्साधुतपश्चरणदशविधचक्रवालसामाचार्यनुष्ठानादीनि निर्जरास्थानानि, तान्येव कर्मोदयात् प्रतिरुद्धशुभाध्यवसायस्य दुर्गतिमार्गप्रवृत्तस्य जन्तोर्महाशातनावतः सातर्द्धिरसगौरवप्रवणस्य पापोपादानकारणानि भवन्ति, सर्ववस्तूनामनेकान्तात्मकत्वात्। एवञ्च यावन्ति कर्मनिर्जरार्थं संयमस्थानानि तावन्त्येव कर्मबन्धनायाऽसंयमस्थानानि भवन्ति। तदेवमास्रवद्वारायातेन कर्मणा बन्धं तपश्चरणादिना तत्प्रमोक्षञ्च विशेषेणागमानुसारेण जानीयात्—तत्र ज्ञानवज्ज्ञानस्य ज्ञानिनश्च प्रत्यनीकतया निह्नवेनान्तरायेण प्रद्वेषेणात्यन्ताशातनया विसंवादेन च ज्ञानावरणीयं कर्म बध्यते, एवं दर्शनादेरपि प्रत्यनीकादिना दर्शनावरणीयं कर्म जीवानुकम्पनतया बहूनां जीवानामदुःखोत्पादनात्सातवेदनीयं कर्म तद्विपरीतेनासातवेदनीयमनन्तानुबन्धिकषायोदयात् तीव्रदर्शनचारित्रमोहनीयाख्यं मोहनीयं कर्म, महापरिग्रहेण पञ्चेन्द्रियवधात् कुणिमाहारेण नरकायुष्कम्, मायावित्त्वेनानृतभाषणात् कूटतुलाकूटमानव्यवहारात्तिर्यगायुष्कम्, प्रकृतिविनीततया सानुक्रोशतयाऽमात्सर्यान्मनुष्यायुष्कम्, सरागसंयमेन देशविरत्या बालतपसाऽकामनिर्जरया देवायुष्कम्, कायमनोभावर्जुतयाऽविसंवादनाच्छुभनाम, विपर्ययादशुभनाम, जातिकुलबलरूपतपःश्रुतलाभैश्वर्यमदाभावादुच्चैर्गोत्रम्, जात्यादिमदात् परपरिवादाच्च नीचैर्गोत्रम्, दानलाभभोगोपभोगवीर्यान्तरायविधानादान्तरायिकं कर्म बध्यते, एत आश्रवाः। बाह्याभ्यन्तरभेदं तपो निर्जरा, इत्येवमादीनि भगवदागमानुसारेण विज्ञाय निर्विकल्पो यः सम्यक् ब्रवीति तदेव चतुर्दशपूर्वविदादयो वदन्ति न तु पाषण्डिकादय इव विरुद्धं वदन्ति, पाषण्डिनो हि स्वदर्शनानुरागितयाऽपरदर्शनमपश्यन्तः परस्परं विवदन्ते, तत्र सांख्या आत्मानं सर्वव्यापिनं निष्क्रियं निर्गुणं चैतन्यलक्षणं पञ्चविंशतितत्त्वज्ञानान्मोक्षभाजं वदन्ति, वैशेषिकास्तु द्रव्यादिषट्पदार्थपरिज्ञानान्मोक्षं ज्ञानादिगुणसमवायिनमात्मानं परस्परनिरपेक्षसामान्यविशेषात्मकञ्च तत्त्वमङ्गीकुर्वन्ति, शाक्यास्तु परलोकयायिनमात्मानमेकं नाभ्युपयन्ति सामान्यविरहि क्षणिकं वस्तु स्वीकुर्वन्ति, मीमांसकास्तु मोक्षसर्वज्ञाभावाभ्यां व्यवस्थिताः। केचित्पृथिव्याद्येकेन्द्रियजीवानपवदन्ति, अपरे वनस्पतीनामचेतनतामाहुः, एते सर्वे वादाः परस्परविरुद्धाः प्रमाणशून्याश्च, एते सर्वे तीर्थिकाः सावद्ययोगारम्भिणो नरकादियातनास्थानेषु भूयो भूयो दुःखमनुभवन्ति, तस्माद्दुर्लभं सम्यक्त्वं चारित्रपरिणामं वा प्राप्य दृढचेतास्तदनुष्ठाने प्रमादं न कुर्यादिति ॥ ३३ ॥

सम्यक्त्वज्ञानविरतीनां सत्त्वेऽपि निरवद्यतपोऽनुष्ठानमन्तरेण न पूर्वोपात्तकर्मणः क्षयो भवतीत्याह—

## निर्विद्य दुःखं कर्मज्ञो भावितचेतास्तपसा तनुं शोषयेत् ॥ ३४ ॥

**विदित्वेति,** कृषिवाणिज्यादिसावद्यक्रियानुष्ठानं याचामगोचरदुःखानुभवहेतुरिति तथा क्रोधादिना दण्डकगतस्य तज्जनितकर्मविपाकात् सप्तमनरकपृथिवीसम्भवशीतोष्णवेदनाकुम्भीपाकादियातनास्थानेष्वागामिनं दुःखञ्च परिज्ञया विज्ञाय निष्प्रतिकर्मशरीरः कर्मण उदयप्रकारैर्भद्रकर्मफलभूतैरागामिकर्मबन्धकारणैश्चानेकप्रकारतां परिज्ञाय, यथा मूलप्रकृतीनां त्रीण्युदयस्थानानि, अष्टविधं सप्तविधं चतुर्विधमिति, अष्टौ कर्मप्रकृतीर्युगपद्येन वेदयतोऽष्टविधं तच्च कालतोऽभव्यानामनाद्यपर्यवसितम्, भव्यानान्त्वनादिपर्यवसितं सादिसपर्यवसितञ्चेति । मोहनीयोपशमे क्षये वा सप्तविधम्, घातिक्षये चतुर्विधमिति । उत्तरप्रकृतीनाञ्च ज्ञानावरणीयान्तराययोः पञ्चप्रकारमेकमुदयस्थानम्, दर्शनावरणीयस्य द्वे, दर्शनचतुष्कस्योदयाच्चत्वारि, अन्यतरनिद्रया सह पञ्च । वेदनीयस्य सामान्येनैकमुदयस्थानं सातमसातं वा, न द्वयोर्युगपदुदयो विरोधात् । मोहनीयस्य दश नवाष्ट सप्त षट् पञ्च चत्वारि द्वे एकञ्चेति सामान्येन नवोदयस्थानानि । नाम्नो विंशतिरेकविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिस्सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत् त्रिंशदेकत्रिंशन्नवाष्टौ चेति द्वादशोदयस्थानानि । गोत्रस्यैकमेवोच्चनीचयोरन्यतरसामान्येनोभयस्थानमिति ज्ञपरिज्ञया विज्ञाय प्रत्याख्यानपरिज्ञया परिहर्तुकामः संसारस्वभावैकत्वभावनया 'संसार एवायमनर्थसारः कः कस्य कोऽत्र स्वजनः परो वा । सर्वे भ्रमन्तः स्वजनाः परे च भवन्ति भूत्वा न भवन्ति भूयः ॥ विचिन्त्यमेतद्भवताऽहमेको न मेऽस्ति कश्चित्पुरतो न पश्चात् । स्वकर्मभिर्भ्रान्तिरियं ममैव अहं पुरस्तादहमेव पश्चात् ॥ सदैकोऽहं न मे कश्चिन्नाहमन्यस्य कस्यचित् । न तं पश्यामि यस्याहं नासौ भावीति यो मम' ॥ इत्येवं भावितमना कष्टतपश्चरणादिना शरीरं कृशयेत्, तपोऽग्निना हि ज्ञानदर्शनचारित्रोपयोगेन सदोपयुक्तः कर्मकाष्ठं दहतीति ॥ ३४ ॥

संयमस्याविफलं तपो नान्यस्येत्यभिप्रायेणाह—

## अप्रमत्तोऽविकृष्टादिना तनु कर्म वा धुन्वीत ॥ ३५ ॥

**अप्रमत्त इति,** पापोपादानभूतं धनधान्यादिकं हिंसाद्यास्रवद्वारं वा बाह्यं रागद्वेषात्मकं विषयपिपासारूपं वाऽऽन्तरं च कर्मस्रोतो दूरीकृत्य कर्मक्षपणायासंयमपरित्यागवत एव संयमी प्रथमप्रव्रज्यावसरेऽविकृष्टेन तपसा ततः अधीतागमः परिणतार्थसद्भावो विकृष्टतपसा ततश्चाध्यापितविनेयगणः सङ्क्रामितार्थसारो मासार्धमासक्षपणादिभिस्तनुं धुन्वीत, दर्पकारिमांसशोणितमेदःप्रभृतीनां ह्रासं विदध्यात्, अथवा कर्म धुन्वीत, अपूर्वकरणादिकेषु सम्यग्दृष्ट्यादिकेषु गुणस्थानकेषु, उपशमश्रेण्या क्षपकश्रेण्या शैलेश्यवस्थायां वा क्रमतः कर्म कृशीकुर्यात् । न हीदं मिथ्यात्वाविरतिप्रमादकषाययोगिनो रागद्वेषमोहाभिभूतान्तःकरणस्य धनधान्यादिसंयोगानुवृत्तस्यानवगतमोक्षोपायस्य कदापि सम्यक्त्वं सम्भवति, यस्य हि पूर्वं भविष्यति वा बोधिलाभस्तस्यैव वर्त्तमानकालेऽपि भवति, आस्वादितसम्यक्त्वस्य कदाचिन्मिथ्यात्वोदयात् प्रच्युतौ ततोऽपार्धपुद्गलपरावर्त्तेनापि कालेनावश्यं तत्सद्भावात्, अप्रच्युतसम्यक्त्वस्य पुनरसम्भवासम्भवादिति ॥ ३५ ॥

इत्थं सम्यक्त्वं ज्ञानञ्च प्रतिपाद्य तदुभयस्य चारित्रफलत्वाच्चारित्रस्य प्रधानमोक्षाङ्गत्वाच्च लोके सारभूतत्वमिति प्रदर्शनाय प्रथमं मुनित्वाभावनिदानमाह—

## असारज्ञोऽर्थादपि प्राणिघो विपर्य्येकचर्यो वा न धर्मज्ञः ॥ ३६ ॥

असारज्ञ इति, संसारोऽयमसारो जीवितमपि कुशाग्रे जलबिन्दुरिव क्षणसम्भावितस्थितिक-मिति लोकस्य सारो धर्मस्य च ज्ञानसारो ज्ञानं मयमसारं संयमस्यापि निर्वाणं सारभूतमिति च यो न जानाति स कामादीनां दुस्त्यजत्वाद्विषयाभिलाषुकतया अर्थात्—धर्मार्थकामलक्षणं प्रयोजनमुत्प्रेक्ष्य प्राणिषः षड्जीवनिकायान् दण्डकशाताडनादिभिर्घातयति, धर्मबुद्ध्या हि शौचार्थं पृथ्वीकायं समारभते, अर्थार्थं कृषिवाणिज्यादि करोति, कामार्थमाभरणादि, अपिशब्दादनर्थान्—प्रयोजनमनुद्दिश्यैव स्वभावेन मृगयाद्या प्राण्युपघातकारिणी क्रिया करोति क्षये चायुषो मृत्वा पुनर्जायते पुनर्म्रियत इत्येवं संसारो-द्विग्नोऽपि मननोऽसन्नाम्न मुच्यते । यस्तु मोहाभावाद्विशिष्टज्ञानोत्पत्त्या मिथ्यात्वकषायविषयाभिलाष-रहितो भवति स न चतुर्गतिकं संसारं पुनः पुनरर्हति, न च मोहोऽज्ञानं मोहनीयं वा तस्य चाभावो विशिष्टज्ञानोत्पत्त्या, विशिष्टज्ञानोत्पत्तिरपि मोहाभावादितीतरेतराश्रयप्रसङ्गेन कथं विशिष्टज्ञानो-त्पत्त्या धर्मश्रवणार्थं प्रवृत्तिर्भवेदिति वाच्यम्, संशयो हि द्विविधोऽर्थसंशयोऽनर्थसंशयश्चेति, तत्रार्थो मोक्षो मोक्षोपायश्च, मोक्षे तु तावन्न संशयं, मोक्षोपाये च संशयेऽपि प्रवृत्तिर्भवत्येव, अर्थसंशयस्य प्रवृत्त्यङ्गत्वात् । अनर्थोऽपि संसारस्तत्कारणञ्च तत्र सन्देहेऽपि निवृत्तिः स्यादेव, अनर्थसंशयस्य निवृत्त्यङ्गत्वात् । यश्च सन्देहं जानाति तस्य च हेयोपादेयप्रवृत्तिः संसारपरिज्ञानञ्च भवति, अन्यथा तस्य संसारपरिज्ञानकार्यविरत्युपलम्भः स्यात्, योऽपि संसाराणवतीरं प्राप्य सम्यक्त्वं लब्ध्वाऽपि मोक्षैकहेतुं विरतिपरिणामं सत्प्रत्यामील्या निवर्त्ती सन् रमते प्रव्रज्यामभ्युपेत्याप्यप्रशस्तामेकान्त-र्योमार्गेष्वपि स इन्द्रियानुकूलवर्त्ती तीर्थिको वा गृहस्थो वा कषायाभ्यासपमलो न श्रुतचारित्रा-ख्यधर्मवेदी न रागद्वेषविरत मापुरुच्यते, तत्रैकचर्या—एकाकिनश्चरणम्, प्रशस्तेतरभेदेन द्विविधा सा, प्रत्येकं द्रव्यभावभेदतो द्वेधा, तत्र द्रव्यतोऽप्रशस्ता गृहस्थपापण्डिकादेर्विषयकषायनिमित्तमेकाकिनो विहरणम्, भावतस्त्वप्रशस्ता न विद्यते रागद्वेषविरहप्रयुक्ताया भावत एकचर्याया अप्रशस्तत्वासम्भ-वात् । प्रशस्ता तु द्रव्यतः प्रतिमाप्रतिपन्नस्य गच्छनिर्गतस्य स्थविरकल्पिकस्य चैकाकिनः सङ्घादिकार्यनि-मित्तान्निर्गतस्य, भावतस्तु रागद्वेषविरहाद्भवति, द्रव्यतो भावतश्चैकचर्याऽनुत्पन्नज्ञानानां तीर्थकृतां प्रति-पन्नतपसाम्, अन्ये तु चतुर्भङ्गमनिता । सास्य चतुर्विधनिक्षेपेषु भावसार प्रधानतया सिद्धि-सत्साधनानि ज्ञानदर्शनचारित्रतपांसि, तस्मात् किमेव सदारम्भमनुष्ठानं निष्फलं सफलं वेति सन्देहनि-मित्तमर्हद्व्याख्यातिसूक्ष्मातीन्द्रियविषयसंशयं विहायानन्यचेतसा परमसारं ज्ञानादिकं भावयेदिति ॥ २६ ॥

अथ मुनिभावहेतुमाह—

## अनारम्भस्सन्धिज्ञस्सहिष्णुरपरिग्रहस्तपसा संयमं पालयेत् ॥ ३७ ॥

अनारम्भ इति, न विद्यते आरम्भो यस्य सोऽनारम्भः, यतयो हि निखिलारम्भनिवृत्ताः, सावद्यानुष्ठानप्रवृत्तेषु गृहस्थेषु साधवो देहसाधनार्थमनवद्यारम्भजीविनो निर्लेपा एव पङ्काधारपङ्कज-वत् । एवम्भूतो यतिरार्यक्षेत्रसुकुलोत्पत्तीन्द्रियनिर्वृत्तिश्रद्धासंवेगलक्षणं मिथ्यात्वक्षयाद्युदयलक्षणं वा सम्यक्त्वापापादिहेतुकर्मविवरलक्षणं वा शुभाध्यवसायसन्धानलक्षणं वा सन्धिं स्वात्मनि व्यवस्थापित-मभिसन्धाय क्षणमपि प्रमादमकुर्वन् पापाच्चाद्विरतः परिहृतमृषावादः परस्वमगृह्णन् यथा गृहीतप्रतिज्ञा-निर्वहणायोद्यतः परीषहोपसर्गकृतशीतोष्णादिदुःखसन्दोहलाञ्छः संसारासारभावनादिभिस्तथाऽसातवेद-

नीयविपाकजं दुःखं मयैव सोढव्यं पश्चादप्येतन्मयैव सहनीयं न हि संसारोदरे तादृशः कोऽपि विद्यते यस्यासातवेदनीयविपाकापादितरोगातङ्कादयो न भवेयुः, केवलिनोऽपि मोहनीयादिघातिचतुष्टयक्षयादुत्पन्नज्ञानस्य वेदनीयसद्भावेन तदुदयाद्रोगादिसम्भवात्, यतश्च तीर्थकरैरप्येतद्बद्धस्पृष्टनिधत्तनिकाचनावस्थायातं कर्मावश्यं वेद्यम्, अन्यथा न मोक्षासम्भवादित्यादिविचारणया तथा शरीरमिदमौदारिकं सुचिरमप्यौषधाद्युपबृंहितं निःसारतरं सर्वथा सदा विशरारु मृन्मयघटादपि, सुपोषितमपि च वेदनोदये शिरउदरचक्षुःप्रभृत्यवयवा स्वत एव विनश्यन्ति, अतोऽस्योपरि कोऽनुबन्धः का वा मूर्च्छा, नास्य कुशलानुष्ठानव्यतिरेकेण सार्थक्यमिति भावयन्ननाकुलमतिरसंयतलोकनिन्दादिकं धनधान्यादिरूपं मूल्यतः प्रमाणतोऽणु वा महद्वा परिग्रहो महते भयायेति परिज्ञया विज्ञाय परित्यक्तो यः स एव मुनिः, तस्मिन्नेव परमार्थतो ब्रह्मचर्यं नवविधब्रह्मचर्यगुप्तिसद्भावात्, तस्माद्यावज्जीवं परिग्रहाभावात् क्षुत्पिपासादिकमागच्छति तन्मोक्षैकदृष्टिरुपेक्ष्य विविधतपोऽनुष्ठानविधिना संयमं परिपालयेदिति ॥ ३७ ॥

अथाष्टविधकर्मक्षपयितारमाह—

## उत्थितानिपाती सुशीलो दुर्लभं शरीरादिमाप्य कर्म परिहरेत् ॥ ३८ ॥

**उत्थितानिपातीति**, पूर्वं संयमानुष्ठानेनोत्थितः पश्चात् कर्मपरिणतिवैचित्र्येण निपाती निपतनशीलो नन्दिषेणवत्, गोष्ठामाहिलवदिति उत्थितनिपाती, यश्च नैव—उत्थितः सन् प्रवर्धमानपरिणामो न निपाती सिंहतया निष्क्रान्तः सिंहतया विहारी च गणधरादिवत्स उत्थितानिपाती, अनुत्थितः सन् निपतनशीलश्च न सम्भवति, निपतनस्योत्थानाभावेऽसम्भवात्, ये तु सम्यग्विरतिविरहिणो गृहस्थाश्शाक्यादयो वा ते न पूर्वोत्थायिनो न वा पश्चान्निपातिनः, उत्थानस्यैवाभावादिति चतुर्विधं भङ्गं भगवदुक्तं विदित्वा सदाज्ञानुसरणशीलः सदसद्विवेकी सदा गुर्वाज्ञापरिपालकः सदाचारानुष्ठाय्यष्टादशसहस्रसत्यं शीलं संयमं वा विज्ञाय तदनुवर्त्यक्षिनिमेषकालमात्रमपि प्रमादेन विरहितो गम्भीरससारार्णवपतितस्य भवकोटिसहस्रेष्वपि दुष्प्रापं भावयुद्धार्हमौदारिकशरीरं तत्रापि मनुजत्वादिकं लब्ध्वा प्राप्य च मोक्षैकगमनहेतुं भगवदुक्तं धर्मं पूर्वोदितहेतुभिर्बद्धं कर्म तदुपादानं च सर्वतः परिज्ञाय प्रत्याख्यानपरिज्ञया सर्वतः परिहरेत्, भावयुद्धार्हं हि शरीरं लब्ध्वा कश्चित्तेनैव भवेनाशेषकर्मक्षयं विधत्ते मरुदेवीस्वामिनीव, कश्चित्सप्तभिरष्टाभिर्वा भवैर्भरतवत्, कश्चिदपार्धपुद्गलपरावर्तेन घोराहत्तच्छासनाशातनकृत्तद्वत्। यस्तु कर्मोदयवशात् तथाविधं शरीरं धर्मं प्राप्यापि च्युतो हिंसानृतस्तेयादौ प्रवृत्तो गर्भादियातनास्थानेषु पुनः पुनर्गच्छति, तस्मात्पापोपादानप्रवृत्तमात्मानं संयम्य निर्ममत्वो निर्विण्णो भवेदिति ॥ ३८ ॥

अथैकचरस्य मुनित्वाभावे कारणमाह—

## अव्यक्तस्य नैकचर्या संयमात्मविराधनाप्रसङ्गात् ॥ ३९ ॥

**अव्यक्तस्येति**, अव्यक्तत्वं हि श्रुतेन वयसा च, श्रुताव्यक्तता गच्छगतानां तन्निर्गतानाञ्च, तत्र गच्छगतः श्रुताव्यक्तोऽर्थतोऽनवगताचारप्रकल्पः, तन्निर्गतश्च नवमपूर्वतृतीयवस्तु येनानधिगतं सः। वयसा चाव्यक्तो गच्छगतानामाषोडशवर्षम्, तन्निर्गतानां तु त्रिंशतः प्राक्, एवञ्च वयश्श्रुतयोभ्यामव्यक्तस्यैकचर्या न कल्पते, संयमात्मविराधनाप्रसङ्गात्। यश्च श्रुतेनाव्यक्तो वयसा च

व्यक्तस्याप्येकचर्या न कल्पते, अगीतार्थत्वेनोभयविराधनासद्भावात्, श्रुतेन व्यक्तस्य वयसा चाव्यक्तस्यापि नैकचर्या, बालतया सर्वपरिभवास्पदत्वात्। यस्तूभयव्यक्तः स सति कारणे प्रतिमाभेकाकिविहारित्वमभ्युद्यतविहारं वा प्रतिपद्यते, कारणाभावेऽस्याप्येकचर्या नानुमता, तस्या गुर्वीर्यादिविषयानेकदोषसम्भवात्, एकाकिन ईर्यापथशोधनप्रवृत्तस्य श्वाद्युपयोगाभावात्तत्र चोपयुक्तस्येर्यापथशोधनप्रवृत्त्यनुपपत्तेः, एवं सन्निपातादावपि भाव्यम्, तथाऽजीर्णवातादिव्याध्युत्पत्तौ संयमात्मविराधनायाः प्रवचनहीलनायाश्च प्रसङ्गः, तदा गृहस्थैः प्रतिजागरणे क्रियमाणेऽज्ञानतया षट्कायोपमर्दनसम्भवेन संयमबाधा, अन्यथाऽऽत्मविराधना, अतिसारादौ मूत्रपुरीषनम्भालावर्वर्त्तित्वात् प्रवचनहीलना स्यात्, गच्छान्तर्वर्त्ती चोद्यतविहारी सीदन्तमपरं बालवृद्धादिकमप्युद्यमयति, यथोक्तं तरन् समर्थो विलग्न काष्ठादिकमपि तारयति। तदेवं गच्छान्तर्वर्त्तिनोऽव्यक्तस्य बहवो गुणाः, अव्यक्तस्यैकचरस्य तु बहवो दोषा इति विभाव्याऽऽगमानुसारितया सदा गच्छान्तर्वर्त्ती भवेत्, न तु गच्छान्तर्वर्त्ती क्वचित्प्रमादस्खलिते चोदितः सदुपदेशमवगणय्य सद्धर्ममपर्यालोच्य कषायविपाककटुकतामविचार्य परमार्थमनवधार्य कुलपुत्रवत् पृष्ठतः कृत्वा वाच्याद्यादपि कोपनिघ्नः सुगैर्व्यगणितापत्तिर्गच्छान्निर्गच्छेदिति ॥ ३९ ॥

गुर्वादिना कार्यार्थं क्वचित्प्रेषितोऽपि सद्वर्त्तनः स्यादित्याह—

## गुरुप्रेपितोऽपि क्रियासूपयुक्तोऽप्रमादी स्यात् ॥ ४० ॥

गुरुप्रेषित इति, सदा गुरुकुलवासी गुर्वभिप्रायानुवर्त्तनशीलः क्वचित्कार्यादौ गुरुभिः प्रेषितो गच्छन् हस्तपादादिसङ्कोचनतो निमित्ताशुभव्यापारादिनिवर्त्तमानोऽवयवास्तनिक्षेपस्थानानि च रजोहरणादिना परिमृजेत्, उपविशन्नपि भूम्यामेकमूरुं व्यवस्थाप्य द्वितीयमुत्क्षिप्य तिष्ठेत्, निश्चलस्यासहिष्णुत्वे च भूमिं प्रत्युपेक्ष्य प्रमार्ज्य च सङ्कोचनप्रसारणे विदध्यात्, स्वपन्नपि मयूरवच्छयीत, अपरप्राणिभयात् सचेतन एकपार्श्वशायी भवेत्, एवं सर्वा क्रिया परिवर्त्तनादिका सम्प्रेक्षणपरिमार्जनपुरस्सरां कुर्वीतदेव सोपयोग क्रियामाचरतः कदाचित् सम्पातिमादय प्राणिनः कायसंस्पर्शमुपगता विमुच्यमाना यदि भवेयुस्तदाऽनाकुट्टिकया कृतत्वादैहिकभवक्षपणार्हं कर्म बध्नाति, कर्मबन्ध प्रति वैचित्र्यात्, शैलेश्यवस्थाया हि मशकादीनां कायसंस्पर्शेन प्राणत्यागेऽपि च चोपादानकारणयोगाभावान्नास्ति बन्धः, उपशान्तक्षीणमोहसयोगिकेवलिनां स्थितिनिमित्तकषायाभावात्सामयिकः, अप्रमत्तयतेर्जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतश्चाष्टौ कोटीकोटिस्थितिरिति, प्रमत्तस्य त्वनाकुट्टिकयाऽनुपेक्ष्य प्रवृत्तस्य क्वचित्प्राण्यादवयवसंस्पर्शात् प्राण्युपतापनादौ जघन्यतः कर्मबन्धः स च तेनैव भवेन क्षिप्यते, उत्कृष्टतश्च प्राक्तन एव विशेषिततरः, आगमोच्चारणमन्तरेणोपेत्य प्राण्युपमर्दने विहिते परिज्ञया परिज्ञाय दशविधप्रायश्चित्तान्यतरेण तत्कर्म परिहरेत्तु प्रमादेत, स एव चाप्रमत्तः प्रमादविपाकस्यातीतानागतवर्त्तमानकर्मविपाकस्य वा द्रष्टृत्वात्, उपशान्तकषायत्वात् समितत्वाच्च, अयमेवम्भूतोऽप्रमत्तो गुरुसमीपवासी प्रमादजकर्मणोऽन्तं विधत्ते स्त्र्यादिपरीषहप्रसङ्गेऽपि सम्यग्दृष्टित्वादकार्याकरणप्रवृत्तत्वादिपर्यालोचनया निष्प्रकम्पो भवति, आहारदानेन कायोत्सर्गादिना विषयेच्छानिवृत्तिं करोतीति ॥ ४० ॥

अथाव्यक्तस्यैकचर्यायामपायादाचार्यसेवित्वस्यावश्यकतयाऽऽचार्यान्तेवासिनो स्वरूपमाह—

## निर्विचिकित्सः श्रद्धालुर्ह्रदकल्पमाचार्यमनुगच्छेत् ॥ ४१ ॥

**निर्विचिकित्स इति**, ह्रदकल्पमिति, ह्रदो हि चतुर्विधः, तत्र प्रथमः परिगलत्पर्यागलत्स्रोता, यथा सीतासीतोदाप्रवाहह्रदः, अपरः परिगलत्पर्यागलत्स्रोता यथा पद्मह्रदः, इतरश्च न परिगलत्स्रोता पर्यागलत्स्रोताश्च, यथा लवणोदधिः, अन्यस्तु न परिगलत्स्रोता न वा पर्यागलत्स्रोता, यथा मनुष्यलोकाद्बहिस्समुद्रः, एवमाचार्योऽपि श्रुतमधिकृत्य प्रथमभङ्गपतितः श्रुतस्य दानाद्ग्रहणाच्च, साम्परायिककर्मापेक्षया द्वितीयभङ्गपतितः, कषायोदयाभावेन ग्रहणाभावात्, कायोत्सर्गादिना क्षपणोपपत्तेश्च। आलोचनामङ्गीकृत्य तृतीयभङ्गपतितः, आलोचनाया अप्रतिश्राविततत्वात्। कुमार्गं प्रति चतुर्थभङ्गं पतितः, कुमार्गस्य प्रवेशनिर्गमाभावात्। एकाचार्यमङ्गीकृत्यैतद्भङ्गयोजना बोध्या। धर्मिभेदाङ्गीकारेण तु स्थविरकल्पिकाचार्यः प्रथमभङ्गपतितः, द्वितीयभङ्गपतितस्तीर्थकृत्, तृतीयभङ्गस्त्वरस्तु यथासन्दिकः, तस्य च क्वचिदर्थापरिसमाप्तावाचार्यादेर्निर्णयार्थं गमनात्, प्रत्येकबुद्धास्तूभयाभावाच्चतुर्थभङ्गस्थाः, अत्र प्रथमभङ्गपतितो ग्राह्यः, एवंविधं पञ्चविधाचारसमन्वितमष्टविधाचार्यसम्पदुपेतं ह्रदकल्पं निर्मलज्ञानपरिपूर्णं प्राणिगणानां स्वतः परतश्च रक्षकमाचार्यमनुसरेत्, कथम्भूतो विनेय इत्यत्राह निर्विचिकित्स इति, युक्त्युपपन्नेऽप्यर्थे मोहोदयान्मतिविभ्रमो विचिकित्सा, यथा कृषीवलक्रिया सफला निष्फला च दृष्टा तथैव महानयं तपःक्लेशः सफलो निष्फलो वेति संशयो मिथ्यात्वांशानुवेधाज्ज्ञेयगहनत्वाच्च भवति, विदितसंसारस्वभावानां परित्यक्तसमस्तसङ्गानां साधूनां विषयेऽज्ञानादिप्रयुक्ता निन्दाऽपि विचिकित्सा, चित्तविक्षेपहेतुत्वात्, एवमादिविचिकित्सा यस्य भवेन्नासावाचार्यैरुच्यमाना बोधिं सम्यक्त्वाख्या लभते, तस्माद्विचिकित्सारहितः स्यात्, तद्रहितो गृहस्थो यतिर्वाऽऽचार्योक्तं सम्यक्त्वमवधारयति, अज्ञानोदयादप्रतिपद्यमानोऽपि निर्विण्ण एवं भावयति, नाहं भव्यो न मे सम्यक्त्वभावोऽस्ति, व्यक्तार्थस्याप्याचार्योक्तेरनवगमादिति, तदाचार्यस्समाधत्ते अयि साधो मा विषादं कार्षीः, भव्य एव भवान्, भव्यत्वाविनाभाविग्रन्थिभेदप्रयुक्तसम्यक्त्वस्य त्वयाऽभ्युपगमात्, अभव्यस्य भव्यत्वाभव्यत्वशङ्काया असम्भवात्, द्वादशकषायक्षयोपशमाद्यन्यतमसात्त्वप्रयुक्तविरतिपरिणतेः प्राप्तत्वाच्च, कथ्यमानपदार्थानवगतिस्तु तज्ज्ञानावरणीयकर्मप्रयुक्ता, तस्मात्तत्र श्रद्धालक्षणसम्यक्त्वमवलम्ब्यस्वेति। स्वपरसमयवेदाचार्याभावे सूक्ष्मव्यवहितातीन्द्रियपदार्थेषूभयसिद्धदृष्टान्तसम्यग्घेत्वभावे ज्ञानावरणीयसद्भावेन सम्यग्ज्ञानाभावेऽपि 'तदेव सत्यं निःशङ्कं यज्जिनैः प्रवेदित'मिति विचिकित्साविरहितः श्रद्धां विदध्यादत उक्तं निर्विचिकित्सः श्रद्धालुरिति, तत्र कस्यचित्प्रव्रज्यावसरे तदेव सत्यमिति यथोपदेशं प्रवर्त्तमानस्यानन्तरमपि प्रवर्धमानकण्डकस्य शङ्कादिराहित्यं भवति, कस्यचित्तु पूर्वं श्रद्धानुसारित्वेऽपि प्रव्रज्याप्रतिपत्त्यनन्तरमान्वीक्षिक्याद्यध्ययनत एकनयावलम्बनतोऽनन्तधर्मात्मके भगवदुक्ते पदार्थजाते यद्यदं नित्यं कथमसावनित्योऽनित्यश्चेत्कथं नित्यं, अप्रच्युतानुत्पन्नस्थिरैकस्वभावनित्यत्वस्य प्रतिक्षणविशरारुत्वलक्षणानित्यत्वेन परस्परपरिहारस्थितिलक्षणविरोधादित्यादिरूपोऽसम्यग्भावो मिथ्यात्वांशोदयात्समुन्मिषति, स च नैवं विचिन्तयति सर्वं वस्त्वनन्तधर्मात्मकम्, सर्वनयसमूहात्मकञ्च भगवद्दर्शनमतिगहनमल्पधिया श्रद्धागम्यमेव, न तु हेतुगम्यम्, एकनयाभिप्रायेणैव हेतोः प्रवृत्तेस्तस्यैकधर्मसाधकत्वात्, सर्वधर्मप्रसाधकस्य च हेतोरसम्भवादिति। तस्मादेवंविधां शङ्कां विधूय जिनोपदेशं श्रद्दधानः सदाऽऽचार्यमार्गमनुगच्छेदिति ॥ ४१ ॥

अथ तथाविधाऽऽचार्यससेवनात् कुमार्गपरित्यागो रागद्वेषाभावश्चावश्यम्भावीत्याह—

तद्युक्तोऽनभिभूतो विवेकी निराश्रवोऽकर्मा भवति ॥ ४२ ॥

तद्युक्त इति, दुर्गतिप्राप्तिहेतुभावशत्रुसमितिपिकापणिकरिपतानुष्ठानविकल सर्वकार्येषु तद्युक्त — आचार्याद्युपदेशानुवर्तनशीलोऽनुरूढनिवृत्तोपसर्गः परतीर्थिकैर्नाऽनभिभूतोऽत एव विवेकी सर्वज्ञोपदेश एव प्राणिभूतानिह लोके परमसुखसाधनसमर्थत्वात्सारभूतो नान्यः कश्चित् मातापितृभ्रातृमित्रपुत्रादि, तस्य दुर्गतिसाधनत्वेनासारत्वात्, न वा परतीर्थिकोपदेशाः सारभूताः, परस्परविरुद्धप्रवादत्वेन मिथ्यात्वमूलत्वात्, न हि तनुभुवनादिकमीश्वरकृतमिति वैशेषिकप्रवादो युक्तियुक्तः, अङ्कुरेन्द्रधनुरादीनां विस्रसापरिणामजनितानां तदुत्पत्तिनिमित्तेश्वरकारणकल्पनायामतिप्रसङ्गात्, घटादीनां दृष्टकारणव्यापारापादितजन्मनामदृष्टव्यापारेश्वरकल्पने रासभादेरपि कारणत्वं स्यादिति, तथा प्रकृतिः करोति पुरुषोऽकर्त्ता उपभुङ्क्ते इति सांख्यप्रवादोऽपि युक्तिशून्यः, अचेतनाया प्रकृतेरात्मोपकाराय क्रियाप्रवृत्त्यसम्भवात्, नित्यायाः प्रवृत्त्यसम्भवाच्च, पुरुषस्याप्यकर्तृत्वे संसारः उद्वेगो मोक्षः उत्साहो भोक्तृता च न स्यादिति, सर्वं क्षणिकं सत्त्वादिति बौद्धवादोऽपि न युक्तः, निरन्वयविनाशितायां हेतुफलभावानुपपत्तेः, सन्तानिव्यतिरेकेण सन्तानस्याभावात्सन्तानानां सर्वाभावेण तदुपपत्तिरिति कल्पनाया अप्यसम्भवादिति। चार्वाकवादस्तु भूतमात्राभ्युपगमेनात्मपुण्यपापपरलोकादीनामभावादत्यन्तगर्ह्य एवेत्येवं सारासारविवेकी स्वस्य वा तथाविधविवेचनाशक्त्यभावे आचार्योपदेशेन यथावस्थितवस्तुविवेकस्य विनाशकत्वेऽपि अर्थदर्शनादपि परतीर्थिकानिन्द्रजालकल्पानवधार्य लघुकर्माऽणुमात्रमप्यनुल्लंघिततीर्थकरोपदेशो निराश्रवः—आस्रवद्वारनिरोधं विधाय सदा कर्मरिपून्मूलने पराक्रमेत, येनाकर्मा भवति, घातिकर्मरहितो भवति, तदभावाच्च केवलज्ञानी केवलदर्शनी च भवति, स एव संसारार्णवपारदर्शी विदितवेद्यश्चेति ॥ ४२ ॥

तदेव लोके सारभूतौ संयममोक्षावभिधाय कर्मधूननोपायं सर्वज्ञप्रतिपादितमाह—

स धर्मगुरूणां वेदना प्रोच्योत्थितानां कर्मधूननमाचष्टे ॥ ४३ ॥

स इति, यो ह्यकर्मा विदितनिखिलवेद्यो भवोपग्राहिकर्मसद्भावेन मनुष्यभावव्यवस्थितोऽष्टविधकर्मधूननमावेदयति, न तु यथा यथा शाक्यादयः कुड्यादिभ्यो वैशेषिकास्त्रोलूकभावेनोपदेशः। स एवेन्द्रियाणामतीन्द्रियज्ञानिनो निखिलचराचरविज्ञातजीवादिपदार्थाः श्रुतकेवलिनो वा धर्मकथकास्त इत्यपि सूचितम्। चतुर्दिग्भ्यः समागत्य श्रुतिमतानामिति, धर्माचरणार्थं समुत्थितानामित्यर्थः, यद्वा द्रव्यतो भावतश्चोत्थिता भवन्ति, द्रव्यतः शरीरेण भावतो ज्ञानादिभिः, तत्र समवसरणस्थाः केचन उभयथा उत्थिताः शृण्वन्ति, कुमारादयो द्रव्यतो भाव्याः, भावोत्थितानां तु धर्ममावेदयति, उत्थितानामुत्थाप्य देवानां तिरश्चाम्, येऽपि कौतुकादिना शृण्वन्ति तेभ्योऽप्याचष्टे। किं कृत्वा, धर्मगुरूणां वेदनाः प्रोच्य, न्याय्यान्तरायकर्मपरिहारेण धर्ममावेदयति सति ये प्रबलमोहनीयोदयात् संयमाद्विषीदन्ति ते धर्मगुरवः, लघुकर्माणस्तु तीर्थकृदुक्तं धर्मं प्रतिपद्य तदनुष्ठानाद्बोधन्त्यादरे, धर्मगुरवो हि धर्मानुष्ठानसामर्थ्योपायैः समुद्धरोत्थितमन्थकषायशल्यापि मोहोदयाच्छन्दादिविषयेष्वासक्ता निखिलसार-

निकेतनमगारवासं शारीरमानसदुःखसन्तप्ता अपि राजकृतोपद्रवसहा अपि हुताशनदग्धसर्वस्वा अपि न परित्यजन्ति तत्रैवावस्थिताः प्राप्ते दुःखे हा तात, हा मातः हा दैव इत्येवं करुणं रुदन्तोऽपि दुःखविधूननदक्षं मोक्षसाधनं वा संयमानुष्ठानं न गृह्णन्ति, तथा नानाव्याध्याद्युपसृष्टाः परत्रापि नरकादिषु महतीर्वेदना अनुभवन्ति, गतयो हि नारकतिर्यङ्नरामरलक्षणाश्चतस्रः, तत्र नरकगतौ चतस्रो योनिलक्षाः पञ्चविंशतिकुलकोटिलक्षाः त्रयस्त्रिंशत्सागरोपमाण्युत्कृष्टा स्थितिः, वेदना परमाधार्मिकपरस्परोदीरितश्रोत्र छेदननेत्रनिष्कासनहस्तपादोत्पाटनहृदयदहनाद्यनुक्षणदारुणदुःखाना वाचामगोचरा नारकाणां भवन्ति, तिर्यग्गतौ पृथिवीकायादिजन्तूनां स्वपरशस्त्रप्रयुक्ता महत्यः शीतोष्णादिका वेदना भवन्ति। मनुष्यगतौ वेदना ईदृशा यथा 'दुःखं स्त्रीकुक्षिमध्ये प्रथममिहभवे गर्भवासे नराणां बालत्वे चापि दुःखं मललुलिततनुस्त्रीपयःपानमिश्रम्। तारुण्ये चापि दुःखं भवति विरहजं वृद्धभावोऽप्यसारः संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित्॥ बाल्यात्प्रभृति च रोगैर्दष्टोऽभिभवश्च यावदिह मृत्युः। शोकवियोगायोगैर्दुर्गतदोषैश्च नैकविधैः॥ क्षुत्तृड्हिमोष्णानिलशीतदाहदारिद्र्यशोकप्रियविप्रयोगैः। दौर्भाग्यमौर्ख्यानभिजात्यदास्यवैरूप्यरोगादिभिरस्वतन्त्रः॥' इत्यादि। देवगतावपि च्यवनवियोगकोपेर्ष्यादिप्रयुक्ता नानाविधा वेदना भवन्ति। तदेवं चतुर्गतिपतिताः संसारिणः कर्मविपाकमनेकविधमनुभवन्ति तत्सावद्यानुष्ठानानां महाभयं विहाय तदुन्मूलनाय यत्नो विधेयः। ये तु धर्मश्रवणयोग्यावस्था धर्मकथाश्रिकमासाद्य सदसद्विवेकं जानाना अधीताचारादिशास्त्रास्तदर्थभावनया परिवृद्धचरणपरिणामास्ते मुनयो यथाक्रमं शैक्षकगीतार्थक्षपकपरिहारविशुद्धिकैकाकिविहारिजिनकल्पिका भवन्ति। तस्माद्विदितवेद्यः संसारपराङ्मुखो महापुरुषमार्गानुयायी नानाविधं करुणाजनकं मातापित्रादिस्वजनविहितमाक्रन्दनं निशम्यापि महादुःखागारे गृहावासे रतिं नैव विदध्यात्। स वा दुर्लभं चरणमवाप्य यौगपद्येन क्रमेण वोदीर्णान् दुःसोढान् परीषहानधिसहमानो भोगार्थं वा धर्मोपकरणपरित्यागेन देशविरत्यादिभावावलम्बनं कुर्यात्, भोगार्थं त्यागेऽप्यन्तरायोदयात्तत्क्षणमेवान्तर्मुहूर्त्तादिना कालेन वा शरीरवियोगसम्भवात्, ततश्च पुनरनन्तेनापि कालेन पञ्चेन्द्रियत्वप्राप्तिर्दुर्लभा भवति, अतोऽशुद्धपरिणामो भूत्वा धर्मोपकरणसमन्वितोऽनुकूलप्रतिकूलपरीषहानुदीर्णान् विहाय भावनाभावितसम्यक्तितिक्षमाणः परिव्रजेत्, कर्म च मूलोत्तरप्रकृतिभेदेन विहाय तद्धूननसमर्थतपोविशेषेण क्षपयेत्, तदपि कर्मधूननं नोपकरणशरीरधूननमन्तरेण भवति, उपकरणञ्च धर्मोपकरणातिरिक्तं ग्राह्यम्, धर्मोपकरणभूतवस्त्रादेर्जीर्णत्वादिसम्भवे तत्सन्धानादावार्त्तध्यानरहितो भविष्यत्साध्यवसायी कदाचित्तृणस्पर्शशीतोष्णादिस्पर्शप्राप्तावपि द्रव्यतः उपकरणलाघवं भावतः कर्मलाघवं बुध्यमानः सम्यगधिसहेत, तदेवमधिसहमानः कर्मक्षपणायोद्यतः संसारकारणरागद्वेषकषायसन्ततेः क्षान्त्यादिना क्षयं कृत्वा समतां भावयेत्, यथा जिनकल्पिकः कश्चिदेकं वस्त्रं द्वौ वा त्रीन् बिभर्त्ति, स्थविरकल्पिको वा मासार्धमासक्षपकस्तथा विकृष्टाविकृष्टतपश्चारी प्रत्यहं भोजी कूरगडुको वा, एते सर्वेऽपि तीर्थकृद्वचनानुसारतः परस्परं निन्दया समत्वदर्शिन इति, तदेवंविधो मुनिः सर्वसङ्गेभ्यो मुक्तः सर्वसावद्यानुष्ठानेभ्यो विरतोऽनुत्तमं विशुद्धचरणपरिणामभिवया विष्कम्भितमोहनीयोदयत्वाल्लघुकर्मा प्रतिक्षणमुत्तरोत्तरं संयमस्थानकण्डकं सन्दधानो यथाख्यातचारित्राभिमुखोऽलब्धमिषपानादपरस्य स्वस्य परस्य च त्राता भवति, यथा

हि मायात्रिका उदधेरुत्तितीर्षव आसन्दीनं सिंहलादिरूपमवाप्याश्वसन्ति, तथा भावसन्धानायोत्थित साधुमवाप्यापरे प्राणिनः समाश्वसन्ति, यथा वा आदित्यादयः स्वपुटाद्यावेदनतो हेयोपादेयहानोपादानयत्नं सहकारिणो भवन्ति तथा ज्ञानसन्धानायोत्थितः परीषहोपसर्गाक्षोभ्यतयाऽऽसन्दीन साधुर्विशिष्टोपदेशदानतोऽपरेषामुपकरोति । तथा च भगवदुपदिष्टं धर्मं कुतर्कैरप्रधृष्य प्रति भावसन्धानोद्यता संयमारते प्रणोदका मोक्षनेदिष्ठा भोगाननवकाङ्क्षन्त सम्यगुत्थिता भवन्ति । ये च तथा विज्ञानाभावान्नाद्यापि सम्यगुत्थितास्ते यावद्विवेकिनो भवन्ति तावदाचार्यादिभिस्तत्परिपालनया सदुपदेशदानेन परिकर्मितमतयो विधेयाः, यथाविध्याचाराद्विक तानध्यापयेच्चारित्रञ्च ग्राहयेत्, तत्र केचित् क्षुद्रकाः शिष्या आचार्यादिभि श्रुतज्ञानं लब्ध्वा बहुश्रुतीभूता प्रबलमोहोदयादपनीतसदुपदेशा उत्कटमदत्वाज्ज्ञानादिश्रयोपशमं त्यक्त्वा ज्ञानलवगर्विता प्रसङ्गे मादृश एव कश्चिच्छब्दार्थनिर्णयाय समर्थो न सर्व इति, आचार्योऽपि बुद्धिविकलः किं जानातीति च स्वौद्धत्यमाविष्कुर्वन्ति, अपरे तु ब्रह्मचर्ये उषित्वा आचारार्थानुष्ठायिनोऽपि तामेव भगवदाज्ञां न बहुमन्यमानाः सातगौरवबाहुल्याच्छरीरबाकुशिकतामालम्बन्ते ते गौरवत्रिकान्यतमदोषाज्ज्ञानादिके मोक्षमार्गे सम्यगवर्तमाना कामैर्दग्धाः सदसद्विवेकभ्रष्टा सम्यग्दर्शनविध्वंसिनः स्वतो विनष्टा अपरानपि शङ्कामुत्पादनेन सन्मार्गाद्भ्रंशयन्ति, एते च प्राकृतपुरुषाणामपि गर्ह्या भवन्ति, तस्मादेतान् विज्ञाय मर्यादावस्थितो विषयसुखनिष्पिपासः कर्मविदारणसहिष्णुर्भूत्वा सर्वज्ञप्रणीतोपदेशानुसारेण सर्वकालं परिज्ञामयेत्, स पण्डितो गौरवत्रिकाप्रतिबद्धो निर्ममो निष्किञ्चनो निराशः एकाकिविहारितया साधुविहरणयोग्येष्वर्धषड्विंशतिदेशेषु विहरन् तिर्यङ्नरामरविहितभयाविहास्यादिचतुष्टयप्रयुक्तानुकूलप्रतिकूलान्यतरोभयोपसर्गानक्षोभ्यो नरकादिदुःखभावनयाऽवश्यकर्मोदयापादित पुनरपि मयैव सोढव्यमित्याकलय्य सम्यक् तितिक्षेत । प्राणिगणेषु दयां कुर्वन्नरक्तद्विष्टो यावज्जीवं द्रव्यादिभेदैराक्षेपण्यादिकथाविशेषैः प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहरात्रिभोजनविरतिविशेषैर्वा यथायोग्यं विभज्य धर्ममुत्थितेषु—चतुर्यामोत्थितेषु—पार्श्वनाथशिष्येषु स्वशिष्येषु सदोत्थितेषु वाऽनुत्थितेषु श्रावकादिषु धर्मं श्रोतुमिच्छत्सु पर्युपास्तिं कुर्वत्सु वा यथाऽऽत्मनो बाधा न भवेत्तथा प्रवदेत् । एवं मरणकाले समुपस्थिते संसारस्य कर्मण उत्थितभारस्य वा पर्यन्तगामी मुनिरनुद्विग्नो द्वादशवर्षसंलेखनयाऽऽत्मानं संलिख्य गिरिगह्वरादिस्थण्डिलपादपोपगमनेङ्गितमरणभक्तपरिज्ञान्यतरावस्थोपगतशरीरस्य जीवेन सार्धं यावद्भेदो भवति तावदाकाङ्क्षेत् समताम् । इत्थमेव धर्मधूननं भगवानुपदिदेशेति ॥ ४३ ॥

एवं कर्मधूननमभिधाय तत्सफलतासम्पादकमन्तकालेऽपि सम्यङ्निर्याणमभिधातुकामः कुशीलानां प्रावादुकशवानां सङ्गं दर्शनविशुद्ध्यै विहायाधाकर्मादेश्च परित्यागं कुर्यादित्याह——

## प्रावादुकयोगमुज्झित्वा सदोषमाहारादि नादद्यात् ॥ ४४ ॥

प्रावादुकेति, प्रकृष्टो वादो येषान्ते प्रावादुकाः शाक्यादय, तेषां योगः सम्बन्धस्तम्, अशनपानखादिमस्वादिमवस्त्रपात्रादिप्रदानादानादिभिस्तेषां योगं सम्यग्विजह्यात्, ते हि सावद्यारम्भारम्भिणो विहारारामतडागकूपकरणौद्देशिकभोजनादिभिर्धर्मं वदन्तः चरन्तः प्राणिसमारम्भिणोऽन्यदीयमदत्तं द्रव्यं ताम्रपाकमविगणय्यादाना केचित्परलोकमपवदन्त, केचिल्लोकं नवखण्डपृथिवीलक्षणं सप्तद्वीपा-

त्मकं ना प्रकाशयन्तः, अन्ये उत्पादविनाशयोराविर्भावतिरोभावात्मकतया लोकस्य नित्यतां सरित्समुद्रादेर्निश्चलतामाविष्कुर्वन्त, इतरे च लोकस्य सादिसपर्यवसितत्वमीश्वरकर्तृकत्वञ्चाभिदधानाः परे यादृच्छिकत्वमन्ये भूतविकारजत्वमपरे चाव्यक्तप्रभवत्वं लोकस्य जल्पन्तः स्वतो नष्टा अन्यानपि विनाशयन्ति, एते ह्येकान्तमङ्गमसिवा न स्वाभिमतं साधयितुं पारयन्ति, अस्तित्वस्य नास्तित्वस्य वा साधनस्यैकान्तिकमतेऽसम्भवात्, यदि ह्येकान्तेनैव लोकोऽस्ति तर्ह्यस्तिना सह नियतसामानाधिकरण्याद्यदस्ति तल्लोकः स्यात्, तथा च तत्प्रतिपक्षोऽप्यलोकोऽस्तीत्यतो लोक एवालोकः स्यात्, व्याप्यसद्भावे व्यापकसद्भावस्यावश्यम्भावित्वाच्चतश्चालोकाभावप्रसङ्गेन तत्प्रतिपक्षस्य लोकस्यापि सुतरामभावः स्यात्। लोकत्वस्यास्तित्वव्यापकत्वे च घटपटादेरपि लोकत्वं स्यात्, व्याप्यस्य व्यापकसद्भावनान्तरीयकत्वात्। एवं नास्ति लोक इति ब्रुवन् भवान् विभक्ति नास्ति चेति पर्यनुयुक्तो यद्यस्तीति पक्षमङ्गीकरोति तर्हि स च यदि लोकान्तर्गतस्तर्हि नास्ति लोक इति नैव वक्तुं शक्येत यदि तु बहिर्भूतस्तर्हि खरविषाणवदसद्भूतत्वात् कस्योत्तरं दातव्यं भवेदित्येवमेकान्तवादा मर्धे स्वयमभ्यूह्य निराकार्याः, निराकृताश्च मदीयतत्त्वन्यायविभाकरसम्मतितत्त्वसोपानयोर्विशदतया। एवञ्च वस्तुना स्वपरद्रव्यक्षेत्रकालभावैः सदसदात्मकत्वे भगवदुक्तेऽभ्युपगम्यमाने न कश्चिद्दोषसंसर्गः समुपैति। इत्थमेव च धर्मः व्याख्यातो भवति, न त्वेकान्तवादिना धर्मः व्याख्यातः, ते हि न समनोज्ञाः, जीवाजीवतत्त्वपरिज्ञानपूर्वकानुष्ठानवतामेव समनोज्ञत्वात्, न हि वनवासादिना तैस्समतेन कश्चिद्धर्मः, अरण्यग्रामादीनां धर्मेऽनिमित्तत्वात्, किन्तु तत्त्वं परिज्ञाय व्रतविशेषाणामनुष्ठानादेव, तदेव भावादुकसंसर्गं त्यक्त्वा विशुद्धसम्यक्त्वं सर्वसावद्यवर्जनाय कृतप्रतिज्ञो भिक्षुर्भिक्षायायपरकारणाय वा विहरेत्, तथाविधं ग्रामादेर्बहिर्वा यत्र कुत्रचिद्वसन्तं विहरन्तं वा यतिमुपगम्य कश्चिद्गृहपतिः साध्वाचारानभिज्ञ एषु सपरित्यक्तनिरिक्तारम्भेषु निष्क्रिष्टमभयमतोऽहमेतेभ्यो दास्यामीत्यभिसन्धाय भो श्रमण अहं संसारार्णवं समुत्तितीर्षुः, युष्मन्निमित्तमशनपानादिकं भूतोपमर्दनक्रयणादिना सङ्गृहीतं समृहाणाहत्य तुभ्यं ददामि, गृहादिकमपि युष्मदर्थं रचयामि संस्करोमि वेत्येवं यदि निमन्त्रयेत्तदा सूत्रार्थविशारदः साधुर्मदर्थं प्राण्युपमर्दादिना विहितं न मे कल्पते, एवम्भूतानुष्ठानाद्विरतत्वादतो भवदीयमेवम्भूतं वचनं नाद्रिय इति निराकुर्यात्, तथा प्रच्छन्नदोषमाहारादिकं साध्वर्थमारचितं स्वमत्या परव्यपदेशाया तीर्थकृदुपदिष्टोपायेनान्येन वा येनकेनचित्प्रकारेण विदित्वा नाहरेत्। एवं नरकादिगतियातनाभिज्ञः संयमविधिवेदिनमुचितानुचितावसरज्ञमान्तप्रान्ताहारतया निस्तेजस्कमविकानसौच्मयौष नावस्थं सम्यक् त्वक्त्राणाभावाच्छीतस्पर्शवेपमानगात्रं कश्चिद्गृहपतिः शीतस्पर्शासहिष्णुं मत्वा भक्तिकरुणालिङ्गितचेता यदि ब्रूयात्, मुने किमिति सुप्रज्वालितमाशुशुक्षणिं न सेवस इति, तदा महामुनिरग्निकायज्वालनं स्वतो ज्वलितादिसेवनं न कल्पत इति प्रतिबोधयेदिति ॥ ४४ ॥

सति कारणे मरणविशेषावलम्बनं कार्यमित्याह—

## अल्पसत्त्वः कारणे वैहानसादिकमाश्रयेत् ॥ ४५ ॥

अल्पसत्त्व इति, मुनेर्हि द्वादशधोपधिर्भवति, सापि प्रमाणतः परिमाणतो मूल्यतश्चाल्पा, शीतापगमे शरीरोपकरणकर्मणि लाघवमापादयन्नेककल्पपरित्यागी द्विकल्पपरित्यागी कल्पत्रयपरित्यागी

वा मुखवस्त्ररजोहरणमात्रोपधिर्भवति, कायक्लेशस्य तपोविशेषत्वात्, यस्त्विदं भगवदुपदिष्टं न सम्यग् जानात्यल्पसत्त्वतया स रोगातङ्कैश्शीतस्पर्शादिभिर्वा कृपागुपसर्गैर्वाऽऽक्रान्तोऽसहिष्णुर्भक्तपरिज्ञेङ्गित-मरणपादपोपगमनानामुत्सर्गतः कार्यत्वेऽपि कालक्षेपासहिष्णुतया तन्नरकाशाऽऽपद्यादिषु वैहानसं गार्द्धपृष्ठं वा मरणमाश्रयति । ननु वैहानसादिमरणं बालमरणतयाऽनन्तनैरयिकभवग्रहणनिदानमुक्तमागमे तत्कथमत्र तस्याभ्युपगम इति चेदुच्यते, स्याद्वादिना हि न किञ्चिदेकान्तेन प्रतिषिद्धमभ्युपगतं वा मैथुनमेकं परिहृत्य, किन्तु द्रव्यक्षेत्रकालादिविशेषाश्रयेण यत्प्रतिषिध्यते तदेवाभ्युपगम्यते, कालहास्य मुनेरुत्सर्गोऽप्यगुणाय, अपवादोऽपि गुणाय भवति, दीर्घकालं संयमं परिपाल्य संलेखनाविधिना कालपर्यायेण भक्तपरिज्ञादिमरणं गुणभूतमपीदृगवसरे वैहानसादिमरणं गुणाय, अस्यापि कालपर्यायत्वात्, बहुकालपर्यायेण यावन्मात्रकर्मणः क्षयस्तावतामल्पेनापि कालेन क्षयात्, अनेनापि वैहानसादिमरणेनानन्ता सिद्धाः सेत्स्यन्ति चातः इदं विगतमोहानां कर्त्तव्यतयाऽऽश्रयोऽपायपरिहारितया हितश्चेति ॥ ४५ ॥

अथ भक्तप्रत्याख्यानादिमरणविशेषानाह—

## कृताभिग्रहविशेषोऽशक्तौ भक्तप्रत्याख्यानादिकं कुर्यात् ॥ ४६ ॥

कृतेति, वस्त्रत्रयेण व्यवस्थितः स्थविरकल्पिको जिनकल्पिको वा भवेत्, पात्रतृतीयेन वस्त्रद्वयेन संयमे व्यवस्थितस्तु नियमेन जिनकल्पिकपरिहारविशुद्धिकयथालन्दिकप्रतिमाप्रतिपन्नानामन्यतमो भवेत्, तत्र यस्य भिक्षोरेवंविधः प्रकल्पो भवति यथा विकृष्टतपसा कर्त्तव्याशक्तो वातादिक्षोभेण वा यदा ग्लानस्तदाऽनुचितकर्त्तव्यसमर्थैस्तव वयं वैयावृत्त्यं यथोचितं कुर्मः इति समुपस्थितैरनुपारिहारिककल्पस्थितादिभिः क्रियमाणं वैयावृत्त्यमभिकाङ्क्षयिष्यामीति स तमाचारमनुपालयन् कुतश्चिद्ग्लायमानोऽपि प्रतिज्ञालोपमकृत्वा समाहितान्तःकरणवृत्तिः शरीरपरित्यागाय भक्तप्रत्याख्यानं कुर्यात् । यश्च धृतिसंहननादिबलोपेतो लघुकर्मा सपात्रैकवस्त्रधारी न मे संसारे कश्चिद्वस्तुत उपकारकत्वेनास्ति नाहमप्यन्यस्य दुःखापनयनसमर्थः, प्राणिनां स्वकृतकर्मफलेश्वरत्वात्, न वा नरकादिषु त्राणतयाऽऽत्मनश्शरण्यो द्वितीयोऽस्तीत्यतो यद्रोगादिकमुपतापकारणमापद्यते तन्मयैव कृतमपरशरणनिरपेक्षो मयैव सोढव्यमित्येकत्वभावनाध्यवसाय्याहारोपकरणलाघवं गतोऽपचितमांसशोणितो ग्लानो भवति स रूक्षतपस्तप्तं शरीरं यथेष्टनावश्यकक्रियाव्यापारासमर्थं मन्यमानश्चतुर्थषष्ठाष्टमाचाम्लादिकयाऽऽनुपूर्व्याऽऽहारं संक्षिपेत्, नात्र द्वादशसंवत्सरसंलेखनानुपूर्वी ग्राह्या, ग्लानस्य तावन्मात्रकालस्थितेरभावात्, अतस्तत्कालयोग्यया ऽऽनुपूर्व्या द्रव्यसंलेखनार्थमाहारं निरुन्ध्यात् । षष्ठाष्टमदशमद्वादशादिकयाऽऽनुपूर्व्याऽऽहारं संवर्त्य कषायान् प्रतनून् कृत्वा नियमितकायव्यापारः प्रतिदिनं साकारभक्तप्रत्याख्यायी बलयति रोगातङ्केऽभ्युद्यतमरणोद्यमं विधाय शरीरसन्तापरहिते स्थण्डिलविशेषे तृणान्यास्तीर्य पूर्वाभिमुखसंस्तारकगतः करतलललाटस्पर्शिधृतरजोहरणः कृतसिद्धनमस्कारः स्वकृतचर्यवर्तनादिक्रियो यावज्जीवं चतुर्विधाहारनियमनमित्वरमरणं कुर्यात् । यस्तु प्रतिमाप्रतिपन्नोऽहमन्येषां प्रतिमाप्रतिपन्नानामेव किञ्चिद्दास्यामि तेभ्यो वा ग्रहीष्यामीत्येवमाकारमभिग्रहं गृह्णीयात् स सचेलोऽचेलो वा भिक्षुः शरीरपीडायां सत्यामस्यां वाऽऽयुःशेषतामवगम्योद्यतो मरणाय ग्लायामि खल्वहमिदानीं न शक्नोमि

रूक्षतपोभिश्शरीरमानुपूर्व्या वोढु यस्मादाहार सवर्त्तय इत्याद्यभिप्रायविशेष. स्थण्डिलविशेषे तृणानि परिस्तीर्य तत्रारुह्य सिद्धसमक्ष स्वत एव पञ्चमहाव्रतारोपण करोति, ततश्चतुर्विधमप्याहार प्रत्याख्याय पादपोपगमनाय शरीर प्रत्याचष्टे, उत्तप्यमानकायोऽपि मूर्च्छन्नपि मरणसमुद्धातगो वा भक्ष्यमाणमासशोणितोऽपि क्रोष्ट्रादिभिर्महासत्त्वतयाऽऽशसितमहाफलविशेषस्ततो द्रव्यतो भावतोऽपि शुभाध्यवसायस्थानान्न स्थानान्तर यायादिति दिक् ॥ ४६ ॥

अथ सर्वतीर्थकृत् कल्पानुसारेण तीर्थकृत्तपःकर्मवर्णनात्मकोपधानश्रुताभिधानायाभ्युद्यतमरणावस्थितो भगवतस्तीर्थकृत समवसरणस्थस्य प्राणिहिताय धर्मदेशना विदधतो ध्यान कुर्यादित्येतत्प्रतिपादनार्थं च श्रीवीरवर्धमानस्वामिनश्चर्यादिकमाचष्टे—

## श्रीमहावीरचर्याविधिमनुस्मरेत् ॥ ४७ ॥

**श्रीमहावीरेति,** भगवान् श्रीवर्धमानस्वामी उद्यतविहार प्रतिपद्य सर्वालङ्कार परित्यज्य पञ्चमुष्टिक लोच विधाय हेमन्ते मार्गशीर्षकृष्णदशम्या प्राचीनगामिन्यां छायाया प्रव्रज्या गृहीत्वेन्द्रक्षिप्तैकदेवदूष्ययुत कृतसामायिकप्रतिज्ञ आविर्भूतमन पर्यायज्ञानोऽष्टविधकर्मक्षयार्थं तीर्थप्रवर्तनार्थञ्चोत्थायानन्तरमेव विहरन् मुहूर्तशेषे दिवसे कुण्डग्रामात्कर्मारग्राममवाप्य नानाविधाभिग्रहोपेतो घोरान् परीषहोपसर्गानधिसहमानो महासत्त्वतया म्लेच्छानप्युपशम नयन् द्वादशवर्षाणि साधिकानि छद्मस्थो मौनव्रती तपश्चचार, देवदूष्य मध्यस्थवृत्त्यैवावधारित न तु भोगलाभेच्छया, साधिकसवत्सरकाल तद्धृतमासीत्, ततस्तद्व्युत्सृज्याचेलोऽभूत्, ईर्यासमित्या गच्छन् वसतिषु वा व्यवस्थितो बालकवनितादिभि क्रियमाणोपसर्गोऽपि वैराग्यमार्गव्यवस्थितो धर्मध्यान शुक्लध्यान वा ध्यायति, कुतश्चिन्निमित्ताद्गृहस्थैः पृष्टोऽपृष्टो वा न वक्ति न वा मोक्षपथमतिवर्तते ध्यान वा, अभिवादयतो नाभिभाषते नाप्यनभिवादयद्भ्य कुप्यति, अनार्यदेशादौ पर्यटननार्यैः कृतप्रतिकूलोपसर्गोऽपि नान्यथाभाव याति तथा पृथिव्यादीनि चित्तवन्तीत्यभिज्ञाय तदारम्भ परिवर्ज्य विहरति स्म, नापि मृषावादादिकमङ्गीचकार, वदेव हिंसादिपरिहारेण स परमार्थदर्शभूत्, आधाकर्मादिसेवनयाऽष्टविधकर्मणो बन्ध दृष्ट्वा नासौ तत्सेवते परवस्त्रपात्रादीन वाऽऽसेवते नास्य रसेषु गार्द्ध्यम्, नापि काष्ठादिना गात्रस्य कण्डूव्यपनोद विधत्ते मार्गादौ केनचित्पृष्टो न ब्रूते मौनेन गच्छत्येव पेक्षकम्, अध्वनि शिशिरे सति बाहू प्रसार्यैव पराक्रमते न तु शीतार्दित सङ्कोचयति नापि स्कन्धेऽवलम्ब्य तिष्ठतीत्येव चर्या भगवतो विज्ञाया येऽपि मुमुक्षवः साधवोऽशेषकर्मक्षयाय गच्छेयुरिति ॥ ४७ ॥

तस्य वसत्यादिविधानमाह—

## चरमपौरुषीप्राप्तिस्थान एवाप्रमादी समो ध्याता ॥ ४८ ॥

**चरमेति,** अभिग्रहविशेषाभावात्तत्रैव शून्यगृहे वा सभायां वा प्रपाया वाऽऽपणेषु वा श्मशाने वृक्षमूले वा चरमपौरुषी भवति तत्रैवाऽनुज्ञाप्य स्थितो जगदवपेक्षया स मुनिर्निश्चितमना प्रकर्षेण त्रयोदशवर्षं यावत्समस्ता रात्रिं दिनमपि यतमानो निद्रादिप्रमादरहितो यथा भगवतो द्वादशसवत्सरेषु मध्येऽस्थिकग्रामे व्यन्तरोपसर्गान्ते कायोत्सर्गव्यवस्थितस्यैवान्तर्मुहूर्त्त यावत् स्वप्नदर्शनाभ्यासिनः सङ्क-

निद्राप्रमाद आसीत् ततोऽपि चोत्थायात्मान कुशलानुष्ठाने प्रवर्त्तयति, यत्रापीषच्छय्याऽऽसीत्तत्रापि न स्वापाभ्युपगमपूर्वकं शयित , तथा निद्राप्रमादादभ्युत्थितचित्त समारपातायाथ प्रमाद इत्येनमव-गच्छन्नप्रमत्तः स्वयमोत्थानेनोत्थाय यदि तत्रावस्थितस्य पुनश्चिन्निद्राप्रमाद स्यात्तत्तस्मान्निष्क्र-म्यैकदा शीतकालरात्र्यादौ बहिश्चङ्क्रम्य मुहूर्त्तमात्र निद्राप्रमादापनयनार्थं ध्याने स्थितवान्, तत्रैव वसति-स्थानेषु सोऽहिनकुलादिकृतान् गृध्रादिकृतान् चौरादिकृतान् ग्रामरक्षकादिकृतानुकूलप्रतिकूलरूपान् भीमानुपसर्गान् समितस्सदाऽधिसहते, दुष्प्रणिहितमानसैः को भवानिति पृष्ट उत्तराप्रदानेन कषा-यितैर्यैर्वि दण्डमुष्ट्यादिताडनतोऽनार्यैरत्रमाक्रियते सम्यग्ध्यानोपगतचित्तः सन् सम्यक्तितिक्षते, कदाचि-द्भिक्षुरस्मीत्येतावन्मात्र भगवतोत्तरित निशम्य मोहात्‌ वा यदि तूर्णमस्मात्स्थानान्निर्गच्छेति प्रयुक्तो भग-वानचियत्तावमह इति कृत्वा निर्गच्छति, यदि वा न निर्गच्छति किन्तु सोऽयमुत्तमो धर्म इति कृत्वा कषायितेऽपि तस्मिन् गृहस्थे स तूष्णीम्भावव्यवस्थितो न ध्यानात् प्रच्यवते । तथा लाढेषु वज्रभूमि-शुभ्रभूमिस्वरूपेण द्विरूपेषु विहरस्तज्ज्ञानपदाचरितान् बहून् प्रतिकूलानुपसर्गान् समतया सहमान षण्मासावधि काल स्थितवान् । एव कासश्वासादिद्रव्यरोगाणा देहजाना भगवतोऽभावेऽप्यसद्वेदनी-यादिभिर्भावरोगैः स्पृष्टोऽस्पृष्टोऽप्यवमौदर्यं विधत्ते, न वा श्वभक्षणादिभिरागन्तुकद्रव्यरोगैः स्पृष्टोऽपि द्रव्यौषधानुपयोगत पीडोपशम प्रार्थयति, आहारादिकमपि षष्ठेनाष्टमेन दशमेन द्वादशेन वा कदाचि-च्छरीरसमाधिं प्रेक्षमाणो भुङ्क्ते ग्रासैषणादोषपरिहारेण बुभुक्षार्थिनां केषामपि पथि वृत्तिव्यवच्छेदम-कुर्वन्नन्वेषित ग्रास सम्यग्योगप्रणिधानेनासेवते, न स्वलब्धेऽपर्याप्तेऽशोभने ग्रास आत्मानमाहार-दातारं वा जुगुप्सते, लाभेऽलाभे वा स उत्कटुकाद्यासनस्थोऽन्तःकरणविशुद्धिं प्रेक्षमाणो लोकत्रयवर्त्ति-भावपदार्थान् द्रव्यपर्यायनित्यानित्यादिरूपतया धर्मेण शुक्लेन वा ध्यायति, न वा मनोऽनुकूलेषु राग प्रतिकूलेषु द्वेष करोति, छद्मस्थोऽपि सकृदपि न कषायादिक विधत्ते, स्वयमेव तत्त्वमभिसमागम्य विदित-ससारस्वभाव स्वयम्बुद्ध आत्मकर्मक्षयोपशमोपशमक्षयलक्षणया शुद्ध्या मनोवाक्कायात्मक योग सुप्रणि-हित विधाय शान्तो मायादिरहितः समितो गुप्तश्च शुक्लध्यानात्कृतघातिक्षय केवली सन् तीर्थप्रवर्त्तनायो-द्यतवानिति, भगवदाचीर्णं नवमब्रह्मचर्य्यं सच्चिन्त्यापरेणापि मुमुक्षुणात्महितार्थं पराक्रम्यतेति ॥ ४८ ॥

अथाग्रश्रुतस्कन्ध पूर्वोक्ताचारायन्तेपामिधायिनमारभते—

## अथाग्रश्रुतस्कन्धः ॥ ४९ ॥

**अथेति,** नवमब्रह्मचर्याध्ययनात्मकप्रथमश्रुतस्कन्धसारार्थवर्णनानन्तरमित्यर्थः, अग्रश्रुतस्कन्ध इति, अग्रस्य नामादिभिर्निक्षेपे कर्त्तव्ये नामस्थापनयोः प्रसिद्धत्वाद्द्रव्यनिक्षेपेऽपि ज्ञशरीरभव्यशरीरद्रव्यनिक्षे-पस्य स्फुटत्वाच्च व्यतिरिक्त द्रव्याग्र सचित्ताचित्तमिश्रभेदेन त्रिविध भाव्यम्, एतेषा यदग्र तद्द्रव्याग्रम् । अवगाहनाग्र यद्यस्य द्रव्यस्याधस्तादवगाढ तदवगाहनाग्र यथा मनुष्यक्षेत्रे मन्दरवर्जाना पर्वतानामुच्छ्रय-चतुर्भागो भूमाववगाढ इति, मन्दराणान्तु योजनसहस्रमिति । आदेशाग्रञ्च यत्र परिमितानामादेशो दीयते यथा त्रिभिः पुरुषैः कर्म कारयति तान् वा भोजयतीति । कालाग्रमधिकमासकः । क्रमाग्र परिपाट्या यदग्र तत्, एतद्द्रव्यक्षेत्रकालभावतो भवति, एकाणुकाद्व्यणुक ततस्त्र्यणुकमित्यादि द्रव्याग्रम् । एकप्रदेशा-वगाढाद्द्विप्रदेशावगाढ ततस्त्रिप्रदेशावगाढमित्यादि क्षेत्राग्रम् । एकसमयस्थितिकाद्द्विसमयस्थितिक ततस्त्रि-

समयस्थितिकमित्यादि कालाग्रम्, एकगुणकृष्णाद्विगुणकृष्णं ततस्त्रिगुणकृष्णमित्यादि भावाग्रमिति । गणनाग्रमेको दश शतं सहस्रमित्यादि । सञ्चयाग्रं सञ्चितस्य द्रव्यस्य यदुपरि तत्सञ्चयाग्रं यथा ताम्रोपस्करस्योपरि शङ्खः । भावाग्रं तु प्रधानप्रभूतोपकाराग्रभेदेन त्रिविधम्, आद्यं सचित्तादिभेदेन त्रिविधं सचित्तमपि द्विपदादिभेदात्त्रिधा, तत्र द्विपदेषु तीर्थकरश्चतुष्पदेषु सिंहः, अपदेषु कल्पवृक्षः, अचित्तं वैडूर्यादि, मिश्रं तीर्थकर एवालङ्कृतः । प्रभूताग्रन्त्वापेक्षिकम्, यथा जीवपुद्गलसमयद्रव्यप्रदेशपर्यवेषु यथोत्तरमग्रम्, पर्यायाग्रं तु सर्वाग्रम् । उपकाराग्रञ्च पूर्वोक्तस्य विस्तरतोऽनुक्तस्य च प्रतिपादनादुपकारे यद्वर्त्तते तत्, यथा दशवैकालिकस्य चूडे, द्वितीयो वा श्रुतस्कन्ध आचारस्य, स एवात्र च सारतया व्याख्यायत इति ॥ ४९ ॥

तस्य पञ्च चूडा भवन्ति पिण्डैषणाया आरभ्यावग्रहप्रतिमापर्यन्तं प्रथमचूडा सप्तसप्तैका द्वितीया, भावना तृतीया, विमुक्तिश्चतुर्थी, आचारप्रकल्पो निशीथः पञ्चमीति तत्र प्रथमां वद्न् पिण्डैषणामाह—

## कारणैराहारार्थी प्राण्यादिसंसक्तं रजोऽवगुण्ठितमार्द्रं नाहरेत् ॥ ५० ॥

**कारणैरिति,** वेदनावैयावृत्त्येर्यासंयमप्राणप्रत्ययधर्मचिन्तनान्यतमैः कारणैरित्यर्थः, कारणैरेभिर्मूलोत्तरगुणधारी नानाविधाभिग्रहरतो भावभिक्षुराहारग्रहणं करोति, अहमत्र भिक्षां लप्स्य इति भिक्षालाभप्रतिज्ञया गृहस्थगृहानुप्रविष्टस्तत्र चतुर्विधमप्यशनाद्याहारं प्राणिपनकजीवसंस्पृष्टं गोधूमादिबीजैर्दूर्वाङ्कुरादिहरितैः संसक्तं सचित्तेन रजसा परिवेष्टितं शीतजलच्छिन्नमीदृशञ्चा यदप्यनेषणीयं लब्धं सदपि नोत्सर्गतो गृह्णीयात्, अपवादतस्तु दुर्लभद्रव्यं साधारणद्रव्यलाभरहितं सरजस्कादिभावितं वा क्षेत्रं दुर्भिक्षादिकालं ग्लानादिभावं ज्ञात्वाऽल्पबहुत्वं पर्यालोच्य गीतार्थो गृह्णीयात्, कदाचिदनाभोगात्संसक्तादिकं गृहीतश्चेत्तदा तदादायाण्डादिदोषरहिते आरामादिके स्थण्डिले गत्वा प्रत्युपेक्षणप्रमार्जनादिविधिना तत्परिष्ठापयेदिति ॥ ५० ॥

अगारिगृहप्रवेशे किं कश्चिन्नियमोऽस्ति न वा, अस्तीत्याह—

## तीर्थिकगृहस्थापरिहारिकैर्न प्रविशेत् ॥ ५१ ॥

**तीर्थिकेति,** अन्यतीर्थिकैः सरजस्कादिभिः गृहस्थैः पिण्डोपजीविभिर्धिग्जातिप्रभृतिभिः पार्श्वस्थावसन्नकुशीलयथाच्छन्दरूपैरपरिहारिकैः सहागारिगृहं न प्रविशेत्, उपलक्षणेन पूर्वं प्रविष्टो वा न निष्क्रामेदित्यपि विवक्षितम् । अन्यतीर्थिकैर्गृहस्थैर्वा सह प्रवेशे ते पृष्ठतो वा गच्छेयुरग्रतो वा, अग्रतो यदि साध्वनुमत्या गच्छेयुस्तर्हि तत्कृतेर्यापथिकः कर्मबन्धः प्रवचनलाघवञ्च स्यात्, तेषां वा स्वजात्युत्कर्षो भवेत् । अथ पृष्ठतो गच्छेयुस्तर्हि तत्प्रद्वेषः, दातुर्वाऽभद्रकस्य स्यात्, लाभं संविभज्य दाना प्रदानादवमौदर्यादौ दुर्भिक्षादौ प्राणवृत्तिर्न स्यादित्यादयो दोषा भवेयुः, अपरिहारिकेण सह प्रवेशेऽनेषणीयभिक्षाग्रहणाग्रहणकृता दोषाः स्युः, अनेषणीयग्रहणे हि तत्प्रवृत्तिरनुज्ञाता भवेत्, अग्रहणे तु तैः सह क्लेशादयो दोषाः स्युरतो दोषानेतान् विज्ञाय साधुर्गृहपतिकुलं न तैः सह प्रविशेन्नापि

[illegible]

अविशुद्धिकोटिमाह—

**श्रमणब्राह्मणातिथिकृपणवन्दिप्रायानुद्दिश्य समारम्भेण वा कृतम-ग्राह्यम् ॥ ५२ ॥**

**श्रमणेति,** पञ्चविधास्ते निर्ग्रन्थशाक्यतापसगैरिकाजीविका इति, ब्राह्मणाः प्रसिद्धाः, अतिथयो भोजनकालोपस्थायिनोऽपूर्वो वा, दरिद्राः कृपणाः वन्दिप्रायाः एतान् बहून् द्विधा श्रमणाः पञ्चधा ब्राह्मणा इत्यादिरूपेण प्रविगणय्य यत्कृतमाहारादि तथा प्राणिसमारम्भेण वा विहितमप्रासुकमनेषणीयं मन्यमानो लाभे सत्यपि न गृह्णीयात् ॥ ५२ ॥

ग्राह्यमाहारमाह—

**अन्यकृतं बहिर्निर्गतमात्मीकृतं परिभुक्तमासेवितमनिन्द्यकुलेषु प्रासुकमेषणीयं ग्राह्यम् ॥ ५३ ॥**

**अन्येति,** यतो ह्यन्येन कृतमन्यार्थं वा कृतं तेनैव कृतं बहिर्गृहाभिर्गतमनिर्गतं वा दात्रा स्वीकृतमस्वीकृतं वा दात्रैव परिभुक्तमपरिभुक्तं वाऽऽस्वादनेन तेनैव सेवितमसेवितं वा यद्यप्रासुकमनेषणीयञ्च भवति सर्वनिन्द्यकुलजातमपि तत् साधूनामग्राह्यमतः प्रासुकमेषणीयमेवान्यार्थकृतबहिर्निर्गतात्मीकृतपरिभुक्तासेवितलक्षणमाहारादि लाभे सति ग्राह्यं भवति, यत्र कुलेषु प्रतिदिनं स्वपरपक्षेभ्यो दीयते भक्तादि नित्यलाभाच्च सर्वो यत्र भिक्षार्थं प्रविशति तत्र साधुर्न भक्तार्थं प्रविशेत्, बहुभ्यो दातव्यमिति हि ते पाकं कुर्युस्तथा च षट्कायवधः, अल्पे च पाके तदन्तरायं कृतः स्यादिति। तथा चोद्गमोत्पादनग्रहणैषणासंयोजनाप्रमाणेङ्गालधूमकारणैः सुपरिशुद्धपिण्डग्रहणात्साधोर्ज्ञानाचारसम्पन्नता, दर्शनचारित्रतपोवीर्याचारसम्पन्नता च स्यात्। तत्र चर्मकारदास्यादि जुगुप्सितकुलानि निंद्यकुलानि, तद्विपर्ययभूतेषु राजराजन्यारक्षिकेक्ष्वाकुक्षत्रियवैश्यादिकुलेषु प्रासुकमेषणीयं लभ्यमानमाहारादि ग्राह्यमिति ॥ ५३ ॥

पुनराहारग्रहणयोग्यक्षेत्रादीन्याह—

**यत्र सङ्खडिस्तत्र न गच्छेत् ॥ ५४ ॥**

**यत्रेति,** पितृपिण्डेन्द्रस्कन्दरुद्रमुकुन्दयक्षनागभूतस्तूपचैत्यादिनानाविधोत्सवस्थानेषु न गच्छेदाहारार्थं सर्वेभ्यः श्रमणब्राह्मणादिभ्यो दीयत इति मन्यमानः, यत्र वा सर्वेभ्यो न दीयते तत्रापि जनाकीर्णमिति मन्यमानः। एवम्भूते सङ्खडिविशेषे न प्रविशेत्, तथा सङ्खण्ड्यन्ते विराध्यन्ते प्राणिनो यत्र सा सङ्खडिः, ग्रामनगरखेटकर्बटमडम्बपत्तनादिक्षेत्रेषु यत्र प्राणिविराधना भवेत् प्रकर्षेणार्धयोजनमात्रे क्षेत्रे, तां सङ्खडिमवेत्य सङ्खडिप्रतिज्ञया न तत्र गमनमालोचयेत्, तत्र गच्छतो ह्यनेकाधाकर्मौद्देशिकमिश्रजातक्रीतकृतोद्यतमाच्छेद्यादि सूत्राभ्याहृतान्यतमदुष्टाहारादि लाभो भवेत्, स च कर्मोपादानात्मक एव। एवं जातनामकरणविवाहादिका पुरस्सङ्खडिः, मृतसङ्खडिः पश्चात्सङ्खडिः, तथाविधं भक्तं कदाचिदेकचरो भिक्षुरतिलोलुपतयाऽऽस्वादयेत् शिखरिणीदुग्धादि पिबेत्तदा तद्दान-

मानादिकं छर्दि विदध्यात् कदाचिच्चापरिणततया विशूचिकाशूलादीनाशुजीवितापहारिणो रोगान् समुत्पादयेदित्यैहिको दोषः, दुर्गतिगमनादय आमुष्मिका दोषा भवेयुः । तथा कश्चिच्छ्रावकः प्रकृतिभद्रको वा साधुप्रतिज्ञया वसती सङ्कटद्वारा महाद्वारा विपरीता वा, प्रवाता शय्याः शीतभयान्निर्वाताः, ग्रीष्मकाले च विपरीता वा, उपाश्रयस्य च संस्कारं बहिर्मध्ये वा हरितादीनि छित्त्वा विदध्यात् तत्रानेकदोषाः सङ्खडिं विदित्वा साधुर्न प्रविशेत् । सङ्खडिगतस्य बहवो दोषाः सम्भवन्ति, यथा सङ्खडिभूतं मत्तायभ्यवहारी साधुर्विवक्षितोपाश्रयालाभे सङ्खडिभूतमुपाश्रयमन्यद्वा गृहस्थपरिव्राजिकादिभिर्मिश्रीभूतं स्थानमासाद्य मिश्रीभावमापन्नोऽयमना मत्त आत्मस्मृतिविधुर आत्मानं गृहस्थमिव मन्यते, ततः कदाचिद्विक्लवमनोभिः स्त्र्यादिभी रहोवासाय प्रार्थितो मिथुनभावमभ्युपगच्छेत् । एवमन्यान्यपि कर्मोपादानकारणानि भवेयुस्तस्मान्निर्ग्रन्थः सङ्खडिं विदित्वा सङ्खडिप्रतिज्ञया तत्र गन्तुं न पर्यालोचयेत्, विस्तरोऽन्यत्र द्रष्टव्यः ॥ ५४ ॥

अथ गच्छनिर्गतानाश्रित्य गमननियममाह—

## गच्छनिर्गतो धर्मोपकरणमादाय प्रविशेत् ॥ ५५ ॥

**गच्छनिर्गत इति,** गृहपतिकुलादौ प्रवेष्टुकामो जिनकल्पिकादिर्धर्मोपकरणं सर्वमादाय पिण्डपातप्रतिज्ञया प्रविशेत्, तत्रोपकरणमनेकधा द्व्यादिरूपेण जिनकल्पिको हि द्विविधः छिद्रपाणिरछिद्रपाणिश्च, तत्राछिद्रपाणेः शक्त्यनुरूपाभिग्रहविशेषाद्द्विविधं रजोहरणमुखवस्त्रिकारूपमुपकरणं कस्यचित्त्वक्त्राणार्थं क्षौमपटपरिग्रहात्त्रिविधमपरस्योदकबिन्दुपरितापादिरक्षणार्थमौर्णिकपटपरिग्रहाच्चतुर्विधमसहिष्णुतरस्य द्वितीयक्षौमपटपरिग्रहात् पञ्चविधमिति, छिद्रपाणेस्तु जिनकल्पिकस्य सप्तविधपात्रनिर्योगसमन्वितस्य रजोहरणमुखवस्त्रिकादिग्रहणक्रमेण यथायोगं नवविधो दशविध एकादशविधो द्वादशविधश्चोपधिर्भवति । एवं ग्रामादेर्बहिर्विहारभूमिं विचारभूमिं वा गच्छन् सर्वमुपकरणमादाय गच्छेत्, तत्रैषा सामाचारी गच्छनिर्गतेन तदन्तर्गतेन वा गच्छता साधुनोपयोगो दातव्यः, तत्र यदि महति क्षेत्रे वृष्टिरन्धकारोपेत धूमिकोपेतं महावातसमुद्धूतरजोपेतं वा क्षेत्रं स्यात्ततो जिनकल्पिको न गच्छत्येव, तस्य यावत् षण्मासं पुरीषोत्सर्गनिरोधसामर्थ्यात्, इतरस्तु सति कारणे यदि गच्छेत्तर्हि सर्वमुपकरणं गृहीत्वा गच्छेदिति ॥ ५५ ॥

भिक्षाविषये नियममाह—

## उपयुक्तः कृतगोदोहादि विदित्वाऽप्राप्तमातृस्थानोऽपिहितद्वारं निर्गतश्रमणं गृहञ्च प्रविशेत् ॥ ५६ ॥

**उपयुक्त इति,** भिक्षार्थं गृहपतिकुलं रथ्यां ग्रामादिकं प्रविविक्षुर्मार्गे सोपयोगः स्यात्, गच्छतस्तस्य हि मार्गे वप्रप्राकारतोरणार्गलादीनि स्युः, असंयतो भूत्वा च गमने मार्गस्य विषमतया प्रस्खलनपतनादिप्रसङ्गेन जीवविराधनायाः कायस्य चोच्चारप्रस्रवणश्लेष्मसिंघाणकाशुचिलिप्ततायाश्च प्रसङ्गः, तथा च संयमात्मविराधना भवेत्, कदाचित्कर्दमाद्युपलिप्तोऽपि सचित्तवह्निपृथ्वीशकलादिभिर्न शोधयेत्, याचनयाऽल्परजस्कं तृणादिकमवाप्य एकान्तस्थण्डिले शोधयेत् । कृतेति, यत्र क्षीरिण्यो गावो

दुह्यन्ते तत्र तदा न प्रविशेत्, अन्यथा श्रद्धया इदानीमागतं यतिं विलोक्य गृहपतिरस्मै प्रभूतं ददामीति वत्सकपीडां विदध्यात्, त्रसेयुर्वा गावो विलोक्य तम्, आदिना च यत्राहारः उपस्क्रियमाणो भवति तदा तत्र नो यायात्, त्वरया पाकाय ते कृतप्रयत्ना भवेयुस्तत्र संयमविराधनाप्रसङ्गः स्यादित्यपि प्राह्यम्, एकान्ते चावस्थितो दुग्धगोदोहनादि विदित्वा ततस्तत्र यायात्। अप्राप्तमातृस्थान इति, य कश्चिस्साधुर्जङ्घाबलपरिक्षीणतया मासकल्पविहारितया चैकत्रैव क्षेत्रे तिष्ठन्ननुग्रामं गच्छतः प्राघूर्णिकान् यतीनेवं वदेत्, क्षुल्लकोऽयं ग्रामः सूतकादिना सन्निरुद्धोऽल्पगृहभिक्षाको वा, अथ ततो भिक्षाचर्यार्थं बहिर्ग्रामं व्रजतेति, तथा यो भिक्षुरत्र भिक्षाकालादर्वागेव भ्रातृव्यश्वशुरादिसम्बन्धिगृहे भिक्षार्थं प्रवेक्ष्यामि तत्र सरसं भक्तं पेयञ्च गृहीत्वा भुक्त्वा पीत्वा पतद्ग्रहं सन्लिख्य प्रमृज्य च प्राप्ते भिक्षावसरेऽविकृतवदनः प्राघूर्णिकभिक्षुभिः सार्धं पिण्डप्रतिज्ञया गृहपतिकुलं प्रवेक्ष्यामीत्येवमभिसन्धत्ते स मातृस्थानं प्रतिषिद्धं संस्पृशति, एवं यत्रामपिण्डाद्यर्थं श्रमणब्राह्मणादयो वयमत्र लप्स्यामह इति त्वरितं त्वरितमुपसङ्क्रामन्ति तत्राहमपि त्वरितमुपसङ्क्रमामीति विचिन्तयन् भिक्षुर्मातृस्थानं स्पृशति, अतो नैव कुर्यात्। अपिहितद्वारमिति, यस्य गृहपतेर्द्वारं कपाटादिना पिहितं तद्गृहं द्वारमननुज्ञाप्योद्घाट्य न प्रविशेन्न वा प्रत्युपेक्षणप्रमार्जनव्यतिरेकेणोद्घाटयेत्, अन्यथा गृहपतेः प्रद्वेषस्य वस्तुनो नाशे साधौ शङ्कायाः पश्चादिप्रवेशस्य च प्रसङ्गेन संयमात्मविराधना स्यात्। ग्लानादिकारणे सति तु स्थगितद्वारस्य शब्दं कुर्यात्, स्वयं वा यथाविधि उद्घाट्य प्रविशेत्। तथा निर्गतश्रमणमिति, स्वतः पूर्वं प्रविष्टान् श्रमणादीन् विज्ञाय दातृप्रतिग्राहकासमाधानान्तरायभयादेकान्ते व्यवस्थितो भवेत्, तत्र च यदि दाता चतुर्विधमाहारमादाय दत्त्वा च बहवो यूयं भिक्षार्थमुपस्थिताः, व्याकुलतया नाहमिदं विभज्य दातुं समर्थोऽतो निखिलार्थं युष्मभ्यं मया दत्तमिदं स्वरुच्यैकत्र भुङ्ग्ध्वं विभज्य वा गृहीध्वमिति ब्रूयात्तदा तदाहारादिकमुत्सर्गतो न ग्राह्यम्, सति कारणे गृह्यमाणं श्रमणाद्यन्तिके गत्वा गृहपत्युक्तं निवेदयन्त यदि कश्चित् श्रमणस्त्वमेवास्माकं परिभाजयेति ब्रूयात्तदाऽसति कारणे नैव कुर्यादिति ॥ ५६ ॥

नियमान्तरमाचष्टे—

## द्वारावलम्बनधावनोदकप्रक्षेपस्थानादिषु न तिष्ठेत् ॥ ५७ ॥

द्वारेति, दातृगृहद्वारशाखावलम्बनेन न स्थेयात्, जीर्णत्वादिना पतनसम्भवात्संयमात्मविराधनासम्भवात्तथोपकरणधावनोदकप्रक्षेपस्थाने आचमनप्रवाहभूमौ वा न तिष्ठेत्, प्रवचनजुगुप्सासम्भवात्, परिदृश्यमानस्नानादिक्रिये स्थाने वा न तिष्ठेत्, दर्शनशङ्कया निःशङ्कं गृहस्थक्रियाऽनिवृत्त्या निरोधप्रद्वेषसम्भवात्। नापि गवाक्षभित्तिसन्धिचौरगृहादिद्वारेणाङ्गुलीनिर्देशेन कायनमनोन्नमनाभ्यामवलोकयेदन्यस्मै वा दर्शयेत्, हृतनष्टादौ वस्तुनि तस्मिन् शङ्कोत्पादप्रसङ्गात्। न वा गृहपतिमङ्गुलीचालनादिना भयमुपदर्श्य चाटुभिः स्तुत्वा वा याचेत, अलाभे वा परुषं वदेदिति ॥ ५७ ॥

नियमान्तरमाह—

## उदकादिसंस्पृष्टं मालाहृतं मृत्तिकोपलिप्तं वीजनेन शीतमग्राह्यम् ॥ ५८ ॥

उदकादीति, यदाहारादि साक्षादुदकादिना सचित्तेन सम्पृष्टं यच्च साधुभिक्षादानार्थं शीतो-

दर्पेनोष्णोदकेन वाऽग्निदण्डोद्वृत्तेन पश्चाद्वा सचित्तीभूतेन तदेव हस्तौ प्रक्षाल्य दाता यदि देयात् तद्विज्ञाय साधुस्तदप्रासुकमिति न गृह्णीयात्, आदिना रज क्षारमृत्तिकाहरितालहिङ्गुलकमनःशिलाञ्जनलवणगेरुकादयः सचित्ता ग्राह्याः, एतै संसृष्टहस्तादिना दीयमानमग्राह्य भवति, असंसृष्टं तु ग्राह्यम् । यथा साध्वर्थं सचित्तमचित्त वा चित्तवत्या शिलाया कुट्टयित्वा दीयमान पृथुकादिक लवण वाऽग्राह्यम् । तथाऽप्युपरि व्यवस्थितमाहाराद्यपि । मालाहृतमिति, मञ्चकप्रासादहर्म्यतलाद्यूर्ध्वप्रदेशव्यवस्थितमधःकुसूलसंस्थानकोष्ठिकादिव्यवस्थित वाऽऽहारादि मालाहृतमिति कृत्वा न गृह्णीयात्, साधुदानार्थं पीठमञ्चनि श्रेण्यादीनामाहरणायारोहेऽधोऽवनमने पतनादिप्रसङ्गेन सत्त्वहननपरितापनादिसम्भवात् । मृत्तिकोपलिप्तमिति, पिठरकादौ मृत्तिकयाऽवलिप्तमाहारं लाभे सत्यपि न गृह्णीयात्, अशनादिभाजनोद्भेदनेन पृथ्वीकायादिसमारम्भात्, दत्त्वा च पुनरपि शेषरक्षायै तद्भाजनस्यावलिम्पनेन तथैव दोषस्य सम्भवात् । एव पृथिवीकायादौ सचित्ते प्रतिष्ठितमपि सत्त्वसङ्घट्टनादिभयान्न स्वीकुर्यात् । वीजनेन शीतमिति, अत्युष्णमोदनादिक भिक्षुप्रतिज्ञया दाता यदि शूर्पव्यजनपत्रवस्त्रादिवीजनेन शीतीकुर्यात्तद्विज्ञाय यद्यभिकाङ्क्षसि मे दातु तत एवस्थितमेव ददस्व, मैव कृथा इति वदेत्, तथापि तथा कृत्वा यदि दास्यति तदाऽनेषणीयमिति कृत्वा न परिगृह्णीयात् । तथा शङ्कितम्रक्षितनिक्षिप्तपिहितसंहृतदायकदोषदुष्टोन्मिश्रापरिणतलिप्तछर्दितलक्षणदशैषणादोषदुष्टमाहारादि वर्जयेत् ॥ ५८ ॥

अथ पानकविषये नियममाह—

## पानकमपि तथाविधमग्राह्यम् ॥ ५९ ॥

**पानकमिति,** पिष्टोत्स्वेदनार्थमुदक तिलधावनोदक यद्वाऽरणिकादिसंस्विन्नधावनोदक तण्डुलोदकम यत्परद्वा तथाविध निजस्वादच्युतमपरिणतमविध्वस्तमप्रासुकमग्राह्य भवति, तत्रापि तण्डुलोदके त्रयोऽनादेशाः, बुद्बुदविगमः, भाजनलग्नबिन्दुशोष, तण्डुलपाको वेति यावदेव तावत्तदग्राह्यमिति न मन्तव्यमपि तु यावदुदक स्वच्छीभाव न गत तावन्न ग्राह्यम्, एतद्गुणविपरीत तु ग्राह्यम्, तथा तिलतुषयवोदका यवक्ष्यानारनालप्रासुकोदकानि तथाविधमन्यद्वा द्राक्षापानकादीनि पूर्वमेव दृष्ट्वा किञ्चित्पानकजात मे दास्यसीति गृहस्थमापृष्टस्तेन स्वमेवेद पानकजात स्वकीयेन पतद्ग्रहेणोत्सिच्यापवृत्त्य वा पानकभाण्डक गृहाणेत्युक्तो गृह्णीयात्, परो वा तस्मै दद्यात्, तदेव लब्ध ग्राह्यम्, एव यदि सचित्तपृथिवीकायादिषु साण्डेषु वा व्यवस्थापित भिक्षूद्देशेन गलद्बिन्द्वादिभाजनेन शीतोदकेन मिश्रयित्वाऽऽहृत्य दाता देयात्तदा न प्रतिगृह्णीयात् । तत्र द्राक्षाबदराम्लिकादिपानकजात तत्क्षणमेव समर्द्यं क्रियन्ते, आम्राम्बाडककपित्थादिपानकानि द्वित्र्यादिदिनसम्बन्धेन, तदेवभूत पानकजात कुलकास्थिकास्थिना त्वगाद्यवयवेन बीजेन वा युत भिक्षूद्देशनिष्पादित वस्त्रादिभि सकृदसकृद्वा परिपीड्य निर्गाल्य चाहृतमुद्गमादिदोषदुष्टमग्राह्य भवति । आधाकर्मौद्देशिकपूतिकर्ममिश्रस्थापनाप्राभृतिकप्रादुष्करणक्रीतप्रामित्यपरिवर्तिताहृतोद्भिन्नमालाहृताच्छेद्यानिसृष्टाध्यवपूरकदोषान्विज्ञाय परिहरेत् ॥ ५९ ॥

आहाराश्रयेण पुनराह—

## कन्दसर्षपकन्दलीपिप्पलीमरिचाऽऽर्द्रकाऽऽमपत्रकादिकमपि ॥ ६० ॥

कन्देति, जलजः स्थलजो वा कन्दः, सर्षपः दल्यः, पिप्पलीमरिचार्द्रकाणि तच्चूर्णानि च, आदिना फलसामान्यमपक्वमर्धपक्वं वाऽरणिकतन्दुलीयकादि तदेतत्सर्वमयद्वा शस्त्रानुपहतं न गृह्णीयात्, एवमेव वनस्पतिविशेषा उत्पलतन्नालादयोऽग्रकन्धमूलबीजादीनि चान्यतो द्रष्टव्यानि ॥ ६० ॥

आहारादौ श्राद्धभावनामाह—

## दत्त्वा पुनः पाकाभिसन्धौ न ग्राह्यम् ॥ ६१ ॥

दत्त्वेति, कश्चित् श्राद्धः प्रकृतिभद्रको वा साधवः एतेऽष्टादशशीलाङ्गसहस्रधारिणो रात्रिभोजनविरमणषष्ठपञ्चमहाव्रतधारिणः पिण्डविशुद्ध्याद्युत्तरगुणोपेताः इन्द्रियनोइन्द्रियसंयमिनः पिहिताश्रवद्वारा नवविधब्रह्मगुप्तिगुप्ता अष्टादशविकल्पब्रह्मोपेताः, एतेषाञ्च न कल्पते भोक्तुं पातुं वाऽऽधाकर्मिकमशनादि, अत आत्मार्थं विहितमशनादि सर्वमेतेभ्यो वितीर्य पुनर्वयमात्मार्थमन्यदशनादि निर्वर्तयिष्याम इति यद्यभिसन्दधाति तदेतत्कथमपि विदित्वा साधुः पश्चात्कर्मभयतोऽनेषणीयं मन्यमानो न प्रतिगृह्णीयात् ॥ ६१ ॥

नियमान्तरमाह—

## संस्तुतावासपरिहारेणान्यत्र शुद्धं ग्राह्यम् ॥ ६२ ॥

संस्तुतेति, संस्तुताः-सम्यग्धनस्ते द्विविधाः पूर्वसंस्तुताः पितृव्यादयः, पश्चात्संस्तुताः श्वशुरादयः, एवंविधानि गृहाणि भक्ताद्यर्थं न प्रविशेत्, यतो गृहस्थो तेभ्यः पूर्वमेवाशनादि भिक्षवे दानार्थं कुर्यात्, अतः कर्मोपदानमेतत्, किन्तु तथाविधं ग्रामादिकं प्रविष्टो भिक्षुः स्वजनकुलं विदित्वा केनचित्स्वजनेनाज्ञात एवैकान्तमपक्रम्यानालोके तिष्ठेत्, प्राप्ते भिक्षावसरे तथाविधग्रामाद्यनुप्रविश्येतरकुलेभ्य उद्गमादिदोषरहितां वेषमात्रादवाप्तामुत्पादनादिदोषरहितां भिक्षामन्विष्य ग्रासैषणादोषरहितां तामाहारयेत् । तत्रोत्पादनादोषा धात्रीदूतीनिमित्ताजीविकावनीपकचिकित्साक्रोधादिसस्तवविद्यामन्त्रचूर्णयोगमूलपिण्डाः षोडश साधुसमुत्थाः, ग्रासैषणादोषाश्च संयोजनाप्रमाणाङ्गारधूम्रकारणदोषाः, कालेनानुप्रविष्टोऽपि भिक्षुः क्रियमाणमाधाकर्मिकमशनाद्याहृतमेव प्रत्याख्यास्यामीति मन्वानो न तूष्णींभावेनोपेक्षेत, मातृस्थानप्राप्तिप्रसङ्गात्, किन्तु सत्क्रियमाणं दातारं नाधाकर्मिक आहारो मे कल्पत इति वदन् प्रतिषेधयेत्, तथापि यदि कुर्यात्तो गृह्णीयादिति ॥ ६२ ॥

नियमान्तरमाह—

## सरसं विरसं वाऽधिकमनापृच्छ्य न परिष्ठापयेत् ॥ ६३ ॥

सरसमिति, भिक्षुः सरसं विरसं वाऽऽहृतमाहारादि सर्वमभ्यवहरेत्, न तु सरसं भुक्त्वा विरसं त्यजेत्, मातृस्थानप्राप्तिप्रसङ्गात्, एवं पानकमपि, तथा रत्न्यं बह्वशनादि भोक्तुमसमर्थस्तत्परिगृह्य तत्राद्दूरे वा गताना साधर्मिकादीनां समीपं गत्वा अयि श्रमणा ममैतदशनादि बहु पर्याप्तञ्च नाहं भोक्तुं समर्थोऽतो यूयं किञ्चिद्भुङ्ग्ध्वमिति वदेत्, याव मात्रं भोक्तुं शक्नुमस्तावन्मात्रं भोक्ष्यामहे पास्यामहे इति ते यदि वदेयुस्तदा तथा कार्यम् । न तुताननापृच्छ्य प्रमादितया परिष्ठापयेत्, मातृस्थानसंस्पर्शप्रसङ्गात् ॥ ६३ ॥

नियमान्तरमाह—

## अनुज्ञातमात्रमेव संस्तुतेभ्यो दद्यात् ॥ ६४ ॥

**अनुज्ञातमात्रमेवेति,** भिक्षु पिण्डमादायाऽऽचार्योपान्तिकमुपसृत्य अयि पूज्या मम पुरः सस्तुता यदन्तिके प्रव्रजितस्तत्सम्बन्धिन पश्चात्संस्तुता यदन्तिकेऽधीत श्रुत वा तत्सम्बन्धिनोऽन्यत्रा वासिता आचार्योपाध्यायप्रवर्त्तकस्थविरगणिगणधरगणावच्छेदका युष्मदनुज्ञयाऽहमेतेभ्य' प्रभूत दास्यामीति विज्ञाप्य तैर्यावन्मात्रमनुज्ञात तावन्मात्रमेव प्रयच्छेत्, न त्वनापृच्छ्य यस्मै रोचते तस्मै स्वमनीषिकया प्रभूतमल्प वा प्रयच्छेत्, मातृस्थानसस्पर्शप्रसङ्गात्, तथा गोचर्या पिण्डमादायाचार्यान्तिके सर्वं यथावस्थितमेव दर्शयेत्, न तु पर्यटन्नेव रसगृध्नुतया सरस सरसमभ्यवहृत्यान्तप्रान्तादिक प्रतिश्रयमानयेत् ॥ ६४ ॥

नियमान्तरमाह—

## ग्लानार्थं दत्तं नान्यथा कार्यम् ॥ ६५ ॥

**ग्लानार्थमिति,** एष कश्चिद्भिक्षुस्तत्रैव वास्तव्येषु समागतेषु वा साम्भोगिकेष्वसाम्भोगिकेषु वा कस्यचिद् ग्लानतायां मनोज्ञमाहारजातमादाय ग्लानाय प्रयच्छतेत्युक्त्वा यदि तेषु कस्मैचिद् ददाति तदा स तद्गृहीत्वा तत्राप्युपपन्नोऽहमेक एव भोक्ष्य इति मनसि विधाय ग्लानस्यापथ्योऽय पिण्ड इति बुद्ध्युत्पादनार्थं मनोज्ञ गोपित्वा वातादिरोगमुद्दिश्याय पिण्डो भवदर्थं साधुना दत्त किन्त्वय रूक्षस्तिक्त कटु कषायोऽम्लो मधुरो वेत्यादिदोषदुष्टो न भवत उपकाराय वर्त्तेत इति यदि ब्रूयात्तदा मातृस्थान स स्पृशति, तदेवन्न कार्यम् । तथा यदि भिक्षुणा ग्लानाय प्रयच्छता न चेद्भुङ्क्ते स तदाऽस्मदन्तिक एव तदाहरत्वित्युक्तोऽन्तरेणान्तरायमाहरिष्यामीति कृतप्रतिज्ञो ग्लानायादत्त्वा स्वयमेवोपभुज्य भिक्षोर्ग्लानभक्त गृहीत्वाऽनागमननिमित्ततया शूलाद्यन्तराय निवेदयेत्तर्हि मातृस्थानसंस्पर्शः स्यात्, तन्न कार्यमपि तु ग्लानाय दद्याद्दातृसमीप वाऽऽहरेदित्यवशिष्टनियमान्तराण्यन्यतो द्रष्टव्यानि ॥ ६५ ॥

धर्माधारशरीरपरिपालनफलपिण्डग्रहणविधिमभिधायाल्पसागारिके प्रतिश्रये तस्योपभोक्तव्यतया प्रतिश्रयगुणदोषौ निरूपयति—

## योग्य· प्रतिश्रयः स्थानशय्यादियोग्यः ॥ ६६ ॥

**योग्य इति,** उद्गमादिदोषविकल इत्यर्थ, साधुप्रतिज्ञया जीवानुपमर्द्य रचित मूल्यतो गृहीतमन्यस्मादुच्छिन्न भृत्यादेर्बलाद्गृहीतमनिसृष्टमभ्याहृत पुरुषान्तरकृतादिरूपमुपाश्रय गृहस्थो यदि साधवे ददाति तर्हि न तत्र स्थानादि कुर्यात्, तथा काष्ठादिभि कुड्यादौ सस्कृतो वंशादिकम्बाभिरवबद्धो दर्भादिभिश्छादितो गोमयादिना लिप्तः सुधादिखरपिण्डेन मृष्टो भूमिकर्मादिना सस्कृतो दुर्गन्धापनयनार्थं धूपादिना धूपितोऽन्यार्थं कृतादिरूप उपाश्रय स्थानादियोग्यो न भवति, तथा साधुप्रतिज्ञया पूर्वं यल्लघुद्वारं त महाद्वारं कुर्याच्चेत् तथा मूलगुणदुष्टश्चेत्तदपि गृह न योग्यम्, पृष्ठवंशादिभिः साधुप्रतिज्ञया कृता वसतिमूलगुणदुष्टा, साधुप्रतिज्ञयोदकप्रसूतकन्दादीना स्थानान्तरनयने निःसारणे वा तथाभूत उपाश्रयोऽयोग्य, एव छत्राशुचिनिःसारण स्थानमपि, मूलगुणदुष्टमुपाश्रय विहायान्ये पूर्वोदिता यदि

पुरुषान्तरकृताऽऽसेवितादिलक्षणाः स्युस्तदा तत्र प्रत्युपेक्ष्य स्थानादि कुर्यात् । तथा तथाविधप्रयोजनमन्तरेण स्कन्धमञ्चमालाप्रासादहर्म्यतलादिरूपे प्रतिश्रये स्थानादि न विदध्यात्, सति प्रयोजने तु तत्र शीतोदकादिना हस्तादिधावनमुच्चारादित्यागञ्च कुर्यात्, पतनादिसम्भवेन संयमात्मविराधनाप्रसङ्गात्, तथा स्त्रीबालपश्वादिचेष्टाविलोक्ययोग्ये गृहस्थाकुलप्रतिश्रये स्थानादि न कुर्यात्, तेषां निश्शङ्क भोजनादिक्रियाप्रवृत्त्यसम्भवात्, स्वयं वा रोगातङ्कपीडितो यदि स्यात्तदा गृहस्थः करुणया भक्त्या वा साधुशरीरं तैलादिनाऽभ्यञ्ज्यात् सुगन्धिद्रव्यादिभिर्घृष्ट्वा तदपनयनायोद्वर्तयेत प्रक्षालयेदग्निं प्रज्वाल्याऽऽतापयेद्वा, तदेतत् कर्मोपादानम्, तथा गृहपत्न्यादीनां परस्परमाक्रोशादि श्रुत्वा मैवं कुर्वन्तु कुर्वन्तु वेत्येवं मन उच्चावचं कुर्यात् । एवमलङ्कृतां वान्यथा दृष्ट्वा ईदृशी तादृशी शोभनाऽशोभना मद्भार्यासदृशीत्यादिकां वाचं ब्रूयात् । तस्माद्बहुदोषसम्भवात्तथाभूते प्रतिश्रये स्थानादि न कार्यम् ॥ ६६ ॥

सागारिकप्रतिबद्धवसतिदोषमाह—

तत्राधिकरणान्तरायमनःपीडाव्यापत्तिशङ्कादिदोषाः ॥ ६७ ॥

**तत्रेति,** अयोग्ये गृहस्थावबद्धे वसतौ वसतः साधोरित्यर्थः, येचन गृहस्थाश्शुचिप्रियाः, भिक्षवश्चास्नानतया दुर्गन्धाः, एवम्भूताश्च तथाविधगृहस्थानामतिशयेनानभिमताः, तथा च यत्र पूर्वं स्नानादिकं कृतवन्तस्तत्र साधूनामुपरोधात् पश्चात्कुर्वन्ति यद्वा पश्चात्कृतवन्तस्तत्पूर्वं कुर्वन्ति, एवमवसर्पणोत्सर्पणक्रियया साधूनामधिकरणदोषसम्भवः, यद्वा साधूपरोधात्ते गृहस्थाः प्राप्तकालमपि भोजनादिकं न कुर्युरित्यन्तरायमनःपीडादिदोषसम्भवः, अथवा त एव साधवो गृहस्थोपरोधात् प्रत्युपेक्षणादिकं कालातिक्रमेण कुर्युर्न कुर्युर्वा । तथा तत्र वसन् कदाचिदुच्चारादिना बाध्यमानोऽकालादौ समुद्घाटितप्रतिश्रयच्छिद्रान्वेषिणमन्तःप्रविशन्तं चौरं दृष्ट्वा चौरोऽयं प्रविशति न वेति, अपलीयते न वेति वा, अतिपतति न वेति वा, वदति न वदतीति वा, अमुकेनापहृतमनेन वेति वा साधोर्वक्तुमयोग्यं यदि वदति तदा चौरस्य व्यापत्तिः स्यात्, चौरो वा प्रद्विष्टः साधुं व्यापादयेत्, अनुक्तौ तु तमेव भिक्षुं स्तेनं स्तेन इत्याशङ्केयुरिति दोषसम्भवान्न तादृश्यां वसतौ स्थानादि विधेयमिति ॥ ६७ ॥

अकल्प्यवसतीराह—

कालातिक्रान्तादिनवविधवसतयोऽकल्प्याः ॥ ६८ ॥

**कालातिक्रान्तादीति,** कालातिक्रान्तोपस्थानाभिक्रान्तानभिक्रान्तवर्ज्यमहावर्ज्यसावद्यमहासावद्याल्पक्रियाभिधाना नव वसतयः, ग्रामादेर्बहिर्यत्र पान्था आगत्य तिष्ठन्ति तत्र, आराममध्यगृहेषु मठादिषु वा शीतोष्णकालयोर्मासकल्पमतिवाह्य वर्षासु वा चतुरो मासानतिवाह्य कारणं विना पुनस्तत्रैव वासे कालातिक्रमदोषः स्यात् तथा च स्त्र्यादिप्रतिबन्ध स्नेहादुद्गमादिदोषसम्भवो वा स्यात् । आगन्तुकागारादिषु ऋतुबद्धं वर्षां वाऽतिवाह्यान्यत्र मासमेकं स्थित्वा द्वित्रैर्मासैर्व्यवधानमकृत्वा पुनस्तत्रैव वासे उपस्थानक्रियादोषः । साधूनां कल्प्योपाश्रयज्ञानविधुरैः प्रतिश्रयदानस्य स्वर्गादिफलं कुतश्चिदवगतैः श्रद्धावद्भिर्गृहस्थैरनेकश्रमणोद्देशेन स्वार्थमपि यानशालासभाप्रपादियुक्तानि गृहाणि क्रियन्ते तानि पूर्वं चरकब्राह्मणादिभिरभिक्रान्तानि पश्चात्तत्र यदि साधवोऽवतरन्ति, एवंविधानि गृहाण्यभिक्रान्तक्रियारूपाणि,

इमान्यल्पदोषाणि । या च तथाविधा वसतिश्चरकादिभिरनवसेवितपूर्वा साऽनभिक्रान्तत्वादकल्प्या । निजार्थं प्रकल्पितानि गृहाणि साधुभ्यो दत्त्वा स्वार्थमन्यानि क्रियन्ते तानि वर्ज्यक्रियाभिधानान्यकल्प्यानि च । श्रमणाद्यर्थं निष्पादितायां वसतौ स्नानादि कुर्वतो महावर्ज्याभिधाना वसतिर्भवति साऽकल्प्या विशुद्धकोटिश्च । या च निर्ग्रन्थशाक्यतापसगैरुकाजीविकेभ्य एव कृता सा सावद्यक्रियाभिधाना वसतिर्भवत्यकल्पनीया विशुद्धकोटिश्च । साधर्मिकोद्देशेन पृथिवीकायादिसंरम्भादिभिर्महापापकर्मैः संस्तारकद्वारढक्कनादिप्रयोजनामुद्दिश्य निर्मापितं यत्र च शीतोदकं त्यक्तपूर्वमग्निर्वा प्रज्वालितपूर्वस्तथाविधवसतौ वासे चाधाकर्मिकवसत्यासेवनाद्रागद्वेषैर्यापथसाम्परायिकादिदोषा महाक्रियाभिधाना वसतिर्भवति । निजार्थं गृहस्थैरुज्ज्वालिताग्निपूर्वा शीतोदकसिक्तपूर्वा या वसतिरल्पक्रिया भवति अत्राभिक्रान्ताल्पक्रिये योग्ये, शेषा वसतयोऽयोग्या ॥ ६८ ॥

कारणान्तरेण चरकादिभिर्वासे विधिमाह—

## चरकादिभिर्वासे सूपयुक्तः स्यात् ॥ ६९ ॥

**चरकादिभिरिति,** यदि साधुवसतौ शय्यातरेणान्येषामपि चरककार्पटिकादीनां कतिपयदिवसस्थायिनामवकाशो दत्तो भवेत्, तेषां वा पूर्वस्थितानां पश्चात्साधूनामुपाश्रयो दत्तो भवेत्तत्र कार्यवशाद्वसता रात्र्यादौ निर्गच्छता प्रविशता वा यथा चरकानुपकरणोपघातो न भवेत्तदवयवोपघातो वा तथा पुरो हस्तकरणादिकया गमनागमनादिक्रियया यतितव्यमिति ॥ ६९ ॥

वसतियाचनाविषये आह—

## गृहाधिपानुज्ञातकालं यावद्वसेत् ॥ ७० ॥

**गृहाधिपेति,** प्रतिश्रय तदधिपश्चावेत्य विचार्य च साधुना पृष्टो गृहाधिपस्तन्नियुक्तो वा कदाचिदेवं ब्रूयात् कियन्तं कालं भवतामत्रावस्थानमिति, वसतिप्रत्युपेक्षकः साधुर्यदि कारणमन्तरेण ऋतुबद्धे मासमेकं वर्षासु चतुरो मासानवस्थानमिति ब्रूयात्तदा नैतावन्तं कालं ममात्रावस्थानं वसतिर्वेति गृहपतिर्वदेत्तदा तथाविधकारणसद्भावे साधुर्यावत्कालमिहायुष्मानास्ते यावद्वा भवत उपाश्रयस्तावत्कालमेवोपाश्रयं ग्रहीष्यामस्ततो निहरिष्याम इति वदेत्, साधुप्रमाणं पृष्टो वदेत्, समुद्रस्थानीयाः सूरयः, नास्ति परिमाणम्, कार्यार्थिनां केषाञ्चिदागमनसम्भवात् कृतकार्याणाञ्च गमनसम्भवादिति ॥ ७० ॥

त्याज्यवसतिमाह—

## गृहस्थचर्यासम्बद्धवसतिस्त्याज्या ॥ ७१ ॥

**गृहस्थेति,** यस्य प्रतिश्रयस्य चर्या मार्गो गृहपतिगृहे वर्तते तथाविधे बह्वपायसम्भवान्न स्थेयम्, यत्र गृहपत्यादयोऽन्योऽन्य तैलाभ्यङ्गादिभिर्देहमभ्यञ्जयेयुस्तथाविधचर्यासम्बन्धिवसतिरयोग्या, यत्र वा स्त्रियो मुक्तपरिधाना आसते किञ्चिद्रहस्यं रात्रिसम्भोगविषयं परस्परं कथयन्त्यकार्यसम्बद्धं वा मन्त्रयन्ते तत्सम्बद्धे प्रतिश्रये स्वाध्यायक्षतिचित्तविप्लुतादिदोषसम्भवान्न स्थानादि विधेयम्, तथा विकृतचित्रितभित्तिमद्वसतिरपि त्याज्या ॥ ७१ ॥

अथ फलकादिसंस्तारकमाश्रित्याह—

## अल्पाण्डसन्तानकलघुप्रातिहारिकावबद्धसंस्तारको यथाप्रतिम ग्राह्यः ॥ ७२॥

**अल्पेति,** संस्तारे हि साण्डे ससन्तानके गृहीते संयमविराधना दोष, गुरौ सति तदुत्क्षेपणादावात्मविराधनादिदोष, अप्रतिहारके तत्परित्यागादिदोषः, अनवबद्धे तद्बन्धनादिपलिमन्थदोष इत्यल्पाण्डाल्पसन्तानकलघुप्रतिहारिकावबद्धत्वात्सर्वदोषविप्रमुक्तत्वात् संस्तारकमभिग्रहविशेषैरन्विष्य गृह्णीयात्, तत्राभिग्रहश्चतुर्धा फलहकादीनामन्यतमद्ग्रहीष्यामि नेतरदित्युद्दिश्यायं प्रथमः, यदेव प्रागुद्दिष्टं तदेव द्रक्ष्यामि ततो ग्रहीष्यामि नान्यदिति प्रेक्ष्याख्यो द्वितीयः, तदपि यदि तस्यैव शय्यातरस्य गृहे भवति ततो ग्रहीष्यामि नान्यत आनीय शयिष्य इति तस्यैवाख्यस्तृतीयः, तदपि फलहकादिकं यदि यथासंस्तृतमेवास्ते ततो ग्रहीष्यामि नान्यथेति यथासंस्तृतनामा चतुर्थः, आद्यौ प्रतिमयोर्गच्छनिर्गतानामग्रहः, उत्तरयोरन्यतरस्याभिग्रहः, गच्छान्तर्गतानां तु चत्वारोऽपि कल्पन्ते, आभिरन्यतरप्रतिमाभिः प्रतिपन्नस्तथाविधालाभे उत्कुटुको वा निषण्णो वा पद्मासनादिना वा सर्वरात्रमास्ते । अन्यतरप्रतिमा प्रतिपन्नोऽपरप्रतिमाप्रतिपन्नं साधुं न हीलयेत्, जिनाज्ञामाश्रित्य सर्वेषां समाधिना वर्त्तमानत्वात् । प्रतिहारकसंस्तारकप्रत्यर्पणेच्छाया गृहकोकिलकाद्यण्डकससन्तानकत्वेऽप्रत्युपेक्षणयोग्यत्वात्तन्न प्रत्यर्पयेत् ॥ ७२ ॥

यसत्यन्वेषणार्थं यथाविधीर्यानियममाह—

## वर्षासु ग्रामान्तरेर्यां विहायानाकुले ग्रामे वसेत् ॥ ७३ ॥

**वर्षास्विति,** भावनिषधेर्या चरणेर्यासंयमेर्यारूपतो द्विधा, सम्यग्ज्ञानदर्शनचारित्रासंख्येयसंयमस्थानेष्वेकस्मात्संयमस्थानादपरसंयमस्थानं गच्छतो या संयमेर्या, श्रमणस्य येन प्रकारेण भावगमनं निर्दोषं भवति तथाविधगमनं चरणेर्या, तच्च गमनमालम्बनकालमार्गयतनापदैरेकैकपदव्यभिचारादिभङ्गास्ते षोडशविधं भवति, अत्रप्रवचनसङ्घगच्छाचार्यादिप्रयोजनमालम्बनम्, साधूनां विहरणयोग्योऽवसरः कालः, जनैः पद्भ्यां क्षुण्णः पन्था मार्गः, उपयुक्तस्य युगमात्रदृष्टित्वं यतना । चतुर्भिरेभिः कारणैर्गच्छतः साधोर्गमनं परिशुद्धं भवति, यथाऽऽलम्बने दिवा मार्गेण यतनया गच्छतः, अकालेऽपि ग्लानाद्यालम्बनेन यतनया गच्छतः शुद्धमेव गमनम् । निर्व्याघातेनाप्राप्त एवाषाढचातुर्मास्ये तृणफलकडगलकभस्ममात्रकादिपरिग्रहः साधूनां सामाचारी, वर्षासूपगतासु पयोमुच्यभिप्रविष्टे च प्रदेशे इन्द्रगोपकादयो जीवा बहूनि बीजानि चाभिनवाङ्कुरितानि भवन्ति, मार्गाश्च तृणाद्युत्पत्त्यादविज्ञाता बहुप्राणिनो भवन्ति, विज्ञायैव साधुर्न ग्रामान्तरं यायात्, अप्राप्तावसर प्राप्ते ग्रामे वर्षाकालं वसेत् । अत्र ग्रामादौ च स्वाध्यायभूमिर्बहिर्गमनभूमिर्वा महती न विद्यते न सुलभानि च पीठफलकशय्यासंस्तारकादीन्येषणीयं प्रासुकं पिण्डपातश्च चरकब्राह्मणाद्याकुलत्वात् तथाविधे ग्रामादौ भिक्षाटनस्वाध्यायध्यानबहिर्गमनादिकार्याणां निरुपद्रवमसम्भवात् प्राज्ञो भिक्षुर्न तत्र वर्षाकालं विदध्यात् । अतिक्रान्ते च कार्तिकचातुर्मासिके यद्युत्सर्गतो न वृष्टिस्तदाऽन्यत्र अतिपदमेव गत्वा पारणकं कुर्यात्, यदि तु वृष्टिरस्ति तदा पञ्चदशसु दिनेषु गतेषु, एवमपि मार्गस्य साण्डादित्वे गमनागमनादिनाऽक्षुण्णत्वे च समस्तमेव मार्गशीर्षं तत्रैव वसेत्, तत ऊर्ध्वं यथा तथाऽस्तु न स्थेयम् । गच्छतः पुरतो

भूभागं चतुर्हस्तप्रमाणं पश्यन् यतनया संयतो ग्रामान्तरं यायात् । प्रजज्यानियतकालसञ्चाराणां धर्मसम्प्रोपदेशेनानार्यसंस्पर्शादुर्निवर्त्यानामनार्याणां चौरशबरपुलिन्दादिम्लेच्छप्रधानानां स्थानानि सत्यन्यस्मिन् ग्रामादिके विहारे परिहृत्य व्रजेत्, अन्यथा चौरोऽयं चारोऽयमसच्छत्रुग्रामादागत इत्याक्रोशन्तस्ते तं ताडयेयुरपहरेयुर्व्यपरोपयेयुस्ततश्च संयमात्मविराधना स्यादिति ॥ ७३ ॥

नौसन्तरणनियममाह—

## कारणे नावारूढः प्रोक्ताकरणतो जले प्रक्षिप्तः संयतः प्लवेत ॥ ७४ ॥

**कारण इति,** गन्तव्यग्रामान्तराले नावा तार्यमुदकं यदि भवेत्तु जानुदघ्नादिकमुदकं स्यात्तदाऽकारणे सत्युत्क्रामो गृहस्थैर्भिक्षुप्रतिज्ञया क्रीताद्युच्छिद्रा वा स्थलाजलेऽवतारिता नावं नारोहेत्, कारणे त्वेतद्विपरीतां नावमुपलभ्यैकान्तमुपक्रम्य प्रतिलेखनादि विधायैकं पादं जलेऽपरं स्थले विधाय रोहेत्, तत्रापि नाग्रभागम्, निर्यामकोपद्रवसम्भवात्, न वा नावारोहिणा पुरतः, प्रवर्त्तनाधिकरणसम्भवात् । तथा तत्रस्थो न नौव्यापारं परेण चोदितः कुर्यात् कारयेद्वा, अपि तु विशिष्टाध्यवसायो भवेत् । एवं कदाचिन्नाविकादिना दारकादुदकं पाययेत्युक्तस्तथा न कुर्यात्, तदकरणे च प्रद्विष्टेन तेनोपकरणेन गुरुरयं श्रमणस्तेन बाहु गृहीत्वा नाव उदके यूयं प्रक्षिपतेति कथ्यमानं वचनं विदित्वा क्षिप्रमेवासाराणि चीवराणि गुरुत्वाच्छिरोहितुमशक्यानि च पृथक्कृत्य तद्विपरीतानि निवेष्टयेत्, शिरोवेष्टनं वा कुर्यात्, येन सवृतोपकरणो निर्व्याकुलत्वात्सुखेनैव जलं तरति, तदेव सम्यक्स्थान् धर्मदेशनयाऽनुकूलयेत्, तथाप्यश्रुतेन तेन जले प्रक्षिप्तो मनोमालिन्यं नावलम्बेत् । उदके तु प्लवमानो हस्तादिकं हस्तादिना न संस्पृशेत्, मज्जनोन्मज्जने न कुर्यात्, यदि श्रमं यायात्तदा क्षिप्रमेवोपधिं तद्भाग वा त्यजेत् । एवमुदकादुत्तीर्णः संयत उदकार्द्रेण गलद्बिन्दुना कायेन सस्निग्धेन वोदकतीरे तिष्ठेत् सन्नेर्यापथिकीञ्च प्रतिक्रामेत्, तत्र चौरादिभीतिश्चेत्तदोऽप्कायोपमर्दनपरिहारेण गच्छेत् । जंघासन्तरणोदकेऽपि मुखवस्त्रिकयोर्ध्वकायमध कायञ्च रजोहरणेन प्रमृज्य पादमेकं जले कृत्वाऽपरमुत्क्षिपन् जलमनालोडयन् गच्छेत्, उत्तीर्णश्चोदकात् कर्दमाविलपाद एव तदपनयनायाकृतप्रयत्नो यतनया गच्छेन्न तु कर्दमापनयनाय हरितादीनि छिन्द्यात्, भारस्थानसंस्पर्शप्रसङ्गादिति ॥ ७४ ॥

गमननियममाह—

## पक्ष्यादित्रासादिकमनुत्पादयन्नाचार्यादिभिर्विनयेन गच्छेत् ॥ ७५ ॥

**पक्ष्यादीति,** ग्रामान्तरं व्रजन् मध्ये आकारकन्दरागिरिगृहस्तूपादीनि सरित्तडागादीनि च विलोक्य भृशं बाहुमुत्क्षिप्य प्रसार्याङ्गुली कायमवनम्योन्नम्य वा न दर्शयेत्, दग्धमुषितादौ साधावाशङ्कायास्त्रसपक्षिसरीसृपमृगादीनां संत्रासस्य च प्रसङ्गात्, न चैको विहरेत् किन्त्वाचार्योपाध्यायादिभिर्गीतार्थैः सह हस्तादिसंस्पर्शो यथा न भवेत्तावन्मात्रायां भूमौ स्थितो व्रजेत्, व्रजश्च तैः सह प्रातिपथिकेन किञ्चित् पृष्ट आचार्यादीनतिक्रम्य नोत्तरं दद्यात्, मध्ये वा वदेत् ॥ ७५ ॥

नियमान्तरमाह—

## गवादिप्रश्नमुपेक्षमाणो दर्पितवृषभादिदर्शनेऽविमनस्कः स्यात् ॥ ७६ ॥

**गवादीति,** पथ्यागच्छता केनचित् किं भवता मार्गे कश्चिद्गोपशुमनुष्यकन्दमूलादिरुपलब्ध इति पृष्टो जानन्नपि नैव वदेत्, तूष्णीम्भावेनोपेक्षेत यदि वा नाहं जानामीति वदेत्, तथाऽन्तराले दर्पितं वृषभं सिंहं व्याघ्रादिकं पश्येन्न तद्भयादुन्मार्गेण गच्छेत्, न च गहनादिकमनुप्रविशेत्, नापि वृक्षादिकमारोहेत्, न वोदकं प्रविशेत्, नापि च शरणमभिकाङ्क्षेत्, अपि त्वल्पोत्सुकोऽविमनस्कः संयत एव गच्छेत्, एतच्च गच्छनिर्गतैर्विधेयम्, गच्छान्तर्गतास्तु व्याघ्रादिकं परिहरन्त्यपि । तथाऽटवीप्राये मार्गे गच्छन् स्तेनादय उपकरणपरिग्रहणेच्छया समागताश्चेत्तदा तद्भयादुन्मार्गगमनं न कुर्यात्, नोपकरणादिकं वा प्रयच्छेत्, बलाद्ग्रहणे भूमौ निक्षिपेत्, धर्मोपदेशकथनेन याचेत तूष्णीम्भावेन वोपेक्षेतेति, अधिकमाचाराङ्गादौ ॥ ७६ ॥

अथ भाषणनियममाह—

## विदितवचनविधानो भाषासमितो गर्ह्यसावधारणादिभाषां त्यजेत् ॥ ७७ ॥

**विदितेति,** विज्ञातैकवचनादिषोडशविधवचनविभागः पूर्वसाधुभिराचीर्णपूर्वोनभाषणयोग्याम् भाषाचारान् विदित्वेति वेत्यर्थं, तत्र षोडशविधवचनानि, यथा एकवचनं वृक्ष इति, द्विवचनं वृक्षाविति, बहुवचनं वृक्षा इति, स्त्रीवचनं वीणा कन्येत्यादि, पुंवचनं घटः पट इत्यादि, नपुंसकवचनं पीठं कुलमित्यादि, अध्यात्मवचनं हृदयगतपरिहारेणान्यद्भणिष्यतस्तदेव सहसा यदापतितम्, प्रशंसावचनं यथा रूपवती स्त्रीत्यादि, अप्रशंसावचनं यथेयं रूपहीनेत्यादि, प्रशंसाप्रशंसावचनं यथा कश्चिद्गुणं प्रशस्य कश्चिन्निन्द्यो रूपवतीयमसद्वृत्तेत्यादि, अप्रशंसाप्रशंसावचनं यथाऽरूपवती स्त्री किन्तु सद्वृत्तेत्यादि, अतीतवचनं कृतवानित्यादि, वर्तमानवचनं करोतीत्यादि, अनागतवचनं करिष्यतीत्यादि, प्रत्यक्षवचनमेष देवदत्त इत्यादि, परोक्षवचनं स देवदत्त इत्यादि, अमीषां वचनानां मध्ये एकार्थविवक्षायामेकवचनमेवार्थद्वयविवक्षायां द्विवचनमेवेत्येवं यथाविवक्षं ब्रूयात् । एवं भाषाश्चतस्रः, सत्या, यथा गौर्गौरेवाश्वोऽश्व एवेति यथार्थरूपा, मृषा त्वयथार्था, यथा गौरश्वोऽश्वो गौरित्यादिरूपा, सत्यामृषा यत्र किञ्चित्सत्यं किञ्चिच्च मृषा भवति, यथाऽश्वेन यान्तं देवदत्तमुष्ट्रेण यातीत्यभिधानम् । असत्यामृषा योच्यमाना न सत्या न मृषा नापि सत्यामृषा आमन्त्रणाऽऽज्ञापनादिका साऽसत्यामृषेति, तत्र मृषा सत्यामृषा च तावत्साधुभिर्न वाच्या, सत्यामपि सावद्यां न भाषेत साधुः, तथाऽनर्थदण्डप्रवृत्तिलक्षणक्रियोपेतां चर्चिताक्षरां चित्तोद्वेगकारिकटुकां निष्ठुरां मर्मोद्घाटिनीं कर्माश्रवकरीं छेदनभेदनादिकारिणीञ्च सत्यामपि न ब्रूयात् किन्तु या भाषा सत्या या च मृषाऽपि कुशाग्रबुद्ध्या विचार्यमाणा सत्या भवति, यथा मृगदर्शने सत्यपि लुब्धकादेरपलापः, या चासत्यामृषा तामसावद्यां विचार्य भाषेत । क्रोधेन मानेन मायया लोभेन प्रयुक्तो न वदेत्, न वा सावधारणं वचो वदेत्, तथा नभोदेवो गर्जति देवः प्रवृष्टो देवो वर्षा पततु मा वा, शस्यनिष्पत्तिर्भवतु मा वा, जयत्वसौ राजा मा वा, विभातु रजनी मा वा, उदेतु सूर्यो मा वेत्यादिरूपं वचनं न वदेत्, किन्त्वन्तरिक्षं मेघ इत्यादिवचो कारणे सति भाषेत देशान्तरेऽत्रहासूचकमपि वचो न वदेत्, आमन्त्रयन्नशृण्वन्तं पुमांसं अमुक ! आयुष्मन् ! श्रावक ! धर्मप्रिय ! इत्येव वदेत्, तथा कुष्ठादिरोगिणं कुष्ठी मधुमेहीत्येव नामग्राहं न वदेत्, न वा विकलाङ्गं काणः खञ्ज इत्येवमामन्त्रयेत्, प्राकारादीनि भवता सुष्ठु कृतानि कर्तव्यमेवैतद्भवद्विधानामित्यादिरूपां भाषामधिकरणानुमोदनाभ

भाषेत। किन्तु सति प्रयोजने महारम्भकृतमेतत् सावद्यकृतमेतत् प्रयत्नकृतमेतदित्येवमसावद्यां भाषेत। तथा च क्रोधादिरहितोऽनुविचिन्त्य निष्ठाभाष्यत्वरितभाषी विवेकभाषी भाषासमित्युपेतो भाषां वदेत् ॥ ७७ ॥

अथ वस्त्रैषणामधिकृत्याह—

**कार्पासार्कतूलोर्णादिनिष्पन्नमदुष्टं वस्त्रं यथासामर्थ्यं धारयेत् ॥ ७८ ॥**

**कार्पासेति,** वस्त्रस्य नामादिश्चतुर्विधो निक्षेपः स्फुटे नामस्थापने, द्रव्यं त्रिधा, एकेन्द्रियनिष्पन्नं कार्पासिकादि, विकलेन्द्रियनिष्पन्नं चीनांशुकादि, पञ्चेन्द्रियनिष्पन्नं कम्बलरत्नादि, भाववस्त्रं त्वष्टादशशीलाङ्गसहस्राणि, अत्र द्रव्यवस्त्रेणाधिकारः, तत्र कार्पासादिनिष्पन्नमाधाकर्मादिदोषरहितं साधूद्देशेन क्रीतधौतादिदोषरहितञ्च वस्त्रं धारयेत्, तदन्वेषणाय नार्धयोजनात्परतो गमनाय मतिं कुर्यात्। यो निर्ग्रन्थो बलवानरोगी दृढकायो दृढधृतिश्च स एकं प्रावरणं त्वक्त्राणाय धारयेन्न द्वितीयम्, यदपरमाचार्यादिकृते बिभर्ति न तस्य स्वयं परिभोगं कुर्यात्। यः पुनर्बालो दुर्बलो वृद्धो वाऽसमर्थो रोगी वाऽल्पसंहननः स यथासमाधि द्व्यादिकमपि धारयेत्। जिनकल्पिकस्तु यथाप्रतिज्ञमेव धारयेत्, नास्ति तत्रापवादः। निर्ग्रन्थी तु चतस्रः सङ्घाटिका धारयेत्, एका द्विहस्तपरिमाणा या प्रतिश्रये तिष्ठन्ती प्रावृणोति, द्वे त्रिहस्तपरिमाणे, तत्रैकामुज्ज्वलां भिक्षाकाले, अपराञ्च बहिर्भूमिगमनावसरे, चतुर्हस्तविस्तरामपरां समवसरणादौ सर्वशरीरप्रच्छादिकां प्रावृणोति, तस्याश्च यथाकृताया सङ्घाटिकाया अलाभेऽथ पश्चादेकमेकेन सार्धं सीव्येदिति ॥ ७८ ॥

निषेध्यवस्त्रमाह—

**बहुमूल्यान्यजिनप्रावरणानि चायोग्यानि ॥ ७९ ॥**

**बहुमूल्यानीति,** येषां मूल्यं महत्—यथा मूषकादिचर्मनिष्पन्नानि, सूक्ष्माणि वर्णच्छव्यादिभिश्च कल्याणानि, इन्द्रनीलवर्णकार्पासनिष्पन्नानि, क्वचिद्देशविशेषेऽजाः सूक्ष्मरोमवत्यो भवन्ति तत्पक्ष्मनिष्पन्नानि गौडविषयविशिष्टकार्पासिकपट्टानि मलयजसूत्रोत्पन्नान्येवंविधानि महार्घमूल्यतया ऐहिकामुष्मिकापायभयाल्लाभे सति न प्रतिगृह्णीयात्। तथा सिन्धुविषय एव सूक्ष्मचर्माणः पशवस्तच्चर्मनिष्पन्नानि कृष्णनीलगौरमृगाजिनानि कनकनिभकान्तीनि कृतकनकरसपट्टानि कनकस्तबकाञ्चितानि व्याघ्रचर्माण्यन्यानि वा तथाप्रकाराण्यजिनप्रावरणानि लाभे सति न प्रतिगृह्णीयात् ॥ ७९ ॥

ग्रहणनियममाह—

**अभिग्रही विलोक्यानलास्थिराध्रुवाधारणीयानि शुद्धमादद्यात् ॥ ८० ॥**

**अभिग्रहीति,** सङ्कल्पितं याचिष्ये, दृष्टं सयाचिष्ये, अन्तरपरिभोगेनोत्तरीयपरिभोगेन वा शय्यातरेण परिभुक्तप्रायं वस्त्रं ग्रहीष्ये, तदेवोत्सृष्टधार्मिकं ग्रहीष्यामीत्येवमभिग्रहविशेषैश्चतुर्भिर्वस्त्रान्वेषी साधुः पश्चात्कर्मानापादकं बीजकन्दहरिताद्यसत्त्वमल्पाण्डाल्पसन्तानकादिगुणविशिष्टं दात्रा तदैव दीयमानं वस्त्रमान्तमान्तेन प्रत्युपेक्ष्य गृह्णीयात्, अप्रत्युपेक्षितं न गृह्णीयात्, कर्मोपादानमेतद्ग्रहणम्, यतस्तत्र किञ्चित्कुण्डलाद्याभरणजातं बद्धं भवेत्, सचित्तं वा किञ्चिद्भवेत्। तथा हीनादित्वा-

दमीप्रकार्यासमर्थमाद्यम्, जीर्णमस्थिरं, स्वरपक्षान्तर्मुखापनात्भ्रुवम्, अप्रशस्तप्रदेशसञ्जनादिकलङ्काङ्कितत्वादधारणीयम्, एभिश्चतुर्भिः पदैः षोडशभङ्गा भवन्ति तत्रैक एव भङ्गः शुद्ध, अपरे पञ्चदशाशुद्धास्तथाविधं धर्म दात्रा दीयमानमपि साधवे न कल्पते ॥ ८० ॥

धावननियममाह—

## गच्छान्तर्गतो यतनया प्रक्षाल्य प्रत्युपेक्षितस्थण्डिलादावातापयेत् ॥ ८१ ॥

गच्छान्तर्गत इति, मलिनमपि दुर्गन्ध्यपि वस्त्रं गच्छनिर्गतो न प्रक्षालयेत्, गच्छान्तर्गतस्तु लोकोपघातसमुत्थभया मलापनयार्थमेव प्रासुकोदकादिना यतनया धावनादि कुर्यात्, न त्वभिनववस्त्र मालीनि कृत्वा सुगन्धिद्रव्येणाघृष्य प्रघृष्य वा शोभनतामापादयेत्, आतापनमपि भूमाव्यवहिताया चलाचले स्थूणादौ वा तत्पतनभयतो न कुर्यात्, किन्तु स्थण्डिलादि चक्षुषा प्रत्युपेक्ष्य रजोहरणादिना प्रमृज्य चातापनादिकं कुर्यात् ॥ ८१ ॥

अथ पटलकैर्विना पिण्डो न ग्राह्य इति यथा वस्त्रैषणा वर्णिता तथैव पात्रेण विना न ग्राह्य इत्यधुना पात्रैषणा वर्ण्यते—

## तद्वद्गृहीतपात्रो यतनया गृहपतिकुले शुद्धाहारादि याचेत ॥ ८२ ॥

तद्वदिति, वस्त्रवदित्यर्थः, अर्धयोजनान्तर एव पात्रान्वेषी तारुण्यबलस्थिरसंहननानुपेत शुद्धमलाबुदारुमृत्तिकादिपात्रमेकमेव बिभृयात्, न च द्वितीयम्, स च जिनकल्पिकादि, इतरस्तु मात्रकमद्वितीय पात्र धारयेत्, तत्र सङ्घाटके सलेकस्थिरं भक्त द्वितीये पानकं, मात्रकन्त्वाचार्यादि प्रायोग्यस्तेऽशुद्धस्य वा भोजनस्य शुद्धार्थम् । तानि च महार्घमूल्यानि लोहताम्रसीसकहिरण्यादिरूपाणि च न गृह्णीयात्, तथा रिक्त पात्र न दातव्यमतो मुहूर्त्तमात्र स्थीयतामगमनादिकं कृत्वा पाकं भृत्वा ददामीति दात्रोक्तौ निषेधयेत्तथापि तथाकरणे पात्र न गृह्णीयात्, दीयमानमपि पात्रमन्तोपान्तेन प्रत्युपेक्ष्य गृह्णीयात्, तथा पिण्डपातप्रतिज्ञया गृहपतिकुलं प्रविविक्षु पूर्वमेव पतद्ग्रहं भृश प्रत्युपेक्ष्य प्रमृज्य च गृहपतिकुलं प्रविशेत्, अकृतप्रत्युपेक्षणप्रमार्जने पतद्ग्रहे द्वीन्द्रियादिप्राणिनीजरज - प्रभृतीना पर्यापदनप्रसङ्गेन धर्मोपादानतासम्भवः । तत्र गत्वा पानकादिके याचिते शीतोदकादि यदि दद्यात्तदाऽप्रासुकमिति न गृह्णीयात्, कथञ्चिद्विमनस्कतादिना यदि प्रतिगृहीत स्यात् क्षिप्रमेव तस्यैव दातुरुदकभाजने प्रक्षिपेत्, अनिच्छतः कूपादौ समानजातीयोदकेऽन्यत्र छायागर्तादौ वा प्रतिष्ठापनविधिना प्रतिष्ठापनं कुर्यात्, आर्द्रस्य पतद्ग्रहस्य तदा मार्जनादि न कुर्यात्, ईषच्छुष्कस्य तु कुर्यादेवमन्यदपि भाव्यमधिकमन्यत्र ॥ ८२ ॥

अथ पिण्डशय्यावस्त्रपात्राणीनामवग्रहमाश्रित्य भावाच निरूपयति—

## स्वीकृतादत्तानादानप्रतिज्ञो यथावग्रहस्तथैव कुर्यात् ॥ ८३ ॥

स्वीकृतेति, नामस्थापनेऽवग्रहस्य प्रसिद्धे, द्रव्यक्षेत्रकालभावभेदेन चतुर्विधो देवेन्द्रराजगृहपतिसागारिकसाधर्मिकभेदेन वा पञ्चविधोऽवग्रहः, तत्र द्रव्यावग्रहः सचित्तादिभेदतस्त्रिविधः, शिष्यादेः सचित्तः, रजोहरणादेरचित्तः, उभयस्य च मिश्रः । क्षेत्रावग्रहोऽपि तथैव त्रिविधः, यदि वा ग्राम-

भाषेत । किन्तु सति प्रयोजने महारम्भकृतमेतत् सावद्यकृतमेतत् प्रयत्नकृतमेतदित्येवमसावद्यां भाषेत । तथा च क्रोधादिरहितोऽनुविचिन्त्य निष्ठाभाष्यत्वरितभाषी विवेकभाषी भाषासमित्युपेतो भाषां वदेत् ॥ ७७ ॥

अथ वस्त्रैषणामधिकृत्याह—

## कार्पासार्कतूलोर्णादिनिष्पन्नमदुष्टं वस्त्रं यथासामर्थ्यं धारयेत् ॥ ७८ ॥

कार्पासेति, वस्त्रस्य नामादिश्चतुर्विधो निक्षेपः स्फुटे नामस्थापने, द्रव्यं त्रिधा, एकेन्द्रियनिष्पन्नं कार्पासिकादि, विकलेन्द्रियनिष्पन्नं चीनांशुकादि, पञ्चेन्द्रियनिष्पन्नं कम्बलरत्नादि, भाववस्त्रं त्वष्टादशशीलाङ्गसहस्राणि, अत्र द्रव्यवस्त्रेणाधिकारः, तत्र कार्पासादिनिष्पन्नमाधाकर्मादिदोषरहितं साधूद्देशेन क्रीतधौतादिदोषरहितञ्च वस्त्रं धारयेत्, तदन्वेषणाय नार्धयोजनात्परतो गमनाय मतिं कुर्यात् । यो निर्ग्रन्थो बलवानरोगी दृढकायो दृढधृतिश्च स एकं प्रावरणं त्वक्त्राणाय धारयेन्न द्वितीयम्, यत्परत्राचार्यादिकृते बिभर्ति न तस्य स्वयं परिभोगं कुर्यात् । यः पुनर्बालो दुर्बलो वृद्धो वाऽसमर्थो रोगी वाऽल्पसंहननः स यथासमाधि द्व्यादिकमपि धारयेत् । जिनकल्पिकस्तु यथाप्रतिज्ञमेव धारयेत्, नास्ति तत्रापवादः । निर्ग्रन्थी तु चतस्रः सङ्घाटिका धारयेत्, एका द्विहस्तपरिमाणा या प्रतिश्रये तिष्ठन्ती प्रावृणोति, द्वे त्रिहस्तपरिमाणे, तत्रैकामुज्ज्वलां भिक्षाकाले, अपराञ्च बहिर्भूमिगमनावसरे, चतुर्हस्तविस्तरामपरां समवसरणादौ सर्वशरीरप्रच्छादिकां प्रावृणोति, तस्याश्च यथाकृताया सङ्घाटिकाया अलाभेऽथ पश्चादेकमेकेन सार्धं सीव्येदिति ॥ ७८ ॥

निषेध्यवस्त्रमाह—

## बहुमूल्यान्यजिनप्रावरणानि चायोग्यानि ॥ ७९ ॥

बहुमूल्यानीति, येषां मूल्यं महत्—यथा मूषकादिचर्मनिष्पन्नानि, सूक्ष्माणि वर्णच्छव्यादिभिश्च कल्याणानि, इन्द्रनीलवर्णकार्पासनिष्पन्नानि, क्वचिद्देशविशेषेऽजा सूक्ष्मरोमवत्यो भवन्ति तत्पक्ष्मनिष्पन्नानि गौडविषयविशिष्टकार्पासिकपट्टानि मलयजसूत्रोत्पन्नान्येवंविधानि महार्घमूल्यतया चौरादिसुभिक्षापायभयाल्लाभे सति न प्रतिगृह्णीयात् । तथा सिन्धुविषय एव सूक्ष्मचर्माणः पशवस्तच्चर्मनिष्पन्नानि कृष्णनीलगौरमृगाजिनानि कनकनिभकान्तीनि कृतकनकरसपट्टानि कनकरसस्तबकाञ्चितानि व्याघ्रचर्माण्यन्यानि वा तथा प्रकाराण्यजिनप्रावरणानि लाभे सति न प्रतिगृह्णीयात् ॥ ७९ ॥

ग्रहणनियममाह—

## अभिग्रही विलोक्यानलास्थिराध्रुवाधारणीयानि शुद्धमादद्यात् ॥ ८० ॥

अभिग्रहीति, सङ्कल्पितं याचिष्ये, दृष्टं सद्याचिष्ये, अन्तरपरिभोगेनोत्तरीयपरिभोगेन वा शय्यातरेण परिभुक्तप्रायं वस्त्रं ग्रहीष्ये, तदेवोत्सृष्टधार्मिकं ग्रहीष्यामीत्येवमभिग्रहविशेषैश्चतुर्भिर्वस्त्रान्वेषी साधुः पश्चात्कर्मानापादकं बीजकन्दहरिताद्यसंसक्तमल्पाण्डाल्पसन्तानकादिगुणविशिष्टं दात्रा तदैव दीयमानं वस्त्रमाद्यन्तेन प्रत्युपेक्ष्य गृह्णीयात्, अप्रत्युपेक्षितं न गृह्णीयात्, कर्मोपादानमेतद्ग्रहणम्, यतस्तत्र किञ्चित्कुण्डलादिकमग्निजातं बद्धं भवेत्, सचित्तं वा किञ्चिद्भवेत् । तथा हीनादिस्वा-

दभीष्टकार्यासमर्थमारुमं, जीर्णमस्थिरं, स्वल्पकालानुवर्तनादध्रुवम्, अप्रशस्तप्रदेशखञ्जनादिकलङ्काङ्कितत्वादधारणीयम्, एभिश्चतुर्भिः पदैः षोडशभङ्गा भवन्ति तत्रैक एव भङ्गः शुद्धः, अपरे पञ्चदशाशुद्धास्तथाविधं वस्त्रं दात्रा दीयमानमपि साधवे न कल्पते ॥ ८० ॥

धावननियममाह—

## गच्छान्तर्गतो यतनया प्रक्षाल्य प्रत्युपेक्षितस्थण्डिलादावातापयेत् ॥ ८१ ॥

गच्छान्तर्गत इति, मलिनमपि दुर्गन्धमपि वस्त्रं गच्छनिर्गतो न प्रक्षालयेत्, गच्छान्तर्गतस्तु लोकोपघातसंसक्तिभयान्मलापनयनार्थमेव प्रासुकोदकादिना यतनया धावनादि कुर्यात्, न त्वभिनवधस्त्रं नान्नीति कृत्वा सुगन्धिद्रव्येणाघृष्य प्रघृष्य वा शोभनतामापादयेत्, आतापनमपि भूमावव्यवहिताया चलाचले स्थूणादौ वा तत्पतनभयतो न कुर्यात्, किन्तु स्थण्डिलादि चक्षुषा प्रत्युपेक्ष्य रजोहरणादिना प्रमृज्य चातापनादिकं कुर्यात् ॥ ८१ ॥

अथ पटलकैर्विना पिण्डो न ग्राह्य इति यथा वस्त्रैषणा वर्णिता तथैव पात्रेण विना न ग्राह्य इत्यधुना पात्रैषणा वर्ण्यते—

## तद्वद्गृहीतपात्रो यतनया गृहपतिकुले शुद्धाहारादि याचेत ॥ ८२ ॥

तद्वदिति, वस्त्रवदित्यर्थः, अर्धयोजनान्तर एव पात्रान्वेषी तारुण्यबलस्थिरसंहननाद्युपेतः शुद्धमलाबूदारुमृत्तिकादिपात्रमेकमेव बिभृयात्, न च द्वितीयम्, स च जिनकल्पादि, इतरस्तु मात्रकसद्वितीयं पात्रं धारयेत, तत्र सङ्घाटके सत्येकस्मिन् भक्तं द्वितीये पानकं, मात्रकन्त्वाचार्यादिप्रायोग्यकृतेऽशुद्धस्य वा भोजनस्य शुद्ध्यर्थम् । तानि च महार्घमूल्यानि लोहताम्रसीसकहिरण्यादिरूपाणि च न गृह्णीयात्, तथा रिक्तं पात्रं न दातव्यमतो मुहूर्त्तमात्रं स्थीयतामशनादिकं कृत्वा पात्रकं भृत्वा ददामीति दात्रोक्ते निषेधयेत्तथापि तथाकरणे पात्रं न गृह्णीयात्, दीयमानमपि पात्रकमन्तोपान्तं प्रत्युपेक्ष्य गृह्णीयात्, तथा पिण्डपातप्रतिज्ञया गृहपतिकुलं प्रविविक्षुः पूर्वमेव पतद्ग्रहं भृशं प्रत्युपेक्ष्य प्रमृज्य च गृहपतिकुलं प्रविशेत्, अकृतप्रत्युपेक्षणप्रमार्जने पतद्ग्रहे द्वीन्द्रियादिप्राणिनीजरजःप्रभृतीनां पर्यापत्तप्रसङ्गेन कर्मोपादानतासम्भवः । तत्र गत्वा पानकादिके याचिते शीतोदकादि यदि दद्यात्तदाऽप्रासुकमिति न गृह्णीयात्, कथञ्चिद्विमनस्कतादिना यदि प्रतिगृहीतं ततः क्षिप्रमेव तस्यैव दातुरुदकभाजने प्रक्षिपेत्, अनिच्छतः कूपादौ समानजातीयोदकेऽन्यत्र छायागर्तादौ वा प्रतिष्ठापनविधिना प्रतिष्ठापनं कुर्यात्, आर्द्रस्य पतद्ग्रहस्य तदा मार्जनादि न कुर्यात्, ईषच्छुष्कस्य तु कुर्यादेवमन्यदपि भाव्यमधिकमन्यत्र ॥ ८२ ॥

अथ पिण्डशय्यावस्त्रपात्रादीनामवग्रहमाश्रित्य भावानां निरूपयति—

## स्वीकृतादत्तानादानप्रतिज्ञो यथावग्रहस्तथैव कुर्यात् ॥ ८३ ॥

स्वीकृतेति, नामस्थापनेऽवग्रहस्य प्रसिद्धे, द्रव्यक्षेत्रकालभावभेदेन चतुर्विधो देवेन्द्रराजगृहपतिसागारिकसाधर्मिकभेदेन वा पञ्चविधोऽवग्रहः, तत्र द्रव्यावग्रहः सचित्तादिभेदतस्त्रिविधः, शिष्यादेः सचित्तः, रजोहरणादेरचित्तः, उभयस्य च मिश्रः । क्षेत्रावग्रहोऽपि तथैव त्रिविधः, यदि वा ग्राम-

नगरारण्यभेदात्। कालावग्रहस्तु ऋतुबद्धवर्षाकालभेदाद्द्विधा। भावावग्रहो द्विधा मतिग्रहणावग्रहभेदात्, मत्यवग्रहोऽप्यर्थव्यञ्जनावग्रहभेदतो द्विधा, अर्थावग्रह इन्द्रियनोइन्द्रियभेदात् षोढा व्यञ्जनावग्रहश्च चक्षुरिन्द्रियमनोवर्जश्चतुर्धा। अपरिग्रहस्य साधोर्यदा पिण्डवसतिवस्त्रपात्रग्रहणपरिणामो भवति तदा स ग्रहणभावावग्रहो भवति, तस्मिंश्च सति येन प्रकारेण मम शुद्धं वसत्यादिकं प्रातिहारिकमप्रातिहारिकं वा भवेदित्येव यतितव्यम्, देवेन्द्राद्यवग्रहः पञ्चविधोऽपि ग्रहणावग्रहेऽस्मिन् द्रष्टव्यः। तत्र परित्यक्तगृहपाशोऽकिञ्चनो ममताविधुरः साधुः परदत्तभोजी सन् पापं कर्म न करिष्यामीति समुत्थितोऽदत्तादानं प्रत्याख्यामीति कृतप्रतिज्ञो भवति, स दन्तशोधनमात्रमपि परकीयमदत्तं न गृह्णाति न वा परेण ग्राहयति नापि गृह्णन्तमपरं समनुजानाति तत्सप्रव्रज्यानां साधूनामप्युपकरणजातं नाननुज्ञातो गृह्णाति, याचितक्षेत्रावग्रहस्तत्पतिनाऽनुज्ञातो यावन्मात्रक्षेत्रकालाद्यवग्रहस्तावन्मात्रं वसति ततो विहरिष्यति च। आह्वानेन स्वयमेव वा समागतान् साधर्मिकसाम्भोगिकादीन् प्राघूर्णकान् स्वयमाहृतेनाशनादिना निमन्त्रयेत्, न परानीतमशनाद्याभिरेव। कार्यार्थं स्वोद्देशेनैव गृहपतिगृहाद्गृहीतं सूच्यादिकमपरेषां साधूनां न समर्पयेत्, कार्यानन्तरञ्च तद्गृहपतये यथाविधि प्रत्यर्पयेत्। कारणवशेनापरब्राह्मणाद्युपभोगसामान्येऽगारादौ तदीयेन याचनयाऽवगृहीतेऽवग्रहे ब्राह्मणादीनां छत्राद्युपकरणजातं न बहिर्निष्काशयेत्, नापि ततोऽभ्यन्तरं प्रवेशयेत्, न वा सुप्तान् तान् प्रतिबोधयेत्, न वा तेषां मनसः पीडां विदध्यात्। कदाचिदाम्रवने याचितावग्रहस्तत्रस्थः सति कारणे आम्रं बुभुक्षुः साण्डससन्तानकाद्यप्रासुकं न गृह्णीयात्, भिन्नखण्डराहित्यादिगुणोपेतं पाटितं खण्डितं प्रासुकं गृह्णीयात्। तथा सप्तभिः प्रतिमाभिरवग्रहं गृह्णीयात्तद्यथा आगन्त्रागारादौ पूर्वमेव विचिन्त्यैवम्भूतः प्रतिश्रयो ग्राह्यो नान्यथाभूत इति प्रथमा प्रतिमा। अहमन्येषां साधूनां कृतेऽवग्रहं याचिष्ये, अन्येषां वाऽवग्रहे गृहीते वत्स्यामीति द्वितीया, तत्राद्या सामान्येन, द्वितीया तु गच्छान्तर्गतानां साम्भोगिकानामसाम्भोगिकानाञ्चोद्युक्तविहारिणाम्, यतस्तेऽन्योऽन्यार्थं याचन्ते। अन्यार्थमवग्रहं याचिष्येऽन्यावगृहीते तु न स्थास्यामीति तृतीया, एषा यथालन्दिकानाम्, आचार्यात्तेषां सूत्रार्थविशेषस्य काङ्क्षणादाचार्यार्थं याचनासद्भावात्। अहमन्येषां कृतेऽवग्रहं न याचिष्ये, अन्यावगृहीते च वत्स्यामीति चतुर्थी, इयं गच्छ एवाभ्युद्यतविहारिणां जिनकल्पाद्यर्थं परिकर्म कुर्वताम्। अहमात्मकृतेऽवग्रहमवग्रहीष्यामि न चापरेषां द्वित्रिचतुःपञ्चानामिति पञ्चमी, इयं तु जिनकल्पिकस्य। यदीयमवग्रहमवग्रहीष्यामि तदीयमेवोत्कटादिसंस्तारकं ग्रहीष्यामि, अन्यथोत्कटुको वा निषण्णो वोपविष्टो वा रजनीं गमयिष्यामीति षष्ठी, एषा जिनकल्पिकादेः। पूर्वोक्तैव यथासंस्तृतमेव शिलादिकं ग्रहीष्यामीति नेतरदिति विशिष्टा सप्तमी। एवंविधाभिः प्रतिमाभिरवग्रहं गृह्णीयादिति ॥ ८३ ॥

अथ कायोत्सर्गस्वाध्यायोच्चारप्रस्रवणादिकर्तव्ययोग्यस्थानवर्णनायाह—

**अभिग्रही योग्यवसतिस्थः साण्डादिभूमौ स्वाध्यायादि न कुर्यात् ॥ ८४ ॥**

अभिग्रहीति, कर्मोपादानभूतानि स्थानानि परित्यज्योर्ध्वस्थानाद्यर्थं स्थानमन्वेषयेत्, तच्च साण्डादिदोषरहितं भवेत्, तत्र च चतसृभिः प्रतिमाभिः स्थातुमिच्छेत्, तत्र प्रथमा प्रतिमा, यथा

अचित्त स्थान उपाश्रयिष्यामि, अचित्तं कुड्यादिकमवलम्बयिष्ये कायेन, हस्तपादाद्याकुञ्चनादिक्रियावलम्बन करिष्ये तथा तत्रैव सविचारं स्तोकपादादिविहरणरूप स्थान समाश्रयिष्यामीति। द्वितीया चाऽऽलम्बनाकुञ्चनप्रसारणादिक्रियामवलम्बनञ्च करिष्ये न पादविहरणमिति। तृतीया चाकुञ्चनप्रसारणमेव नावलम्बनपादविहरण इति। चतुर्थी तु त्रयमपि न करिष्य इति। एवम्भूतस्त्यक्तपरिमितकालकायो व्युत्सृष्टकेशश्मश्रुलोमनख सम्यङ्निरुद्ध स्थान स्थास्यामीति प्रतिज्ञाय कायोत्सर्गव्यवस्थितो मेरुवन्निष्प्रकम्पस्तिष्ठेत्। तथा यदि स्वाध्यायभूमिं गन्तुमभिकाङ्क्षेत्तदा साण्डाद्यप्रासुकां भूमिं न परिगृह्णीयात्, स्वाध्यायभूमिं द्वित्राद्या यदि गच्छेयुस्तदा न परस्पर गात्रसस्पर्शवक्त्रसयोगाद्यनेकविधा कन्दर्पप्रधाना क्रिया विदध्यु। तथोच्चारप्रस्रवणादिना कदाचिद्बाध्यमान स्वकीये तदभावे साधर्मिके वा याचिते पूर्वप्रत्युपेक्षिते पादपुञ्छनकसमाध्यादावुच्चारादिक कुर्यात, तथोच्चारप्रस्रवणशङ्कायां साधुः पूर्वमेव स्थण्डिल गत्वा साण्डादिकेऽप्रासुके तत्र कुर्यात्, एक बहून् वा साधर्मिकानुद्दिश्य तत्प्रतिज्ञया कदाचित् कश्चित्स्थण्डिलादि कुर्यात्तत् पुरुषान्तरस्वीकृतमस्वीकृत वा मूलगुणदुष्टमुद्देशिकमिति तत् परिहरेत्। एव क्रीतादिक स्थण्डिल शाल्यादिवपनयोग्य घासादियुत गर्त्तदरीदुर्गादिरूप मानुषरन्धनादिस्थान वैहानसगार्धपृष्ठादिरूपमारामदेवकुलप्राकाराट्टालचत्वरश्मशानतीर्थस्थानपङ्किलप्रदेशादिरूप च स्थण्डिल परिहरेत्। कल्प्यस्थण्डिले वर्त्तमानोऽनुकूलप्रतिकूलशब्दादिश्रवणेऽरक्तद्विष्टस्तच्छ्रवणादिप्रतिज्ञया न तत्र गच्छेत्, अन्यथाऽजितेन्द्रियत्वस्वाध्यायादिहानिरागद्वेषसम्भवात्, किन्तु साधु स्वकीय परकीय वा पात्रक गृहीत्वा स्थण्डिल चाऽनापातमसलोक गत्वोच्चारं प्रस्रवण वा परिष्ठापयेदिति ॥ ८४ ॥

अथ परक्रियानिषेधमाह—

## परक्रियां कर्मनिमित्तां नाभिलषेत् ॥ ८५ ॥

**परेति,** षोढास्य निक्षेपः, नामस्थापने प्रसिद्धे, द्रव्यक्षेत्रकालभावपराणि प्रत्येक तदन्यादेशक्रमबहुप्रधानपरभेदेन षड्विधानि भवन्ति, तत्र द्रव्ये तावत्तत्परं तद्रूपतयैव वर्त्तमान परं तत्परम्, यथा परमाणोः पर परमाणु, अन्यरूपतया परमन्यपर यथैकाणुकाद्व्यणुकत्र्यणुकादि, यस्या कस्याश्चित्क्रियाया यो नियुज्यते स आदेशपरः कर्मकरादि, क्रमपरं तु द्रव्यादि चतुर्धा, तत्र द्रव्यतः क्रमपरमेकप्रदेशिकद्रव्याद्द्विप्रदेशिकद्रव्यमेव द्व्यणुकात्त्र्यणुकमित्यादि, क्षेत्रत एकप्रदेशावगाढाद्द्विप्रदेशावगाढमित्यादि, कालत एकसमयस्थितिकाद्द्विसमयस्थितिकमित्यादि। भावत एकगुणकृष्णाद्द्विगुणकृष्णमित्यादि। यदस्माद्बहु तद्बहुपरम्, जीवेभ्य पुद्गला अनन्तगुणा इत्यादि, प्रधानत्वेन परः प्रधानपरो यथा द्विपदाना तीर्थकरश्चतुष्पदाना सिंहः, अपदानामर्जुनसुवर्णादि। एव सामान्येन जम्बूद्वीपक्षेत्रात् पुष्करादिक क्षेत्र क्षेत्रपरम्, प्रावृट्कालाच्छरत्काल कालपर, औदयिकादौपशमादिर्भावपर.। विशेषेण प्रत्येक षड्भेदा स्वयमूह्या। साधुरात्मन क्रियमाणा कर्मसश्लेषजननी धर्मश्रद्धया परेणारचिता रजोवगुण्ठितपादमार्जनतैलादिम्रक्षणोद्वर्त्तनशीतोदकादिधावनसुगन्धिद्रव्यालिम्पनविशिष्टधूपसन्धूपनकण्टकाद्युद्धरणादिलक्षणा क्रिया मनसा नाभिलषेन्न वाचा कारयेत् कायेन वा। तथा ग्लानस्य साधोरशुद्धेन शुद्धेन वा मन्त्रादिसामर्थ्येन कश्चिद्व्याध्युपशम यदि कर्तुमभिलषेत्तदा सचित्तकन्दमूलादिना वा

वस्माभिलषेत्, पूर्वकृतकर्मफलाधीना जीवा, कर्मविपाकजा कटुकवेदनामनुभवन्तीति भावयन् समतया तामनुभवेत्। तथा परस्परम् साधुना पूर्वोक्ता रजःप्रमार्जनादिकाः क्रिया कृतप्रतिक्रियया न विधेया। परक्रियायामन्योन्यक्रियायाञ्च गच्छान्तर्गतैर्यतना कर्तव्या, गच्छनिर्गतानान्त्वेतया न प्रयोजनम् ॥८५॥

अथ महाव्रतपालनोपयोगिनीर्भावना आह—

## पञ्च पञ्चमहाव्रतानां भावना भाव्याः ॥ ८६ ॥

**पञ्चेति,** चतुर्धाऽस्या निक्षेपः, नामस्थापने प्रसिद्धे, नोआगमतो व्यतिरिक्ता द्रव्यभावना जातिकुसुमादिद्रव्यैस्तिलादिद्रव्येषु या वासना सा, द्रव्येण द्रव्यस्य भावना सर्वापि ग्राह्या। प्रशस्ताप्रशस्तभेदतो भावभावना द्वेधा, प्राणिवधमृषावादादत्तादानमैथुनपरिग्रहक्रोधमानमायालोभेष्वकार्येषु पौनःपुन्यकरणतया प्रवृत्तिविषयाऽप्रशस्ता भावना। दर्शनज्ञानचारित्रतपोवैराग्यादिषु प्रशस्ता भावना भवति, तत्र भगवतां पचपनस्याचार्यादीनां युगप्रधानानामृद्धिमतां चतुर्दशपूर्वविदामामर्षौषध्यादिप्राप्तर्द्धीनाञ्चाभिगमनर्नमनगुणोत्कीर्तनपूजनस्तवनादिर्दर्शनभावना, यथाऽनवरतं भाव्यमानया दर्शनशुद्धिर्भवति तथा तीर्थकृज्जन्मभूमिषु निष्क्रमणचरणज्ञानोत्पत्तिनिर्वाणभूमिषु देवलोकभवनेषु मन्दरेषु नन्दीश्वरद्वीपादौ भौमेषु पातालभवनेषु च यानि शाश्वतचैत्यानि तेषु तथाऽष्टापदे श्रीमदुज्जयन्तगिरौ गजाग्रपदे दशार्णकूटवर्तिनि तक्षशिलायां धर्मचक्रेऽहिच्छत्रायां पार्श्वनाथस्य धरणेन्द्रमहिमास्थाने रथावर्ते पर्वते वज्रस्वामिकृतपादपोपगमनस्थाने श्रीमद्वर्धमानमाश्रित्य चमरेन्द्रेण कृतोत्पतनस्थाने च यथासम्भवमभिगमनवन्दनादितो दर्शनशुद्धिः। ज्ञानभावना च तत्त्वार्थश्रद्धानं सम्यग्दर्शनं तत्त्वञ्च जीवाजीवादयो नव पदार्थास्ते च तत्त्वज्ञानार्थिना सम्यग्ज्ञातव्या, तत्परिज्ञानं यथावस्थिताशेषपदार्थाविर्भावकं आर्हतं प्रवचनमेवोपलभ्यम्, मोक्षाख्यकार्यस्य सम्यग्दर्शनचारित्रलक्षणं करणं सम्यग्दर्शनाद्यनुष्ठाता साधुः कारको मोक्षावाप्तिलक्षणा क्रियासिद्धिश्चेहैव प्रवचने इत्येव ज्ञानं तथाऽष्टप्रकारकर्मपुद्गलैः प्रतिप्रदेशमनन्तैर्बद्धो जीवः, मिथ्यात्वादयो बन्धहेतवः, अष्टप्रकारकर्मवर्गणारूपं बन्धनं तत्फलं चतुर्गतिकसंसारपर्यटनसातासाताद्यनुभवनरूपमन्यद्वा यत्किञ्चित्सुभाषितं तत्सर्वमिहैव प्रवचनेऽभिहितमिति ज्ञानविषया भावना सर्वा ज्ञानभावना। अहिंसालक्षणो धर्मः सत्यमदत्तादानं ब्रह्मचर्यं तथगुप्तिः परिग्रहविरतिश्चेहैव शोभनं नान्यत्रेति पञ्च महाव्रतभावनाः, वैराग्यभावनाऽप्रमादभावनैकाग्रभावनाप्रभृतयश्चरणमाश्रित्याचरणभावना। निर्वृत्त्यादिना येन तपसा मम दिवसोऽवन्ध्यो भवेत्, कतरद्वा तपोऽहं विधातुं समर्थः, कतरच्च तपः कस्मिन् वा द्रव्यादौ निर्वहति, कस्मिन् द्रव्ये क्षेत्रे काले भावे चाऽहमेवम्भूतं तपः कर्तुं समर्थ इत्येवं पर्यालोचना तपोभावना। अनित्यत्वादिद्वादशविधा भावना वैराग्यभावना। इह तु चारित्रभावना सूत्रे प्रोक्ता, तत्र प्रथमव्रतस्येर्यायां समितेन भाव्यम्, मनसा सुप्रणिहितेन भाव्यम्, प्राण्युपघातिनी वाङ् नाभिधातव्या, आदाननिक्षेपणायां समितेन भाव्यम्, प्रत्युपेक्षितमशनादि भोक्तव्यमिति पञ्च भावनाः। द्वितीयव्रतस्यानुविचिन्त्य भाषिणा भवितव्यम्, क्रोधः सदा परित्याज्यः, लोभजयः कर्तव्यः, भयं त्याज्यम्, हास्यमपीति पञ्च भावनाः। तृतीयव्रतस्यानुविचिन्त्य शुद्धोऽयमवग्रहो याचनीयः, आचार्यादीननुज्ञाप्य भोक्तव्यं विधेयम्, अवग्रहं गृहीत्वा निर्मितेन परिमितः एतावानवग्रहो ग्राह्यः, अनवरतमवग्रहपरिमाणं विधेयम्, अनुविचिन्त्य मितमवग्रहं साधर्मिकसम्बन्धिनम्

गृहीतादिति पञ्च भावना । चतुर्थव्रतस्य स्त्रीसम्बन्धिकथात्यागः, मनोहरतदिन्द्रियानवलोकनम्, पूर्वक्रीडितास्मरणम्, अतिमात्रप्रणीतपानाशनासेवा स्त्रीपशुपण्डकविरहितान्यासनस्थानमिति पञ्च भावना । पञ्चमव्रतस्य मनोज्ञामनोज्ञरूपरसगन्धस्पर्शेषु गार्ध्यपरिहार इति पञ्च भावना विज्ञेयाः ॥ ८६ ॥

अथानित्यत्वभावनाश्रयेणाह—

**प्रवचनावगतानित्यत्वस्त्यक्तारम्भो दुष्प्रकम्प्यः ॥ ८७ ॥**

**प्रवचनेति,** चतसृष्वपि गतिषु प्राणिनो यत्र यत्रोत्पद्यन्ते तत्र तत्रानित्यतामुपगच्छन्तीत्यादि गौतमीन्द्रमुखात् प्रवचनं निशम्य यथैव प्रवचनेऽनित्यत्वादिकमभिहितं तथैव दृश्यत इति विचिन्त्य परित्यक्तगृहपाशमारम्भादिसावद्यानुष्ठानं बाह्याभ्यन्तरं च परिग्रहं त्यक्त्वा सम्यग्यतमानो जिनागमगृहीतमार्गः परिशुद्धाहारादिना वर्तमानः साधुः न मिथ्यादृष्टयोऽसभ्यालापैः लोष्टप्रहारादिभिर्वा पीडामुत्पादयन्ति, न वा तैः गात्रोष्णशीतोष्णादिस्पर्शैः पीडितोऽपि मानसिकत्वात्पूर्वकृतकर्मविपाकानुभवं मन्यमानो निष्प्रकम्पमना ध्यायति ॥ ८७ ॥

मूलोत्तरगुणाश्रयेणाह—

**गीतार्थसहवासी ध्याता महाव्रती सितकामगुणास्पृष्टो निर्मलो भवतीति ॥ ८८ ॥**

**गीतार्थेति,** परीषहोपसर्गसहः इष्टानिष्टविषयेषु माध्यस्थ्यमवलम्बमानो गीतार्थैः सह वासस्य विहितावग्रहो विगततृष्णः क्षान्त्यादिप्रधानो धर्मध्यानव्यवस्थितः प्रवृद्धतपःप्रभावः सर्वाघप्रकारापनयनदक्षजगत्त्रयप्रकाशिमहाव्रतनित्यसम्पन्नः निवर्तितस्रोतसीयास्तदीयैर्वा कामगुणैर्मनोज्ञशब्दादिभिरस्पृष्टः सत्कारानभिलाषी शास्त्रक्रियासमलङ्कृतो भिक्षुर्यथा सर्पः कञ्चुकं मुक्त्वा निर्मलो भवति तथाऽयमपि नरकादिभयाद्विमुच्यते । इतिशब्द आचाराङ्गसमाप्तिद्योतकः ॥ ८८ ॥

* * *

सरिदेषा साधूनामाचाराङ्गाब्धिमन्थनोद्भूता ।
पीयूषनिभा भयात् विधुना मृतिशून्यताजननी ॥

* * *

इति श्रीतपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तच्छिष्येण विजय-
लब्धिसूरिणा सङ्कलितायां सूत्रार्थमुक्तावल्यामाचारा-
ङ्गाख्या द्वितीया मुक्तासरिका वृत्ता ।

## अथ सूत्रकृतमुक्तासरिका



अथ निखिलकर्मोच्छेदप्रयोजकाद्देतुपदेशलक्षणद्वादशाङ्गादिरूपागमस्य पूज्यार्यरक्षितमिश्रैरनुग्रहबुद्ध्या चरणकरणद्रव्यधर्मकथागणितानुयोगभेदेन चतुर्धा व्यवस्थापितवया चरणकरणप्राधान्येन व्यावर्णितस्याचाराङ्गस्य सारं पूर्वं वर्णयित्वा द्रव्यप्राधान्येन व्याख्यातस्य सूत्रकृताङ्गस्य समासेनैव सारमभिधातुमाह—

## अथ सूत्रकृताङ्गस्य सारः ॥ १ ॥

**अथेति,** आचारसारव्यावर्णनानन्तरमित्यर्थः, उच्यत इति शेषः, सूत्रकृताङ्गस्य सारमभिधातुं प्रक्रमत इति भावः, सूत्रानुसारेण तत्त्वावबोधः क्रियतेऽस्मिन्निति सूत्रकृत तच्च तदङ्गञ्चेति शब्दव्युत्पत्तिः, गुणनिष्पन्नमिदं नाम । सूत्रनिक्षेपश्चतुर्धा नामस्थापनाद्रव्यभावभेदात्, नामस्थापने स्पष्टे, द्रव्यसूत्रञ्च वनीफलऊर्णकार्पासिकमण्डजवालजादिकं सूत्रम्, भावसूत्रं श्रुतज्ञानं स्वपरार्थसूचकत्वात्, इदं श्रुतज्ञानसूत्रं सञ्ज्ञासूत्रं सङ्ग्रहसूत्रं वृत्तनिबद्धं जातिनिबद्धं चेति चतुर्विधम्, स्वसङ्केतपूर्वकं निबद्धं सञ्ज्ञासूत्रं यथा यच्छेकं स सागारिकं न सेवेतेत्यादिलौकिकं, लोकेऽपि पुद्गलसंस्कारः क्षेत्रज्ञ इत्यादि । प्रभूतार्थसङ्ग्राहकं सङ्ग्रहसूत्रम्, यथा द्रव्यमित्युच्यमाने समस्तधर्माधर्मादिसङ्ग्रहः सर्वोत्पादव्ययध्रौव्यं सदित्यादि । नानाविधवृत्तजातिनिबद्धं वृत्तनिबद्धं यथा बुज्झिज्जत्ति तिउट्टिज्जेत्यादि, जातिनिबद्धन्तु चतुर्धा, उत्तराध्ययनज्ञाताधर्मकथादिकं कथनीयमेकम्, पूर्वर्षिचरितकथानकभावत्वात्तस्य । गद्यं ब्रह्मचर्याध्ययनादि, पद्यं छन्दोनिबद्धम्, गेयं स्वरसञ्चारेण गीतिकाप्रायनिबद्धम्, यथा कापालीयमध्ययनम् ॥ १ ॥

सङ्क्षिप्यमाणग्रन्थस्य रचयितारं स्मरति—

## विशिष्टावस्थावन्तो निशम्यास्य कर्त्तारो गणधरा ॥ २ ॥

**विशिष्टेति,** लौकिकग्रन्थकर्त्रपेक्षया विलक्षणावस्थावन्त इत्यर्थः । तथाहि ग्रन्थरचना मनोवाक्कायव्यापारे शुभेऽशुभे वा ध्याने वर्त्तमानैः क्रियते, लौकिकग्रन्थानां कर्मबन्धहेतुत्वात्तत्कर्तृणामशुभाध्यवसायित्वम्, प्रकृतं स्वसमयश्रुतञ्च शुभध्यानावस्थितैर्गणधरैः कृतम्, ते हीदमजघन्योत्कृष्टकर्मस्थितिभृतो विपाकतो मन्दानुभावा ज्ञानावरणीयादिप्रकृतीर्बध्नन्तोऽनिकाचयन्तोऽनिधत्तावस्थामकुर्वन्तो दीर्घस्थितिकाः कर्मप्रकृतीर्ह्रस्वीयसीर्विदधाना उत्तरप्रकृतीर्बध्यमानासु सङ्क्रामयन्त उदयवता कर्मणामुदीरणामारचय्य वोऽप्रमत्तगुणस्थाः सातासातायुष्यनुदीरयन्तो मनुष्यगतिपञ्चेन्द्रियजात्यौदारिकशरीरतदङ्गोपाङ्गादिकर्मणामुदये वर्त्तमानाः पुंवेदिनः क्षायोपशमिके भावे वर्त्तमानाः क्षायिकज्ञानवर्त्तिभिर्जिनवरैर्वाग्योगेन तदुद्देशेनैव प्रभाषितमर्थं निशम्य वाग्योगेनैव स्वाभाविकया प्राकृतलक्षणया भाषया सूत्रकृताङ्गं कृतवन्तः, न तु रुद्रटिट्टलप्रकृतिप्रत्ययविकारादिविशिष्टविकल्पजातनिर्दलया, संस्कृतभाषया । ते च न प्राकृतपुरुषकल्पाः, अनेकयोगधरत्वात् । सूत्रकृताङ्गस्यास्यापि द्वौ श्रुतस्कन्धौ, त्रयोविंशत्यध्ययनात्मकः प्रथमश्रुतस्कन्धः, सप्ताध्ययनात्मको द्वितीयश्रुतस्कन्ध इति ॥ २ ॥

प्रथमाध्ययनस्य स्वपरसमयनिरूपणात्मकत्वात्स्वसमयमादौ निरूपयति—

**विज्ञाय परिग्रहबन्धनं संयमेनापनयेत् ॥ ३ ॥**

**विज्ञायेति,** जीवप्रदेशैरन्योऽन्यानुवेधरूपतया बध्यते व्यवस्थाप्यते यत्तद्बन्धनं ज्ञानावरणीयाद्यष्टविधं कर्म तद्धेतवो मिथ्यात्वाविरत्यादयः परिग्रहारम्भादयो वा, परिग्रहरूपं बन्धनं परिग्रहबन्धनम्, परिग्रहग्रहणञ्चैव परमार्थतोऽनर्थमूलत्वात्तस्यैवोपादानं कृतम्, स्तोकमपि तृणतुषकाद्यपि द्विपदादि परिग्रहं परिगृह्यान्यान् ग्राहयित्वा गृह्णतो वाऽन्याननुज्ञायाष्टविधकर्मणस्तत्फलाद्वाऽसातोदयादितो न मुच्यते, अप्राप्तनष्टेषु परिग्रहेषु काङ्क्षाशोकौ प्राप्तेषु रक्षणमुपभोगे चातृप्तिरपि स्यात्, एवमसन्तुष्टः परिग्रही तदर्जनतत्परोऽर्जितोपद्रवकारिषु द्विष्टो मनोवाक्कायेभ्यो जीवान् व्यापादयति, अन्यैरपि घातयति घ्नतश्चानुमोदते, एवं मृषावादादीनपि विदधाति तस्मात्स्वजनादयो वित्तादयश्च सर्वे संसारान्तर्गतं यत्किञ्चिदपि शारीरमानसवेदनाक्रान्तस्य जीवस्य परिरक्षणाय समर्थमिति ज्ञपरिज्ञया विज्ञाय प्रत्याख्यानपरिज्ञया च प्रत्याख्याय संयमानुष्ठानलक्षणक्रियया तद्बन्धनमपनयेत्। विज्ञाय संयमेनापनयेदित्युक्त्या ज्ञानक्रियाभ्यामेव निःश्रेयसाधिगमो न ज्ञानमात्रात्क्रियामात्राद्वेति सूचितम्, तत्र ज्ञानं स्वपरावभासनरूपम्, क्रिया स्वरूपरमणरूपा, तत्र चारित्रवीर्यगुणैकत्वपरिणतिः क्रिया सा साधिका, तत्र जीवोऽनादिसंसारेऽशुद्धवाचिकादिक्रियाव्यापारनिष्पन्नः परिभ्रमति, स एव विशुद्धसमितिगुप्त्यादिवीर्यचैतन्यादिसत्क्रियाचरणेन निवर्त्तते, अतः संसारक्षपणाय संवरनिर्जरात्मिका क्रिया कर्त्तव्या, तथा द्रव्यभावभेदेन ज्ञानं द्विविधम्, एवं क्रियापि, भावनारहितं वचनव्यापारमनोविकल्परूपं संवेदनज्ञानं द्रव्यज्ञानम्, तच्च भावज्ञानतत्त्वानुभवलक्षणोपयोगस्य कारणम्, योगव्यापारात्मिका द्रव्यक्रिया सापि स्वगुणानुयायिस्वगुणप्रवृत्तिरूपाया भावक्रियायाः कारणम्। ज्ञानस्य फलं विरतिस्तेन ज्ञानं विरतिकारणमतो ज्ञानपूर्विका क्रिया फलवतीत्येतत्सूचनाय विज्ञाय संयमेनेति पूर्वोत्तरकालनिर्देशः कृतः, न हि साधनप्रवृत्तिलक्षणक्रियारहितं ज्ञानं मोक्षलक्षणकार्यसाधकम्, गतिरहितपथज्ञवत्, आश्रयत्येव हि तत्त्वज्ञानी प्रथमसंवरकार्यरुचिर्देशसर्वविरमणलक्षणां क्रियाम्, चारित्रयुतोऽपि तत्त्वज्ञानी केवलज्ञानकार्यरुचिः शुक्लध्यानारोहणरूपां क्रियाम्, केवलज्ञान्यपि सर्वसंवरपूर्णानन्दकार्यावसरे योगनिरोधरूपां क्रियाम्। बन्धनमपनयेदित्यनेन च दुःखसाधनकर्मध्वंसः पुरुषार्थो मोक्ष इति सूचितम्, न तु दुःखध्वंसः, उत्पन्नस्य दुःखस्य क्षणिकत्वेन स्वयमेव ध्वंसादनुत्पन्नस्यानुत्पन्नत्वादेव तद्ध्वंसस्य चासाध्यत्वात्, सन्तानोच्छेदो मोक्ष इत्यपि निरस्तम्, तैः विनाशस्य निर्हेतुकत्वस्वीकारेण तदुपायोपदेशवैयर्थ्यात्। चैतन्यमात्रेऽवस्थानलक्षणा मुक्तिरपि न युक्ता, प्रकृत्यादेरसिद्धेः, तत्साधनतयाऽभीष्टप्रकृतिपुरुषविवेकासम्भवात्। आत्मविशेषगुणानामत्यन्तोच्छेदो मुक्तिरित्यपि न युक्तम्, कस्याप्यत्यन्तोच्छेदासम्भवात्, कथञ्चिदेवोच्छेदादिति ॥ ३ ॥

अथ भगवदुक्तजीवकर्मतद्धेतुत्रोटनमोक्षादिभिन्नेन निजमतिविकल्पितसमयाभिनिविष्टानां तेषां न संसारगर्भजन्मदुःखमारादिपारगत्वमिति सूचयितुं प्रथमतश्चार्वाकमतमुपन्यस्यति—

**विशिष्टपञ्चभूतपरिणाम एवात्मा तद्विनाशोऽन्यतमापायादित्येके ॥ ४ ॥**

विशिष्टेति, एके चार्वाकाः सर्वलोकव्यापीनि पञ्चमहाभूतानि पृथिव्यप्तेजोवाय्वाकाशलक्षणानि पदार्थत्वेनाभ्युपयन्ति न ततो व्यतिरिक्तं किञ्चिदपि, कठिनलक्षणा पृथिवी द्रवलक्षणा आपः, उष्णरूपं तेजः, चलनलक्षणो वायुः, शुषिरलक्षण आकाशः, एतानि प्रत्यक्षप्रमाणसिद्धानि, नैतेभ्यो व्यतिरिक्तः कश्चिदात्मादिरस्ति, तद्ग्राहकप्रमाणाभावात्, न वा प्रत्यक्षव्यतिरिक्तमनुमानादिकं प्रमाणं भवितुमर्हति, तत्रेन्द्रियेण साक्षादर्थसम्बन्धाभावात्, यच्च चैतन्यमुपलभ्यते तत्कायाकारपरिणतेषु भूतेष्वेव, पञ्चभूतानां समुदये शरीरेन्द्रियविषयसंज्ञा भवन्ति, तेभ्यश्च चैतन्यम्, तथा च भूतकार्यत्वाद्यथा घटादयो न भूतव्यतिरिक्तास्तथा चैतन्यमपीति कायलक्षणविशिष्टपञ्चभूतपरिणाम एवात्मा, भूताभिव्यङ्ग्यदेहस्तु तत्परिणामे चैतन्याभिव्यक्तौ सत्यां तदूर्ध्वं तेषामन्यतमस्य विनाशे तत्परिणामविनाशाच्चैतन्य स्याप्यभावेन भवति, न तु व्यतिरिक्तजीवविनिर्गमनात्। केषाञ्चिल्लोकायतिकानामाकाशस्यापि भूतत्वेनाभ्युपगमात् पञ्चेत्युक्तम् ॥ ४ ॥

तदेतन्मतं निराकरोति—

## तन्न, अभिव्यक्त्युत्पत्तिभ्यां ततश्चैतन्यासम्भवात् ॥ ५ ॥

तन्नेति, विशिष्टपञ्चभूतपरिणाम आत्मा नेत्यर्थः, तत्र हेतुमाहाभिव्यक्तीति, तथाहि त किं सतश्चैतन्यस्याभिव्यक्तिः, असतो वा, सदसद्रूपस्य वा, न प्रथमः, तस्यानाद्यनन्तत्वसिद्धिप्रसङ्गात् तत्सिद्धिव्यतिरेकेण सर्वदा चैतन्यस्य सत्त्वासम्भवात्, पृथिव्यादिसामान्यवत्, तथा च परलोकिनोऽभावात् परलोकाभाव इत्यभ्युपगमो बाधितः स्यात्। न द्वितीयः, प्रतीतिविरोधात्, सर्वथाप्यसतः कस्यचिदभिव्यक्त्यप्रतीतेः। न तृतीयः, परमतप्रवेशप्रसङ्गात्, कथञ्चिद्द्रव्यतः सतश्चैतन्यस्य पर्यायतोऽसतश्च कायाकारपरिणतपृथिव्यादिपुद्गलैरभिव्यक्तेः परैरपि स्वीकारात्, ननु तत्र चैतन्यस्योत्पत्तिरभ्युपगम्यते नत्वभिव्यक्तिः, नातः पूर्वोक्तो दोषः, विशिष्टपरिणामः शरीरेन्द्रियादिलक्षणः कारकः, कार्यश्चासत्स्वरूपनिर्वर्तकत्वमित्याशङ्कायां तत्रापि दोषमाविष्कर्तुमुक्तमुत्पत्तीति, तथा हि किं भूतानि चैतन्यं प्रत्युपादानकारणानि, सहकारिकारणानि वा, नाद्यः, यथा हि सुवर्णोपादाने किरीटादौ सुवर्णस्यान्वयस्तथा चैतन्ये भूतान्वयः स्यात्, न चैवम्, न हि भूतग्रामः पूर्वतनमचेतनस्वरूपं परित्यज्य चेतनाकारमादधानो धारणद्रवोष्णतेरणलक्षणेन रूपादिमत्तया वा भूतस्वभावेनान्वितः प्रमाणसिद्धः अपि तु तथाविधस्वभावरहितमेव चैतन्यमन्तःसंवेदनेनानुभूयते, न च प्रदीपाद्युपादानेन कज्जलादिना प्रदीपाद्यनन्वयिना व्यभिचारः, रूपादिमत्त्वेन तस्यान्वयित्वदर्शनात्। पुद्गलविकाराणां रूपादिमत्त्वम् अव्यभिचारात्। न च सत्त्वक्रियाकारित्वादिधर्मैर्भूतचैतन्ययोरन्वयित्वमस्तीति वाच्यम्, तथा सति जलानलादीनामपि तथाविधधर्मान्वयिनयोपादानोपादेयभावप्रसङ्गात्। न द्वितीयः, उपादानकारणस्यान्यस्य कल्पनाप्रसङ्गात्, भूतानां सहकारित्वात्, अनुपादानस्य कस्यचिदपि कार्यस्यानुपलब्धेः न च भूतेष्वेव कस्यचिदेकस्योपादानत्वमन्येषां सहकारित्वमिति वाच्यम्, विनिगमनाविरहेण सर्वेषामेवोपादानत्वस्यानुपादानत्वस्य वा प्रसङ्गात्। न च शब्दविद्युदादेरनुपादानस्याप्युपलम्भोऽस्तीति वाच्यम्, घटादिवत्तस्यापि कार्यत्वेन सोपादानत्वानुमानात्, तस्मादुत्पत्त्याश्रयेणापि भूतेभ्यो न चैतन्यस्य सम्भवः। ततश्चैतन्यासम्भवादित्युक्त्या चैतन्यस्यान्यगुणत्वमावेदितम्, तथा च चैतन्यं भूतान

न गुण, प्रत्येकागुणत्वे सति तत्समुदायगुणत्वासम्भवात् न हि प्रत्येकं सिकताया स्निग्धतागुणरहितायाः स्निग्धतागुणवत उत्पत्तिर्दृश्यते, अथवा चैतन्यापेक्षया पृथिव्यादीनामन्यगुणत्वान्न चैतन्य तत्समुदायगुण, न ह्यन्यगुणानां समुदायेऽपूर्वगुणोत्पत्ति क्वापि दृष्टा, अनुभूयते चैतन्यगुण कायेऽतोऽन्यस्य द्रव्यस्य चैतन्य गुण स एव चात्मा । एतेनैव हेतुनेन्द्रियादीनामपि चैतन्यगुणत्व प्रतिक्षिप्तम्, भूतात्मकेभ्य इन्द्रियेभ्योऽभिव्यक्त्युत्पत्तिभ्या चैतन्यासम्भवात्, यदपि प्रत्यक्षव्यतिरिक्त प्रमाण न सम्भवतीत्युक्त तदपि न युक्तम्, अनुमानादेरपि प्रतिनियतस्वविषयव्यवस्थाया प्रत्यक्षवदविसंवादकत्वेन प्रामाण्यसिद्धेः । अविसंवादकत्वादेव हि प्रत्यक्षस्यापि प्रामाण्यम्, तच्चेतरत्रापि तुल्यम्, अनुमानादितो निर्णीतेऽर्थे विवादाभावात्, लिङ्गानुमानस्याप्रामाण्ये प्रतीतिसिद्धसकलव्यवहारोच्छेदः स्यात्, अविनाभूतात्प्रतिनियताद्वेयार्थात् प्रतिनियतमर्थमेव प्रतिपत्तार प्रतियन्ति न त्वेकस्मादखिलम् । अतीन्द्रियार्थानुमानस्यैव प्रतिक्षेपे प्रत्यक्षवद्भिन्नानामतीन्द्रियाणा प्रामाण्येतरव्यवस्थाया असम्भव स्यात्, परचेतोवृत्तीनाञ्च सद्व्यापारव्यवहारादिकार्यविशेषात् प्रतिपत्तिरपि न स्यात्, तस्मात्प्रत्यक्षव्यतिरिक्तप्रमाणानामपि सिद्धत्वादस्त्यात्मा, असाधारणतद्गुणोपलम्भे, चक्षुरिन्द्रियवदित्याद्यनुमानतो भूतभिन्नस्य चैतन्यगुणाधारस्यात्मन. सिद्धिरिति भाव ॥ ५ ॥

अथाद्वैतवादनिराकरणाय तन्मतमाह—

## एक एवात्मा जलचन्द्रवन्नाना भासत इत्यपरे ॥ ६ ॥

**एक एवेति,** यथाऽप्सु प्रतिबिम्बितश्चन्द्र एकोऽपि बहुधा भासते न त्वनेके चन्द्रा, तथैक एवात्मा पृथिव्यादिभूताद्याकारतया नाना दृश्यते, न च प्रत्यक्षबाधा, तस्याभेदमाहकत्वेनैव प्रवृत्ते, न हि भेदोऽर्थाना सम्भवति, तद्भेदस्य देशकालाकारभेदैरसम्भवात्, न च स्वतोऽभिन्नस्यान्यभेदेन भेद उपपद्यते, न वाऽन्यभेदोऽन्यत्र सङ्क्रामति, देशादीना भेदस्याप्यन्यदेशादिभेदाद्भेदेऽनवस्था भवेत्, तेषा भेदस्य स्वतस्त्वे भावभेदस्यापि स्वत सम्भवेन देशादिभेदाद्भेदाभ्युपगमो निरर्थक स्यात्, तस्मादेकरूप एवात्मा विद्यास्वभावोऽविद्यया च नाना प्रतिभासते, तन्निवर्त्तकानि शास्त्राणि । अविद्यापि ब्रह्मव्यतिरिक्ता तत्त्वतो नास्ति, रज्ज्वादौ सर्पवत्, अत एवासौ निवर्त्तते, तत्त्वत सत्त्वे निवृत्त्यसम्भवात्, अविद्या च तत्त्वज्ञानलक्षणप्रागभावरूपा, सा चानादित्वेऽपि तत्त्वज्ञानलक्षणविद्योत्पत्तौ घटादिप्रागभाववन्निवर्त्तते, अविद्या ब्रह्मणो भिन्नाऽभिन्ना वेत्यादिविकल्पस्य वस्तुविषयत्वादवस्तुभूतायामविद्याया नावसरः, तथा च 'एक एव हि भूतात्मा भूते भूते व्यवस्थित । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' 'पुरुष एवेद सर्वमि'त्याद्यागमवचनान्यप्युपपद्यन्त इति वेदान्तिन ॥ ६ ॥

तदेतन्मतप्रतिक्षेपायाह—

## न, व्यवस्थाविलोपादविद्याया अनुपपत्तेश्च ॥ ७ ॥

**नेति,** आत्माद्वैतो न युक्तियुक्त इत्यर्थ, तत्र हेतुमाचष्टे **व्यवस्थाविलोपादिति** आत्मन एकत्वे कश्चिदेव बद्ध कश्चिदेव मुक्तो न सर्वे, य एव च करोति स एव तत्फलमनुभवति न सर्वे, एवमादिव्यवस्थायाः परिदृश्यमानाया विलोपो भवेत्, एकस्य बन्धे मोक्षे वा सर्वे बद्धा मुक्ता वा भवेयुर्न

चैनम्, तस्मान्नैक आत्मा, तथा प्रमाणमिदमेतच्चाप्रमाणमिति प्रमाणेतरव्यवस्थाऽपि न स्यादपि चैव प्रमाणबाधितो भवेत् । न च समारोपितभेदात्तद्व्यवस्था सङ्गच्छते यथा पादे मे वेदना शिरसि मे सुखमित्यात्मनः समारोपितभेदनिमित्ता वेदनादिव्यवस्था, पादादीनां वेदनाद्यधिकरणानां भेदादात्मनि तथा व्यवस्थापनादिति वाच्यम्, आत्मनः सांशतायामेव तद्व्यवस्थोपपत्तेः, सर्वथा निरंशस्य च वस्तुनः क्वाप्यप्रसिद्धेश्च । तथा पदार्थानां भेद आकारभेदादेव, स चाकारभेदः स्वमानमपीत उपजायमानोऽहमहमिकया प्रतीयमानेनात्मना प्रतीयत इति न तत्रानवस्थाया अवसरः । अथाविद्यां निरसितुमाह-विद्याया इति, अविद्या यद्यवस्तुसती तर्हि नासौ प्रयत्ननिवर्त्तनीया, न ह्यवस्तुसन्तः कूर्मरोमादयः केनचिन्निवर्त्तनीया दृष्टाः । न चास्या वास्तविकत्वे सा निवर्त्तनीया न भवेदिति वाच्यम्, वस्तुभूतस्यैव घटादेर्निवृत्तिदर्शनात्, प्रागभावरूपा तेनास्या विच्छेदोऽपि न युक्तः, तुच्छस्वभावस्य प्रागभावस्यासिद्धेः, अत एव तत्त्वज्ञानप्रागभावरूपाऽविद्येत्यपि न सङ्गच्छते, तस्य भेदज्ञानलक्षणकार्योत्पत्तौ सामर्थ्यासम्भवात्, न हि घटप्रागभावः कार्यमुत्पादयन् दृष्टः, केवलं घटवत् प्रागभावविनाशमन्तरेण तत्त्वज्ञानलक्षणं कार्यमेव नोत्पद्येत, एवञ्च भेदज्ञानं यतो न भवेदिति भेदप्रतिभासो न स्यात्, तस्मान्नैकात्मवादो युक्त इति भावः ॥ ७ ॥

सांख्यादिमतमाक्षेपायाह—

## विभुरकर्त्ता स इति चेन्न, गत्यागत्यसम्भवात् ॥ ८ ॥

**विभुरिति,** स आत्मा यतो विभुरमूर्त्तो नित्यश्चात एव न कर्त्ता, कुर्वन् हि कर्त्ता, आत्मा च विभुत्वादमूर्त्तत्वाच्चाकाशमिव न परिस्पन्दलक्षणां क्रियां कर्त्तुमीष्टे, परिस्पन्देन ह्यप्राप्तदेशसम्बन्धो भवति, यदा च स सर्वव्यापी तदा कथं तस्य परिस्पन्दसम्भवः, तस्मात् प्रकृतिः करोति पुरुषस्तु जपास्फटिकन्यायेनोपभुङ्क्ते इति सांख्याः, तदेतन्मतं प्रतिक्षिपति **नेति,** यद्यात्माऽमूर्त्तो नित्यः सर्वव्यापी चात एव निष्क्रिय इत्यभ्युपगम्यते तर्हि तस्य नरकादिगतिः कथं भवेत्, तेन किञ्चिदप्यकृतत्वादकृतस्य तेन वेदनासम्भवात्, वेदनाया अपि क्रियारूपत्वेनाक्रियेऽसम्भवाच्च । अन्यकृतस्याप्यनुभवेऽकृतागमः स्यात्, एकेन कृतात्पातकात् पुण्याद्वा सर्वे प्राणिगणो दुःखितः सुखितो वा स्यात् । गमनाभावाद्यमनियमाद्यनुष्ठानं निरर्थकं भवेत्, एवं गत्यन्तरादागतिरपि नोपपद्यते । अक्रियत्वादेव भुजिक्रियाऽप्यसम्भविनी । न च भुजिक्रियामात्रेण तस्य सक्रियत्वेऽपि स्वल्पक्रियत्वान्निष्क्रिय एव यथैककार्षापणधनो न धनित्वव्यपदेशभागिति वाच्यम्, यतो दृष्टान्तोऽयं प्रतिनियतपुरुषापेक्षया वा समस्तपुरुषापेक्षया वा, नाद्यः सिद्धसाधनात्, सहस्रादिधनवदपेक्षयाऽस्य निर्धनत्वस्य सिद्धत्वात्, न द्वितीयोऽसिद्धेः, जरच्चीवरधार्यपेक्षया तस्य धनित्वात्, तथैव यद्यात्मापि विशिष्टसामर्थ्यवत्पुरुषक्रियापेक्षया निष्क्रियोऽभ्युपगम्यते तर्हि न काचित् क्षतिः, सामान्यापेक्षया तु क्रियावानेव, तस्मान्न सर्वथा निष्क्रियात्मवादो युक्त इति ॥ ८ ॥

अथ बौद्धमतं निराकरोति—

## पञ्चैव स्कन्धा नात्मेति चेन्न, कृतहानात्सर्वथाऽनित्यत्वासिद्धेश्च ॥ ९ ॥

**पञ्चेति,** रूपवेदनाविज्ञानसंज्ञासंस्कारस्कन्धभेदेन पञ्चैव स्कन्धास्तत्त्वं नान्यः कश्चिदात्मा

विद्यते, तत्र पृथिवीधात्वादयो रूपादयश्च रूपस्कन्धः, सुखं दुःखं अदुःखमसुखं चेति वेदनास्कन्धः, रूपविज्ञानं रसविज्ञानमित्यादिविज्ञानं विज्ञानस्कन्धः, संज्ञानिमित्तोद्ग्राहणात्मकः प्रत्ययः संज्ञास्कन्धः, पुण्यापुण्यादिधर्मसमुदायः संस्कारस्कन्धः, एते च स्कन्धाः क्षणमात्रस्थायिनः, यत्सत् तत्क्षणिकमिति व्याप्तेः, स्वकारणेभ्यः पदार्थानां विनाशिस्वभावतयैवोत्पत्तेश्च, यदि चाविनाशिस्वभावो भावो भवेत्तदा सत्त्वव्यापिकाया क्रमयौगपद्याभ्यामर्थक्रियाया असम्भवात्सत्त्वस्याप्यभावः स्यात्, व्यापकाभावे व्याप्यसत्त्वासम्भवात्, तथा हि यदर्थक्रियाकारि तत्परमार्थतः सत्, यदि च भावोऽक्षणिको भवेत्तर्हि स किं क्रमेणार्थक्रियां करोति, युगपद्वा, प्रथमपक्षेऽपि किं यदैकार्थक्रियाकारित्वं तदाऽपरार्थक्रियाकारिस्वभावत्वमस्ति न वा, आद्ये क्रमकारित्वं न स्यात्, सदैव कर्तृत्वप्रसङ्गात्, यदि तथाविधस्वभावत्वेऽपि तत्सहकार्यपेक्षयैव कार्यकारित्वात् क्रमकारित्वमित्युच्यते तर्हि किं सहकारिणा तस्य कश्चिदतिशयः क्रियते न वा, प्रथमपक्षेऽपि पूर्वस्वभावपरित्यागेन, अपरित्यागेन वा, आद्ये स्वभावपरित्यागात्क्षणिकत्वं स्यात्, द्वितीये च सहकार्यपेक्षावैयर्थ्यम्, तत्कृतातिशयाभावात्। अकिञ्चित्करमपि सहकार्यपेक्ष्यत इति चेन्न, सकलजगतोऽपेक्ष्यत्वप्रसङ्गादविशेषात्। एकार्थक्रियाकालेऽपरार्थक्रियाकारिस्वभावत्वानभ्युपगमेऽपि तस्याक्षणिकत्वं कथं स्यात्। यदि च युगपदर्थक्रियाकारित्वं तस्य स्वभाव इति पक्षोऽङ्गीक्रियते तदा प्रथमक्षण एव सर्वासामर्थक्रियाणां भावाद्द्वितीयक्षणादावकर्तृतया क्षणिकत्वं तथापि स्यात्, कृतस्य च करणासम्भवात् पुनर्द्वितीयादिक्षणेषु तां तामशेषां क्रियां करोतीति वक्तुमशक्यत्वात्, द्वितीयादिक्षणभाविकार्याणां प्रथमक्षण एव प्राप्तेश्च, तस्य तत्समर्थत्वादसत्यभावत्वे चाक्षणिकत्वापत्तेः, तस्मान्न स्वकारणेभ्योऽक्षणिकस्योत्पत्तिः किन्तु क्षणमात्रस्थायिन एव। ननु स्वकारणेभ्योऽनित्यस्यैवोत्पत्तिर्न तु द्वितीयक्षणविनाशिस्वभावस्य, तस्य च विनाशो यदा विनाशहेतुसमवधानं तदा, न तु द्वितीयक्षण एवेति चेन्न, विनाशहेत्वसम्भवात्, विनाशहेतुना हि घटादेः किं क्रियते, अभाव इति चेत्स किं पर्युदासरूपः प्रसज्यरूपो वा, आद्ये च भावाद्भावान्तरं घटाभावः स्यात्, तथा च मुद्गरादिना भावान्तरे क्रियमाणेऽपि घटस्तदवस्थ एव स्यात्, तेन तस्य किमप्यकरणात्। द्वितीये च विनाशहेतुरभावं करोतीत्युक्तेर्भावं न करोतीति क्रियाप्रतिषेध एव प्राप्तः, न तु घटस्य निवृत्तिः, तामपि करोतीति चेन्न निवृत्तेर्नीरूपत्वेन तुच्छत्वात्तत्र कारकव्यापारासम्भवात्, अन्यथा शशशृङ्गादावपि कारकव्यापारः स्यादिति विनाशहेतोरकिञ्चित्करत्वात् स्वहेतुत एव विनाशस्वभावानां भावानामुदय इति क्षणिकत्वं भावानामिति। एतेभ्यः पञ्चस्कन्धेभ्यो न व्यतिरिक्तः कश्चिदात्मा प्रमाणसिद्धः प्रत्यक्षस्य नीरूपेऽप्रवृत्तेः, अव्यभिचारिलिङ्गग्रहणाभावेनानुमानस्याप्यप्रवृत्तेश्च, न च प्रत्यक्षानुमानाभ्यां व्यतिरिक्तमर्थाविसंवादि प्रमाणान्तरमस्तीति **बौद्धाः**। तन्मतं निरसितुमाह **नेति**, पञ्चस्कन्धव्यतिरिक्तस्यात्मनोऽभावे स्वसंविदितस्य सुखदुःखानुभवस्यानुभविता वाच्यः, न तावज्ज्ञानस्कन्धस्तस्यायमनुभवः, तस्य क्षणिकत्वेनातिसूक्ष्मतया सुखाद्यनुभवासम्भवात्, क्रियाफलवतोः क्षणयोः परस्परमत्यन्तासम्बन्धात्कृतनाशाकृताभ्यागमप्रसङ्गाच्च, न च सन्तानापेक्षया नायं दोष इति वाच्यम्, सन्तानिभिन्नस्याक्षणिकस्य तस्याप्यसम्भवात्। न च पूर्वो क्षण उत्तरक्षणे वासनामाधाय विनश्यतीति वाच्यम्, यतः क्षणेभ्यस्ता यदि व्यतिरिक्ता न तर्हि तेषां वासकत्वम्, यद्यव्यतिरिक्ता तदा च क्षणिकत्वमेवैतासामभावे

सुखदुःखानुभवाभावप्रसङ्ग इति तदनुभवान्यथानुपपत्त्याऽस्त्यात्मा, एव रूपादिपञ्चविषयानुभवोत्तर सङ्कलनाप्रत्ययोऽनुभूयमानो न स्यात्, स्वविषयादन्यत्रेन्द्रियाणामप्रवृत्तेरालयविज्ञानेन तदभ्युपगमे तस्य चाक्षणिकत्वे आत्मैव सञ्ज्ञान्तरेणाभ्युपगत स्यात्, क्षणिकत्वे च तद्दोषतादवस्थ्यम् । अथ क्षणिकत्वसाधननिराकरणायाह **सर्वथानित्यत्वासिद्धेश्चेति,** क्रमयौगपद्याभ्यां नित्यस्यार्थक्रियाकारित्वं न घटत इति यदुक्तं तत्क्षणिकपक्षेऽपि समानमेव, क्रमेण यौगपद्येन वाऽर्थक्रियायां प्रवर्त्तमानस्य तस्याप्यवश्य सहकारिकारणसव्यपेक्षस्यैव प्रवृत्तेः, अन्यथा सामग्र्या एव जनकत्वाभिधानमपार्थकं भवेत्, एवञ्च सहकारिणा न क्षणिके कश्चिदतिशयः कर्तुं पार्यते, क्षणस्याविवेकित्वेनानाधेयातिशयत्वात्, क्षणानां परस्परोपकार्योपकारकत्वानुपपत्त्या सहकारित्वाभावान्न प्रतिविशिष्टकार्योपपत्तिः । अनित्यस्य पारम्पर्येण उत्पत्त्यङ्गीकारेऽपि तत्प्रतिनियतत्वं क्षणक्षयित्वेन परिणामानित्यतया वा, आद्ये क्षणिकत्वे कार्यकारणभावासम्भवः, न च पूर्वक्षणादुत्तरक्षणोत्पादे सति न भवतीति वाच्यम्, कार्यकालेऽसतो जनकत्वानुपपत्तेः, सत्त्वे च क्षणिकत्वानुपपत्तेः, किञ्च प्रथमक्षण एव यदि विनाशस्वभावस्तर्हि सदैव तस्य विनाशाद्द्वितीयक्षण इव प्रथमक्षणेऽपि स न स्यादिति किं कस्य कारणं कार्यं वा, द्वितीयक्षण एव विनाशाङ्गीकारे उत्पत्तिकालेऽभवत पश्चाच्च भवतोऽनन्तरक्षण एव तद्भावे किञ्चिन्नियामकं वाच्यम्, विनाशहेत्वभाव एव नियामक इति चेन्न, मुद्गरादिव्यापारानन्तरमेव घटादिविनाशदर्शनात् । न च तत्रोक्तो दोष इति वक्तव्यम्, पर्युदासपक्षे कपालाद्यभावान्तरकरणे घटादेः परिणामानित्यतया तद्रूपत्वात्तन्मुद्गरादेर्व्यापारतया घटादीन् प्रति तस्याकिञ्चित्करत्वासिद्धेः । प्रसज्यप्रतिषेधपक्षेऽपि भावं न करोतीति भावाभावप्राप्त्या तत्र च कारकव्यापारप्रवृत्ते, न हि सोऽभावमात्रं किन्तु वस्तुतोऽवस्थाविशेषः पर्यायः, तस्य च भावरूपत्वात् पूर्वोपमर्द्देन प्रवृत्तत्वाच्च य एव कपालादेरुत्पादः स एव घटादेर्विनाश इति कथं विनाशस्याहेतुकत्वम्, तदेवं क्षणिकत्वासम्भवात् परिणामानित्यपक्ष एव ज्यायान्, एवञ्च परिणामी ज्ञानाधारो भवान्तरयायी भूतेभ्यः कथञ्चिदन्य आत्मा स्वीकार्य इति ॥ ९ ॥

तदेवं भूतवादं निराकृत्य नियतिवादव्युदासायाह—

## सुखाद्यनुभवे नियतिरेव कारणमिति चेन्न क्रियाप्रवृत्तिवैयर्थ्यात् ॥ १० ॥

**सुखादीति,** योऽयं सुखदुःखाद्यनुभवः स नियतिकृत एव न तु पुरुषकारकृतो न वा कालादिकृतः, पुरुषकारस्य सर्वजीवसाधारणतया फलवैलक्षण्यं कस्यचित्फलाप्राप्तिश्च न भवेत्, तथा कालोऽपि तस्य एकत्वेन सुखादिकर्ता, कारणभेदाभावे कार्यभेदानुपपत्तेः, नापीश्वरः कर्त्ता, तस्य मूर्तत्वे प्राकृतपुरुषवत्सर्वकर्तृत्वानुपपत्तिः, अमूर्तत्वे निष्क्रियत्वादाकाशादिवदकर्तैव भवेत्, तथा तस्य रागादिमत्त्वेऽस्मदादिवन्न विश्वस्य कर्त्ता स्यात् वीतरागत्वे दरिद्रेश्वरादिविचित्रजगत्कर्तृत्वं न भवेत्, नापि स्वभावः कर्त्ता, तस्य पुरुषाद्भेदे पुरुषाश्रितसुखादिकर्तृत्वासम्भवात्, तस्याकिञ्चित्करत्वात्, अभेदे च पुरुषस्यैव कर्तृत्वप्राप्त्या तस्यासम्भवात् । नापि कर्म, यदि तत्सचेतनं तदैकदेहे चैतन्यद्वयापत्तिः, अचेतनश्चेत् स्वतन्त्रस्य कर्तृत्वानुपपत्तिरुपलखण्डस्येव तस्मान्नियतिकृतमेवेति नियतिवादिनः, तन्निरस्यति **नेति,** परलोकसाधिकासु क्रियासु प्रवृत्तिर्न स्यात्, नियतिवादाश्रयणादिति भावः, तस्मात्सुखादयः केचिन्नियतिकृताः केचिच्चात्मपुरुषकारेश्वरादिभाविताः, अत एव पुरुषकारकृतत्वेऽपि वह्निक्रियाफलवैचित्र्य

भवत्येव, कार्यवैचित्र्ये कारणवैचित्र्यस्य निमित्तत्वात्, यस्य कस्यचित् फलाभावस्त्वदृष्टकृतस्तस्यापि कारणत्वात्, कालकृतत्वेऽपि न दोषः, विशिष्टकाले विशिष्टकार्योत्पाददर्शनात्, कर्मणोऽपि निमित्ततया कालस्यैकत्वेऽपि विचित्रजगदुत्पत्तिसम्भवात् । तथा तत्र तत्रोत्पत्तिद्वारेण सकलजगद्व्यापनादात्मा ईश्वरस्तस्य सुखदुःखोत्पत्तिकर्तृत्वं निर्विवादमेवेतीश्वरस्य कर्तृत्वेऽपि क्षत्यभावः, तस्मात्केवलनियत्यादिवादा असम्यक्प्रवृत्तत्वान्नात्मदुःखविमोचकाः ॥ १० ॥

एवम्भूताः सर्वे एव वादा अज्ञानवादा नात्मशान्तिप्रदा इत्याशयेनाह—

## स्वदर्शनानुरागिण एते संसारानुवर्त्तिनः ॥ ११ ॥

**स्वेति**, एते नियत्यादिवादिनः कदाचिदपि संसारं नातिवर्त्तन्ते, स्वोत्प्रेक्षितासत्कल्पनापूर्णदर्शनानुरागित्वात्, आत्मपरित्राणसमर्थेऽनेकान्तवादे युक्त्युपपन्ने शङ्कितत्वाच्च, ते हि बहुदोषे नियत्याद्येकान्तवादमेव निःशङ्कभावेनावलम्बमाना अत्राणे त्राणबुद्धिं विदधाना अज्ञानिनः कर्मप्रपञ्चस्थानेषु सम्परिवर्त्तन्ते, अत एव तेऽनार्या मिथ्यादृशः क्षान्त्यादिसद्धर्मप्ररूपणायामसद्धर्मप्ररूपणामतिं पापोपादानभूतप्ररूपणायाञ्च सद्धर्मप्ररूपणामतिं कुर्वन्ति, परिव्राजका अपि सन्तो हेयोपादेयार्थानाविर्भावकपरस्परविरोधपरिपूर्णं छिन्नमूलमच्छिन्नमूलं वा गुरुपरम्परायातं ज्ञानं परमार्थावेदिनोऽनुसरन्ति, न तु तद्वक्तारं सर्वज्ञोऽयं न वेति विमर्शयन्ति, वदन्ति च 'सर्वज्ञोऽसाविति ह्येतत्कालेऽपि बुभुत्सुभिः । तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथमि'ति । एते चाज्ञानिनो निजं मार्गं शोभनत्वेन परकीयञ्चाशोभनत्वेन मन्यमानाः स्वयं मूढाः परानपि मोहयन्ति तीव्रञ्च पापमनुभवन्ति ॥ ११ ॥

अथ ज्ञानावरणादिकर्मचिन्तनविधुराणां क्रियावादिनां मतं निराकरोति—

## चतुर्विधं कर्म नोपचीयत इति केचित्तन्न, तत्रापि कर्मबन्धात् ॥ १२ ॥

**चतुर्विधमिति**, परिज्ञोपचितमविज्ञोपचितमीर्यापथं स्वप्नान्तिकञ्चेति चतुःप्रकारं कर्मबन्धं नेच्छन्ति केचित्, तत्र प्रथमं यथा यः कश्चित् क्रोधादिनिमित्तो मनोव्यापारमात्रेण प्राणिनो व्यापादयति, न तु कायेन तद्व्यापारे वर्त्तते न तस्य कर्मोपचयो भवतीति । द्वितीयं यथाऽजानानः कायव्यापारमात्रेण प्राणिनं यो हिनस्ति तत्रापि मनोव्यापाराभावान्न कर्मोपचय इति । तृतीयञ्च गमनविषयं यथा व्रजतोऽध्वनि यथाकथञ्चिदनभिसन्धेर्यत्प्राणिव्यापादनं भवति न तत्र कर्मबन्ध इति । चतुर्थञ्च स्वप्न एव लोकोक्त्या स्वप्नान्तं तत्र भवं तदपि न कर्मबन्धाय, यथा स्वप्ने भुजिक्रियायां तृप्त्यभावः तथा कर्मणोऽपीति । कर्मबन्धस्तु हन्यमानो यदि प्राणी स्यात्, हन्तुश्च यद्ययं प्राणीत्येव ज्ञानमुत्पद्येत, तथैनं हन्मीत्येवमपि यदि बुद्धिः स्यात्, एतेषु सत्सु यदि कायचेष्टा प्रवर्त्तते, तस्यामपि यद्यसौ प्राणी व्यापाद्यते ततो हिंसा ततश्च कर्मोपचयो भवतीति, एषामन्यतमाभावेऽपि न हिंसा न वा कर्मचयः । किन्तूक्तेन चतुर्विधेनापि कर्मणा स्पर्शमात्रानुभवयोग्यं कर्म भवति न तु तस्याधिको विपाकोऽस्ति, कुड्यापतितसिकतामुष्टिवत्स्पर्शानन्तरमेव परिशाटनात्, अत एवोपचयाभाव उक्तो न त्वत्यन्ताभाव इति केषाञ्चिन्मतं तन्निराकरोति **तन्नेति, तत्रापीति**, केवलमनःप्रद्वेषादिस्थलेऽपीत्यर्थः, मन एव हि कर्मोपचये प्रधानं कारणम्, मनोरहितकेवलकायव्यापारस्थले कर्मोपचयाभावस्य तैरप्यङ्गीकृतत्वात्,

तथा चान्वयव्यतिरेकाभ्यां मनः प्रधानं कारणम्, न च कायचेष्टारहितमकारणम्, भावशुद्ध्या निर्वाणमधिगच्छतीति भणता भवता मनस एवैकस्य प्राधान्यस्वीकारात्, तथा क्लिष्टमनोव्यापारं कर्मबन्धायेति च स्वीक्रियते तथा च कथं न तत्र कर्मबन्धः । ईर्यापथेऽप्यनुपयुक्तगमने क्लिष्टचित्तत्वात्कर्मबन्धो भवत्येव, उपयुक्तगमने त्वप्रमत्तत्वादबन्धक एव, स्वप्नान्तिकेऽप्यशुद्धचित्तसद्भावादीषद्बन्धो भवत्येव, तस्माच्चतुष्टये कर्मोपचयाभाववादिनो विपरीतानुष्ठानतया प्राकृतपुरुषसदृशा एव न मोक्षसुखसङ्गिनोऽनन्तमपि कालं जन्मजरामरणादिक्लेशमनुभवन्त एवासत इति ॥ १२ ॥

पुनः केषाञ्चिदज्ञानिनां मतमादर्शयति—

## ब्रह्मेश्वरादिकृतो लोक इति प्रमाणविरुद्धं केचिदाहुः ॥ १३ ॥

**ब्रह्मेति,** केचिदेवमाहुः, ब्रह्मा जगत्पितामहः, स चैक एव जगदादावासीत्, तेन च प्रजापत्यादिक्रमेण सकलं जगत्सृष्टमिति, अन्ये तु तनुभुवनादिकं बुद्धिमत्कारणपूर्वकं कार्यत्वात्, संस्थानविशेषवत्त्वाद्वा, घटादिवदिति मानमुपन्यस्यन्त ईश्वरसृष्टं जगदाहुः । अपरे तु सत्त्वरजस्तमसां साम्यावस्थालक्षणया प्रकृत्या महदहङ्कारादिक्रमेण जगदुत्पत्तिमभिदधति, एवंरूपाः सर्वे वादा मृषा वादा एव, प्रमाणैर्विरुद्धत्वात् । अयं हि लोको द्रव्यार्थतया न निर्मूलतः कदापि विनश्यति, अतो नादितः केनचित् क्रियते, अपि तु लोकोऽयमभूद्भवति भविष्यति च । न हि स ब्रह्मादिभिः कृत इत्यत्र किञ्चित् प्रमाणमस्ति, किञ्चासौ ब्रह्माऽनुत्पन्नो न तं सृजति, खरविषाणस्येवासत्त्वेन कारणत्वासम्भवात्, स्वत उत्पन्नो यदि सृजेत् तदा लोकोऽपि स्वतः कुतो नोत्पद्यते, यदि त्वन्यत उत्पन्नः सृजति तर्ह्यनवस्था, यदि सोऽनादिस्तर्हि लोकोऽपि तथा भवतु को दोषः । किञ्चासावनादिः सन्नित्यस्तर्हि क्रमयौगपद्याभ्यामर्थक्रियाऽसम्भवान्न कर्ता भवेत्, यदि चानित्यस्तदोत्पत्त्यनन्तरं विनाशित्वात्स्वस्यैव त्राणायासमर्थतया कुतोऽन्यत्करणं प्रति तस्य व्यापृतिर्भवेत् । अपि चासौ यद्यमूर्तस्तदाऽऽकाशस्येवाकर्ता भवेत् । मूर्तश्चेत् प्राकृतपुरुषस्येवोपकरणसव्यपेक्षस्य सकलजगत्कर्तृत्वं कथं स्यादिति न ब्रह्मकर्तृत्ववादः प्रमाणसिद्धः । ईश्वरकर्तृत्वानुमानमपि न प्रमाणम्, व्याप्त्यसिद्धेः, कार्यस्य कारणपूर्वकत्वमात्रेणैव व्याप्तेः, न तु तथाविधविशिष्टकारणपूर्वकत्वेन, कार्यविशेषोपलब्धौ कारणविशेषप्रतिपत्तिस्तु गृहीतप्रतिबन्धस्यैव भवति, न त्वस्य तादृशे तथा प्रतीतिः, न हि सरित्समुद्रपर्वतादौ बुद्धिमत्कारणपूर्वकत्वेन हेतोः सम्बन्धो गृहीतः । एवं घटादिसंस्थानदर्शनवत् पर्वतादावपि संस्थानदर्शनान्न बुद्धिमत्कारणपूर्वकत्वस्य सिद्धिः, संस्थानमात्रस्य बुद्धिमत्कारणपूर्वकत्वासिद्धेः, अन्यथा मृद्विकारत्वाद्घटवद्वल्मीकस्यापि कुम्भकारकृतिः सिद्ध्येत्, तस्माद्यदेव संस्थानं बुद्धिमत्कारणपूर्वकत्वेन गृहीतं तदेव तथाविधकारणानुमापकं न संस्थानमानम्, किञ्च घटादिसंस्थानानि कुम्भकारकर्तृतया लक्षितानि, नेश्वरकर्तृतया, तत्रापि तस्य निमित्तत्वे दृष्टहानिरदृष्टकल्पना च स्यात् । अपि च घटादेः कर्ताऽनित्याव्यापित्वेनोपलब्धस्तद्दृष्टान्तेन साध्यमानस्तथाविध एव कर्ता सिद्ध्येत्, अन्यथाभूतस्य च दृष्टान्ताभावतो व्याप्तिसिद्धिर्न भवेत्, तस्मान्नेश्वरकर्तृकत्वं लोकस्येति वादो मिथ्यावाद एव । तथा प्रधानादिकृतो लोक इत्यपि प्रमाणविरुद्धम्, तस्यामूर्तत्वे मूर्तस्य न ततः उत्पत्तिः स्यात् न हि गगनादितो मूर्तस्य कस्यचिदुत्पत्तिर्दृश्यते, मूर्तत्वे तु

नम्य न्यत उत्पत्तौ लोकस्यापि तथोत्पत्तिप्रसङ्ग , न च तस्यान्यत उत्पत्तिरनवस्थाप्रसक्तेः, अनुत्पन्नस्य तस्य कारणत्वे तु लोकस्यापि कुतो नानुत्पादः, किञ्च सत्त्वरजस्तमसां साम्यावस्था प्रधानमित्युच्यते, नाप्यविकृतात्तस्मात् महदाद्युत्पत्तिरिष्यते, विकारे तु न तस्य प्रधानतेति कथं प्रधानात् महदाद्युत्पादो भवेत्। किञ्च प्रकृतेरचेतनतया न पुरुषार्थं प्रति तस्याः प्रवृत्तिरिति कथमात्मोपभोगाय सृष्टिः स्यात्। न च तस्यास्तथाविधस्वभावत्वमिति वाच्यम्, यतो बलीयस्त्वेन स्वभावादेव लोकोत्पत्तिप्रसङ्गात्। यदि तस्यैव कारणता स्वीक्रियते तदा न काचित् क्षतिः, स्वो हि भावः स्वभावः तस्मात्तदीयोत्पत्तिः, सा च पदार्थानामिष्यत एव, उत्पादव्ययध्रौव्यात्मकत्वाद्वस्तूनामिति न प्रकृतिपरिकल्पनाया युज्यत इति, तदेवं वादिनो लोकस्यानाद्यपर्यवसितस्योर्ध्वाधश्चतुर्दशरज्जुप्रमाणस्य वैशाखस्थानस्थकटिन्यस्तकरयुग्मपुरुषाकृते रधोमुखमल्लकाकारसप्तपृथिव्यात्मकाधोलोकस्य स्थालाकारासंख्येयद्वीपसमुद्राधारमध्यलोकस्य मल्लकसमुद्गकाकारोर्ध्वलोकस्य धर्माधर्माकाशपुद्गलजीवात्मकस्य द्रव्यार्थतया नित्यस्य पर्यायापेक्षया क्षणक्षयिण उत्पादव्ययध्रौव्यापादितद्रव्यसत्त्वस्यानादिजीवकर्मसम्बन्धापादितानेकभवप्रपञ्चस्याष्टविधकर्मविमुक्तात्मलोकान्तोपलक्षितस्य तत्त्वमजानानाः सन्तो मृषा वदन्तीति ॥ १३ ॥

एते न दुःखपारगामिन इत्याह—

**नैते दुःखविच्छेदोपायज्ञाः, अन्यकृतदुःखाभिमानित्वात् ॥ १४ ॥**

नैत इति, पूर्वोदिता अज्ञानिनो न दुःखोच्छेदाय समर्थाः, दुःखं हि निजानीमनानुष्ठानप्रभवं नान्यस्मात्कुतश्चित्, एते च तदजानाना ईश्वरादिकृतं दुःखमिति विदन्ति, एवंविधवेदिनां कथं दुःखविघातोपायपरिज्ञानं भवेत्, कारणविच्छेदे हि कार्यस्य विच्छेदो भवेत्, ते च कारणमन्यथा जानन्ति, तस्मात्तदुपायापरिज्ञानात्तैस्तदुद्देशेन विधीयमानस्य च यत्नस्यानुपायत्वान्न दुःखविच्छेदमाप्नुवन्ति, किन्तु जन्मजरामरणादिमहादुःखमये संसारे अनन्तं कालं परिवर्तन्त इति ॥ १४ ॥

गोशालकमतानुसारिणं दूषयितुमाह—

**पुनः पुनर्मुच्यते रज्यते चेति केचित्तन्न, पुनः कर्मबन्धासम्भवात् ॥ १५ ॥**

पुनः पुनरिति, यो ह्यात्मा मनुजभवे शुद्धाचारो भूत्वा व्यपगतनिःशेषकलङ्कोऽपापत्वात् मोक्षमवाप्य मोक्षस्थ एव स्वशासनपूजामुपलभ्य पुना रागं स्वशासनतिरस्कारदर्शनात् क्रोधञ्च प्राप्नोति, ततश्च क्रमेण मलीमसः कर्मगुरुत्वात्पुनः संसारेऽवतरति तत्र पुनः प्रव्रज्यया संवृतो निर्मलस्सन् मुच्यते पुनरपि तथैव शासननिमित्तरागद्वेषाभ्यां ससारः पुनश्च शुद्धाचारादकर्मा भवतीति केषाञ्चिन्मतम्, तन्निरस्यति नेति, हेतुमाह पुनरिति, मुक्ता ह्यपगताशेषकर्मकलङ्काः कृतकृत्या अपगताशेषयथावस्थितवस्तुतत्त्वाः स्तुतिनिन्दासु च समाः अपगतात्मात्मीयपरिग्रहाः, तेषां कथं रागद्वेषोत्पत्तिः, तदभावाच्च कथं कर्मबन्धः स्यात्। अत एते सम्यग्ज्ञानविधुराः कथञ्चिद्द्रव्यप्रव्रज्यापर्यायोद्व्यवस्थिता अपि न समीचीनानुष्ठानभाज इति न संसारपाशविमुक्ता इति ॥ १५ ॥

एतेषां सङ्गपरित्यागो विवेकिना कार्य इत्याह—

**बालानेतान् परिज्ञाय मध्यस्थः संयमं चरेत् ॥ १६ ॥**

**बालानिति,** एते पूर्वव्यावर्णितास्तीर्थिका बाला, सदसद्विवेकवैकल्यादकिञ्चित्कारिणो भाषिणश्च, तथा परीषहोपसर्गैः कामक्रोधादिभिश्च जिता अत एव च न कश्चित्त्रातु समर्थाः, बालत्वादेव च धनधान्यादिभिः संयोगं विहाय वयं प्रव्रजिता नि सङ्गा इत्युत्थायापि परिग्रहारम्भेष्वासक्ता गृहस्थयोग्यव्यापारोपदेशादिषु प्रवर्त्तन्ते तानेतान् पाखण्डिलोकानेते मिथ्यात्वोपहतान्तरात्मानः सदसद्विवेकशून्या नात्मनेऽन्यस्मै वा हितायेति सम्यगवगम्य विदितवेद्यो भिक्षुर्न तैः सम्पर्कं विदध्यात्, तीर्थिकेषु गृहस्थेषु पार्श्वस्थेषु वा परिहृतसम्बन्धो मध्यस्थो रागद्वेषयोरन्तरालेन सञ्चरन् कथञ्चित् तीर्थिकादिभिः सह सत्यपि सम्बन्धे त्यक्ताहङ्कारो भावतस्तेष्वप्रलीयमानस्तेषां निन्दामात्मनश्च प्रशंसां परिहरन् धर्मोपकरणव्यतिरेकेण शरीरोपभोगार्थमीषदपि परिग्रहं परिहरन् तपोज्ञानमदमप्यकुर्वन् संयमं चरेत् ॥ १६ ॥

मतान्तराण्यपि सङ्गृह्य निराचष्टे—

## अत्रैवान्यत्र लोको नित्योऽनित्यो वा बहुज्ञ ईश्वरो नापुत्रस्य गतिरित्यादयो वादा निष्प्रमाणाः क्रियावैफल्यात् ॥ १७ ॥

**अत्रैवेति,** तत्त्वविपर्यस्तमतीनां केषाञ्चिदभ्युपगम इत्थं—अस्मिन् जन्मनि जीवा यदि पुरुषास्तर्हि परभवेऽपि ते पुरुषा एव न स्त्रियो न वा त्रसाः स्थावरा वा, इह भवे स्त्रियश्चेत् परत्रापि स्त्रिय एवेति, तथा लोकोऽपि सप्तद्वीपात्मकोऽप्रच्युतानुत्पन्नस्थिरैकस्वभावः, अथवा निरन्वयं विनाशी, यद्वा द्व्यणुकादिरूपेण भवन्नपि परमाणुर्न परमाणुत्वं जहातीति नित्यः, दिगात्माकाशाद्यपेक्षया वा न विनाशी, एवं ईश्वरोऽपि बहुज्ञ एव न तु सर्वज्ञः कीटसंख्यादिपरिज्ञानवैयर्थ्यात् । तथा नापुत्रस्य सन्ति लोकाः, ब्राह्मणा देवाः श्वानो यक्षाः, गोभिर्हतस्य गोघ्नस्य वा न सन्ति लोका इत्येवं नैर्युक्तिका वादाः केचिज्जगुः, सर्वेऽपि वादाः प्रमाणरहिता इत्याह **निष्प्रमाणा इति,** अत्रैव परत्रापि जीवो यदि भवेत्तदा दानाध्ययनजपनियमतपोऽनुष्ठानादिकाः सर्वा क्रिया आनर्थिका भवेयुरित्याह **क्रियावैफल्यादिति,** तस्मात्स्थावरजङ्गमा जीवाः निजनिजकर्मानुगुण्येन परस्परं सङ्क्रमन्तीति भावः, लोकोऽपि नाप्रच्युतानुत्पन्नस्थिरैकस्वभावः, प्रत्यक्षबाधितत्वात्, क्षणभाविपर्यायानास्कन्दितस्य कस्यापि वस्तुनः प्रत्यक्षतोऽनिश्चयात्, निष्पर्यायञ्च वस्तु खपुष्पसदृशमेव । यदि तु स्वजात्यनुच्छेदान्नित्यतेत्युच्यते तर्हि सा परिणामानित्यतैवेत्यस्मन्मतप्रवेशः । आकाशादेरप्यविनाशित्वं न युक्तमुत्पादव्ययध्रौव्यात्मकत्वव्याप्यत्वाद्वस्तुत्वस्य, अन्यथा वस्तुत्वमेव तस्य न भवेत् । ईश्वरो बहुज्ञ एव न तु सर्वज्ञ इत्यप्ययुक्तम्, बहुज्ञत्वेऽपि तस्य सर्वज्ञत्वाभावे न प्रेक्षापूर्वकारिभिर्ग्राह्यता भवेत्, हेयोपादेयोपदेशप्रदानवैकल्यात्, तथा तस्य कीटसंख्यापरिज्ञानमप्युपयोग्येव, एतद्विषयपरिज्ञानाभावेऽपरत्रापि हेयोपादेयेष्वपरिज्ञानत्वशङ्कया तत्र प्रेक्षापूर्वकारिणां प्रवृत्तिर्न स्यात्, तत्परिपालनमपि सम्यङ् न भवेत् तस्मात्तस्य सर्वज्ञत्वमेष्टव्यमेव । अपुत्रस्य न सन्ति लोका इत्याद्यभिधानमपि युक्तिरहितमेव, पुत्रसत्तामात्रेण यदि विशिष्टलोकावाप्तिस्तर्हीन्द्रमहकामुकगर्दभवराहादिभिर्लोका व्याप्ता भवेयुः, तेषां बहुपुत्रत्वसम्भवात्, यदि पुत्रकृतानुष्ठानविशेषात्तर्हि पुत्रेणैकेन शुभेऽनुष्ठितेऽपरेण चाशुभे तत्र का वार्त्ता, निजकृतानुष्ठानवैयर्थ्यमपि भवेत्, तस्मान्नैते वादाः प्रमाणोपेता इति ॥ १७ ॥

इत्थं संयमनिरूपणमभिधाय कर्मविदारणोपायं हिताहितप्राप्तिपरिहारलक्षणं बोधं वक्तुमुपक्रमते—

## योग्यस्सद्धर्ममवेत्योत्थाय च सफलं स्यात् ॥ १८ ॥

**योग्य इति,** बोधयोग्यतामवाप्त इत्यर्थः, सा च मनुष्यजन्म तत्रापि कर्मभूमिः पुनरार्यदेशः तत्रापि सुकुलोत्पत्तिस्सर्वेन्द्रियपाटवं श्रवणश्रद्धादिप्राप्तिश्च, एवंविधसामग्रीप्राप्तौ सत्यां तुच्छान् भोगान् परिहत्यावश्यं सद्धर्मे बोधो विधेयः, अकृतधर्माचरणानां हि प्राणिनां सम्यग्ज्ञानदर्शनचारित्रप्राप्तिर्दुर्लभैव, प्रमादाद्धर्मभ्रष्टानामनन्तमपि कालं संसारपरिभ्रमणस्य दुर्वारत्वात्, आयुरप्यनेकापायपूर्णम्, त्रिपल्योपमायुष्कस्यापि पर्याप्त्यनन्तरमन्तर्मुहूर्तेनैव कस्यचित् मृत्यूपस्थितिसम्भवात्, आयुषः सोपक्रमत्वात् । तथा स्वजनादिस्नेहाकुलितमानसस्य सदसद्विवेकविधुरस्य स्वजनादिपरिपालनाय यत्किञ्चित्कारिणो निजकृतकर्मबलादेव नरकादियातनास्थानेषु परिभ्रमणस्य दुर्निवारतया न जन्मान्तरेऽपि तस्य सुगतिः सुलभा, कर्मणामुदयमननुभूय तपोविशेषमन्तरेण तदपगमासम्भवात् । भोगेच्छुर्विषयासेवनेन तदुपशममपेक्षते, तस्य चेह परत्र केवलं क्लेश एव भवति न तूपशमावाप्तिः, प्राप्तमपि सौधर्मादिस्थानमायुषः क्षये न त्राणाय समर्थमतस्तस्मादपि प्राण्यवश्यं च्यवत एव । येऽपि तीर्थान्तरीयाः शास्त्रार्थपारगा धर्माचरणशीला ब्राह्मणा भिक्षवो वा मायाद्युपात्तसदनुष्ठानमूर्च्छिताः सन्तस्तेऽप्यत्यर्थमसद्वेद्यादिभिः पीड्यन्त एव । तीर्थान्तरीयोपदिष्टैस्तपआदिभिरपि न दुर्गतिमार्गनिरोधः, आन्तरकषायापरित्यागात्, तस्मान्न मुनिर्हिताहितप्राप्तिपरिहारे भोगासक्तो मुह्येत्, किन्तु मनुष्याणां लोके जीवितमवगम्य यावन्न पर्यैति तावज्ज्ञानदर्शनचारित्रलक्षणधर्मानुष्ठानेन जीवितं सफलं कर्त्तव्यम्, क्लेशबहुलान् विषयानवगम्य गृहपाशं घनं छिन्द्यात्, यत्नवान् प्राणिनामनुपरोधेनोद्युक्तविहारी भवेत्, यदेव हिंसानृतादिपापेभ्यो यस्सर्वथा विरतो भवति स एव सम्यगुत्थितः क्रोधाद्यपनेता मनोवाक्कायकर्मभिः सर्वतः सावद्यानुष्ठानेन विरतः, स चानुकूलैः प्रतिकूलैर्वा परीषहैः स्पृष्टोऽपि मनःपीडां न विदध्यात्, अनिगूहितबलवीर्योऽधिसहेत न वा मात्रादिभिः कृतैर्विविधैः संसारगमनैकहेतुभूतैरार्त्तालापैः कातरो भवेत्, एवं कर्मणां विदारणमार्गमागतो मनोवाक्कायसंवृतः सावद्यारम्भं परित्यज्येन्द्रियैः सुसंवृतः संयमानुष्ठानं विदध्यादिति ॥ १८ ॥

बाह्यद्रव्यस्वजनारम्भपरित्यागमुक्त्वाऽथान्तरमानपरित्यागमाह—

## परिहृतमदो विदितस्वभावस्समं संयमं चरेत् ॥ १९ ॥

**परिहृतेति,** कर्माभावस्य कषायाभावः कारणमिति विदित्वा मुनिर्गोत्रादिमदं न यायात्, तथान्येषां निन्दामपि न कुर्यात्, तपःसंयमज्ञानेष्वपि येऽमानो मुनिभिस्त्यक्ताः ते कथं परनिन्दां कुर्युः तथापि यः कश्चिदविवेकी परं निन्दति स तत्कृतेन कर्मणा संसारेऽरघट्टघटीन्यायेन परिवर्त्तत एव, तस्मात् परनिन्दां दोषवतीं विज्ञाय विशिष्टकुलोद्भवोऽहं श्रुतवान् तपस्वी भवांस्तु मत्तो हीन इति न प्रमादं कुर्यात्, किन्तु चक्रवर्त्तिनाऽपि संयमपदमुपस्थितेन पूर्वमात्मप्रेष्यप्रेष्यमपि वन्दमानेन लज्जा न विधेया, इतरेण चोत्कर्षं इत्यलज्जमानः उत्कर्षमकुर्वन् परस्परतो वन्दनप्रतिवन्दनादिकाः क्रिया-

कुर्यात्, किमालम्ब्य तत्कार्यमित्यत्राह **विदितस्वभाव** इति, जीवानामशुभावस्थारूपगतिलक्षणमतीतमनागतं च स्वभावं सुष्ठु विदित्वा परिहृतलज्जामदो बहुश्रुतोऽपि सदा भयायजयकृतप्रयत्नः, कीदृशः क व्यवस्थितो लज्जामदौ न कुर्यादित्यत्राह **सम** इति, सामायिकादौ संयमे संयमस्थाने वा षट्स्थानपतितत्वात् संयमस्थानानामन्यतरस्मिन् संयमस्थाने छेदोपस्थापनीयादौ वर्त्तमानः समभावेन यावन्मृत्युकालं तावल्लज्जामदपरित्यागोपेतः संयमं चरेत्, संयमानुष्ठाने प्रवर्त्तेत, हन्यमानो वा पूज्यमानो वा क्रोधं मानञ्च परिहरन् संयमस्याविराधको भवेदिति भावः ॥ १९ ॥

परीषहोपसर्गादीनां सम्यगधिसहनं कार्यमित्याह—

## सहनोऽस्मृतशब्दादिर्निर्ममो विहरेत् ॥ २० ॥

**सहन इति**, समीचीनभावयुतश्शीतोष्णादिरूपाननुकूलप्रतिकूलोपसर्गान् मनोवाक्कायेन सम्यगधिसहमानो लोके सर्वज्ञोक्तः क्षान्त्यादिरूपः श्रुतचारित्ररूपो वा धर्म एकान्तहितत्वादनुत्तर इति एवं भाव्यमानो गृहस्थकुभावचनिकपार्श्वस्थादिभावमपहाय पूर्वमनुभूताननागतान् वा शब्दादिविषयान् स्मरणमात्रेणापि महदनर्थकराननभिलषन्नष्टविधकर्मापनयनाभिलाषुक इव मम, अस्य स्वाम्यहमित्येवं क्वापि परिग्रहाग्रहरहित इन्द्रियनोइन्द्रियैर्विस्रोतसिकारहितस्तपोवीर्ये कदाचिदप्यनवाप्तपूर्वमात्महितं तु तेनावाप्यत इति मन्यमानो नेषदपि संयमानुष्ठानात् प्रमाद्येत ॥ २० ॥

परीषहसहनादेवाज्ञानोपचितस्य कर्मणो विनाश इत्याह—

## संवृताश्रवद्वारोऽकामी सर्वसंवरमाश्रयेत् ॥ २१ ॥

**संवृतेति**, अज्ञानेनोपचितं हि कर्म बद्धस्पृष्टनिधत्तनिकाचितं सप्तदशविधसंयमानुष्ठानात् प्रतिक्षणं क्षयमुपयाति, यथा हि तटाकोदरसंस्थितमुदकं निरुद्धापरप्रवेशद्वारं सदा रविकरसम्पर्कादनुक्षणमपचीयते तथा संवृताश्रवद्वारस्य साधोरिन्द्रिययोगकषायं प्रति संलीनतया संवृतात्मनः संयमानुष्ठानेन चानेकभवाज्ञानोपचितं कर्म क्षीयते मोक्षञ्च स व्रजति, यश्च कामान् स्त्र्यादीन् कथमपि न कामयति तान् व्याधिरूपतया दृष्टत्वात् सोऽपि संतीर्णसमः, निष्किंचनतया शब्दादिविषयेष्वप्रतिबद्धत्वेन संसारोदन्वतस्तटोपान्तवर्त्तित्वात् । यस्तु लघुप्रकृतिः समृद्धिरससातगौरवेषु गृद्धः कामासेवने धृष्टतां गतः कर्त्तव्येष्ववसीदन् समस्तमपि संयमं मलिनीकरोति, धर्मध्यानादिकं कथ्यमानमपि नावबुध्यते, अतिभारादिभिरत्यन्तं श्रमितबलीवर्दस्य विषमपथादौ प्रचोदितस्यापि गमनसामर्थ्यानुदयादिव कामादिविषयैर्जितस्य तत्पङ्कनिमग्नस्य तत्सम्बन्धपरित्यागेनान्यत्र संयमादौ गमने सामर्थ्यानुदयात् । तदनुषङ्गश्च भवान्तरे दुर्गतिप्राप्तिरविनाभाविनीति विषयासङ्गादात्मानं सर्वथा पृथक् कर्त्तव्यम्, तथैवमात्मानमनुशासितव्यं अयि जीवोऽशुभकर्मकारी हिंसानृतस्तेयादौ प्रवृत्तो दुर्गतौ पतति परमाधार्मिकैश्च स कदर्थ्यमानः क्षुधादिवेदनाग्रस्तोऽत्यर्थं रटति हा मातर्म्रियत इत्येवमाक्रन्दति, न हि तत्रास्ति कश्चित् त्राता, तदेव तु सहानि दुःखानि सम्भवन्ति तस्मान्न त्वया विषयानुषङ्गः कर्त्तव्य इति, तथा कश्चिदिहलोकोऽसदनुष्ठाने प्रवृत्तः पापकर्मकारी परेण धर्मायाधर्मनिवृत्तये वा चोदितो धृष्टतया पण्डितमान्यतीतानागतौ विनष्टानुत्पन्नत्वेनाविद्यमानौ न ताभ्यां किञ्चित्प्रयोजनमस्ति प्रेक्षापूर्वकारिभिश्च तदेव परमार्थ-

साधकत्वेनाश्रियते यद्वर्त्तमानकालभावित्वात् परमार्थतया सद्भूत, तथा चेह लोक एव विद्यते परमार्थतो न परलोक न हि कोऽपि परलोकं दृष्टेहायात इति परलोक निहुते, स च कार्याकार्यविवेचनाविधुर प्रत्यक्षस्यैवाभ्युपगमात्, मिथ्यादर्शनज्ञानावरणादिकर्मणाऽतीव निरुद्धदर्शनत्वाद्यथावस्थितवस्तुवेदि-सर्वज्ञोदितमार्गे न तस्य श्रद्धा समुदेति, अत एव स सदसद्विवेकविकल पौनःपुन्येन मोहमुपगच्छन्न-न्तसंसारसागरमभ्येति, तस्मान्निपुणोऽनिपुणो वा मोहमुत्सृज्य सम्यगुत्थानेनोत्थाय सर्वानपि प्राणिनो दुःखाप्रियत्वसुखप्रियत्वाभ्यामात्मतुल्य पश्यन् पालयेत्, यदा च गृहवासेऽपि मनुज श्रमणधर्मप्रति-पत्त्याद्यानुपूर्व्या प्राणिषु यथाशक्त्या समतया वर्त्तमान सुव्रतो देवलोक प्राप्नोति तदा महासत्त्वतया यः पञ्चमहाव्रतधारी यतिस्तस्य किमु वक्तव्यम्, तस्माद्धेयमुपादेयञ्च भगवदाज्ञानुरूप ज्ञात्वा धर्मैक-प्रयोजनोऽनिगूहितबलवीर्यः सुप्रणिहितयोगस्सर्वसंवरलक्षण मार्गमाश्रयेत् ॥ २१ ॥

प्राणिनो न कश्चिच्छरणमित्याह—

## स्वजनादिर्न त्राणायातोऽवसरो न त्याज्य ॥ २२ ॥

**स्वजनादिरिति,** मातापित्रादयो धनधान्यादय करितुरगादयो वा पूर्वोपात्तासातादिकर्मो-दयेन प्राप्ते दुःखे न तव आत्मान त्रातु समर्थाः, अपि तु तदेकेनैवानुभूयते, उपक्रमकारणैरुपक्रान्ते स्वायुषि स्थितिक्षयेण वा भवान्तरे मरणे वा समुपस्थिते न स्वजनादयस्त्रातार, एकाक्येव गत्यागती करोति, एवमेव ससारे सर्वेऽपि प्राणिनः स्वकृतकर्मणैव सूक्ष्मबादरपर्याप्तापर्याप्तादिभेदेन व्यवस्थिताः, तेनैव च कर्मणा नानाविधानि दुःखान्यनुभवन्तो नानायोनिषु गर्भाधानादिदु खपीडिताः परिभ्रमन्ति एव विदन् विवेकी द्रव्यक्षेत्रकालभावलक्षणमवसरं विज्ञाय तदुचितमाचरेत्, जङ्गमत्वपञ्चेन्द्रियत्व-सुकुलोत्पत्तिमानुष्यलक्षणो द्रव्यावसर, आर्यदेशार्धपञ्चविंशतिजनपदलक्षण क्षेत्रावसर, धर्मप्रतिपत्ति-योग्यावसर्पिणीचतुर्थारकादि कालावसरः, धर्मश्रवणतच्छ्रद्धानचारित्रावरणकर्मक्षयोपशमाहितविरति-प्रतिपत्त्युत्साहलक्षणो भावावसर, तदेवंविधमवसर परिहायाकृतधर्माणा दुर्लभा कृतधर्माणामपि तद्-तिविराधने उत्कृष्टतोऽपार्धपुद्गलपरावर्त्तप्रमाणकालेन तु सुलभा बोधिमवाप्नुयात्, तदवाप्तौ च तदनु-रूपमेव कुर्यात् ॥ २२ ॥

अथोदीर्णाः प्रतिलोमोपसर्गाः सम्यक् सोढव्या इत्याह—

## प्रत्युपसर्गासहिष्णु कश्चिद्द्रवति निन्दति च ॥ २३ ॥

**प्रत्युपसर्गेति,** उपसर्गो हि द्विविधः, औधिकौपक्रमिकभेदात्, अशुभकर्मप्रकृतिजनित औधिको भावोपसर्गः, अनुदयमाप्तानां कर्मणामुदयप्रापणमुपक्रमः, यद्द्रव्योपयोगाद्येन वा द्रव्येणा-सातवेदनीयाद्यशुभ कर्मोदीर्यते यदुदयाच्चाल्पसत्त्वस्य सयमविघातो भवति स औपक्रमिक उपसर्गः, यतीना मोक्षाङ्गसयमस्थाना सयमस्य प्रतिबन्धकत्वादसावेवात्राधिक्रियते, स च चतुर्विधः, दैविको मानुषस्तैरश्च आत्मसंवेदनश्चेति, दैविको हास्यप्रद्वेषविमर्शपृथग्विमात्राभिश्चतुर्धा, मानुषोऽपि हास्यप्रद्वेष-विमर्शकुशीलप्रतिसेवनाभिश्चतुर्धा, तैरश्चश्च भयप्रद्वेषाहारापत्यसंरक्षणतश्चतुर्धा, आत्मसंवेदनोऽपि घट्टनातो लेशनातः स्तम्भनातः प्रपाताच्चेति चतुर्धा, वातपित्तश्लेष्मसन्निपातजनिताश्चेति वा, तथा दिव्यादिश्चतु-

विंधोऽप्यनुकूलप्रतिकूलभेदादष्टधा । तत्र यथा कश्चिल्लघुप्रकृतिः सङ्ग्रामे समुपस्थिते शूरंमन्य आत्मश्लाघाप्रवणो वाग्भिर्विस्फूर्जन् न मत्कल्पः परानीके कश्चित्सुभटो वर्त्तत इति यावद्गर्जति यावत्पुरोवस्थितं प्रोद्यतासिं जेतारं न पश्यति यदा च परानीकसुभटान् चक्रकुन्तादिना विक्षतो भवति तदा दीनो भङ्गमुपयाति तथाऽभिनवप्रव्रजितः परीषहैरस्पृष्टः प्रव्रज्यायां किं दुष्करमित्येव गर्जन्नभिनवप्रव्रजितत्वादेव साध्वाचारेऽप्रवीणः शूरंमन्यो भवति यावत्संयमं रूक्षं न भजते तत्प्राप्तौ तु बहवो गुरुकर्माणोऽल्पसत्त्वा भङ्गमुपयान्ति, यथा हेमन्तमासे सहिमकणो वायुर्लगति ग्रीष्मे च महताभितापेन व्याप्तो विमनस्कः पिपासुर्दैन्यमुपयाति ततश्च तत्प्रतीकारहेतूननुस्मरति व्याकुलचेताश्च संयमानुष्ठानं प्रति विषीदति, एवं यतीनां परदत्तैषणीयेनाहारादिनोपभोगो भवति, क्षुधादिवेदनार्त्तानां यावज्जीवं परदत्तैषणा तु दुःसहा भवति, अल्पसत्त्वस्य याच्ञापरीषहो दुःखेन सोढव्यः, अनार्यप्रत्येकमेते यतय आविलदेहा लुञ्चितशिरसः क्षुधादिवेदनाभग्नाः पूर्वोपार्जितकर्मदुःखिनस्तत्फलमनुभवन्तीति यथैते कृष्यादिकर्म कर्त्तुमसमर्था यतयः संवृत्ताः पुत्रदारादिभिः परित्यक्ता निर्गतिकाः प्रव्रज्यामभ्युपगता इति च निशम्य लघुप्रकृतयो विमनस्का भवन्ति संयमाद्वा भ्रश्यन्ति, एवं वधदंशमशकादिष्वपि भाव्यम्, महासत्त्वास्तु गताभिमाना ज्ञानाद्यभिवृद्धये महापुरुषसेवितं पन्थानमनुव्रजन्ति, मिथ्यात्वोपहतदृष्टयस्तु रागद्वेषाक्रान्तत्वात् साधुविद्वेषिणो नानाविधैरसदालापैः साधुं कदर्थयन्ति ॥ २३ ॥

अथानुकूलोपसर्गाश्रयेणाह—

## दुर्लङ्घ्यान्तरोपसर्गमोहितो निर्विवेको विषीदति ॥ २४ ॥

दुर्लङ्घ्येति, उदीर्णाः प्रतिकूलोपसर्गाः प्रायो जीवितविघ्नकरा अपि महासत्त्वैर्मुनिभिर्माध्यस्थ्यमवलम्ब्य सोढुं शक्याः, एते त्वनुकूलोपसर्गास्तानप्युपायेन धर्माच्च्यावयन्तीत्यतो दुर्लङ्घ्याः, आन्तरेति, प्रतिकूलोपसर्गा बाहुल्येन शरीरविकारकारित्वेन बादराः, एते च चेतोविकारकारित्वेनान्तराः, एवम्भूतान् स्वजनादिकृतानुपसर्गान् प्राप्याल्पसत्त्वो नैव स्वात्मानं संयमानुष्ठानेन वर्त्तयितुं समर्थो भवति, किन्तु संयमं त्यजति, ते हि मातापित्रादयः प्रव्रजन्तं प्रव्रजितं वा वेष्टयित्वा रुदन्तो वदन्ति त्वमस्माभिर्बाल्याद्वृद्धानामस्माकं पालको भविष्यतीति पोषितः केन हेतुना कस्य बलेनास्मान् त्यजसि, न ह्यस्माकं त्वदन्यः कश्चिद्रक्षको विद्यते, अयं तव वृद्धः पिता, इयमप्राप्तयौवना ते लघ्वी भगिनी, एते च तव सहोदराः, निराधारानस्मान् किमिति परित्यजसि, वृद्धमातापितृपालनेन च तवेहलोकः परलोकश्च भविष्यति, इयं तवाभिनवोढा प्रथमयौवना भार्या त्वया परित्यक्तोन्मार्गगामिनी यदि भवेन्महान् जनापवादः स्यात्, जानीमो वयं त्वं धर्मभीरुरिति तथापि आगच्छ गृहं गच्छामः सम्प्रति किमपि कर्म मा कृथाः, उपस्थिते तु कर्मणि वयमपि सहायका भविष्याम इत्येवमादि व्युद्ग्राहयन्ति, अल्पसत्त्वश्च स गुरुकर्मा तैर्मोहितो गृहं प्रति धावति, आगतञ्च तं सर्वमनुकूलमनुतिष्ठन्तो धैर्यमुत्पादयन्ति सर्वानुकूलैरुपचरन्ति, एवमेते सङ्गा दुःखेनातिलङ्घ्यन्ते तस्मादिमुक्तातिसङ्गं संसारैकहेतुं परिज्ञाय प्रत्याख्यानपरिज्ञया परिहरेत्, उपस्थितैरनुकूलोपसर्गैर्गृहवासपाशं नाभिलष्येत्, प्रतिकूलैश्चोपसर्गैः श्रुतचारित्राख्यं धर्मसम्यगभ्यासमसमञ्जसकारित्वेन जीविते नाभिकाङ्क्षेदिति ॥ २४ ॥

अथोपसर्गैरध्यात्मनिषीदन भवतीत्याह—

**न विचिकित्सया त्राणाय व्याकरणादौ यतते ॥ २५ ॥**

**नेति,** अल्पसत्त्वाः प्राणिनः, विचित्रा च कर्मणां गतिः प्रमादस्थानानि च बहूनि विद्यन्ते, केन पराजितोऽहं संयमाद्भ्रष्टो भवेयमिति को वेत्तुं शक्नुयात्, नास्माकं किञ्चन पूर्वोपार्जितद्रव्यजातमस्ति यत्तथाविधे समये वृद्धावस्थायां ग्लानावस्थायां दुर्भिक्षे चोपयोगाय भवेदतो व्याकरणं गणितं ज्योतिषं हस्तिशिक्षां धनुर्वेदं वैद्यकं होराशास्त्रं मन्त्रादिकं वाऽधीतश्चेत्तदा परेण पृच्छ्यमानो हस्तिशिक्षाधनुर्वेदायुर्वेदादिकं कथयिष्यामीति संयमभारमुद्वहन् प्रति विचिकित्सां समापन्नो हीनसत्त्वो व्याकरणादौ प्रयतते, न च तथापि मन्दभाग्यत्वादभिप्रेतार्थसिद्धिर्भवति। महासत्त्वश्च साधुः सुभटवत् परलोकप्रतिस्पर्धिनमपायाचरियं जेतुं संयमोत्थानेनोत्थितो गृहपाशमवधूय न्यक्कृत्य च सावद्यानुष्ठानमात्मनोऽशेषकलङ्कराहित्याय संयमानुष्ठानक्रियायां दत्तावधानो भवति, न च स्वप्नेऽपि गृहवासमनुशोचति ॥ २५ ॥

अथाऽऽजीविकानां दिगम्बराणां वा परोपकारपूर्वकजीवनस्वभावस्य साधोराचारे आक्षेपं दूषयितुमाह—

**अन्योऽन्योपकारेण गृहीवैते मूर्च्छिता इत्युक्तिरयुक्ता, तेषां पक्षद्वयप्रसङ्गात् ॥ २६ ॥**

**अन्योऽन्येति,** पुत्रकलत्रादिस्नेहपाशैरनुरक्ता गृहस्था यथा परस्परोपकारेण मात्रादिः पुत्रे पुत्रश्च मात्रादौ मूर्च्छितस्तथैते परस्परतो रोगिणः साधोर्भैक्षमन्वेषयत, ग्लानयोग्यमाहारमन्विष्य तदुपकारार्थं ददध्वमाचार्यादर्वैयावृत्त्यकरणानुपकारेण वर्तव्यमित्येवंविषया मूर्च्छिताः, परस्मै दानादिनोपकारो हि गृहिणां धर्मो न तु यतीनाम्, तस्मादेते गृहस्था इव सरागिणः परस्परायत्तत्वात्, यतयो हि निःसङ्गतया न कस्यचिदायत्ता भवन्तीत्याजीविकादयो दिगम्बरा वा वदन्ति, तन्निषेधायाह **तेषामिति,** एवंवदतामात्मीयपक्षस्य सदोषस्य समर्थनाद्रागस्य निष्कलङ्कस्यासदभ्युपगमस्य दूषणाद्द्वेषस्य च प्रसङ्गः स्यात्, स्वतोऽसदनुष्ठानं सदनुष्ठायिनां निन्दनमिति वा पक्षद्वयस्य प्रसङ्गः, यद्वा बीजोदकोद्दिष्टकृतभोजित्वाद्गृहस्थाः, यतिलिङ्गाभ्युपगमात् प्रव्रजिताश्चेत्येवं पक्षद्वयस्य प्रसङ्गः, तथा हि वयमपरिग्रहतया निष्किञ्चना इत्यभ्युपगम्य गृहस्थभाजनेषु युष्माभिर्भुज्यते तत्परिभोगाच्च तत्परिग्रहोऽवश्यम्भावी, आहारादिषु मूर्च्छनाच्च कथं निष्परिग्रहाभ्युपगमो निष्कलङ्को भवेत्, भिक्षाटनं कर्तुमसमर्थस्यापरैर्गृहस्थैरभ्याहृतं कार्यते भवद्भिः, यतेरानयनाधिकाराभावात्, तथाच गृहस्थानयने यो दोषः स भवतामवश्यम्भावी, गृहिभिर्हि बीजोदकाद्युपमर्देनापादितमाहारं भुक्त्वा ग्लानमुद्दिश्य यन्निष्पादितं तदवश्यं युष्मदुपभोगायावतिष्ठते, एवञ्चैते षड्जीवनिकायविराधनयोद्दिष्टभोजित्वेनाभिगृहीतमिथ्यादृष्टितया च साधुपरिभाषणेन च तीव्रेण कर्मबन्धेनोपलिप्ताः, नैते सद्युक्तिभिर्वादं कर्तुं समर्थाः, विपर्यस्तावबोधेन व्याप्तत्वात्, केवलं क्रोधानुगा असभ्यवचनादीन्येवाश्रयन्ते, अर्थानुगतयुक्तिभिः प्रमाणभूतैर्हेतुदृष्टान्तैः स्वपक्षसंस्थापनायां सामर्थ्याभावात्। तस्मात्तदेव वक्तव्यं वादकालेऽन्यदा वा येन येनोपन्यस्तेन हेतुदृष्टान्तादिना स्वपक्षसिद्धिलक्षणो माध्यस्थ्यवचनादिना वा परानुपघातलक्षण आत्मसमाधिः

समुत्पद्यते येनाऽनुष्ठितेन भावितेन वाऽन्यतीर्थिको धर्मश्रवणादौ वाऽन्यः प्रवृत्तो विरोधं न यायात्। तस्माद्भिक्षु सर्वज्ञप्रणीतं धर्ममवेत्य यथा स्वस्य समाधिर्ग्लानस्य चोत्पद्यते तथा पिण्डदानादिकं कुर्यात्, न चोपसर्गैरुपसर्गितोऽसमञ्जसं विदध्यादिति ॥ २६ ॥

अथ स्खलितशीलस्य साधोः प्रज्ञापनामाह—

## दुःश्रवणोपसर्गेऽज्ञाः संयमे विषीदन्ति ॥ २७ ॥

**दुःश्रवणेति,** केचित् पञ्चाग्न्यादितपसा सन्तप्तशरीराः सिद्धिं शीतोदकन्दमूलाद्युपभोगिनोऽपि प्रापुः, यथा बाहुकनारायणासितदेवलपाराशरादयः केचिच्चाशनादिकमभुक्त्वा यथा नम्यादयः, केचिदाहारादिकं भुक्त्वैव यथा रामगुप्तादय इत्येवं केनचिदुक्तं निशम्याज्ञाः सिद्धिं नानाविधोपायसाध्यमिति निश्चित्य संयमानुष्ठाने विषीदन्ति यदि वा तत्रैव शीतोदकादिपरिभोगे लगन्ति, किन्त्वेतन्नावधारयन्ति येषां सिद्धिगमनमभूत् तेषां कुतश्चिन्निमित्ताज्जातजातिस्मरणादिप्रत्ययानामवाप्तसम्यग्ज्ञानचारित्राणामेव वल्कलचीरिप्रभृतीनामिव सिद्धिगमनमभूत्, न तु कदाचिदपि सर्वविरतिपरिणामभावलिङ्गं विना शीतोदकाद्युपभोगेन जीवोपमर्दप्रायेण कर्मक्षयोऽवाप्यत इति ॥ २७ ॥

मतान्तरं निरस्यति—

## कारणसमत्वात्कार्यस्य सुखान्मुक्तिरित्येके, न विरूपादपि कार्यदर्शनाद्वैषयिकस्यासुखत्वाच्च ॥ २८ ॥

**कारणेति,** केचित् शाक्यादयः स्वयूथ्या वैव ब्रुवते, सुखेनैव सुखं भवति न तु लोचादिक्लेशेन कार्यस्य कारणसादृश्यात्, शालिबीजाद्धि शाल्यङ्कुरोत्पत्तिर्न यवाङ्कुरोत्पत्तिः, तथा मनोज्ञाहारविहारादेश्चित्तस्वास्थ्यं ततस्समाधिस्तस्माच्च मुक्त्यवाप्तिरतः सुखेनैव सुखावाप्तिर्न कदापि लोचादिकायक्लेशादिनेति, एते च सदा संसारान्तर्वर्तिनोऽज्ञाः, ज्ञानदर्शनचारित्रात्मकस्य जैनेन्द्रशासनप्रतिपादितसमाधेस्य परिहरणात्। कारणसमत्वात्कार्यस्येति नियमं दूषयति **विरूपादपि कार्यदर्शनादिति,** शृङ्गाद्धि शरो जायते गोमयाद्वृश्चिको गोलोमाविलोमादिभ्यो दूर्वेति विसदृशादपि कारणात्कार्यस्योत्पत्तिदर्शनेन न कारणसादृश्यनियमः कार्यस्य, मनोज्ञाहारादिकमपि सुखं प्रति व्यभिचारि, विसूचिकादेरपि संभवात्, दोषान्तरमाह **वैषयिकस्यासुखत्वाच्चेति,** विषयजन्यं हि सुखं दुःखप्रतीकारहेतुत्वात्सुखाभासतया सुखमेव न भवति, अतः परमानन्दरूपस्यात्यन्तिकैकान्तिकस्य मोक्षसुखस्य कुतः कारणं भवेत्, भवद्रीत्या साम्यस्याप्यभावादिति भावः। चशब्देन विचित्रसंसारानुपपत्तिलक्षणदोषस्य समुच्चयः, यदि हि सुखेनैव सुखं तर्हि नित्यसुखिनः स्वर्गस्थाः पुनरपि सुखानुभूतेस्तत्रैवोत्पत्तिः स्यात्, नारकाणाञ्च पुनर्दुःखानुभवात्तत्रैवोत्पत्तिरिति नानागत्या संसारस्य वैचित्र्यं न भवेत्, न चैतद्दृष्टमिष्टञ्चेति भावः। लोचादिकमप्यल्पसत्त्वानामपरमार्थदृशामेव दुःखकारणरूपत्वं परमार्थदृशां महासत्त्वानान्तु सर्वमेतत्सुखायैव। मनोज्ञाहारादिना च न समाधिर्भवति, ततः कामोद्रेकात्तस्याचेतसोऽस्थिरत्वात्, तस्मादेते सावद्यानुष्ठायिनः परमसुखविलोपिनोऽनन्तसंसारा इति ॥ २८ ॥

मतान्तरं दूषयति—

**स्त्रीसम्बन्धो न दोषायेत्येके तन्न सर्वदोषास्पदत्वात् ॥ २९ ॥**

**स्त्रीति,** केचित्स्त्रीवशगा रागद्वेषोपहतचेतसो जैनमार्गविद्वेषिणो युवतिप्रार्थनाया रमणीसम्बन्धे दोषाभावमङ्गीकुर्वन्ति यथा पिटकादिकस्य तदाकूतोपशमनार्थं पूर्वरुधिरादिकं निर्गाल्य मुहूर्तमात्रं सुखिनो भवन्ति न च दोषेणानुषज्यन्ते तथा स्त्रीप्रार्थनाया तत्सम्बन्धेऽपि न दोषो भवति न वा स्त्रीसम्बन्धेऽन्यस्य काचित् पीडा, आत्मनश्च प्रीणनं भवति, तथाऽरक्तद्विष्टतया पुत्रार्थमेव ऋतुकालाभिगामित्वे वा न कश्चिद्दोष इत्यपरे वदन्ति, तत्र दोषमाह **सर्वेति,** मैथुनं हि सर्वदोषास्पदं संसारवर्धनञ्च, तत्र माध्यस्थ्यावलम्बनमात्रेण विना तन्निवृत्तिं निर्दोषता कथं भवेत्, न हि कस्यचिच्छिरश्छित्त्वौदासीनभावावलम्बनेन नापराधी भवति, किंवा विषं पीत्वा तूष्णीम्भावावलम्बनेन न म्रियते, तस्माद्व्रणपीडनादिदृष्टान्तेन मैथुनं निर्दोषं मन्यमाना स्त्रीपरीषहजिता विपरीततत्त्वग्राहिणो नरकादियातनास्थानेषु महादुःखमनुभवन्ति, येस्तु महासत्त्वैः स्त्रीसङ्गविपाकवेदिभिर्नारीसंयोगाः परित्यक्ताः स्नातसङ्गफलवस्त्रालङ्कारमाल्यादिभिः कामविभूषाः परित्यक्तास्ते स्त्रीप्रसङ्गादिकं क्षुत्पिपासादि प्रतिकूलोपसर्गकदम्बकञ्च निराकृत्य महापुरुषसेवितपन्थानं प्रति प्रवृत्ताः सुसमाधिना व्यवस्थिता नोपसर्गैरनुकूलैः प्रतिकूलैर्वा प्रक्षोभ्यन्ते नान्य इति परिज्ञाय भिक्षुर्हेयोपादेयबुद्ध्या शोभनानि प्रतिगृह्णन् संयमानुष्ठानं चरेत्, मृषावादादिकञ्च परिहरेदिति ॥ २९ ॥

अथ स्त्रीकृतोपसर्गस्य दुःसहत्वात्तज्जयार्थं तत्संस्तवादिपरित्यागमाह—

**कृतविविक्तचर्याप्रतिज्ञो वनिताविलासविप्रलुब्धो न स्यात् ॥ ३० ॥**

**कृतेति,** पित्रादिपूर्वसंयोगं श्वश्र्वाद्युत्तरसंयोगञ्च विहाय स्त्रीपशुपण्डकविवर्जितस्थाने संयमं करिष्यामीति कृतप्रतिज्ञः सर्वथा स्त्रीसङ्गं विवर्जयेत्, नापि तया सह विहरेन्न वा विविक्तासनो भवेत्, यतो महापापस्थानमेवं यतीनां स्त्रीभिरासङ्गत्वम्, तद्वर्जनेन चात्मा समस्तापायस्थानेभ्यो रक्षितो भवति, स्त्रियो हि मायाप्रधानाः, सम्यक् प्रतारणोपायं जानन्ति, इतरकार्यव्यपदेशेन समीपमेत्य शीलाद्भ्रंशयन्ति, अतिस्नेहमाविष्कुर्वन्त्यः समीपमागच्छन्ति नानाविधवचोभिर्मुग्धयन्ति, काममुत्पादयन्ति, प्रतारणाय सम्मुखं वस्त्रं शिथिलादिव्याजेन साभिलाषं शिथिलीकृत्य पुनर्निबध्नन्ति ऊर्वादिकाय प्रकटयन्ति, कक्षामादर्श्य व्रजन्ति उपभोगं प्रति प्रार्थयन्ति, उत्पाद्य विश्वासमकार्यकरणाय निमन्त्रयन्ति, ईदृशान् वनिताविलासानवेत्य विदितवेद्यः परमार्थदर्शी साधुर्न तद्दृष्टौ स्वदृष्टिं निवेशयेत्, सति प्रयोजने ईषदवज्ञया निरीक्षेत, न वा तच्चेष्टासु प्रलोभमुपगच्छेत्, स्त्रीसंसर्गोपादिता शब्दादयो हि विषया दुर्गतिगमनैकहेतवः सन्मार्गार्गलारूपा इत्येवं विजानीयात्। विज्ञानेकविधप्रपञ्चैः करुणाविनयपूर्वकं स्त्रियः समीपमुपागत्य विश्रम्भजनकानि वचांसि भाषमाणा रहस्यालापैर्मैथुनसम्बद्धवचोभिः साधोश्चित्तमादाय तत्कार्यकरणं प्रति कर्मकरवदाज्ञापयन्ति, सोऽपि साधुः स्त्रीपाशबद्धो मृगवत् कूटके पतितः सन् कुटुम्बकृतेऽहर्निशं क्लिश्यते, तथा हि स्खलितचारित्रं कामाभिलाषुकं मद्वशग इति परिज्ञाय लिङ्गस्योपकरणान्यधिकृत्यालावुच्छेदं शस्त्रं लभस्व, येन पात्रादेर्मुखादिः क्रियते, शोभनान्य-

लाबुफान्यानय, धर्मकथाविफलानि पत्रादिलाभरूपाण्याहर, पतद्ग्रहाणि लेपय येन सुखेनैव भिक्षाटनं भवेत्, अलक्तकादिना पादौ रञ्जयेत्येवंरूपेषु कर्मसु, गृहस्योपकरणान्यधिकृत्य च फलाधारभूतां नीलिकां कटककेयूरादिमलङ्कारं प्रयच्छ येनाहं सदालङ्कारभूषिता वीणादिविनोदेन भवन्तं विनोदयामि, सुखाभ्यङ्गार्थं संस्कृतं सुगन्धितैलमाहर, आतपवृष्टिभ्यां संरक्षणाय छत्रमुपानहौ मामनुजानीहि, केशसंयमनार्थं कङ्कतकं दन्तप्रक्षालनार्थं दन्तकाष्ठं मदन्तिकं प्रवेशय, रात्रौ भयाद्बहिर्गमनमसमर्था कर्तुं ततो मम यथा रात्रौ बहिर्गमनं न भवति तथा कुरु, मत्पुत्राय क्रीडाभाजनान्युपानय, स क्रीडतु, प्रावृट्समयनिवासार्हमालयं तण्डुलादिभक्ष्यं निष्पादय येन सुखेनैव सोऽतिवाह्येतेत्येवं कर्मसु च सन्निर्देशवर्त्ती महामोहोदये वर्त्तमानोऽपहस्तितैहिकामुष्मिकापाय उष्ट्र इव परवशगो भवति, तस्माद्विषोपलिप्तकण्टकादपि महदनर्थकारिणीं स्त्रियमवेत्य स्नुषादुहितृसुताधात्र्यादिकमप्यविचिन्त्य योषिन्मात्रेण सह विवेकिना सम्पर्को न कर्त्तव्यः, विविक्ते दुहित्रादिना सार्धं हि साधु दृष्ट्वा योषिज्जातीनामन्येषां चैव शङ्का भवेत्, प्राणिमात्रं हीच्छामदनकामैर्गृद्धः, अत एवम्भूतोऽपि श्रमणः स्त्रीवदनालोकनासक्तचेताः परित्यक्तनिजव्यापारोऽनया सार्धं निर्लज्जस्तिष्ठतीति । यतोऽनर्थाय स्त्रीसम्बन्धस्तस्मादात्महितकामेन स्त्रीवसतयः परित्याज्या इति ॥ ३० ॥

अथ स्त्रीवशगोऽवश्यं नरकं यातीति नरकवेदना प्राह—

## नरकेषु तीव्रतरदुःखभाजो रौद्राः ॥ ३१ ॥

**नरकेष्विति,** नारका देवादिनाप्युपशमयितुमशक्यं शीतोष्णरूपपृथिव्यास्तीव्रवेदनोत्पादकं स्पर्शं समनुभवन्ति, तथैवान्तेऽशुभान् रूपरसगन्धशब्दानपि, तत्राद्यासु रत्नशर्करावालुकाख्यासु तिसृषु पृथिवीषु पञ्चदशप्रकारैः परमाधार्मिकैः हत मुद्गरासिकुन्तकरपत्रकुम्भीपाकादिकं प्रभूतकालं यावदशरणा नारका वधमनुभवन्ति, पङ्कधूमतमोमहातमःप्रभाख्यासु चतसृषु पृथिवीषु परमाधार्मिकाभावेऽपि स्वत एव तत्कृतवेदनायास्तीव्रतरं वेदनासमुद्घातमनुभवन्ति परस्परोदीरितदुःखाश्च भवन्ति, तत्र ये महारम्भपरिग्रहपञ्चेन्द्रियवधपिशितभक्षणादिके सावद्यानुष्ठाने प्रवृत्ता असंयमजीवितार्थिनः प्राणिनामसदनुष्ठानैर्भयोत्पादकत्वेन रौद्रा—भयानकास्ते तीव्रपापोदयवर्त्तिनोऽत्यन्तभयानके बहुलतमोऽन्धकारे यत्रात्मापि नोपलभ्यते चक्षुषा, केवलमवधिनापि मन्दं मन्दमुलूकेनेवाह्नि दृश्यते तथाविधे दुःसहखदिराङ्गारराशितोऽनन्तगुणतापसन्तप्ते बहुवेदने नरके पतन्ति नानारूपा वेदनाः समनुभवन्ति च । तत्र तिर्यङ्मनुष्यभवात्सत्त्वा उत्पन्ना अन्तर्मुहूर्त्तेन निर्लूनाण्डजसन्निभानि शरीराण्युत्पादयन्ति, पर्याप्तिभावमागताश्चातिभयानकान् शब्दान् परमाधार्मिकजनितान् शृण्वन्ति हत मुद्गरादिना, छिन्त खड्गादिना, भिन्त शूलादिना, दहत मुर्मुरादिनेत्येवंविधान् । निशम्य च ते भयोद्भ्रान्तलोचना भीत्या नष्टचेतनाः कं गतानामस्माकमेवंविधमहाघोरारवदारुणस्य दुःखस्य त्राणं स्यादित्याशङ्कमाना इतस्ततो धावन्तो ज्वालाकुलां भूमिमाक्रमन्तो दन्दह्यमाना आक्रन्दन्ति, एवं तेषां तत्र स्थितिरुत्कृष्टतस्त्रयस्त्रिंशत्सागरोपमाणि जघन्यतो दशवर्षसहस्राणि । तदेव तथा नारकास्तापापनोदनायोदकपिपासयाऽभिषिषिक्षया वा तां भूमिं विहाय क्षारोष्णरुधिराकारजलवाहिनीं शरीरावयवकर्त्तनतीक्ष्णस्रोतस्विनीं दुःखदां वैतरणीं नदीं गतास्तत्रापि परमाधार्मिकैः प्रेरिताः शक्तिभिश्च हन्यमानास्तरन्ति, दुर्गन्धेनात्यन्तक्षारोष्णेन वैतरणी-

जलेन सन्तप्तानायसकीलाकुला नावमधिरोढुमुपागच्छन्तः पूर्वारूढाः परमाधार्मिकाः कण्ठेषु विध्यन्ति ततश्च वैतरणीजलेन नष्टसंज्ञा अप्यपगतकर्तव्यविवेका भवन्ति। अन्ये च नरकपाला नारकैः क्रीडमानाः शूलाभिर्नष्टसंज्ञान् तान् विद्ध्वाऽधो भूमौ कुर्वन्ति, केषाञ्चिन्नारकाणां परमाधार्मिका महतीं शिलां गले बद्ध्वा तान् महत्युदके निमज्जयन्ति समाकृष्य च तस्याः कदम्बुकावालुकायां मुर्मुरायां च समन्ततो घोलयन्ति, अन्ये च तत्र स्वकर्मपाशावपाशिताश्नारकान् शूलके प्रोतकमांसपेशीनवत्कर्जयन्ति, केचिन्महापापोदया नारका परितोऽग्निज्वालामये चक्रिकाकृती नरके प्रवेशिताः सन्तप्ताः स्वकृतदुश्चरितमजानन्तोऽपगतावधिविवेका सदा दन्दह्यन्ते, न ह्यक्षिनिमेषमात्रमपि कालं तत्र दुःखस्य विरामः, केचिच्च नरकपाला निरनुकम्पैः परशुपाणिभिर्नारका हस्ते पादेषु बद्ध्वा काष्ठशकलमिव तक्ष्यन्ते तेषाञ्च शरीरावयवा विश्लेष्यन्ते, नरकपाला स्मारयन्ति चाक्रन्दमानान् पूर्वकृतानि, त्वया तदा हृष्टेन प्राणिनां मांसः समुत्कृत्योत्कृत्य भक्षितं, तद्रुधिरं मद्यञ्च पीतं परदारा भुक्ता, साम्प्रतं तद्विपाकापादितेन कर्मणाऽभितप्यमानः किमेवं रारटीषीत्येवं स्मारयन्तः पुनः पुनर्दुःखं समुत्पादयन्तः पीडयन्ति, तदेवं पूर्वजन्मसु जघन्येतरादिना यादृग्भूताध्यवसायेन कर्माण्याचरितानि तथैव नरके तस्य वेदना स्वतः परतः उभयतो वा भवन्ति, अनृतभाषिणाञ्च तत्स्मारयित्वा जिह्वाश्छिद्यन्ते परद्रव्यापहारिणामङ्गोपाङ्गान्यपह्रियन्ते पारदारिकाणां वृषणच्छेदं शाल्मल्युपगूहनादि कार्यन्ते, महापरिग्रहारम्भवतां क्रोधमानमायालोभिनाञ्च जन्मान्तरस्वकृतक्रोधादिदुष्कृतस्मारणेन तादृग्विधमेव दुःखमुत्पाद्यते, इत्थं नरकदुःखविशेषान् भगवदागमेन विदित्वा धीरस्सर्वस्मिन् प्राणिगणे कमपि न हिंस्यात्, जीवादितत्त्वेषु च निश्चलदृष्टिर्निष्परिग्रहमृषावादादिर्न लोकवशगो भवेत्, श्रुतं संयमं विदित्वा तदनुष्ठानरतो यावज्जीवं मृत्युकालं प्रतीक्षेत ॥ ३१ ॥

तदेवं नारकयातना धर्मश्च महावीरस्वामिनाऽऽवेदित इत्याह—

## परिज्ञाय धीरो वीरोऽनुत्तरमाचरयो धर्मम् ॥ ३२ ॥

**परिज्ञायेति,** समारम्भवर्तिनां सकलप्राणिनां कर्मविपाकजं दुःखं परिज्ञाय यथावस्थिततत्त्वस्वरूपवेत्ता उपदेशदानात् प्राणिनामष्टविधकर्मोच्छेदननिपुणः सर्वत्र सदोपयोगी नानाविधोपसर्गैरुपसर्गितोऽपि निष्प्रकम्पसंयमरतित्वाद्धीरधिया राजमानत्वाद्वा धीरः समस्तभयरहितः औरसबलेन धृतिसंहननादिभिश्च वीर्यान्तरायस्य निःशेषक्षयात् परिपूर्णवीर्यः, उत्पन्नदिव्यज्ञानो निःशेषान्तरायक्षये सर्वलोकपूज्यत्वेऽपि च भिक्षामात्रवृत्तिनिराकाङ्क्षिषु प्रशस्तवर्णरसगन्धस्पर्शप्रभावादिगुणैर्विराजमानो जातियशोदर्शनज्ञानशीलैः सर्वातिशाय्यनुत्तरं धर्मं प्रकाश्य योगनिरोधकाले सूक्ष्मक्रियस्य ततो व्युपरतक्रियस्य शुक्लध्यानविशेषस्य ध्याता शैलेश्यवस्थापादिततद्ध्यानानन्तरञ्च साद्यपर्यवसानां लोकाग्रव्यवस्थितां प्रधानां सिद्धिगतिं प्राप्त ऋषिश्रेष्ठो नाम्ना वर्धमानस्वामी परीषहोपसर्गैरनुकूलप्रतिकूलैरपराजितोऽद्भुतकर्मकारित्वेन गुणनिष्पन्नमहावीरापरनामा क्रियावाद्यक्रियावादिवैनयिकाज्ञानिकादीनामभ्युपगमं सम्यगवबुद्ध्य यथावस्थिततत्त्वोपदेशेनापरान् मस्करान् परिज्ञाप्य स्वयमपि सम्यगुत्थानेन संयमे व्यवस्थितः सरात्रिभक्तषष्ठ प्राणातिपातादिकं प्रतिषिध्य तपोनिष्टप्तदेहोऽभवत्, न हि स्वतोऽस्थितः परान्

ख्यापयितुमलम् । तदेव श्रुतचारित्राख्यं क्षायोपशमिकमर्हद्भाषितं सर्वधर्मप्रधानं धर्मं श्रद्दधाना अनुतिष्ठन्तो लोका व्यपगतासु कर्मसु सन्तः सिद्धिं प्राप्ताः प्राप्नुवन्ति प्राप्स्यन्ति चेति ॥ ३२ ॥

अथ ये परतीर्थिकाः पार्श्वस्थादयो वा स्वयूथ्या अशीलाश्च गृहस्थास्ते कुशीलाः, तान् तदनुष्ठानतस्तद्विपाकदुर्गतिगमनतश्च निरूपयितुमाह—

## कायायतदण्डास्तेष्वेव ॥ ३३ ॥

**कायेति**, कायाः पृथिव्यादिजीवनिकायाः त्रसाः स्थावराश्च, सर्वेऽप्येते सुखैषिणो दुःखद्विषश्च, एभिः कायैः पीड्यमानैरात्मा दण्ड्यते, एवञ्जीवान् कायान् ये दीर्घकालं दण्डयन्ति ते तेष्वेव पृथिव्यादिकायेषु भूयो भूयः समुत्पद्यन्ते, सुखार्थिभिर्यदि कायसमारम्भः क्रियते तदा दुःखमेवाप्यते न सुखम्, मोक्षार्थं कुतीर्थिकैरेतेषु कायेषु क्रिया कुर्वन्ति तया संसार एव भवति, सोऽयमायतदण्डः एकेन्द्रियादिषु समुत्पन्नः सन् बहुक्रूरकर्मा यस्यामेकेन्द्रियादिजातौ यत्प्राण्युपमर्दकारि कर्म कुरुते, स तेनैव कर्मणा परिच्छिद्यते, किञ्चित् कर्मास्मिन्नेव जन्मनि विपाकं ददाति, किञ्चित् परस्मिन्नरकादौ किञ्चिदेकस्मिन्नेव जन्मनि तीव्रं विपाकं ददाति, किञ्चिच्च बहुषु जन्मसु, येनैव प्रकारेण तदनुभूमाचरन्ति तथैवोदीर्यते । तदेवं कुशीलाश्चतुर्गतिकं संसारमापन्ना अरहट्टघटीयन्त्रन्यायेन संसारं पर्यटन्तः प्रकृष्टं दुःखमनुभवन्ति, जन्मान्तरकृतं कर्मानुभवन्तः आर्त्तध्यानोपहता अपरं बध्नन्ति वेदयन्ति च, न च स्वकृतस्य कर्मणो विनाशोऽस्ति, ये चानवगतपरमार्था धर्मार्थमुत्थितास्त्यक्तमातापित्रादयोऽप्यास्मान् श्रामण्यव्रते वर्त्तमानतया मन्यमानाः पचनपाचनादिना कृतकारितानुमत्यौद्देशिकादिपरिभोगादग्निकायसमारम्भं कुर्वन्ति, पञ्चाग्नितपसा निष्टप्तदेहास्तथाऽग्निहोत्रादिना च स्वर्गावाप्तिमिच्छन्ति, लौकिका अपि पचनपाचनादिनाऽग्निकायं समारभमाणा सुखमभिलषन्ति, तेऽग्निकायमपराश्च पृथिव्याद्याश्रितान् स्थावरान् त्रसांश्च प्राणिनो निपातयन्त्येव, उदकादिना ह्यग्निकायं विध्यापयन्तस्तदाश्रितानन्यप्राणिनो निपातयेयुः, तथा शलभादयः करीषाद्याश्रिता घुणपिपीलिकाकृम्यादयो भस्मीभवन्त्येव, ततोऽग्निकायसमारम्भो महादोषाय, केचित् वनस्पतिसमारम्भादनिवृत्ता वनस्पत्यादीनाहारार्थं देहोपचयार्थं देहक्षतसंरोहणार्थं वाऽऽत्मसुखमाश्रित्य छिन्दन्ति ते बहूनां प्राणिनामतिपातिनो भवन्ति, न हि वनस्पतौ मूलादिषु सर्वेष्वपि समुदितेष्वेक एव जीवः, किन्तु मूलस्कन्धशाखाप्रशाखापत्रपुष्पादिषु प्रत्येकं जीवा व्यवस्थिताः, तच्छेदे च संख्येयासंख्येयानन्तभेदभिन्नानां तदाश्रितानां जीवानामतिपातोऽवश्यम्भाव्येव, तथा च वनस्पतिकायोपमर्दका बहुषु जन्मसु गर्भादिकास्ववस्थासु कललार्बुदमांसपेशीरूपासु म्रियन्ते, तथा व्यक्तवाचोऽव्यक्तवाचश्च परे च पञ्चशिखाः कुमाराः सन्तो म्रियन्ते केचिद्युवानः, अपरे च स्थविरास्सन्तः, तदेवमनार्यकर्मकारी सुखार्थी कुशीलः प्राण्युपमर्दं कुर्वन् स्वकर्मणा दुःखमेव प्राप्नोति न सुखं नापि मुक्तिम् ॥ ३३ ॥

अक्षारस्नानादिना मुक्तिरिति मतविशेषान्निराकरोति—

## अक्षारस्नानादितो न मुक्तिर्व्यभिचारादभावस्यैव हेतुत्वाच्च ॥ ३४ ॥

**अक्षारेति**, केचिद्वदन्ति लवणेनाहारस्य रसपुष्टिः क्रियते तद्वर्जनेन च मोक्षः, तत्र लवण

सैन्धवसौवर्चलविडरोमकसामुद्रभेदेन पञ्चविधम्, तद्वर्जनेन रसपरित्याग एव कृतो भवति, तत्त्यागाच्च मोक्षावाप्तिरिति। अन्ये च सचित्ताप्कायपरिभोगेन मोक्षं वदन्ति यथा ह्युदकं मलशोधकं दृष्टम्, यथा वस्त्रादे, तथा चान्तरशुद्धिरप्युदकादेव, अन्ये हुतेन मोक्षं प्रतिपादयन्ति, ये स्वर्गादिफलानपेक्षया समिधा घृतादिभिर्हुताशनं तर्पयन्ति ते मोक्षायाग्निहोत्रं जुह्वति शेषास्त्वभ्युदयाय, अग्निर्हि सुवर्णादीनां मलं दहति तथाऽऽन्तरमपि पापमिति। मतानीमानि निराचष्टे, **व्यभिचारादिति,** पञ्चविधक्षारपरिभोगेन न मोक्षप्राप्तिः, लवणमेव रसपुष्टिजनकमित्यसिद्धेः, रसपुष्टिजनकैः क्षीरशर्करादिभिर्व्यभिचारात्, किञ्च किं द्रव्यतो लवणवर्जनेन मोक्षावाप्तिः, उत भावत, नाद्य, लवणरहितदेशे सर्वेषां मोक्षप्राप्तिप्रसङ्गात्, न द्वितीय, भावस्यैव मोक्षप्राप्तौ प्रधानत्वाल्लवणवर्जनवैयर्थ्यापातात्, एवं प्रत्यूषजलावगाहनेन न मोक्षः, उदकपरिभोगेन तदाश्रितप्राण्युपमर्दनात्, न हि जीवोपमर्दान्मोक्षः, न चैकान्ततो जलं बाह्यमलस्याप्यपनयने समर्थम्, आन्तरन्तु न शोधयत्येव, भावशुद्ध्या तच्छुद्धे, भावरहितस्यापि यदि तच्छुद्धिः स्यात्तदा मत्स्यादीनामपि मुक्त्यवाप्तिः स्यात्, किञ्च जलं यथाऽनिष्टं मलमपनयति तथेष्टमपि कुङ्कुमादिकमङ्गरागम्, एवञ्च पापस्येव पुण्यस्यापीष्टस्यापनयनाद्विष्टविघातकृद्भवेत्, तथा नाग्निहुतादपीष्टसिद्धि प्राण्युपमर्दनात्, यद्यग्निस्पर्शेन सिद्धि स्यात्तर्ह्यङ्गारदाहककुम्भकारायस्कारादीनामग्नि सस्पृशतामपि सिद्धिः स्यात्, एवञ्चैते परमार्थावेदिन प्राण्युपघातेन पापमेव धर्मबुद्ध्या कुर्वन्तो नानाप्रकारैः प्राणिनो व्यापादयन्ति नरकादिगतिञ्च गतास्तीव्रदुःखैः पीड्यमाना असह्यवेदनयाऽशरणा करुणमाक्रन्दन्ति ॥ ३४ ॥

अथ तत्प्रतिपक्षभूतान् सुशीलान् प्ररूपयति—

## विरतोऽलुब्धोऽनाकुलः सुशीलः ॥ ३५ ॥

**विरत इति,** एकेन्द्रियादिजीवसमारम्भेऽवश्यं कर्मबन्धो भवतीति सम्यक् परिज्ञाय यस्तद्विरतः प्रासुकोदकादिकेन यावज्जीवं प्राणान् धारयति बीजकन्दादीनभुञ्जानः स्नानाभ्यङ्गोद्वर्त्तनादिक्रियासु निष्प्रतिकर्मशरीरतयाऽन्यासु च चिकित्सादिक्रियासु न वर्त्तते स्त्र्यादिविरत, अलुब्ध —अन्तप्रान्तेन लब्धेनालब्धेन वाऽऽहारेण मददीनतारहितस्तप फलपूजासत्कारानभिलाष्यनुकूलप्रतिकूलरसशब्दादायासक्तिविक्षेपविधुर, अनाकुलः—विषयकषायैरनाविलः, परीषहोपसर्गैर्हन्यमानोऽप्यप्रकम्पमना ज्ञानदर्शनचारित्रैः परिपूर्ण स एव सुशीलः, स एव चाष्टप्रकारं कर्मापनीय जातिजरामरणरोगशोकादिपूर्णं ससारं नापैति ॥ ३५ ॥

कुशीलत्वसुशीलत्वयोः संयमवीर्यान्तरायोदयात्तत्क्षयोपशमाच्च भावाद्वीर्यं निरूपयति—

## बालपण्डितवीर्या जीवास्संसारमोक्षभाजः ॥ ३६ ॥

**बालेति,** नामस्थापनाद्रव्यक्षेत्रकालभावभेदात् षोढा वीर्यस्य निक्षेपः, नामस्थापने तु प्रसिद्धे। ज्ञाताऽनुपयुक्त आगमतो द्रव्यवीर्यम्, नोआगमतस्तु ज्ञशरीरभव्यशरीरव्यतिरिक्तं सचित्ताचित्तमिश्रभेदात्त्रिधा, सचित्तद्रव्यवीर्यं त्रिविधं द्विपदचतुष्पदापदभेदात्, अर्हच्चक्रवर्तिबलदेवादीनां वीर्यं द्विपदद्रव्यवीर्यम्, अश्वहस्तिरत्नादीनां वीर्यं चतुष्पदद्रव्यवीर्यम्, गोशीर्षचन्दनप्रभृतीनां शीतोष्ण-

कालयोरुष्णशीतवीर्यपरिणामोऽपद्द्रव्यवीर्यम् । आहारावरणप्रहरणेषु यद्वीर्यं तत्सचित्तद्रव्यवीर्यम्, एषां मिश्रणेन मिश्रद्रव्यवीर्यम् । देवकुर्वादिक्षेत्रमाश्रित्याखिलानि द्रव्याणि सद्वर्णगन्धान्युत्कृष्टवीर्यभवन्ति, तथा यद्दुर्गादिक्षेत्राश्रयात्तस्य वीर्योल्लासस्तत्, यस्मिन् वा क्षेत्रे वीर्यं व्याख्यायते तत्सर्वं क्षेत्रवीर्यम्, कालवीर्यमप्येकान्तसुषमादौ द्रव्येषु यद्वीर्यं व्याख्यायते कालश्च । वीर्यवतो जीवस्य वीर्यविषयेऽनेकविधा लब्धिः, तत्र वीर्यं शारीरसेन्द्रियमाध्यात्मिकञ्च, आन्तरव्यापारेण गृहीतान् मनोयोग्यान् पुद्गलान् भाषायोग्यान् काययोग्यानानपानयोग्यान् वा तत्तद्भावेन यत्परिणामयति, तद्भावपरिणतानाञ्च मनोवाक्कायादीनां यद्वीर्यं तद्द्विविधम्, सम्भवे सम्भाव्ये च, सम्भवे सानत्कुमारब्रह्मानुत्तरोपपातिकानाञ्च सुराणामतीव पटूनि मनोद्रव्याणि भवन्ति, तीर्थकृतामनुत्तरोपपातिकसुरमनःपर्यायज्ञानिप्रश्नव्याकरणस्य द्रव्यमनसैव करणात्, अनुत्तरोपपातिकसुराणां सर्वव्यापारस्यैव मनसा निष्पादनात् । सम्भाव्ये तु यो यमर्थं पटुमतिना प्रोच्यमानं न शक्नोति परिणमयितुं साम्प्रतं सम्भाव्यते स्वेव परिकर्म्यमाणश्शक्यत्वसुसमर्थं परिणमयितुमिति । वाग्वीर्यमपि द्विविधं सम्भवे सम्भाव्ये च, तत्र सम्भवे तीर्थकृतां योजनविहारिणी वाक् सर्वस्वस्वभाषानुगता च, तथाऽन्येषामपि क्षीरमध्वास्रवादिलब्धिमतां वाचः सौभाग्यमिति हंसकोकिलादीनां सम्भवति स्वरमाधुर्यम् । सम्भाव्ये तु सम्भाव्यते श्यामायाः स्त्रिया गानमाधुर्यम्, तथा सम्भावयाम एव श्रावकदारकमष्टसमुदासंस्कारमप्यक्षरेषु पटु यथावदभिलप्स्यतीति । तथा सम्भावयामश्शुकसारिकादीनां वाचो मानुषभाषापरिणामम्, कायवीर्यमपि द्विविधं सम्भवे सम्भाव्ये च, सम्भवे यथा चक्रवर्तिबलदेववासुदेवादीनां यद्बाहुबलादिकायबलं तथा कोटिशिला त्रिपृष्ठेन वासुदेवेन वामकरतलेनोद्धृता, सम्भाव्ये तु सम्भाव्यते तीर्थंकरो लोकमलोके कन्दुकवत् प्रक्षेप्तुं मेरुं दण्डवद्गृहीत्वा वसुधां छत्रवद्धर्तुमिति, सम्भाव्यते चान्यतरसुराधिपो जम्बूद्वीपं वामहस्तेन छत्रकवद्धर्तुमयत्नेनैव च मन्दरमित्यादि । इन्द्रियबलमपि श्रोत्रेन्द्रियादिस्वविषयग्रहणसमर्थं पञ्चधा, एकैकं द्विविधं सम्भवे सम्भाव्ये च, सम्भवे यथा श्रोत्रस्य द्वादश योजनानि विषयः, एवं शेषाणामपि यो यस्य विषय इति । सम्भाव्ये तु यस्य कस्यचिदनुपहतेन्द्रियस्य श्रान्तस्य क्षुधितस्य पिपासितस्य परिग्लानस्य वाऽर्थग्रहणासमर्थमपीन्द्रियं तद्दोषोपशमे सति सम्भाव्यते विषयग्रहणायेति । आन्तरशक्तिजनितमाध्यात्मिकं वीर्यमनेकधा, उद्यमधृतिधीरताशौण्डीर्यक्षमागाम्भीर्योपयोगतपस्संयमादिभेदात्, उद्यमो ज्ञानतपोऽनुष्ठानादिषूत्साहः, धृतिः संयमे स्थैर्यम्, धीरता परीषहोपसर्गाक्षोभ्यता, शौण्डीर्यं त्यागसम्पन्नता, आपद्यविषण्णता, विषमे कर्तव्ये समुपस्थितेऽविषण्णता वा, क्षमा परैराक्रुश्यमानस्यापि क्षोभानवाप्तिः, गाम्भीर्यं परीषहोपसर्गैरधृष्यत्वं, मनश्चमत्कारकारिण्यपि स्वानुष्ठानेऽनौद्धत्यम्, उपयोगवीर्यञ्च साकारानाकारभेदवत्, साकारोपयोगोऽष्टधा, अनाकारोपयोगश्चतुर्धा, योगवीर्यं मनोवाक्कायभेदतस्त्रिविधम्, अकुशलमनोनिरोधः कुशलमनसः प्रवर्त्तनं मनोवीर्यम्, अपुनरुक्तनिरवद्यभाषणं वाग्वीर्यम्, समाहितपाणिपादस्य कूर्मवदवस्थानं कायवीर्यम्, अग्लानतया तपोविधानं तपोवीर्यम्, एकत्वाद्यध्यवसायिनः सप्तदशविधसंयमप्रवृत्तिः संयमवीर्यमित्यादिरूपं भाववीर्यम् । सर्वमप्येतद्भाववीर्यं पण्डितबालमिश्रभेदात् त्रिविधम्, अनगाराणां पण्डितवीर्यम्, बालपण्डितवीर्यन्त्वगाराणाम्, तत्र यतीनां पण्डितवीर्यं सादिसपर्यवसितम्, सर्वविरतिप्रति-

पत्तिकाले सादित्वात्, सिद्धावस्थायां तदभावात्मा तत्वात्, बालपण्डितवीर्यन्तु देशविरतिसद्भावकाले सादि, सर्वविरतिसद्भावे तद्भ्रंशे वा सपर्यवसानम्, बालवीर्यन्त्वविरतिलक्षणमभव्यानामनाद्यपर्यवसितम्, भव्यानान्त्वनादिसपर्यवसितं सादिसपर्यवसितञ्चात्र विरतिभ्रंशात्मादिना, पुनर्नव यतोऽन्तर्मुहूर्तादुत्कृष्टतोऽपार्धपुद्गलपरावर्ताद्विरतिसद्भावात्सा तथा, साद्यपर्यवसितस्य चतुर्थभङ्गस्याभाव एव । **बालेति,** द्विविधं वीर्यं बालपण्डितभेदात्, क्रियानुष्ठानं वीर्यमित्येके, कारणे कार्योपचारादष्टप्रकारं कर्म वीर्यमित्यन्ये, औदयिकभावनिष्पन्नं कर्म, औदयिकोऽपि च भावः कर्मोदयनिष्पन्नो बालवीर्यम्, जीवस्य वीर्यान्तरायक्षयजनितं सहजं वीर्यं चारित्रमोहनीयोपशमक्षयोपशमजनितञ्च पण्डितवीर्यम्, आभ्यामेव द्वाभ्यां स्थानाभ्यां सकर्मकाकर्मकापादितबालपण्डितवीर्याभ्यां वीर्यं व्यवस्थितमिति सूत्रार्थः, एताभ्यामेव वीर्याभ्यां मर्त्यो नानाविधक्रियासु प्रवर्त्तमानो वीर्यवानयमिति व्यपदिश्यते, तदावरणकर्मक्षयाद्वानन्तबलयुक्तोऽयमिति व्यपदिश्यते । प्रमादोपहतस्य कर्म बध्यते सकर्मणश्च यत्क्रियानुष्ठानं तद्बालवीर्यम्, अप्रमत्तस्य कर्माभावो भवति, एवंविधस्य च पण्डितवीर्यं भवति, अभव्यानां बालवीर्यमनाद्यपर्यवसितं भव्यानामनादिसपर्यवसितं सादिसपर्यवसितं वा, पण्डितवीर्यन्तु सादिसपर्यवसितमेव । तत्र खड्गादिप्रहरणलक्षणशस्त्रस्य धनुर्वेदायुर्वेदादिशास्त्रादेरभ्यसनं बालवीर्यं पापोपादानात्, रसगौरवगृद्धा हि यच्छिक्षन्ते शिक्षितं सत् प्राणिनां विनाशाय भवति, तत्र जीवव्यापादनायाऽऽलीढप्रत्यालीढादिस्थानविधानात्, क्षयिणे लावकरसस्यामयारिष्टाख्यस्य मद्यविशेषस्य च दानं यतयोक्ते, चौरादेः शूलारोपणादिदण्डविधानात् पशुहिंसनयागादिविधानाच्च, तदेव तदभ्यसनात्तत्कर्म मनसा वाचा कायेन कृतकारितानुमतिभिश्च कुर्वन्तो जन्मशतानुबन्धिवैरानुषङ्गिणोऽनन्तसमारम्भाजो भवन्ति, भव्यस्तु अल्पकषायः सम्यग्दर्शनज्ञानचारित्रात्मकं श्रुतचारित्रात्मकं वा धर्मं तीर्थकरोपदिष्टं गृहीत्वा मोक्षाय ध्यानाध्ययनाद्युद्यमं विधत्ते, यदेतस्य वीर्यं तत्पण्डितवीर्यम्, बालवीर्यमतीतानागतानन्तभवग्रहणेषु दुःखमावासयति, यथा यथा च स नरकादिषु दुःखावासेषु पर्यटति तथा तथा चास्याशुभाध्यवसायित्वादशुभमेव प्रवर्धत इत्येवं संसारस्वरूपमनुप्रेक्षमाणस्यैतद्वीर्यवतो धर्मध्यानं प्रवर्तत इत्येवं धर्मभावनादिभिर्भावितो विशिष्टाभिनिबोधिकज्ञानेन श्रुतज्ञानेनावधिज्ञानेन वा धर्मसारं विज्ञायान्येभ्यो वा श्रुत्वा चारित्रं प्रतिपद्यते तत्प्रतिपत्तौ च पूर्वोपात्तकर्मक्षयार्थमुत्तरोत्तरगुणसम्पत्तये समुपस्थितो वर्धमानपरिणामोऽनगारो निराकृतसावद्यानुष्ठानोऽकर्मा भवति, तस्माद्बालपण्डितवीर्या जीवाः संसारमोक्षभाज इति ॥ ३६ ॥

अथ धर्ममभिधत्ते—

## त्यक्ताव्रतकषायादिरप्रमत्तचर्यः ॥ ३७ ॥

**त्यक्तेति,** संसारस्वभावपरिज्ञानपरिकर्मितमतिर्धर्मरहितानां निजकृतकर्मविलुप्यमानानामैहिकामुष्मिकयोर्न कश्चित्त्राणायेति विचार्य जिनोक्त एव परमो धर्मोऽनन्तसुखनिदानमिति मत्वोपेक्ष्य द्रव्यजातं पुत्रान् स्वजनांश्च विहाय प्रव्रजितः त्रसस्थावरैर्नारम्भी नापि परिग्रही मृषावादादीनां ज्ञानपूर्वकं परिहर्त्ता कषायसद्भावे महाव्रतधारणस्य निष्फलत्वेन क्रोधादीनपि जात्यादिमदप्रयुक्तान् दुर्गतिमूलभावान् विहाय परिहरन् संयमोपघातकं शरीरसंस्कारं गन्धमाल्यस्नानदन्तप्रक्षालनादिरूपं

कर्मोपादानतया समारम्भकारणत्वेन परिज्ञायौद्देशिकाद्याहारमनेषणीयं विदित्वा निःस्पृहः शब्दादिविषयगार्ध्यरहितो जीवोपघातकारिशीतोदकादिपरिभोगरहितः परित्यक्तासंयमानुष्ठानोपदेशप्रशंसोऽर्थशास्त्रद्यूतक्रीडाशुष्कवादाद्यनासेवी छत्रोपानद्व्यजनादिविधुरः उच्चारप्रस्रवणादिक्रियां हरितबीजस्थण्डिलेषु परिहरन् पुरः पश्चात्कर्मभयाद्भूतनष्टादिदोषसम्भवाच्च परपात्रभोजनादि परिवर्जयन् यशःकीर्त्यनभिलाषुको द्रव्यक्षेत्रकालभावापेक्षया शुद्धमन्नपानादि परिगृह्णन् संयममनुतिष्ठेत्, सदा धर्मकथासम्बन्धं भाषमाणः स्यात्, न मर्मगं वचो ब्रुवीत, भिक्षार्थं गृहादौ प्रविष्टो नोपविशेदुत्सर्गेण, जरसा रोगातङ्काभ्यां वा शक्त्यभावे उपविशेत्, अतिवेलं न हसेत्, न वाऽऽहारादिषु मनोज्ञशब्दादौ च गार्ध्यमुपेयात्, परीषहोपसर्गैर्नादीनमनस्को भवेत्, एवं कुर्वतो भावविवेक आविर्भावितो भवति, सुतपस्विनं गीतार्थं गुरुं सदा सेवेत, इत्थं संयमं प्रतिपालयन् कर्मक्षयमभिकाङ्क्षेत ॥ ३७ ॥

धर्मस्य समाधिं विनाऽपूर्णत्वात्समाधिमाह—

## समाहितोऽनिदानो भावभिक्षुः ॥ ३८ ॥

**समाहित इति,** दर्शनज्ञानतपश्चारित्ररूपेषु भावसमाधिषु व्यवस्थितः समाहितः, यः सम्यक् चरणे व्यवस्थितः स चतुर्विधभावसमाधिसमाहितात्मा भवति, यो वा भावसमाधिसमाहितात्मा भवति स सम्यक्चरणे व्यवस्थितो भवति, दर्शनसमाधौ हि व्यवस्थितो जिनवचनभावितान्तःकरणो निवातशरणप्रदीपवन्न कुमतिवायुभिर्भ्राम्यते, ज्ञानसमाधिना तु यथा यथाऽपूर्वं श्रुतमधीते तथा तथाऽतीव भावसमाधावुद्युक्तो भवति, चारित्रसमाधावपि विषयसुखनिःस्पृहतया निष्किञ्चनोऽपि परं समाधिमवाप्नोति, तपःसमाधिनामपि विकृष्टतपसोऽपि न ग्लानिर्भवति तथा क्षुत्तृष्णादिपरीषहेभ्यो नोद्विजते तथाऽभ्यस्ताभ्यन्तरतपोध्यानाश्रितमनाः स निर्वाणस्थ इव न सुखदुःखाभ्यां बाध्यत इत्येवं चतुर्विधसमाधिस्थः सम्यक्चरणव्यवस्थितो भवति, यद्वा धर्मसमाधिं प्राप्तः समाहितो भावसाधुः, तपोऽनुष्ठानं कुर्वत ऐहिकामुष्मिकाकाङ्क्षाभावात्, अनिदानः—भूतसमारम्भो निदानं तन्न विद्यते यस्यासावनिदानः सावद्यानुष्ठानरहितः, कर्मणो हि प्राणातिपातादीनि निदानानि, प्राणातिपातोऽपि द्रव्यक्षेत्रकालभावभेदाच्चतुर्धा, त्रसान् स्थावरान् वा ऊर्ध्वाधस्तिर्यग्रूपेषु त्रिषु लोकेषु प्राच्यादिषु दिक्षु विदिक्षु चैवं दिवा रात्रौ वा प्राणिनो हस्तपादाभ्यां बद्ध्वाऽन्यथा वा कदर्थयित्वा यत्तेषां दुःखोत्पादनं तन्न कुर्यात्, सर्वत्र मनोवाक्कायकर्मसु संयतो भवन् भावसमाधिमनुपालयेत्, ज्ञानसमाधियुक्तः स्वाख्यातधर्मा भवेत्, चित्तविप्लुतिं विहाय तदेव च निःशङ्कं यज्जिनैः प्रवेदितमित्येवं निःशङ्कतया विद्वज्जुगुप्सां न कुर्यात्, येन केनचित्प्रासुकाहारोपकरणादिना यतो विधिनाऽऽत्मानं संयमे स्थापयेत्, आत्मवत्सर्वप्राणिनः पश्येत्, एवम्भूत एव भावसाधुर्भवति, यथा च ममाऽऽक्रुश्यमानस्याभ्याख्यायमानस्य वा दुःखमुत्पद्यते तथाऽन्येषामपीति मत्वा प्रजास्वात्मसमो भवति तथा इहासंयमजीवितार्थी प्रभूतं कालं सुखेन जीविष्यामीत्येतदध्यवसायी सन् कर्माश्रवलक्षणमाहारोपकरणादेर्धनधान्यद्विपदचतुष्पदादेर्वा परिग्रहलक्षणं सञ्चयं च विकृष्टतपोनिष्टप्तदेहो भिक्षुर्न कुर्यात्, प्राणिगणञ्च समतया प्रेक्षमाणस्य न कश्चित्प्रियो नापि द्वेष्यो भवति, तथा च निःसङ्गः सम्पूर्णभावसमाधियुक्तो भवति, कश्चित्तु भावसमाधिना सम्यगुत्थानेनोत्थाय परीषहोपसर्गैस्तर्जितो दीनतामवाप्य विषण्णो भवति, विषयार्थी वा कश्चिद्गार्ह-

र्ध्यमप्यवलम्नते रससातगौरवगृद्धो वा पूजासत्काराभिलाषी स्यात्तदभावे दीनः पार्श्वस्थादिभावेन विषण्णो भवति, श्लाघाभिमानी च व्याकरणगणितज्योतिषनिमित्तशास्त्राण्यधीते, अपरश्चाधाकर्माद्याहारोपकरणाभिलाषी संयमोद्योगे विषण्णानां पार्श्वस्थावसन्नकुशीलानां विषण्णभावमेपते, तदेवं संयमस्खलिता अल्पसत्त्वाः संसारपर्यङ्कावसन्ना असमाहिता विषमं नरकादियातनास्थानमुपयन्ति, तस्माद्विवेकी विदितमर्यादोऽखिलसमाधिगुणवेत्ता धर्ममालोच्य भवाभ्यन्तरसङ्गविप्रमुक्तो मुक्तिगमनैकहेतुं संयमानुष्ठानमनुतिष्ठेत्, औदारिकं शरीरं पार्श्वस्थादिसङ्गविप्रमुक्तो विकृष्टतपसा कर्मनिर्जरामनुप्रेक्षमाणः कृशयेत्, एकत्वभावनाभावितमना शरीरादौ निःस्पृहो मोक्षगमनैकप्रवणः संयमेऽरतिमसंयमे च रतिमभिभूय भावसमाधिं प्राप्तः शीतोष्णादिपरीषहानक्षोभ्यतया निर्जरार्थमधिसहेत, वाग्गुप्तश्च शुद्धलेश्यामुपादायाशुद्धां परिहृत्य संयमानुष्ठाने प्रवर्तेत, य एव स समाहितोऽनिदानो भावभिक्षुर्भवतीति ॥ ३८ ॥

समाधिवद्भावमार्गोऽपीति मार्गमभिधत्ते—

## प्रशस्तभावमार्गो भवसमुत्तारकः ॥ ३९ ॥

**प्रशस्तभावमार्ग इति,** भावमार्गो हि द्विविधः, प्रशस्ताप्रशस्तभेदात्, तत्राप्रशस्तो मिथ्यात्वाविरत्यज्ञानानि दुर्गतिफलानि, प्रशस्तश्च सम्यग्दर्शनज्ञानचारित्ररूपः सुगतिफलप्रदः, दुर्गतिफलमार्गवादिनां त्रीणि त्रिषष्ट्यधिकानि शतानि मार्गा भवन्ति, मिथ्यात्वोपहतदृष्टिभिर्विपरीततया जीवादिपदार्थनिरूपणात्, सम्यग्दर्शनं ज्ञानं चारित्रञ्चेति त्रिविधोऽपि भावमार्गः प्रशस्तफलः, तीर्थकरगणधरादिभिर्यथावस्थितवस्तुनिरूपणेन समाचीर्णत्वात्, ये केचनस्वयूथ्याः पार्श्वस्थादयोऽपुष्टधर्माणः शीतलविहारिणः ऋद्धिरससातगौरवेण गुरुकर्माण आधाकर्माद्युपभोगात् षड्जीवनिकायव्यापादनरता अपरेभ्यो मोक्षमार्गमात्मानुचीर्णमुपदिशन्ति शरीरमिदमाद्यं धर्मसाधनमिति मत्वा कालसंहननादिहानेश्चाधाकर्माद्युपभोगोऽपि न दोषायेत्येवं प्रतिपादयन्तः कुतीर्थिकमार्गाश्रिता एव। तत्र प्रशस्तभावमार्गो मोक्षगमनं प्रति प्रगुणो यथावस्थितपदार्थस्वरूपनिरूपणात् सामान्यविशेषनित्यानित्यादिस्याद्वादाश्रयणात्, तं ज्ञानदर्शनतपश्चारित्रात्मकं मार्गमवाप्य जीवः सम्यक्सामग्रीकः संसारसमुद्रं दुस्तरं तरति, अतः स मार्गो भवसमुत्तारकः, स च मार्गो जिनोक्तः सर्वाशेषैकान्तकौटिल्यरहितो निर्मलः पूर्वापरव्याहतिदोषापगमात्, सावद्यानुष्ठानोपदेशाभावाच्च, तं महापुरुषाचीर्णमव्यभिचारिणमाश्रित्य पूर्वस्मिन्ननादिकालेऽनन्तास्तरसा भवं तीर्णवन्तः, साम्प्रतमपि संख्येयास्तरन्ति, अपर्यवसानात्मनेऽनागते काले चानन्तास्तरिष्यन्ति। तत्र सूक्ष्मबादरपर्याप्तापर्याप्तभेदान् पृथिवीकायिकाद्येकेन्द्रियान् पर्याप्तापर्याप्तभेदान् द्वित्रिचतुरिन्द्रियान् संज्ञ्यसंज्ञिपर्याप्तकापर्याप्तकभेदान् पञ्चेन्द्रियांश्च सद्युक्तिभिरवगम्यानिष्टदुःखान् सुखैषिणो न हिंस्यात्, एतदेव सारवत् ज्ञानं यत्प्राणातिपातनिवर्त्तनम्, एतावतैव परिज्ञानेन मुमुक्षोर्विवक्षितकार्यपरिसमाप्तेः, असावेव परमार्थतो ज्ञाता यः प्राणातिपातनिवृत्तिं सम्यक् क्रियते, एवम्भूतादविरतिमतो नान्ये केचन बिभ्यति, नाप्यसौ भवान्तरेऽपि कुतश्चिद्बिभेति, प्राणातिपातनिवृत्तेः परेषामात्मनश्च शान्तिहेतुत्वात्, अत एवासावार्त्तरौद्रध्यानाभावाच्छान्तो निवृतश्च भवति, तस्मान्मनसा वाचा कायेन वा यावज्जीवं केनापि प्राणिना साकं विरोधं न कुर्यात्, आहारोपधिशय्यादिके एषणा-

समितः परीषहैरक्षुब्धः संयमं चरेत् । कूपखननसत्रदानादिप्रवृत्तिः पुण्यमपुण्यं वेति रागादिभिः पृष्टो मत्तोऽसत्यथापि महाभयं नानुमन्येत, अन्नपानदानार्थमाहारमुद्दिश्य च पचनपाचनादिक्रियया कूपखननादिक्रिया चोपकल्पयेत्, तत्र त्रसाः स्थावराश्च व्यापाद्यन्तेऽतो भवदनुष्ठाने पुण्यमिति नो वदेत्, अन्नपानादिकं धर्मबुद्ध्या प्राण्युपमर्ददोषदुष्टं निष्पादयन्ततो नास्ति पुण्यमित्यपि न ब्रूयात्, तन्निषेधे हि आहारपानार्थिनामन्तरायो भवेत्, तदभावेन तु ते पीड्येरन्, किन्तु मौनं समाश्रयणीयम्, निर्बन्धे त्वस्माकं द्विचत्वारिंशद्दोषवर्जितं आहारं कल्पते, एवंविधविषये मुमुक्षूणामधिकार एव नास्तीति ब्रूयात्, अनवद्यभाषिणो निर्वाणप्राप्तेः । इयमेव च सर्वविरत्यात्मको मोक्षगमनैकहेतुरकारणवत्सलेन परहितैककर्त्रा भगवता तीर्थकरेण परतीर्थिकैरनाख्यातपूर्वः प्रवेदितः, तमिमं शुद्धं परिपूर्णं धर्ममजानाना अविवेकिनो धर्मज्ञमन्याः परतीर्थिकाः सम्यग्दर्शनाद्दूरे वर्तन्ते, जीवाजीवपरिज्ञानाभावेन दीनोद्देशिकाद्याहाराभ्यवहरणात्, सचभक्तादिक्रियया सातर्द्धिरसगौरवात्सार्यधर्मार्त्तध्यानवत्त्वात्, न ह्यैहिकसुखैषिणा दासदासीधनधान्यादिपरिग्रहवता धर्मध्यानं भवति, ते च महाभयं संसारं परिभ्रमन्ति, तस्मादकषायी साधुः प्रतिक्षणमपूर्वज्ञानग्रहणेन ज्ञानं शङ्कादिदोषपरिहारेण सम्यग्जीवादिपदार्थाधिगमेन च सम्यग्दर्शनमस्खलितमूलोत्तरगुणसम्पूर्णपालनेन प्रशस्तमपूर्वाभिग्रहग्रहणेन चारित्रं च वर्द्धयेत्, ततश्च प्रशस्तभावमार्गो भवं ध्रुवं समुत्तरति ॥ ३९ ॥

अथ प्रतिपन्नभावमार्गेण साधुना कुमार्गाश्रिता परवादिनः सम्यक् परिज्ञाय परिहर्तव्या इति तत्स्वरूपमाचष्टे—

## समवसरणानि चत्वारि, क्रियाऽक्रियावैनयिकाज्ञानवादिभेदात् ॥ ४० ॥

**समवसरणानीति**, जीवादयस्सन्त्येवेति वादिनः क्रियावादिनः, तदभाववादिनोऽक्रियावादिनः, ज्ञाननिह्नववादिनोऽज्ञानवादिनः, विनयादेव केवलाद्विशामाप्तिरिति वादिनो वैनयिकवादिनः, एषां चतुर्णामपि सप्रभेदानामाक्षेपं कृत्वा यत्र विक्षेपः क्रियते तत्समवसरणं भावसमवसरणमिति भावार्थः । एते क्रियादिवादिनो मिथ्यादृष्टय एव, एकान्तेन जीवास्तित्वे पररूपेण सत्त्वापत्तेरेकविधत्वप्रसक्तेर्जगतः, एकान्तेन जीवप्रतिषेधे प्रतिषेधकर्तुरभावेन प्रतिषेधासिद्ध्या सर्वास्तिताया दुर्वारत्वात्, ज्ञानव्यतिरेकेणाज्ञानमेव श्रेय इत्यभिधानासम्भवात्तदभिधाने ज्ञानस्यावश्यकतया स्वाभ्युपगमविरोधात्, ज्ञानक्रियाव्यनिरपेक्ष मोक्षासम्भवाद्विनयमात्रस्याकिञ्चित्करत्वाच्चासद्भूतार्थप्रतिपादनात्। तत्र क्रियावादिनां भेदा अशीत्यधिकं शतम्, अक्रियावादिनां चतुरशीतिः, सप्तषष्टिरज्ञानवादिनाम्, वैनयिकानां द्वात्रिंशदिति सर्वमेलनेन त्रिषष्ट्यधिकत्रीणि शतानि मतानि भवन्ति ॥ ४० ॥

अज्ञानवादिमतमनूद्य निराचष्टे—

## ज्ञाने परस्परविरोध इति चेन्न सर्ववेत्तुस्तदभावात् ॥ ४१ ॥

**ज्ञान इति**, अज्ञानवादिनो हि वदन्ति, ज्ञानिनः सर्वे परस्परविरुद्धवादित्वेन न यथार्थवादिनः, तथा हि केचिदात्मानं विभुमपरेऽसर्वगतमन्येऽङ्गुष्ठपर्वमात्रमितरे च श्यामाकतन्दुलमात्रमाहुः तथा मूर्त्तममूर्त्तं हृदयस्थं ललाटस्थमात्मानमूचुरित्येव नैकवाक्यता दृश्यते, न चाऽतिशयज्ञानी, कश्चि-

द्यिपते यस्य वाक्यं प्रमाणं भवेत्, विद्यमानोऽप्यसौ नार्वाग्दर्शिभिरुपलक्ष्यते, तथा चोक्तम् 'सर्वज्ञोऽसाविति ह्येतत्तत्कालेऽपि बुभुत्सुभिः । तज्ज्ञानज्ञेयविज्ञानशून्यैर्विज्ञायते कथमि'ति । न च सर्वविषयविज्ञानसम्भवः, तदुपायपरिज्ञानाभावात्, अन्योऽन्याश्रयात्, विशिष्टज्ञानव्यतिरेकेण न तत्प्राप्त्युपायज्ञानम्, न च तदन्तरेणोपेयस्य सर्वविषयविज्ञानसम्भव इति । न च ज्ञानं ज्ञेयस्य स्वरूपं परिच्छिनत्ति, उपलभ्यमानस्यार्वाङ्मध्यपरभागत्रयवत्त्वेनार्वाग्भाग एव ज्ञानेन परिच्छिद्यते, नेतरौ, अर्वाग्भागेन व्यवधानात्, तथाऽर्वाग्भागस्यापि भागत्रयपरिकल्पनया तदेकभागस्यापि पुनस्तथाकल्पनात् परमाणुपर्यवसानता भागस्य स्यात्, तथा च तस्य स्वभावविप्रकृष्टत्वादर्वाग्दर्शिना नोपलम्भविषयतेति पदार्थपरिच्छेदासम्भवेन सर्वज्ञाभावादसर्वज्ञस्य यथावस्थितवस्तुस्वरूपापरिच्छेदात् सर्ववादिना परस्परविरोधेन पदार्थस्वरूपस्याभ्युपगमाद्यथोत्तरपरिज्ञानिना प्रमादवता बहुतरदोषसम्भवादज्ञानमेव श्रेयः, अज्ञानवांश्च कथञ्चित् पादेन शिरसि यदि हन्यात्तदापि चित्तशुद्धेर्न तथाविधदोषानुषङ्गीति । मतमिदं दूषयति नेति, असर्वज्ञप्रणीतागमाभ्युपगमवादिनामेव परस्परविरुद्धार्थवादित्वेनायथार्थवादित्वं भवेत्, सर्वज्ञप्रणीतागमाभ्युपगमवादिनान्तु नास्ति कोऽपि परस्परतो विरोधः, सर्वज्ञत्वान्यथानुपपत्तेः । सर्वज्ञो ह्यनृतकारणरागद्वेषरहितः प्रक्षीणाशेषमोहकर्मत्वात्, अतस्तद्वाक्यं कथमयथार्थं भवेत् तत्प्रणीतागमवतां च कथं विरोधवादित्वम् । न च सर्वज्ञ एव नास्तीति वक्तव्यम्, प्रत्यक्षतस्तस्यानुपलम्भेऽपि सम्भवानुमानस्य सद्भावात्तद्बाधकप्रमाणाभावाच्च तत्सिद्धेः, प्रत्यक्षतोऽनुपलम्भस्तु परचेतोवृत्तीनां दुरन्वयत्वात्, सरागाणां वीतरागवद्वीतरागाणामपि सरागवच्चेष्टमानत्वात् । सम्भवानुमानं तु ज्ञेयावगमं प्रति प्रज्ञाया व्याकरणादिशास्त्राभ्यासेन संस्क्रियमाणाया अतिशयो दृष्टः, सोऽयमतिशयस्तारतम्येनोपलभ्यमानः क्वचिद्विश्रान्तो वाच्यो महत्परिमाणतारतम्यस्य गगनादाविव, एवञ्च कश्चित्तथाभूताभ्यासवशात्प्रज्ञायाः प्रकृष्टतारतम्यवानपि स्यात्, स च सर्वज्ञ एवेति, नास्ति च सर्वज्ञाभावसाधकं किञ्चित् प्रमाणम्, न हि प्रत्यक्षतस्तत्सिद्धिः, अर्वाग्दर्शिनः तज्ज्ञातृज्ञेयविज्ञानशून्यत्वात्, अशून्यत्वे च सर्वज्ञत्वापत्तेः । नाप्यनुमानेन, तदव्यभिचारिहेत्वभावात्, न चोपमानेन, तादृग्विधसादृश्याभावात् । न वाऽर्थापत्त्या, तस्याः प्रत्यक्षादिपूर्वकप्रवृत्तिमत्तया तदभावेऽप्रवृत्तेः । नाप्यागमेन, तस्य सर्वज्ञसाधनत्वेनापि दर्शनात् । नापि प्रमाणपञ्चकाभावरूपाभावप्रमाणेन, सर्वत्र सर्वदा तद्ग्राहकप्रमाणं न सम्भवतीत्यर्वाग्दर्शिनो निश्चयासम्भवात्, सम्भवे वा तस्यैव सर्वज्ञत्वापत्तेः, न वाऽर्वाग्दर्शिना ज्ञानं निवर्त्तमानं तदभावसाधनक्षमम्, तस्याव्यापकत्वात्, व्यापकव्यावृत्त्यैव पदार्थव्यावृत्तेः । ज्ञानं ज्ञेयस्य स्वरूपं न परिच्छिनत्तीत्यभिधानमपि न सम्यक्, सर्वज्ञज्ञानेन देशकालस्वभावव्यवहितानामपि ग्रहणात्, व्यवधानासम्भवात्, अर्वाग्दर्शिज्ञानस्याप्यवयवद्वारेणावयविनि प्रवृत्त्या व्यवधानाभावात्, न ह्यवयवी स्वावयवैर्व्यवधीयते । अज्ञानमेव श्रेय इत्यपि न युक्तम्, तस्य पर्युदासरूपत्वे ज्ञानान्तररूपतया नाज्ञानवादसिद्धिः । प्रसज्यरूपत्वे ज्ञानाभावस्य नीरूपतया तुच्छत्वात्सर्वसामर्थ्यविकलतया श्रेयस्त्वासम्भवात्, तस्मादेते धर्मोपदेशनिपुणाः सदा कृपावादिनोऽपारसंसारसमुद्रपर्यटनशीला इति ॥ ४१ ॥

वैनयिकमतं निराकरोति—

## विनयादेव मोक्ष इति चेन्नासामर्थ्यात् ॥ ४२ ॥

**विनयादेवेति,** एवशब्देन सम्यग्दर्शनज्ञानचारित्रव्युदासः, वैनयिका हि विनयादेव केवलात् परलोकमिच्छन्ति, विनयश्च सुरनरपतियतिज्ञातिस्थविराधममातृपितृषु मनसा वाचा कायेन दानेन च चतुर्विध इति वदन्ति, सर्वकल्याणभाजनं विनय इति च, तन्मतं निराकरोति **असामर्थ्यादिति,** ज्ञानक्रियाभ्यां हि मोक्षः स च केवलं विनयादेव कथं भवेत्, सम्यग्दर्शनादिसम्भव एव तस्य मोक्षसामर्थ्यात्, तद्रहितो हि विनयोपेतः सर्वस्य प्रह्वतया न्यक्कारमेवाप्नोति, तस्मादेते मृषावादिन एवासत्ये सत्याभिमानात्, मोक्षजनकतया सत्ये सम्यग्दर्शनादौ सत्यत्वाभिमानात्, तस्माद्युक्तिविकलत्वान्न सम्यग्यथावस्थितधर्मस्यैते परीक्षका इति ॥ ४२ ॥

अक्रियावादिमतं निराकरोति—

## आत्मक्रियानभ्युपगमो न युक्तो विपाकात्कर्मवत्त्वादिसिद्धेः ॥ ४३ ॥

**आत्मेति,** लोकायतिको ह्यात्मा न प्रमाणविषयोऽत एव न तत्क्रिया न वा तज्जनितः कर्मबन्धः, उपचारेण त्वस्ति बन्धः, तद्यथा 'बद्धा मुक्ताश्च कथ्यन्ते मुष्टिग्रन्थिकपोतकाः । न चान्ये द्रव्यतः सन्ति मुष्टिग्रन्थिकपोतकाः' ॥ इति वदन्ति, शाक्यानामपि मते सर्वसंस्काराणां क्षणिकत्वात्, अत एवाक्रियत्वम्, पञ्चस्कन्धाभ्युपगमोऽपि संवृतिमात्रेणैव, न परमार्थतः, अवयविनामवयवेभ्यो भिन्नत्वाभिन्नत्वाभ्यामनुपपत्तेः, अवयवानामपि परमाणुपर्यवसायिनामतिसूक्ष्मतया ज्ञानविषयत्वासम्भवात्, तथा विज्ञानस्यापि न परमार्थतः सत्त्वम्, ज्ञेयाभावेन निराकारत्वात्, आकाररहितस्यावस्तुत्वात्, तस्य सत्त्वेऽपि क्षणिकत्वेनातीतानागतानामभावात्, वर्तमानस्यापि क्षणत्वेनाक्रियत्वात्तथा च कथं तज्जनितः कर्मबन्धः स्यात्, साङ्ख्यादयोऽप्यात्मनो विभुत्वादक्रियावादिनः । अत्र दोषमाह **विपाकादिति,** नानाविधो हि कर्मविपाको दृश्यते सर्वशून्यत्वे हि जातिजरामरणरोगशोकोत्तममध्यमाधमत्वानि न स्युः, अयमेव कर्मविपाको जीवास्तित्वं कर्तृत्वं कर्मवत्त्वञ्चावेदयति, सर्वशून्यत्वे च लोकायतिकाः स्वशिष्येभ्यो न जीवाद्यभावप्रतिपादकं शास्त्रं प्रतिपादयेयुः, यदि प्रतिपादयेयुस्तर्हि नान्तरीयकतयाऽऽत्मानं कर्तारं करणं शास्त्रं कर्मतापन्नांश्च शिष्यानवश्यमभ्युपगच्छेयुः, बौद्धा अपि पञ्च गतीः वर्णयन्ति, असति चात्मनि कारके कथं गतयः स्युः, सन्तानस्यापि सन्तानिव्यतिरेकेण संवृतिमत्त्वेन क्षणस्य चावस्थितत्वेन क्रियाभावान्न नाम गतयः स्युः, तदेवमेते नास्तित्वं प्रतिपादयन्त आत्मनोऽस्तित्वमेव प्रतिपादयन्ति । साङ्ख्या अपि सर्वव्यापितयाऽक्रियमात्मानमभ्युपगम्य प्रकृतिवियोगात्तु मोक्षसद्भावं प्रतिपादयन्त आत्मनो बन्धं मोक्षञ्च स्ववाचा प्रतिपादयन्ति, बन्धमोक्षसद्भावे सक्रियतायाः सिद्धेः, न हि क्रियामन्तरेण बन्धमोक्षौ घटेते । किञ्च लोकायतिकानां सर्वशून्यत्वे न किञ्चित् प्रमाणमस्ति, प्रमाणसद्भावे च न सर्वशून्यत्वं, प्रमाणस्य सत्त्वात् । न वा प्रत्यक्षमेव प्रमाणम्, अतीतानागतभावतया पितृनिबन्धनस्यापि व्यवहारस्यासिद्धेः, ततश्च सर्वव्यवहारोच्छेदः स्यात् । बौद्धानामप्यनन्तक्षणिकत्वेन वस्तुत्वाभावः स्यात्, यदेव अर्थक्रियाकारि तदेव परमार्थतः सत्, न च क्षणः क्रमेणार्थक्रियाकारी, क्षणिकत्वहानेः, न वा यौगपद्येन, एकक्षण एव तत्कार्याणामखिलानां भाव-

प्रसक्तेः, न चैतद् दृष्टमिष्टं वा। न च परिदृश्यमानानामादित्यचन्द्रसरिदादीनाममायाचदुद्गमनास्तमयप्रवाहवृक्षादिक्रियाः कुतः स्युः सर्वमिदञ्च जगति यदुपलभ्यते तत्सर्वं मायास्वप्नेन्द्रजालकल्पमिति वाच्यम्, आगोपालाङ्गनाप्रतीतस्य समस्तान्धकारक्षयादिकारिण उद्गमनादेरपलपितुमशक्यत्वात्, सर्वाभावे सत्यस्यामायाचरप्रतिपक्षभूतासत्यरूपाया मायाया अप्यभावेन मायास्वप्नेन्द्रजालकल्पमिदं जगदित्यभ्युपगमस्यासम्भवाच्च, स्वप्नोऽपि हि जाग्रदवस्थायाः सद्भावे भवेत्, तस्याश्चाभावे सोऽपि कथं स्यात्, एवमिन्द्रजालव्यवस्थाप्यपरसत्यत्वे सति भवति, नान्यथा, किञ्च सर्वशून्यत्वमपि न वस्तु, अभावस्य तुच्छरूपत्वात्, शशविषाणादीनामत्यन्ताभावतया प्रसिद्धानामपि सम्बन्धस्यैव निषेधो न तु वस्तुन आत्यन्तिकोऽभाव, तस्माद्विद्यमानायामप्यस्तीत्यादिकाया क्रियाया निरुद्धप्रज्ञास्तीर्थिका अक्रियावादमाश्रिताः ॥ ४३ ॥

अनिरुद्धप्रज्ञाश्च यथावस्थितार्थवेदिनो भवन्ति, त्रैलोक्यवर्तिनश्च पदार्थानवध्यादिभिः परं हस्तामलकन्यायेन पश्यन्ति श्रुतज्ञानिनोऽपि श्रुतबलेनातीतानागतान् जानते, अष्टाङ्गनिमित्तपारगा निमित्तेनेति स्थिते तत्र व्यभिचारमाशङ्क्य निराकरोति—

## श्रुतमपि व्यभिचारीति चेन्न, क्षयोपशमादिवैकल्यात् ॥ ४४ ॥

**श्रुतमपीति**, अपिशब्दो भिन्नक्रमः, श्रुतं व्यभिचार्यपि भवति, आगमे चतुर्दशपूर्वविदामपि षट्स्थानपतितत्वश्रवणात्, यदा च चतुर्दशपूर्वविदां षट्स्थानपतितत्वं तदाऽष्टाङ्गनिमित्तशास्त्रविदां किमु वक्तव्यम्, अत्रेदं बोध्यमङ्गवर्जितानां निमित्तशास्त्राणामानुष्टुभेन छन्दसाऽर्धत्रयोदशशतानि सूत्रम्, तावन्त्येव सहस्राणि वृत्तिः, तावल्लक्षप्रमाणा परिभाषेति, अङ्गस्य त्वर्धत्रयोदशसहस्राणि सूत्रम्, तावत्परिमाणलक्षा वृत्तिः, अपरिमितं वार्तिकमिति। एतद्वेदिनामपि षट्स्थानपतितत्वेन व्यभिचारित्वम्, तत्र केषाञ्चिन्निमित्तानामुत्पातशकुनादीनां जीवितमरणादिफलजनकानां तद्दर्शनतो व्यभिचारात्। तत्रोत्तरमाचष्टे **क्षयोपशमादिवैकल्यादिति**, निमित्तानां केषाञ्चिदन्यथात्वं मत्वा श्रुतस्य व्यभिचारशङ्कया तत्परित्यागो भ्रान्तिमूल एव, निमित्तस्य हि कस्यचित् फलव्यभिचारित्वदर्शनं निमित्तवेदिनां तथाविधक्षयोपशमाभावेन यथापरिज्ञानात्, तथाविधसामग्र्यन्तरवैकल्याद्वा। तथा श्रुतमपि सम्यग्गृहीतं नार्थाविसंवादि, षट्स्थानपतितत्वञ्च पुरुषाश्रितक्षयोपशमवशेन, न हि प्रमाणाभासव्यभिचारे प्रमाणस्य व्यभिचारशङ्का युक्ता, अन्यथा मरुमरीचिकाजलग्राहिप्रत्यक्षस्य व्यभिचारित्वेन सत्यजलग्राहिप्रत्यक्षस्यापि व्यभिचारिता स्यात्। तथा च सुविवेचितकार्यस्य कारणाव्यभिचारितया प्रमातुरेवायमपराधो न प्रमाणस्यातो निमित्तश्रुतमपि न व्यभिचारि। क्वचित्त्वशुवादो वार्यसिद्धिदर्शनन्तु मध्येऽन्यशुभनिमित्तबलात्, शोभननिमित्तदर्शनानन्तरमपि क्वचित्कार्यासिद्धिरपान्तरालेऽशुभनिमित्तान्तरस्य एवेति ॥ ४४ ॥

अथ क्रियात एव मोक्ष इति मतनिरासायाह—

## ज्ञानक्रियाभ्यां मोक्ष इति सर्वज्ञोपदेशः ॥ ४५ ॥

**ज्ञानेति**, न हि ज्ञानरहिताया क्रियायाः सिद्धिस्तदुपायावेदनात्, न चोपायं विना प्राप्यत उपेयम्, ज्ञानवतां क्रियाया एव फलवत्त्वात्, तस्माञ्च ज्ञाननिरपेक्षा दीक्षादिलक्षणा क्रिया मोक्षफल-

जनिका, यथा न ज्ञानमपि प्रधानतया हेतुः, न च क्रियारहिताज्ज्ञानादिष्टसिद्धिः, क्रियारहितस्य ज्ञानस्य पङ्गोरिव कार्यसाधकत्वासम्भवात्, तस्माज्ज्ञानक्रियासाध्यं मोक्षमिति लोकालोकान्तर्गतसूक्ष्मव्यवहितविप्रकृष्टातीतानागतवर्तमानपदार्थप्रत्यक्षप्रकाशकविशिष्टज्ञानवन्तस्तीर्थंकरा वदन्ति, ते हि लोकस्य चक्षुस्तुल्या वर्तन्ते यथावस्थितपदार्थाविष्कारकरणात्, सद्गतिप्रापकानर्थनिवारकमार्गोपदेशाच्च नायकाः, यथा यथा रागद्वेषाभिवृद्धिस्तथा तथा संसारोऽपि शाश्वतः, स च संसारसागरः स्वयम्भूरमणसलिलौघवदपारो न सम्यग्दर्शनमन्तरेण लङ्घितुं शक्यः, तत्र च मिथ्यात्वादिदोषैरभिभूताः सावद्येतरविशेषानभिज्ञाः कर्मक्षपणार्थमभ्युद्यता अपि निर्विवेकतया सावद्यकर्मण एव कारिणोऽनुसञ्चरन्ति, यथा यथा चाश्रवरोधेनापरिग्रहा लोभातीताः सन्तोषिणो वाऽसदनुष्ठानापरितकर्माणस्तथा तथा प्राणिगणानां भूतभविष्यद्वर्तमानसुखदुःखादीनां यथार्थतया वेत्तारः संसारोत्तितीर्षूणां भव्यानां सदुपदेशप्रदानेन नेतारो भवन्ति, तीर्थंकराः स्वयम्बुद्धत्वाच्चानन्यनेया भवान्तकराश्च । अत एव हेयोपादेयवेदिन एषामेव च वचः प्रमाणमिति सूचयितुं **सर्वज्ञोपदेश** इत्युक्तम्, तथा च सर्वार्थसिद्धादारतोऽधःसप्तमनरकं यावज्जन्तवः स्वकर्मणा परिभ्रमन्ति, गुरुतरकर्माणस्त्वप्रतिष्ठाननरकयायिन इति, प्राणातिपातरूपं रागद्वेषरूपं मिथ्यादर्शनरूपं चाऽऽश्रवं संवरं पुण्यं पापमसातोदयं तत्कारणं सुखं तत्कारणं तपसा निर्जरां च सम्यग् जानाति स एव परमार्थतो जीवादयस्सन्ति, अस्ति च पूर्वोपरितस्य कर्मणः फलमित्येवं रूपं क्रियावादं वक्तुं समर्थ इति भावः ॥ ४५ ॥

अथ येन प्रकारेण भगवत उपदेशस्तेनैव प्रकारेण तदर्थो व्याख्येयोऽनुष्ठेयश्च, तथैव तस्य संसारोत्तारणकारणत्वात्, नान्यथेत्येतद्दर्शयितुमाह—

**निर्गुणा धर्ममुपलभ्यापि मानादिनाऽऽत्मभ्रंशकाः ॥ ४६ ॥**

निर्गुणा इति, गुरुशुश्रूषादिना सम्यग्ज्ञानावगमस्ततस्सम्यगनुष्ठानं ततस्सकलकर्मक्षयलक्षणो मोक्ष इत्येवम्भूतैर्गुणैर्वियुक्ता इत्यर्थः, अथवा 'शुश्रूषते प्रतिपृच्छति शृणोति गृह्णातीहते चापि । ततोऽपोहते वा धारयति करोति वा सम्यग्' इत्येवम्भूतगुणरहिता इति । तथा हि केचित् संसारनिस्सरणोपायं श्रुतचारित्राख्यं धर्ममवाप्यापि कर्मोदयान्मन्दभाग्यतयाऽऽत्मोत्कर्षात् तीर्थंकराद्यभिहितं सम्यग्दर्शनादिकं मोक्षमार्गं सम्यगप्रतिपालयन्तः सर्वज्ञमार्गं निजरुचिविरचितव्याख्याप्रकारेण विध्वंसयन्ति ब्रुवते चासौ सर्वज्ञ एव न भवति क्रियमाणस्य कृततया प्रत्यक्षविरुद्धस्य प्ररूपणात्, पात्रादिपरिग्रहान्मोक्षमार्गप्ररूपणाच्चेति, तथा सर्वज्ञोक्तिश्रद्धावैधुर्येण संयमे विषीदन्तो मत्सरतयाऽऽचार्यादिना प्रेरिता अपि प्रेरकं परुषं वदन्ति, तदेवमेते उत्सूत्रप्ररूपका आचार्यपरम्परायातमप्यर्थमन्यथा कुर्वन्ति गूढाभिप्रायं सूत्रं कर्मोदयाद्यथावत्प्ररूपयितुमसामर्थ्यात् । केचिच्चाभिमानिनः कस्मादाचार्याद्भवद्भिः श्रुतमधीतमिति पृष्टाः स्वकीयमाचार्यं ज्ञानावलेपान्निह्नुवते, अपरञ्च प्रसिद्धं निर्दिशन्ति, तदेवं सदनुष्ठानमानिनो मायान्विता बोधिलाभमपि निजं ध्वंसयन्तोऽसाधवोऽपि सन्तः साधुमानिनः पापद्वैगुण्यादनन्तसंसारभाजो भवन्ति, तथाऽविदितकषायविपाको यः प्रकृत्यैव क्रोधनो येन केनापि प्रकारेणासदर्थभाषणेनाप्यात्मनो जयमिच्छति कलहकारिभिर्मिथ्यादुष्कृतादिना परस्परं क्षामितेऽपि तथाविधभाषणेन पुनस्तेषां क्रोधोदयं कारयति सोऽयं लिङ्गधार्यनुपशान्तक्रोधः कर्कशभाषी चतुर्गतिके

संसारे यातनास्थानगतो भृशं पीड्यते । तस्मादक्रोधनेनाकर्कशभाषिणा भव्यस्थेनाऽऽचार्यादीनां यथोपदेश क्रियासु प्रवृत्तेन मौनी द्रुमार्गे एकान्तेन श्रद्धालुना भाव्यम्, अयमेव च परमार्थतः पुरुषार्थकारी सुकुलोत्पन्न संयमकरणशीलो यथोपदेशं प्रवृत्तोऽकषायी च नापरः । एवमहमेव संयमवान् मूलोत्तरगुणानां सम्यक्पालको विकृष्टतपोनिष्टप्तदेहश्च नान्य इति मत्वाऽपरं साधुलोकमन्यं वा नावमन्येत, तथा लाभपूजासत्कारादिना न मदं कुर्यात्, मदस्थानस्थो हि न सर्वज्ञमार्गगामी भवति, तस्मात्संयममादाय ज्ञानादिना च परमार्थमबुध्यमानः प्रमाद्यति पठन्नपि शास्त्राणि तदर्थमवगच्छन्नपि नासौ सर्वज्ञमतं परमार्थतो जानाति, अतः प्रव्रजितोऽपरिग्रही उच्चैर्गोत्रे समुत्पन्नोऽपि नैव गर्वमुपेयात्, न हि जात्यादिमदस्थानं संसारपरित्राणक्षमम्, किन्तु ज्ञानचरणे, ज्ञानक्रियाभ्यां मोक्ष इति वचनात्, तथाऽहमेव भाषाविधिज्ञः साधुवादी न च मत्तुल्यः प्रतिभावानस्ति नापि मत्समानोऽलौकिको लोकोत्तरशास्त्रार्थविशारदो गाढप्रज्ञः सुभावितात्मा चेत्येवं मन्यमानो धर्मकथावसरे सभायां वा किमनेन वाकुण्ठेन दुर्दुरूढेन कुण्डिकाकार्पासकल्पेन खसूचिना कार्यमिति नान्यं जनमवमन्येत, एवं लाभादिमदोऽपि न कार्यः, परित्यक्तसर्वमदस्थाना महर्षयस्तपोविशेषशोषितकल्मषाः सर्वोत्तमां गतिं व्रजन्ति तस्मान्मदस्थानानि संसारकारणत्वेन सम्यक् परिज्ञाय धीर आत्मनः पृथक् कुर्यात्, मदस्थानरहितश्च स्नानविलेपनादिशरीरसत्काररहितः प्रशस्तलेश्योऽयगतश्रुतचारित्रो गवेषणग्रहणैषणादिवेत्तोद्गमादिदोषतत्परिहारतत्फलाभिज्ञोऽन्नपानादायगृद्ध सम्यक् शुद्धभिक्षाग्रहणेन विहरेत्, न रत्नादिभयाभ्यासादुत्पन्नामरतिमाश्रयेत्, किन्तु संसारस्वभावं परिगणय्य तिर्यङ्नारकादिदुःखप्रेक्षमाणः स्वल्पं च संसारिणामायुरित्येवं विचिन्त्य तामभिभवेत्, गच्छवासी जिनकल्पिकादिर्वा केनचित् पृष्टोऽपृष्टो वा धर्मकथावसरेऽन्यदा वा मौनी भवेदथवा संयमाबाधया धर्मसम्बद्धं किञ्चिद्ब्रूयात्, परदोषोद्घट्टनया मर्मवेधिनो वाचो न ब्रूयात् । यथार्हं धर्मदेशना विधेया, अयं जनोऽभिगृहीतोऽनभिगृहीतो वेति परिज्ञाय धर्मदेशनां कुर्यात्, यथा सर्वथा तस्य श्रोतुर्जीवादिपदार्थावगमो भवेत्, मनस्तस्य न दूष्येत, अपि तु प्रसन्नता यायात्, अन्यथा हि स्वधर्मसंस्थापनेच्छया तीर्थिकतिरस्कारमाय वचो निशम्य स्वदर्शनाग्रही तीर्थिकस्तद्वचनमप्रतिपद्यमानोऽतिकटुकं भाषयन् क्षुद्रत्व गच्छेद्विरूपमपि कुर्यात्, पालकपुरोहितवत् स्कन्दकाचार्यस्य । तथा श्लाघापूजासत्कारादिनिरपेक्षो पर्षदनुगुणं त्रसस्थावरेभ्यो हितं धर्ममाविर्भावयेत्, न तु श्रोतृप्रियं राजकथाविकथादिकं छलितकथादिकं तत्समाश्रितदेशावशेषनिदर्शनिकञ्च कथयेत् । तदेवं याथातथ्यमुत्प्रेक्षमाण सर्वेषु प्राणिषूपरतदण्डो जीवितमरणानपेक्षी संयमानुष्ठानं पालयेत् ॥ ४६ ॥

अथ सम्यक् चारित्रस्य पूर्वोदितस्य बाह्याभ्यन्तरप्रयपरित्यागाद्भवतीत्याह—

## गुरुकुलवासी सुसाधुक्रियः ॥ ४७ ॥

गुर्विति, धनधान्यहिरण्यादिग्रन्थमुत्सृज्य प्रव्रजितः शिक्षाग्राही साधुः ग्रहणलक्षणामासेवनालक्षणाञ्च शिक्षामासेवमान आचार्यान्तिके यावज्जीवं वसमानो यावदभ्युद्यतविहारं न प्रतिपद्यते तावत्सदाऽऽज्ञाविधायी ग्रहणासेवनाभ्यां विनयं सम्यक् परिपालयेत्, न तु संयमानुष्ठाने सदाचार्योपदेशे च प्रमादं कुर्यात्, यथा ह्यातुरः सद्वैद्योपदेश ...

सावद्यमार्गपरिहारी पापकर्मभेषजस्थानीयान्याचार्यवचनानि विदधदपरसाधुभ्यः साधुकारमशेषकर्मक्षयञ्चावाप्नोति । यस्त्वाचार्योपदेशमन्तरेण स्वच्छन्दतया गच्छान्निर्गत्यैकाकिविहारितां प्रतिपद्यते स च बहुदोषभाग् भवति, यतो ह्यसौ न सूत्रार्थनिष्पन्नो न वा गीतार्थो नापि सम्यक् परिणतधर्मपरमार्थः, तथाभूतञ्चानेके पापधर्माणः पाषण्डिकाः प्रतारयन्ति गच्छाद्बहिः कारयन्ति । विषयोन्मुखतापादिनमपगतपरलोकभयं च निस्सारं मन्यमानाः कुतीर्थिकाः स्वजना राजादयो वा हरन्ति, तत्र पाषण्डिका नास्ति युष्मद्दर्शनेऽभिप्रक्षालनविषापहारशिरश्छेदादिका प्रत्यया अणिमाद्यष्टगुणमैश्वर्यम्, न वा युष्मद्दर्शनमनेकराजाश्रितम्, अहिंसापि तु साध्या, लोकस्य जीवव्याप्तत्वात्, नापि भवतां स्नानादिकं शौचमस्तीत्येवं तं प्रतारयन्ति । स्वजनाश्च भवन्तं विना नास्माकं कश्चित् पोषकः पोष्यो वाऽस्ति, त्वमेवास्माकं सर्वस्वम्, त्वया विना सर्वं शून्यमाभातीत्येवं धर्माद्ध्यावयन्ति, एवं राजादयोऽपि । तस्मादेकाकित्वे बहुदोषसम्भवात् कृतप्रतिज्ञानिर्वाहाय गुरोरन्तिके तिष्ठेत्, तत्रस्थो भगवदनुष्ठानं सदनुष्ठानतोऽवभासयेत् तदन्तिके निवसन् विषयकषायाभ्यामात्मानं ह्रियमाणं ज्ञात्वा क्षिप्रमेवाचार्योपदेशात् स्वत एव वा निवर्त्तयति, स्थानशयनासनगमनादौ तपश्चरणादौ ये समाचारास्तैः समायुक्तो भवति, सुसाधुर्हि यत्र कायोत्सर्गादिकं विधत्ते तत्र सम्यक् प्रत्युपेक्षणादिकां क्रियां करोति कायोत्सर्गञ्च मेरुरिव निष्प्रकम्पः शरीरेऽनि स्पृहो विधत्ते, शयनञ्च कुर्वन् प्रत्युपेक्ष्य संस्तारकं तदनु कायं चोदितकाले गुरुभिरनुज्ञातः स्वपेत् तत्रापि आम्रदिव नात्यन्तम्, एवमासनादिष्वपि तिष्ठता पूर्ववत्सङ्कुचितगात्रेण स्वाध्यायध्यानपरायणेन सुसाधुना भवितव्यम् । तदेवमादिसुसाधुक्रियायुक्तो गुरुकुलनिवासी सुसाधुर्भवतीति ॥ ४७ ॥

तस्यैव फलान्तरमाह—

## स जलवाहिन्यापि चोदितो न क्रोधकृत् ॥ ४८ ॥

स इति, यो गुरुकुलवासात् स्थानशयनासनसमितिगुप्तिषु प्राप्तप्रज्ञः प्रतिषिद्धसर्वप्रमादो गुरूपदेशादेवातिश्रान्तचित्तविप्लुतिरन्येषामपि तदपनयनसमर्थः स गुर्वन्तिके वसन् कचित् प्रमादस्खलितो यदि भवेत्तदा जलवाहिन्या दास्याऽपि क्षुद्रगृहस्थानामप्येतन्न युज्यते कर्त्तुं यद्भवताऽऽरब्धमिति चोदितो ममैवैतच्छ्रेय इत्येवं मन्यमानो न क्रोधकारी भवति किमुत परतीर्थिकेन स्वतीर्थिकेन वयसा लघुना साधुना वयोऽधिकेन श्रुताधिकेन वा, किन्तु भवतैवंविधमसदाचरणं न विधेयं पूर्वर्षिभिरनुष्ठितमेवंविधमनुष्ठेयमिति प्रेरितस्तथा करिष्यामीत्येवं मध्यस्थवृत्त्या प्रतिशृणुयात्, मिथ्यादुष्कृतादिना वा निवर्त्तेत, प्रेरणमिदं ममैव श्रेयः, यत एवं ब्रूयात् कश्चित्पुनः प्रमादं न कुर्याम्, न चाऽसदाचरणमनुनिष्ठेयमिति मन्येत, न तु कुप्येत्, दुर्वचो वा केनचिदभिहिते न कुप्येत्, चिन्तयेच्च 'आक्रुष्टेन मतिमता तत्त्वार्थविचारणे मतिः कार्या । यदि सत्यं कः कोपः स्यादनृतं किं नु कोपेने'ति । एवञ्च यथा सजलजलधराच्छादितबहुला धकारायां रात्रौ नायकोऽटव्यादौ स्वभ्यस्तप्रदेशोऽपि सन्धानमन्धकारावृतत्वात् स्वहस्तादिकमप्यपश्यन्न सम्यक् परिच्छिनत्ति, स एव च सूर्यस्याभ्युद्गमेनापनीते तमसि प्रकाशिते च दिक्चक्रे सम्यगाविर्भूते पाषाणदरिनिम्नोन्नतादिके विवक्षितदेशप्रापकमार्गमभिव्यक्तगुणदोषविचारणतः सम्यगवगच्छति तथैवाभिनवप्रव्रजितोऽपि सम्यगपरिज्ञातश्रुत-

चारित्रधर्मं सूत्रार्थानभिज्ञत्वान्न धर्मं सम्यक् परिछिनत्ति स एव तु पश्चाद्गुरुकुलवासादभ्यस्तसर्वज्ञप्रणीतागमत्वान्निपुणो यथावस्थितान् जीवादिपदार्थान् पश्यति, शिक्षको हि गुरुकुलवासितया जिनवचनाभिज्ञो भवति तत्कोविदश्च मूलोत्तरगुणान् जानाति, अतो दिक्षु विदिक्षु च त्रसस्थावरेषु सर्वदा यतमानस्सन् संयमानुष्ठायी भवेत्, तेषु प्राणिषूपकारिष्वपकारिषु वा मनसापि प्रद्वेषं कदापि न गच्छेत्, न वाऽपकारिषु मनसाऽप्यमङ्गलं चिन्तयेत् । योगत्रिककरणत्रिकेण द्रव्यक्षेत्रकालभावरूपां प्राणातिपातविरतिं सम्यगरक्तद्विष्टतयाऽनुपालयेत्, एवं शेषमहाव्रतान्युत्तरगुणांश्च समनुपालयेत् ॥ ४८ ॥

तस्यैव गुणान्तरमाह—

## शास्त्रवेत्ता विभज्यवादी भाषाविधिज्ञश्च ॥ ४९ ॥

**शास्त्रेति,** सविनयं गुरुकुलवासी साधुराचार्याद्युपदिष्टं सम्यग्दर्शनादिमोक्षमार्गं हृदये सुव्यवस्थाप्य तत्र सुस्थितोऽप्रमादी हेयोपादेयं सम्यक् परिज्ञायोत्पन्नप्रतिभः सिद्धान्तस्य श्रोतॄणां यथावत् प्रतिपादको भवति, ग्रहणासेवनारूपया द्विविधयापि शिक्षया शिक्षितत्वात्, तथा स एव स्वपरशक्तिं पर्षदं प्रतिपाद्यमर्थं च सम्यक् परिज्ञाय धर्मं प्रतिपादयितुं क्षमः, बहुश्रुतत्वात् प्रतिभावत्त्वादर्थविशारदत्वात् स्वतो धर्मे सुस्थितत्वाच्च, एवंविधः कालत्रयवेत्ता जन्मान्तरसञ्चितानां कर्मणामन्तकृद्भवति, अन्येषाञ्च कर्मापनयनसमर्थो भवति, कोऽयं पुरुषः कस्य चार्थस्य ग्रहणसमर्थोऽहञ्च किम्भूतार्थप्रतिपादनशक्त इति सम्यक् परीक्ष्य व्याकरणात्, परेण पृष्टस्यार्थस्य सम्यगुत्तरप्रदानसामर्थ्याच्च, तथाऽहं समस्तशास्त्रवेत्ता समस्तसंशयापनेता न मत्तुल्यो हेतुयुक्तिभिरर्थप्रतिपादयितेत्येवमभिमानं न सेवेत नापि बहुश्रुतत्वेन तपस्वित्वेन वा स्वात्मानं प्रकाशयेत्, शास्त्रार्थं नापसिद्धान्तेन व्याख्यानयेत्, लाभपूजादि नेच्छेत् पूजासत्कारादिकं कचिदवाप्याप्यनुन्मादी व्याख्यानावसरे धर्मकथावसरे वाऽनाविलोऽकषायी साधुरर्वाग्दर्शित्वादर्थनिर्णयं प्रत्यशङ्कितभावोऽप्यौद्धत्यं परिहरन् विषममर्थं प्ररूपयन् साशङ्कमेव कथयेत्, परिस्फुटमप्यशङ्कितभावमप्यर्थं न तथा कथयेद्येन परः शङ्केत, अपि तु विभज्यवादी पृथगर्थं निर्णयवादं व्यागृणीयात्, स्याद्वादं सर्वत्रास्खलितं लोकव्यवहाराविसंवादितया सर्वव्यापिनं स्वानुभवसिद्धं वदेत्, नित्यवादं द्रव्यार्थतया पर्यायार्थतया त्वनित्यवादं वदेत्, स्वद्रव्यक्षेत्रकालभावैः सर्वेऽपि पदार्थाः सन्ति परद्रव्यादिभिस्तु न सन्तीत्येवं विभज्यवादं वदेत्, तदपि वाद्वयं सत्यासत्यामृषाभ्यां भाषाभ्यां भाषेत, तेन कथितञ्चार्थं कश्चिन्मेधावितया तथैव सम्यगवगच्छति, अपरस्तु मन्दमेधावितयाऽन्यथैव यदभिजानीयात् स यथाऽसाववबुध्येत तथा हेतूदाहरणसद्युक्तिप्रकटनपुरस्सरं कर्कशादिवचनमब्रुवन् सम्यग्बोधयेत्, सोऽकालीनं व्याख्यानं व्याकरणतर्कादिप्रवेशनद्वारेण प्रसक्तानुप्रसक्तया न दीर्घकालिकं कुर्यात्, यत्त्वतिविषमत्वादल्पाक्षरैर्न सम्यगवबुध्यते तत् पर्यायशब्दोच्चारणतो भावार्थकथनतश्च श्रोतारमपेक्ष्य सद्धेतुयुक्त्यादिभिरस्खलितामिलितादीनाक्षरार्थवादी भाषेत न स्वल्पैरेवाक्षरैरुक्त्वा कृतार्थो भवेत् ।, एवं परस्पराविरुद्धं निरवद्यं वचनमभियुञ्जीत, उत्सर्गविषये उत्सर्गमपवादविषयेऽपवादं स्वपरसमययोश्च यथास्वं वचनमभिवदेत्, तीर्थङ्करगणधराद्युक्तं ग्रहणशिक्षया सम्यग् गृह्णीयात्, आसेवनाशिक्षया त्वनवरतमुपयुक्तविहारितयाऽऽसेवेत,

अन्येषामपि तथैव प्रतिपादयेत्, सदा यतमानोऽपि यो यस्य कर्त्तव्यस्य कालस्तं नोल्लङ्घयेत्, परस्पराबाधया च सर्वाः क्रियाः कुर्यात्, एवङ्गुणविशिष्टो यथाकालवादी यथाकालचारी च सर्वज्ञोक्त सम्यग्दर्शनज्ञानचारित्राख्य समाधिं सम्यगवगच्छति, स एव च ग्राह्यवचनो निपुणः शुद्धसूत्रः सर्वज्ञोक्तज्ञानादिप्रतिपादने योग्यश्चेति ॥ ४९ ॥

यस्त्रैकालिक वस्त्ववगच्छति स एव भाषितुमर्हति नान्यः स एव च परिज्ञाता त्रोटयिता चेत्याह—

## घात्यन्तकृदनन्यसदृशज्ञः सत्यधर्मप्रणेता ॥ ५० ॥

**घातीति,** दर्शनज्ञानाद्यावरणकर्मणो निश्शेष विनाशको य स एव सर्वस्यापि वस्तुजातस्य यथावस्थितस्वरूपनिरूपणतः प्रणेता नायको भवति, कालत्रयभाविपर्यायतो द्रव्यादिचतुष्कस्वरूपतश्च द्रव्यपर्यायपरिज्ञानात्, विशिष्टोपदेशदानेन सर्वप्राणिनां संसाराद्रक्षणशीलत्वाच्च, नास्य संशयविपर्ययादयो वर्त्तन्ते तदावरणक्षयकारित्वात्, विनष्टघातिकर्मत्वादेवासावनन्यसदृशज्ञः, न ह्यस्य विज्ञानेन तुल्यो वस्तुगतसामान्यविशेषांशपरिच्छेदकः कश्चिद्विद्यते, अपरैर्द्रव्यपर्याययोरनभ्युपगमात्, यतश्चाय सत्यधर्मप्रणेताऽतो न केवलं हेयोपादेयमात्रपरिज्ञाता, किन्तु सर्वज्ञोऽनन्यसदृशज्ञः, न हि सर्वज्ञत्वमन्तरेणावितथभाषित्व सत्यधर्मप्रणेतृत्व वा सम्भवति सर्वप्राण्यादिविज्ञानाभावात्, तथा च सर्वत्रानाश्वासो भवेत्। **सत्यधर्मप्रणेतेति,** संयमधर्मप्रकाशक इत्यर्थः, सर्वप्राणिहितकारित्वात्तस्य, तस्मात्तपःप्रधानेन सर्वभूतहितकारिणा संयमेन सदा सम्पन्नो भूतेषु दयां कुर्यात्, तदपकारितमारम्भं दूरतः परिवर्जयेत्, असौ धर्मस्तीर्थकृत इति सम्यक् परिज्ञाय तदङ्गतया पञ्चविंशतिरूपा द्वादशप्रकारा वा भावना जीवसमाधानकारिणीर्भावयेत्, भावनायोगेन शुद्धान्तःकरणो हि परित्यक्तसंसारस्वभावः संसारसमुद्रे न निमज्जति, किन्त्वायतचारित्री जीवपोतः सदागमलक्षणकर्णधाराधिष्ठितस्तपोमारुतवशात्सर्वदुःखात्मकस्य संसाराम्भोधेः परं पारं मोक्षाख्यमधिगच्छति, भावनायोगशुद्धात्मा संसारे वर्त्तमानो मनोवाक्कायेभ्योऽशुभेभ्यो मुच्यते, सावद्यानुष्ठानलक्षणं पापं तत्कार्यमष्टप्रकारं कर्म च ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया च तदुपादानं परिहरन् ततो मुच्यते, तस्य नूतनकर्माण्यकुर्वतो निरुद्धाश्रवद्वारस्य विकृष्टतपश्चरणवतः पूर्वसञ्चितानि कर्माणि निवर्त्तन्ते नवञ्चाकुर्वतोऽशेषकर्मक्षयो भवति, न पुनरपि स्वतीर्थनिकारदर्शनात्संसाराभिगमनं भवति, योगप्रत्ययाभावेन नूतनकर्माभावात्, तस्य स्वदर्शननिकाराभिनिवेशासम्भवाच्च, उपरताशेषद्वन्द्वत्वाद्रागद्वेषरहिततया स्वपरकल्पनाभावात्। असावेवाष्टप्रकारं कर्म कारणतस्तद्विपाकतश्च जानाति, तन्निर्जरणं तदुपायञ्च जानीते ततश्चासौ तत्करोति येनास्मिन् संसारे न पुनर्जायते न वा पुनर्म्रियते ॥ ५० ॥

निरुद्धाश्रवद्वारस्य न जन्मजरामरणानीत्याह—

## परित्यक्तस्त्रीसङ्गो धर्मी निष्ठितार्थः ॥ ५१ ॥

**परित्यक्तेति,** आश्रवाणां प्रधानत्वात्, केषाञ्चिद्दर्शनेऽङ्गनोपभोगस्य निराश्रवत्वस्य स्वीकारेण दर्शितत्वाच्च तथाऽस्य निरपवादत्वान्मैथुनपरित्यागः कण्ठत उक्तः, उपलक्षणतयाऽपरव्रतानामपि

ग्रहणम्। स्त्रीसङ्गो हि निखिलाविनयास्पदभूतः, सूकरादिपशूना वध्यस्थानप्रवेशनभूतो भक्ष्यविशेषो नीवार उच्यते तत्समानं मैथुनम्, यथा हि पशुर्नीवारेण प्रलोभ्य वध्यस्थानमुपनीय नानाप्रकारा वेदनाः आप्यत एवमसौ जीवो नीवारतुल्येनानेन स्त्रीसङ्गेन वशीकृतो बहुप्रकारा यातना प्राप्नोति, येन च स्त्रीप्रसङ्गः परित्यक्तः स एव प्रधानभूतमोक्षलक्षणपुरुषार्थोद्यतो धर्मवानशेषकर्मबन्धनोन्मुक्तश्च, नासंयमजीवितमभिलषति परिग्रहादिकमपि नेच्छति, असंयमजीवितत्यागादस्य सदनुष्ठानपरायणो ज्ञानाचरणादिकर्मणा पर्यवसानाय यतते, यतमानः संसारावतरणद्वाराण्यपनीय रागद्वेषासम्पृक्ततया विषयाप्रवृत्तेः स्वस्थचेताः सदेन्द्रियनोइन्द्रियाभ्यां दान्तः कर्मविदरलक्षणं भावसन्धिमनन्यतुल्यं प्राप्तो न केनचित्सह विरोधं करोति, प्रशान्तमना हितमितभाषी निरुद्धदुष्प्रणिहितसर्वकायचेष्टो दृष्टिपूतपादचारी सन् परमार्थचक्षुष्मान् भवति, स एव च भव्यमनुष्याणां चक्षुः, सदसत्पदार्थाविर्भावनात्, एवंविधा महासत्त्वा इहार्यक्षेत्रे संसारस्य तत्कारणस्य वा कर्मणः अन्तकारिणः, न केवलं तीर्थङ्करादयः, किन्त्वन्येऽपि सम्यग्दर्शनज्ञानचरित्रात्मकं धर्ममाराध्य मनुष्याः कर्मभूमिगर्भव्युत्क्रान्तिजसंख्येयवर्षायुषः सन्तः सदनुष्ठानसामग्रीमवाप्य निष्ठितार्था उपरतसर्वद्वन्द्वा भवन्ति, प्रचुरकर्मतया केचित्सत्यामपि सम्यक्त्वादिकायां सामग्र्यां न तद्भव एव मोक्षं प्राप्नुवन्ति किन्तु सौधर्माद्याः पञ्चोत्तरविमानावसाना देवा भवन्तीति, सिद्धिस्तु मनुष्यभवादेव, एतेन देवा उत्तरोत्तरं स्थानमारुन्दन्तोऽशेषक्लेशप्रहाणं कुर्वन्तीति शाक्यवादो निरस्तः। तस्मात् सत्संयमवीर्यं तपोवीर्यं वा लब्ध्वा तेन पूर्वानेकभवोपात्ताष्टप्रकारं कर्म धुनीयात्, अभिनवञ्चाश्रवनिरोधान्न कुर्यात्, यथोक्तविहारिणः सदनुष्ठानमाराध्य बहवः संसारकान्तारं तीर्णाः, अपरे तु सर्वकर्मक्षयाभावाद्देवा अभूवन्, एवं कर्मविदारणसहिष्णवोऽनेके सदा भूता भवन्ति भविष्यन्ति च, सत्संयमानुष्ठानात्संसारं तीर्णास्तरन्ति तरिष्यन्ति च ॥ ५१ ॥

पूर्वोक्तार्थानुष्ठातैव साधुरित्याह—

## स एव ब्राह्मणः श्रमणो भिक्षुर्निर्ग्रन्थः ॥ ५२ ॥

**स एवेति,** यः स्वसमयपरसमयपरिज्ञानेन सम्यक्त्वगुणावस्थितो ज्ञानादिभिः कर्मविदारणहेतुभिरष्टप्रकारेण कर्मणा विदारकोऽनुकूलप्रतिकूलोपसर्गसहनः स्त्रीपरीषहजेता नरकवेदनाभ्यः समुद्विजमानः श्रीवीरवर्धमानस्वामिवत्संयमं प्रति कृतप्रयत्नः कुशीलदोषपरिज्ञानेन सुशीलतावस्थायी पण्डितवीर्योद्यतः क्षान्त्यादिधर्मानुष्ठाता सम्पूर्णसमाधियुक्तः सम्यग्दर्शनज्ञानचारित्रलक्षणमार्गानुगन्ता तीर्थिकदर्शनेषु दोषमानेन तेष्वश्रद्दधानः शिष्यगुणदोषवेत्तृतया सद्गुणेषु वर्त्तमानः प्रशस्तभावग्रन्थभावितात्मा यथावदयदातचारित्रश्च स एव ब्राह्मणो नवब्रह्मचर्यगुप्तिगुप्तत्वात्, ब्रह्मचर्यधारणाद्वा, स एव श्रमणः, सदा तपसा श्रान्तत्वात्, सर्वत्र वासीचन्दनकल्पत्वाच्च, स एव भिक्षुर्भिक्षणशीलत्वादष्टकर्मभेदकत्वाच्च, स एव निर्ग्रन्थः, सबाह्याभ्यन्तरग्रन्थाभावात्। यः पूर्वोक्तार्थवृत्तिः प्रेमद्वेषकलहाभ्याख्यानपैशुन्यपरपरिवादरत्यरतिमायामृषावादमिथ्यादर्शनशल्यविरतः, समितः सदा ज्ञानादिमान् सत्संयमानुष्ठानपरायणः आक्रुष्टो न क्रोध्युत्कृष्टतपोयुतोऽपि न मानी स साधुर्माहनो वाच्यः। पूर्वोक्तगुणविशिष्टः शरीरादावपि क्वचिदप्रतिबद्धो निराकाङ्क्षः सम्यक् प्राणातिपातादीना

विज्ञानपूर्वं परित्यागी क्रोधादिविधुरो यतो यत इहामुत्र चानर्थहेतुमात्मनोऽपायं पश्यति। ततः प्राणे यात्महितमिच्छन् विरतो दान्तः शुद्धो निष्प्रतिकर्मतया व्युत्सृष्टकायः श्रमणो वाच्यः, पूर्वोदितगुणगणपरिपूर्णो निरभिमानी सदा गुर्वादौ विनीतो वैयावृत्त्योद्यतो दान्तः शुद्धो निष्प्रतिकर्मशरीरो द्वाविंशतिपरीषहाणां दिव्याद्युपसर्गाणाञ्च सम्यगधिसोढा धर्मध्यानेनावदातचारित्रः संसारासारतायाः कर्मभूमेर्दुष्प्रापतायाः बोधेः सुदुर्लभतायाश्च परिज्ञाता सकलसंसारोत्तरणसामग्रीसम्पन्नः परदत्तभोजी भिक्षुर्वाच्यः। पूर्वव्यावर्णितगुणालङ्कृत एकस्यैव परलोकयायितया सदा भावत एकक एकान्तेन मौनीन्द्रमेव शासनं पथ्यं नान्यदिति सुदृढं विदितसंसारस्वभावतया वेत्ता परिच्छिन्नकर्माश्रवद्वारः शत्रुमित्रादिषु समः उपयोगलक्षणजीवस्यासंख्येयप्रदेशात्मकस्य संकोचविकासभाजो निजकृतकर्मभोक्तुः प्रत्येकसाधारणशरीरतया व्यवस्थितस्य द्रव्यपर्यायतया नित्यानित्याद्यनन्तधर्मात्मकस्याजीवादेश्च तत्त्ववेदी सुपरित्यक्तद्रव्यभावस्रोताः पूजादिनिरपेक्षतया निर्जरार्थमेव तपश्चरणादिक्रियाविधाता दान्तो शान्तो निष्प्रतिकर्मशरीरो निर्ग्रन्थो वाच्यः सर्वेऽप्येते ब्राह्मणादिशब्दा भिन्नव्यञ्जना अपि कथञ्चिदेकार्थाश्च ॥ ५२ ॥

अथ पूर्वोक्तार्थानेव दृढीकर्त्तुं सोपपत्तिकं परसमयं निरस्यति—

## नास्ति देहभिन्नो जीवः कोशादसिवत् पृथगनुपलब्धेरित्येके ॥ ५३ ॥

नास्तीति, न विद्यते शरीराद्भिन्न आत्मा, यदि भवेत्तर्हि यथा कोशात् खङ्गं समाकृष्य खङ्गोऽयं कोशोऽयमिति प्रदर्श्यते तथा भेद्यादिभिरयं जीव इदं शरीरमित्युपदर्श्येत, न चास्त्येवमुपदर्शयिता कश्चिदतो न कायाद्भिन्नो जीवः, किन्तु यदेवैतच्छरीरं स एव जीवो ये च शरीरस्यावस्थाविशेषास्त एव तस्यापि, यावन्तं कालं तदविकृतमास्ते जीवोऽपि तावन्तमेव कालं जीवतीत्युच्यते यदा तु तद्विकृतं भवत्येतस्यापि भूतस्यान्यथाभावात्तदा जीवोऽपि न जीवति तस्मिंश्च विनष्टे जीवो विनष्ट इति कृत्वा दहनायैव श्मशानादौ नीयते ध्मापिते च तस्मिन्नस्थीन्येव केवलमुपलभ्यन्ते न तु तदतिरिक्तः कश्चिद्विकारः समुपलभ्यते येनात्मास्तित्वशङ्का भवेत्, न वा तत्र तद्बान्धवाः शरीरान्निर्गच्छन्तं कञ्चिदात्मानं पश्यन्ति, तथा च शरीरमात्र एव जीवस्ततः परलोकिनोऽभावान्नास्ति परलोको नापि पुण्यपापे, न वा सदसदनुष्ठानभेदः, तज्जन्येष्टानिष्टफलभोक्तुरभावादिति लोकायतिका महासमारम्भिणः प्राहुः ॥ ५३ ॥

तदेतन्मतं निराचष्टे—

## तन्न, भिन्नतयाऽनुभूयमानामूर्त्तगुणाधारतया तत्सिद्धेरन्यथा मरणानुपपत्तेः ॥ ५४ ॥

तन्नेति, आत्मा नेत्यादो न युक्तः, तथाहि कुतः समागतोऽहं कुत्र चेदं शरीरं परित्यज्य यास्यामि, इदं मे शरीरं पुराणं कृतं स्फूटमिवेदं शरीरात् पृथग्भावेनात्मनि सम्प्रत्यया अनुभूयन्ते, इदञ्च ज्ञानं मूर्तिमतश्शरीरादन्यत्, तच्च चामूर्तेनैव गुणिना भाव्यम्, अतः शरीरात् पृथग्भूतोऽमूर्त आत्मा ज्ञानाधारभूतो ज्ञानमिवास्ति, अन्यथा ज्ञानमपि न भवेत्, न ह्यमूर्तो मूर्तस्य गुणो युक्तः,

अतिप्रसङ्गात्, नाप्यात्माभ्युपगममन्तरेण लोकायतिकस्य कथञ्चिद्विचार्यमाणं मरणमुपपद्यते, दृश्यन्ते च तथाभूत एव शरीरे म्रियमाणा मृताश्च, इत्येवं युक्तियुक्तमप्यात्मानमेते स्वदर्शनानुरागिणस्तमसाऽऽवृतदृष्टयो धार्ष्ट्यान्नाभ्युपगच्छन्ति, तस्मादेतेऽजितेन्द्रियतया कामभोगाऽऽसक्ताः समारम्भे भीषण एव विषण्णास्तिष्ठन्ति, न कथञ्चिदपि संसाराद्विमुच्यन्ते ॥ ५४ ॥

पाञ्चभौतिकमात्रवादं निराकर्तुमाह—

## एतेन भूतात्मक एव लोक इति निरस्तं कर्तृत्वानुपपत्तेश्च ॥ ५५ ॥

एतेनेति, पूर्वोक्तदोषेणेत्यर्थः, भूतात्मक एवेति, पञ्चभूतमात्रवादिनो लोकायतिकविशेषाः, साङ्ख्याश्च निरस्ताः, एवपदेनात्मनिरासः, साङ्ख्यानामपि मते आत्मनो निर्गुणत्वेनाकर्तृत्वेन चाकिञ्चित्कारितयाऽसत्कल्पत्वात् । तत्र पृथिव्यप्तेजोवाय्वाकाशानि भूतानि, एतानि जगद्व्यापीनि, नान्यकृतानि, किन्तु विस्रसापरिणामेन निष्पन्नानि, अनादिनिधनानि, स्वकार्यकर्तृत्वे प्रत्यपरनिरपेक्षाणि शाश्वतानि, साङ्ख्यस्यापि सत्कार्यवादाङ्गीकरणात्पञ्चभूतानीदृशान्येव, आत्मनोऽसत्कल्पत्वाल्लोकायतिकमते तदभावाच्च भूतमात्रमेव लोको नापरः कश्चित् पदार्थोऽस्तीति मतमपि निरस्तम्, स्वसंवेदनसिद्धेन ज्ञानेन धर्मिण आत्मन आवश्यकत्वात्, न हि भूतान्येव धर्मित्वेन परिकल्पयितुं युज्यन्ते, अचेतनत्वात्, न च कायाकारपरिणतानां चैतन्यं धर्म इति वाच्यम्, आत्माभावे कायाकारपरिणामस्यैव निर्हेतुकत्वेनासम्भवात्, सम्भवे तु नित्यं सत्त्वमसत्त्वं वा भवेत्, तस्माद्भूतव्यतिरिक्त आत्मा स्वीकार्यः, तस्मिंश्च सति सदसदनुष्ठानतः पुण्यपापे, ततश्च जगद्वैचित्र्यसिद्धिर्भवेन्नान्यथा । साङ्ख्यमतेऽपि प्रकृतेरचेतनत्वात् कार्यकर्तृत्वं नोपपद्यते, प्रतिबिम्बितः प्रकृत्यात्मैव करोतीति चेन्न, तस्याकर्तृत्वाभ्युपगमाभ्युपगमविरोधात्, न ह्येकान्तनित्यस्य कार्यकर्तृत्वं सम्भवति स्वरूपापरित्यागात्, परित्यागे चानित्यत्वापातेः प्रकृतेश्च नित्यत्वान्महदादिविकारा न स्युः, तस्या एकत्वादेकात्मवियोगे सति सर्वात्मना वियोगो भवेत्, एकसम्बन्धे वा सर्वात्मना प्रकृतिसंयोगो भवेन्न तु कस्यचित्, तथा चैकस्य मोक्षोऽपरस्य तु संसार इत्येवं जगद्वैचित्र्यं न स्यात् । नापि सत्कार्यवादो युक्तो मृत्पिण्डावस्थायां घटोत्पत्तेः प्राग् घटसम्बन्धिक्रियागुणव्यपदेशाभावात्, घटार्थिनाञ्च क्रियासु तदुत्पादिकासु प्रवृत्तेर्न कारणे कार्यं सदिति । एतेऽपि नानाविधैर्जलस्नानावगाहनादिकैः प्राण्युपमर्दकारिभिः कर्मसमारम्भैः कामादिभिश्च समाक्रान्ताः स्वदर्शनानुरागिण स्वात्मानमनार्यमार्गे पातयन्तोऽन्यांश्च पातयन्तो नित्यसंसारिणः ॥ ५५ ॥

ईश्वरकर्तृतावादनिराकरणायाह—

## सर्वमीश्वरसम्बन्धीति केचित्तन्नानवस्थानात्, प्रमाणादिभेदानुपपत्तेश्च॥५६॥

सर्वमिति, चेतनाचेतनात्मकस्य समस्तस्यापि जगत ईश्वरः कारणम्, प्रमाणञ्च तनुभुवनादिकमीश्वरकर्तृकम्, संस्थानविशेषवत्त्वात्, कूपदेवकुलादिवत्, तथा च सर्वमीश्वरकारणकम्, तत्र ये जीवानां धर्मा जन्मजरामरणव्याधिरोगशोकसुखदुःखादयः, ये चाजीवधर्मा मूर्त्तिमतां द्रव्याणां वर्णगन्धादयोऽमूर्त्तिमतां धर्माधर्माकाशादीनां गतिस्थित्यादयः सर्वेऽप्येत ईश्वरकृताः, आत्माद्वैतवादे वाऽऽत्म-

नियतिर्नियतित्वादेव नियतस्वभावा, न तु नानास्वभावा, तथा च तस्या एकत्वेन तत्कार्यमप्येकाकारं स्यात्, एकाकारकारणजन्यस्यानेकाकारत्वादर्शनात्, तस्मान्न नियतिर्युक्तिभिर्विचार्यमाणा घटते, नानावादाभ्युपगन्तृणा समानत्वमपि यदुक्तं तदपि प्रतीतिबाधितमेव, भिन्नभिन्नवादानां हि कथमेकता स्यात्, एकनियतिप्रयुक्तत्वादिति चेन्न जगद्वैचित्र्यासम्भवात्, तस्मान्न नियतिवादः श्रेयान्, तांश्च श्रद्धाना कामोपभोगेषु सक्ता एव दुष्पारसंसारपङ्कनिमग्ना न कदापि पारयायिन इति ॥ ५७ ॥

य कामभोगेष्वसक्तः संसारपारयायी भवति तथाविधमादर्शयति—

**क्षेत्रस्वजनादयो न त्राणायेति तत्त्यागाय कृताध्यवसायो विदितवेद्य ॥ ५८ ॥**

क्षेत्रेति, यो हि प्रव्रज्या प्रतिपन्न प्रविव्रजिषुर्वा जानीयादेवम्, यथा—जगत्यस्मिन् क्षेत्रवास्तुहिरण्यधनधान्यादिकं बाह्यतरं यद्वस्तु जातं तत्समोपभोगाय भविष्यति, अहमप्येषां योगक्षेमार्थं प्रभविष्यामीत्येवं सम्प्रधार्य तदासक्तो भवति, ततश्च कदाचित् नितरां दुःखोपादानमनिष्टं शिरोवेदनादिदुःखं जीवितविनाशकशूलादिर्वा यदि तस्य समुत्पद्यते तदा हे कामभोगाः ! यूयं मया पालिताः परिगृहीताश्च ततो यूयमपीदं दुःखं रोगं वा विभागशः परिगृह्णीत, अहमनेनातीवोद्विग्नो दुःखितः, अतोऽमुष्मान्मां प्रतिमोचयतेति भृशं प्रार्थ्यमानोऽपि न ते क्षेत्रादयस्तस्य त्राणाय शरणाय वा भवन्ति, तथा सुलालिता अपि राजाद्युपद्रवकारिभिर्ह्रियमाणा नेषदपि विचारयन्त्येतावन्तं कालं यावल्लालयितारमात्मानम्, तस्माद्भिन्नाः खल्वमी क्षेत्रादयोऽन्येभ्यश्चाहम्, एवंस्थिते किमेतेष्वन्येषु परभूतेषु विनश्वरेषु मम मूर्च्छेति, एवं मातापितृभगिन्यादयोऽपि सुलालिता अपि न दुःखान्मोचयितारः, न वाऽहं तेषां दुःखस्य मोचनाय समर्थः, सर्वे हि संसारिणः स्वस्वकृतकर्मोदयापादितदुःखाविभाज्यं, न ह्यन्यस्य दुःखमन्य कोऽपि प्रतिग्रहीतुं समर्थः, अन्यथा पुनर्वेदुं खेनासहेनात्यन्तपीडिताः स्वजनास्तदुःखमात्मनि कुर्युः, तथा च स्वस्वकृतागमकृतनाशौ युक्त्यसङ्गतौ प्रसज्येयाताम्, अतो यदेन कृतं तत्सर्वं स एवानुभवति, ततश्च सर्वोऽप्यसुमानेकको जायते क्षीणे चायुष्येकक एव म्रियते, तस्मादेते स्वल्वमी मत्तो ह्यन्यत्वरात्र, एभ्यश्चान्योऽहमस्मि, किमेषु मम मूर्च्छयेति च । तदेवं क्षेत्रस्वजनादावुत्पन्नवैराग्यो यस्त्यक्ष्यामीत्येवमध्यवसायं करोति स एव विदितवेद्यो भवति ॥ ५८ ॥

अनन्तरकर्तव्यमाह—

**स निष्किञ्चनो भिक्षुरारम्भनिवृत्तो निराशंसः सत्संयमी ॥ ५९ ॥**

**स इति,** यो विदितवेद्य प्रतिक्षण म्रियमाणे शरीरेऽपि ममतारहित संसारासारतां विज्ञाय परित्यक्तसमस्तगृहप्रपञ्चस्संयमी कामभोगार्थिनो गृहस्थशाक्यब्राह्मणादयः स्वत एव तदुपादानान् सचित्ताचित्तान्सार्थान् परिगृह्णन्ति, अन्येन च परिग्राहयन्ति परिगृह्णन्त समनुजानते, परिग्रहिण एते पापान्युपाददते त्रसस्थावरोपमर्दकं व्यापारं स्वतः कुर्वन्ति परेण कारयन्ति कुर्वतश्च समनुजानन्ति, तस्मादेते सावद्यानुष्ठानेभ्योऽनुपरता परिग्रहारम्भाच्च संयमानुष्ठानेनानुपस्थिताः, येऽपि कथञ्चिद्धर्मकरणायोत्थितास्तेऽप्युद्दिष्टभोजित्वात्सावद्यानुष्ठानपरत्वाच्च गार्हस्थ्यं नातिवर्तन्त इत्येवं परिज्ञाय

सम्यक् निष्किञ्चन आरम्भनिवृत्तश्च परिहृतरागद्वेषोऽल्पमल्पाहारश्च देहदीर्घसंयमयात्रार्थमेवाभ्यवहर्ता भिक्षुर्भमानेन विकृष्टतपसा जन्मान्तरे कामभोगावाप्तिर्भविष्यतीत्येवमाशंसारहितोऽनुकूलप्रतिकूलोपसर्गाणां समभावेन सहिष्णुस्ससंयमी भवति, सर्वपापेभ्यो विरतत्वात् ॥ ५९ ॥

संयमव्यवस्थितस्य कर्त्तव्यमाह—

## निर्दुष्टमिताहारभुग्निरुपधि शान्तिधर्मं प्रवक्ता ॥ ६० ॥

**निर्दुष्टेति,** एवं निखिलाशंसारहितो वेणुवीणाद्यनुकूलेषु रासभादिप्रतिकूलेषु शब्दादिष्वरक्तद्विष्ट आहारजातमपि परकृतपरनिष्ठितमुद्गमोत्पादनैषणाशुद्धं भिक्षाचर्याविधिना प्राप्तं केवलसाधुवेषावाप्तं सामुदायिकं मधुकरवृत्त्या सयत्नं स्तोकं स्तोकं गृहीतं यावन्मात्रेणाहारेण देहः क्रियासु प्रवर्त्तते यावत्या चाहारमात्रया संयमयात्रा प्रवर्त्तते तन्मितं बिलप्रवेशपन्नगभूतेनात्मना स्वास्वादमनास्वादयता सूत्रार्थपौरुष्युत्तरकाले प्राप्ते भिक्षाकालेऽवाप्तं परिभोगकाले उपभुञ्जीत, एवं पानाद्यपि, एवमाहारादिविधिज्ञो भिक्षुः परहितार्थप्रवृत्तः सम्यगुपस्थितेष्वनुपस्थितेषु वा श्रोतुं प्रवृत्तेषु शिष्येषु स्वपरहिताय न त्वन्नपानादिहेतोर्न वा कामभोगनिमित्तं शान्तिप्रधानं धर्मं प्राणातिपातादिभ्यो विरमणरूपं रागद्वेषाभावजनितमिन्द्रियनोइन्द्रियोपशमरूपमशेषद्वन्द्वोपरमरूपं सर्वोपाधिविशुद्धतालक्षणभावशौचरूपं कर्मगुरोरात्मनः कर्मोपनयनतो लघ्वयस्थासञ्जननलक्षणं धर्मं श्रावयेत्, एवंविधगुणवतो भिक्षोः समीपे धर्मं सुनिशम्य सम्यगुत्थानेनोत्थाय कर्मविदारणसहिष्णवः सर्वपापस्थानेभ्य उपरताः सर्वोपशान्ता जितकषाया अशेषकर्मक्षयं विधाय परिनिर्वृताः ॥ ६० ॥

अथ त्रयोदशभिः क्रियास्थानैः कर्मबन्धसद्भावात्कर्मबन्धं प्रतिपादयितुमाह—

## अर्थानर्थहिंसाऽकस्माद्दृष्टिविपर्यासमृषावादस्तेयाऽऽध्यात्मिकमानमित्रदोषमायालोभेर्यादण्डभेदादधर्मस्थानानि कर्मबन्धकानि ॥ ६१ ॥

**अर्थेति,** द्वे स्थाने संक्षेपेण क्रियावतां भवतः, धर्मस्थानमधर्मस्थानञ्चेति, उपशान्तं यत्तद्धर्मस्थानमनुपशान्तञ्चाधर्मस्थानम्, उपशमप्रधाने धर्मस्थाने येऽत्र महासत्त्वाः समासक्तोत्तरोत्तरशुभोदया वर्त्तन्ते, अल्पसत्त्वा विपर्यस्तमतयः संसाराभिष्वङ्गिणोऽधोऽधोगतयो वर्त्तन्तेऽधर्मप्रधाने स्थाने। अधर्मे स्थाने च वर्त्तमानानां नारकदेवमनुष्यतिरश्चां सातासातवेदनानुभविनां पापोपादानभूतानीमानि त्रयोदश क्रियास्थानानि भवन्ति। तत्र कश्चित् आत्मार्थं स्वजनगृहपरिवारमित्राद्यर्थञ्च त्रसस्थावरेषु स्वपरोपघातलक्षणं दण्डं पातयत्यन्येनापि प्राण्युपमर्दनक्रियां कारयति कुर्वन्तमनुजानाति, एतत्प्रत्ययिकं यत्कर्म बध्यते तदर्थदण्डप्रत्ययिकमुच्यते। यत्किञ्चित्कारणमन्तरेणैव त्रसाणां वनस्पत्यादिस्थावराणां प्राणिनां स्वभावतः क्रीडया व्यसनादिना वा प्राणव्यपरोपणं योगत्रिकेण कृतकारितानुमतिभिश्च विधत्ते तत्स्यानर्थदण्डप्रत्ययिकं कर्मबन्धः। यो मामयं घातयिष्यति मदीयान् पितृपुत्रादीनन्यान् वेत्येवं मत्वा पौरुषेण परान्मनुजादीन् सर्पसिंहादीन् वा व्यापादयति कृतकारितानुमतिभिः, स हिंसादण्डप्रत्ययिकं कर्म बध्नाति। यो ह्यारण्यपशुभिर्वृत्तेराशील क मृगान् द्रक्ष्यामि हननायेति मृगाध्यवसायी तदर्थं कच्छादिषु भ्रमन् तत्र मृगानवलोक्यान्यतरस्य वधार्थं समाकृष्य शरं निसृजति, तेन

यथान्य एव पद्यादिर्म्रियेत तथाऽन्योद्देशेन निक्षिप्तेनान्यस्य मरणादकस्माद्दण्डभाग् भवति । यो मातृपितृभार्याभगिनीपुत्रादिभिर्वसन् तत्पालनाकृते मित्रमेव दृष्टिविपर्यासादमित्रोऽयमिति मन्यमानो ग्रामघातादिविभ्रमे चौरूपमुद्वहन् भ्रान्तचेता अचौरमेव चौर इति मन्यमानश्च व्यापादयेत्स च हतो भवेत्तदा दृष्टिविपर्यासप्रत्ययिकं कर्माऽऽप्नोति । एषा पञ्चमी क्रियास्थानत्वेऽपि प्रायः परोपघातो भवतीति कृत्वा दण्डसमादानसञ्ज्ञा विज्ञेया । षष्ठादिषु बाहुल्येन न परव्यापादनं भवतीत्यतः क्रियास्थानसंज्ञोच्यते । यः कश्चित् स्वपक्षाभिनिवेशात् स्वस्य परस्य वा कृते सद्भूतार्थं निह्नुत्य चौरमपि नाहं मदीयो वा कश्चिच्चोर इति, तथाऽसद्भूतोद्भावनं परमचौरं चौर इति मृषावादं वदत्यन्येन वा वादयति वदतश्च समनुजानीते स मृषावादप्रत्ययिकं कर्माऽर्जयति । यः कश्चिदात्मपरनिमित्तमदत्तं परद्रव्यं गृह्णीयाद्ग्राहयेत् समनुजानीयाद्वा तस्य स्तेयप्रत्ययिकं कर्म सम्बध्यते । यो हि चिन्तोद्रेकप्रधानः परेणानुद्भावितदुःखोऽपि दुष्टचित्ततया स्वयमेव चिन्ताशोकसागरप्रविष्टोऽहर्निशं करतलविन्यस्तमुखः आर्तध्यानोपगतोऽपगतसद्विवेको निर्निमित्तमेव द्वन्द्वोपहतवद्ध्यायति क्रोधमानमायालोभप्रयुक्तत्वात् स आध्यात्मिकप्रत्ययकर्मभाक् । यश्च जात्यादिगुणोपेतो जातिकुलबलरूपतपःश्रुतलाभैश्वर्यप्रज्ञामदाख्यैरष्टभिर्मदस्थानैरन्यतरेण वा मत्तः परं जघन्योऽयं जातिकुलादिभिरित्येवं निन्दति, आत्मानं च समुत्कर्षयति स इहापि गर्हितोऽपरत्र गर्भाद्गर्भं गर्भाद्गर्भमेवमगर्भाद्गर्भमेवमगर्भात्तमं तीव्रतरं नरकान्तरं परिव्रजति, स्तब्धाविनयस्य च मानप्रत्ययिकं कर्म सम्बध्यते । यः प्रभुकल्पो मातापितृसुहृदादिभिर्वसन् तेषामन्यतमेनानाभोगतया यथाकथञ्चिद्वाचिके कायिके वाऽपराधे कृते महाशोषाभ्यासत्वे गुरुतरं दण्डं पातयति, यथा प्रभूते शीते शिशिरतावुदके तं पातयति ग्रीष्मे च प्रभूतोष्णतप्तादौ, वेत्रादिना ताडनेन चर्माणि लुम्पयति, तापयति तप्ततैलाकादिना, तदेवमल्पेऽप्यपराधे महादण्डप्रदातेहपरत्र चाहितो मित्रदोषप्रत्ययिकं कर्म समाचिनोति । यो गूढचारी मायाशीलः परेषां नानाविधैरुपायैर्विश्रम्भमुत्पाद्य पश्चाद्गलकर्तनग्रन्थिच्छेदादिभिरपकरोति, तथा लघीयानप्यात्मानं गुरुं मन्यते, आर्यदेशोत्पन्नोऽप्यात्मप्रच्छादनार्थमपरेषां भयोत्पादनार्थं म्लेच्छभाषाः प्रयुङ्क्ते परव्यामोहनार्थमपराविदिताभिः स्वयं कल्पिताभिर्भाषते, असाधुमात्मानं साधुं मन्यते, अन्यत् पृष्टोऽन्यदाचष्टे, न च मायया यत्कृतमकार्यं तदन्यस्मै कथयति, नाप्यात्मानं निन्दति, न चाऽऽलोचनार्हायास्मानं निवेद्य तदपायीकरणतयाऽभ्युत्तिष्ठते, न वा गुर्वादिभिरभिहितं प्रायश्चित्तमभ्युपगच्छति स इह लोकेऽविश्वास्यो भवति जन्मान्तरप्राप्तौ च सर्वाधमेषु यातनास्थानेषु नरकतिर्यगादिषु भूयो भूयः प्रत्यागच्छति, तदेवमस्य मायाप्रत्ययिकं कर्माऽनुपद्यते । ये पाषण्डिनो वयं प्रव्रजिता इति व्यक्तगृहवासाः कन्दमूलफलाहारा वृक्षमूलादौ निवसन्ति सर्वसावद्येभ्योऽनिवृत्ता द्रव्यतः कतिपयव्रतवर्तिनोऽपि सम्यग्दर्शनाभावादविरता अहं ब्राह्मणत्वान्न दण्डादिभिर्हन्तव्योऽन्ये तु शूद्रत्वाद्धन्तव्याः, शूद्रं व्यापाद्य प्राणायामं जपेत् किञ्चिद्वा दद्यात्, क्षुद्रसत्त्वानामनस्थिकानां शकटभरमपि व्यापाद्य ब्राह्मणं भोजयेदित्यादीनि मृषाभूतानि वाक्यानि प्रयुञ्जन्ति, तदेवं तेषां परपीडोपदेशदानतोऽतिमूढतयाऽसम्यक्प्रज्ञापितानामज्ञानावृतानामारम्भकर्तॄणां विषमदृष्टीनां न प्राणातिपातादिविरमणरूपं व्रतमस्ति, परतोऽयोनभिश्रत्वात्ते तीर्थिकाः स्त्रीप्रधानाः प्रव्रजिता अपि न भोगेभ्यो विरताः, मिथ्यादृष्टित्वादज्ञानान्धत्वात्सम्यग्विरतिपरिणामा-

सम्यङ् निरिकञ्चन आरम्भनिवृत्तश्च परिहृतरागद्वेषोऽनवद्यस्याहारस्य देहदीर्घसंयमयात्रार्थमेवाभ्यव-हर्त्ता भिक्षुरमेमानेन विकृष्टतपसा जन्मान्तरे कामभोगावाप्तिर्भविष्यतीत्येवमाद्याशंसारहितोऽनुकूलप्रतिकू-लोपसर्गाणां समभावेन सहिष्णुस्सत्संयमी भवति, सर्वपापेभ्यो विरतत्वात् ॥ ५९ ॥

संयमव्यवस्थितस्य कर्त्तव्यमाह—

## निर्दुष्टमिताहारभुङ्निरुपधि शान्तिधर्मं प्रवक्ता ॥ ६० ॥

**निर्दुष्टेति,** एष निखिलाशंसारहितो वेणुवीणाद्यनुकूलेषु रासभादिकर्कशेषु शब्दादिष्वरक्तद्विष्ट आहारजातमपि परकृतपरनिष्ठितमुद्गमोत्पादनैषणाशुद्धं भिक्षाचर्यविधिना प्राप्तं केवलसाधुवेषाश्रयं सामुदायिकं मधुकरवृत्त्या सर्वत्र स्तोकं स्तोकं गृहीतं यावन्मात्रेणाहारेण देहः क्रियासु प्रवर्त्तेत यावत्या चाहारमात्रया संयमयात्रा प्रवर्त्तेत तन्मितं बिलप्रवेशपन्नगभूतेनात्मना तत्स्वादमनास्वादयता सूत्रार्थ पौरुष्युत्तरकाले प्राप्ते भिक्षाकालेऽथवा परिभोगकाले उपभुञ्जीत, एवं पानाद्यपि, एवमाहारादिविधिज्ञो भिक्षुः परहितार्थप्रवृत्तः सम्यगुपस्थितेष्वनुपस्थितेषु वा श्रोतुं प्रवृत्तेषु शिष्येषु स्वपरहिताय न स्वन्न-पानादिहेतोर्न वा कामभोगनिमित्तं शान्तिप्रधानं धर्मं प्राणातिपातादिभ्यो विरमणरूपं रागद्वेषाभाव-जनितमिन्द्रियनोइन्द्रियोपशमरूपमशेषद्वन्द्वोपशमरूपं सर्वोपाधिविशुद्धतालक्षणभावशौचरूपं कर्मगुरो-र्लघ्मनः कर्मापनयनतो लघुत्वासञ्जननलक्षणं धर्मं भावयेत्, एवंविधगुणवतो भिक्षोः समीपे धर्मं मुनिशम्य सम्यगुत्थानेनोत्थाय कर्मविदारणसहिष्णवः सर्वपापस्थानेभ्य उपरताः सर्वोपशान्ता जितक-षाया अशेषकर्मक्षयं विधाय परिनिर्वृताः ॥ ६० ॥

अथ त्रयोदशभिः क्रियास्थानैः कर्मबन्धसद्भावात्कर्मबन्धं प्रतिपादयितुमाह—

## अर्थानर्थहिंसाऽकस्माद्दृष्टिविपर्यासमृषावादस्तेयाऽऽध्यात्मिकमानमित्रदोषमायालोभेर्यादण्डभेदादधर्मस्थानानि कर्मबन्धकानि ॥ ६१ ॥

अर्थेति, द्वे स्थाने संक्षेपेण क्रियावतां भवतः, धर्मस्थानमधर्मस्थानञ्चेति, उपशान्तं यत्तद्धर्म-स्थानमनुपशान्तञ्चाधर्मस्थानम्, उपशमप्रधाने धर्मस्थाने केचन महासत्त्वाः समासन्नोत्तरोत्तरशुभोदया वर्त्तन्ते, अल्पसत्त्वा विपर्यस्तमतयः संसाराभिष्वङ्गिणोऽधोऽधोगतयो वर्त्तन्तेऽधर्मप्रधाने स्थाने। अधर्मे स्थाने च वर्त्तमानानां नारकदेवमनुष्यतिरश्चां सातासातवेदनानुभविनां पापोपादानभूतानीमानि त्रयो-दश क्रियास्थानानि भवन्ति। तत्र यश्चित् प्राण्यात्मार्थं स्वजनगृहपरिवारमित्राद्यर्थञ्च त्रसस्थावरेषु स्वपरोपघातलक्षणं दण्डं पातयत्यन्येनापि प्राण्युपमर्दनक्रिया कारयति कुर्वन्तमनुजानाति, एवम्प्र-त्ययिकं यत्कर्म बध्यते तदर्थदण्डप्रत्ययिकमुच्यते। यत्किञ्चित्कारणमन्तरेणैव त्रसाणां वनस्पत्यादि-स्थावराणां प्राणिनां रागादितः क्रीडया व्यसनादिना वा प्राणव्यपरोपणं योगत्रिकेण कृतकारितानुमति-भिश्च विधत्ते तस्यानर्थदण्डप्रत्ययिकं कर्मबन्धः। यो मामयं घातयिष्यति मदीयान् पितृपुत्रादीन-न्यान् वैरेण मारितवानित्येव गत्वा पौरुषेण परान्मनुजादीन् सर्पसिंहादीन् वा व्यापादयति कृतकारितानुमतिभिः, स हिंसादण्डप्रत्ययिकं कर्म बध्नाति। यो ह्यारण्यपशुभिर्वर्त्तमानो वीरः क्व मृगान् द्रक्ष्यामि हननायेति मृगा-न्वेषणवादी हृदयं कच्छादिषु भ्रमन् यत्र मृगानवलोक्य प्रतरस्य वधार्थं समाकृष्य शरं निसृजति, तेन

परान्य एव पक्ष्यादिर्म्रियेत यदाऽन्योद्देशेन निक्षिप्तेनान्यस्य मरणादकस्माद्दण्डभाग् भवति। यो मातृपितृभार्याभगिनीपुत्रादिभिर्वसन् तत्पालकृते मित्रमेव दृष्टिविपर्यासादमित्रोऽयमिति मन्यमानो ग्रामघातादिविभ्रमे पौरुषमुद्वहन् भ्रान्तचेता अचौरमेव चौर इति मन्यमानश्च व्यापादयेत्स च हतो भवेत्तदा दृष्टिविपर्यासप्रत्ययिकं कर्मावाप्नोति। एषां पञ्चानां क्रियास्थानत्वेऽपि प्रायः परोपघातो भवतीति कृत्वा दण्डसमादानसंज्ञा विज्ञेया। पश्चात्विषु बाहुल्येन न परव्यापादनं भवतीत्यतः क्रियास्थानसंज्ञोच्यते। यः कश्चित् स्वपक्षाभिनिवेशात् स्वस्य परस्य वा कृते सद्भूतार्थनिह्नवं चौरमपि नाहं मदीयो वा कश्चिच्चोर इति, तथाऽसद्भूतोद्भावनं परमचौरं चौर इति मृषावादं वदत्यन्येन कथयति वदन्तं समनुजानीते स मृषावादप्रत्ययिकं कर्माऽर्जयति। यः कश्चित्स्वपरनिमित्तमदत्तं परद्रव्यं गृह्णीयाद्ग्राहयेत् समनुजानीयात्तदा तस्य स्तेयप्रत्ययिकं कर्म सम्बध्यते। यो हि चित्तोत्प्रेक्षाप्रधानः परेणानुक्षाविततुष्टोऽपि दुष्टचित्ततया स्वयमेव चिन्ताशोकसागरप्रविष्टोऽहर्निशं करतलविन्यस्तमुख आर्तध्यानोपगतोऽपगतसद्विवेको निर्निमित्तमेव द्वन्द्वोपहतवद्ध्यायति क्रोधमानमायालोभप्रयुक्तत्वात् स आध्यात्मिकप्रत्ययकर्मभाक्। यश्च जात्यादिगुणोपेतो जातिकुलबलरूपतपःश्रुतलाभैश्वर्यप्रज्ञामदाख्यैरष्टभिर्मदस्थानैरन्यतरेण वा मत्तः परं जघन्योऽयं जातिकुलादिभिरित्येवं निन्दति, आत्मानं च समुत्कर्षयति स इहापि गर्हितोऽपरत्र गर्भाद्गर्भं गर्भाद्गर्भं जन्मगर्भाद्गर्भं तीव्रतरं नरकान्तरं परिव्रजति, तथाविधस्य च मानप्रत्ययिकं कर्म सम्बध्यते। यः प्रभुकल्पो मातापितृसुहृदादिभिर्वसन् तेषामन्यतमेनानाभोगतया यथाकथञ्चिद्वाचिके कायिके वाऽपराधे कृते महाक्रोधाध्मातस्तस्मै गुरुतरं दण्डं पातयति, यथा प्रभूते शीते शिशिरवाताहते उदके तं पातयति ग्रीष्मे च प्रभूतोष्णजलादौ, वेत्रादिना ताडनेन चर्माणि लुम्पयति, तापयति तप्तशलाकादिना, तदेवमल्पेऽप्यपराधे महादण्डप्रदातेहपरत्र चाहितो मित्रदोषप्रत्ययिकं कर्म समाचिनोति। यो गूढचारी मायाशीलः परेषां नानाविधैरुपायैर्विश्रम्भमुत्पाद्य पश्चाद्गलकर्तनग्रन्थिच्छेदादिभिरपकरोति, तथा लघीयानप्यात्मानं गुरुं मन्यते, आर्यदेशोत्पन्नोऽप्यात्मप्रच्छादनार्थमपरेषां भयोत्पादनार्थं चानार्यभाषाः प्रयुङ्क्ते परव्यामोहनार्थमपराविदितार्थाभिः स्वयं कल्पिताभिर्भाषते, असाधुमात्मानं साधुं मन्यते, अन्यत् पृष्टोऽन्यदाचष्टे, न च मायया यत्कृतमकार्यं तदन्यस्मै कथयति, नाप्यात्मानं निन्दति, न वाऽऽलोचनार्होऽयमात्मानं निवेद्य तदकार्यकरणतयाऽभ्युत्तिष्ठते, न वा गुर्वादिभिरभिहितं प्रायश्चित्तमभ्युपगच्छति स इह लोकेऽविश्वास्यो भवति जन्मान्तरयायी च सर्वाधमेषु यातनास्थानेषु नरकतिर्यगादिषु भूयो भूयः प्रत्यागच्छति, तदेवमस्य मायाप्रत्ययिकं कर्मानुषज्यते। ये पाषण्डिनो वयं प्रव्रजिता इति त्यक्तगृहवासाः कन्दमूलफलाद्याहारा वृक्षमूलादौ निवसन्ति सर्वसावद्येभ्योऽनिवृत्ता द्रव्यतः कतिपयव्रतवर्तिनोऽपि सम्यग्दर्शनाभावादविरता अहं ब्राह्मणत्वान्न दण्डादिभिर्हन्तव्योऽन्ये तु शूद्रत्वाद्धन्तव्याः, शूद्रं व्यापाद्य प्राणायामं जपेत् किञ्चिद्वा दद्यात्, क्षुद्रसत्त्वानामनस्थिकानां शकटभरमपि व्यापाद्य ब्राह्मणं भोजयेदित्यादीनि मृषाभूतानि वाक्यानि प्रयुञ्जन्ति, तदेवं तेषां परपीडोपदेशनतोऽतिमूढतयाऽसम्बद्धप्रलापिनामज्ञानावृतानामात्मम्भरीणां विषमदृष्टीनां न प्राणातिपातादिविरमणरूपं व्रतमस्ति, परमार्थानभिज्ञत्वात्ते तीर्थिकाः स्त्रीप्रधानाः प्रव्रजिता अपि न भोगेभ्यो विरताः, मिथ्यादृष्टित्वादज्ञानान्धत्वात्सम्यग्विरतिपरिणाम-

भावात्, ते च स्वायुषः क्षये कालं कृत्वा विकृष्टतपसोऽपि सन्तोऽन्यतरेष्वासुरीयेषु किल्बिषिकेषूत्पत्स्यन्ते पुनर्मूकभावेनोत्पद्यन्ते, जातिमूका वा भवन्ति, अत एते लोभप्रत्ययिककर्मभाजो भवन्ति। एतानि द्वादशक्रियास्थानानि मिथ्यादर्शनाश्रितानि संसारकारणानीति कृत्वा सम्यग्यथावस्थितवस्तुस्वरूपनिरूपणतो ज्ञपरिज्ञया विज्ञाय साधुः प्रत्याख्यानपरिज्ञया परिहरेत्। यस्य प्रवचने संयमे वा स्थितस्यात्मभावार्थं मनोवाक्काये संवृतस्य पञ्चसमितिभिः समितस्य त्रिगुप्तिभिर्गुप्तस्य नवब्रह्मचर्यगुप्त्युपेतब्रह्मचारिणः सोपयोगं गतिस्थितिनिषीदनत्वग्वर्तनादिकं कुर्वाणस्य सोपयोगमेव सर्वाः क्रियाः पतद्ग्रहग्रहणादिका विदधानस्य सूक्ष्माक्षिपक्ष्मसंचलनरूपादिका ऐर्यापथिका नाम क्रिया भवति या केवलिनापि क्रियते योगवतो जीवस्य क्षणमात्रमपि निश्चलत्वासम्भवात्, तया च यत्कर्म तदैर्यापथिकम्, अकषायिणस्तत्क्रियया हि यत्कर्म बध्यते तत्प्रथमसमय एव बद्धं स्पृष्टञ्च, कषायाभावेन साम्परायिकस्येव स्थित्यभावात्, द्वितीयसमयेऽनुभूयते तृतीयसमये च निर्जीर्यते, तच्च कर्म प्रकृतितः सातवेदनीयं स्थितितो द्विसमयस्थितिकमनुभावतः शुभानुभावमनुत्तरोपपातिकदेवसुखातिशायि प्रदेशतो बहुप्रदेशमस्थिरं च बहुव्ययञ्च। आगामिनि तृतीयसमये तत्कर्मापेक्षयाऽकर्मतापि, एवं तावद्वीतरागस्यैर्यापथिकं कर्म सम्बध्यते। तदन्ये प्राणिनः साम्परायिकबन्धभाजो द्वादशक्रियास्थानेषु वर्तन्ते। एवं विचित्रक्षयोपशमात्प्राप्तप्रज्ञा निजाभिप्रायविधाभिप्रायात् पापश्रुताध्ययनं परलोकनिष्पिपासवो विषयतृषिता इहलोकमात्रप्रतिबद्धाः कुर्वन्ति, ताश्च विद्या उत्पातस्वप्नान्तरिक्षाङ्गस्वरलक्षणमन्त्रेन्द्रजालपाकशासनधनुर्वेदायुर्वेदज्योतिषादयः, एता अधीयाना क्षेत्रभाषार्या अपि मिथ्यात्वोपहतबुद्धयोऽनार्यकर्मकारित्वादनार्याः स्वायुषः क्षये कालं कृत्वाऽऽसुरीयकेषु किल्बिषिकादिषूत्पन्नाः कर्मशेषतया पुनरेडमूकत्वेनाव्यक्तभाषिणस्तमस्त्वेनान्धतया मूकतया वा प्रत्यागच्छन्ति ॥ ६१ ॥

अपराणि चतुर्दशासदनुष्ठानानि प्रकाशयति—

**अनुगामुकोपचरकप्रातिपथिकसन्धिच्छेदकग्रन्थिच्छेदकौरभ्रिकसौकरिकवागुरिकशाकुनिकमात्स्यिकगोघातकगोपालकशौवनिकशौवनिकान्तिकानि पापस्थानानि ॥ ६२ ॥**

अनुगामुकेति, भोगाभिलाषी संसारस्वभावानुवर्ती साम्प्रतापेक्षी स्वजनगृहकुटुम्बाद्यर्थं चतुर्दशासदनुष्ठानानि विधत्ते—यथा कश्चित् परस्य धावतोऽनुगामुकभावं प्रतिपद्य तं बहुभिरुपायैर्विश्वासे पातयित्वा भोगार्थी मोहान्धो विवक्षितवञ्चनावसरापेक्षी लब्ध्वाऽवसरं तस्यासौ हन्ता छेत्ता व्यापादयिता भूत्वाऽपहृत्य सर्वस्वं भोगक्रिया विधत्ते तस्येदं कर्माऽऽनुगामुकमुच्यते। यस्त्वपकर्तव्याभिसन्धिना रिक्थवत उपचरकभावं प्रतिज्ञाय पश्चात्तं विनयोपचारैरुपचर्य विश्रम्भे पातयित्वा तद्द्रव्यार्थी तस्य हननछेदनव्यापादनादीनि विधत्ते तस्येदमनुष्ठानमौपचारिकम्। अपरः कश्चित्सम्मुखभावं प्रतिपद्यापरस्यार्थवतः प्रतिपथे स्थित्वा तस्यार्थवतो विश्रम्भतो हननादि करोति, कर्मेदं तस्य प्रातिपथिकम्। विरूपकर्मणा जीवितार्थी कश्चित् सन्धिच्छेदकभावं प्रपन्नः प्राणिनां हननादि करोति तस्येदं कर्म सन्धिच्छेदकम्। इतरो ग्रन्थिच्छेदकभावमवाप्य तमेवानुयाति करोति च तथा, तच्च कर्म ग्रन्थिच्छेदकम्।

अपरोऽधर्मकर्मवृत्तिर्मेषादीनामूर्णया वा मांसादिना वाऽऽत्मानं वर्त्तयामीति तद्भावमापन्नो मेषमन्यं वा त्रसं प्राणिनं स्वमांसपुष्ट्यर्थं हननादि करोति तत्कर्मौरभ्रिकम् । योऽपि सौकरिकश्वपचचाण्डालादिः सूकरादीन् स्वप्रयोजनाय हननादि कुर्यात् तत्कर्म सौकरिकम् । कश्चित्क्षुद्रसत्त्वो लुब्धकस्य प्रतिपद्य वागुरया हरिणादिकं स्वजनाद्यर्थं व्यापादयति तत्कर्म वागुरिकम् । अधमोपायजीवी कश्चिच्छकुन्यादि-मांसाद्यर्थं तस्य हननादिक्रियामारचयति तत्कर्म शाकुनिकम् । अधमाऽधमः कश्चिन्मात्स्यिकभावमापन्नो मत्स्यमन्यं वा जलचरं हन्यात्तत्कर्म मात्स्यिकम् । गोघातकभावमासादितः कोऽपि कुपितः सन् गोहननादि करोति कर्मेदं गोघातकम् । यो गोपालकभावं प्रपन्नोऽन्यां गां कुपितो हन्यात्तत्कर्म गोपालकम् । कश्चिज्जघन्यकर्मकारी सारमेयपापर्द्धिभावमवाप्य तमेव श्वानं तेन वा मृगादित्रसं व्यापादयेत्तत्कर्म शौवनिकम् । कश्चिच्च क्षुद्रसारमेयपरिग्रहं प्रतिपद्य मनुष्यं वा कञ्चन पथिकमभ्यागतमन्यं वा मृगसूकरा-दित्रसं हननादि विरचयेत्तदिदं कर्म शौवनिकान्तिकमिति । एभिः क्रूरकर्मभिरात्मानं वर्त्तयन्नधर्मपक्षा-पन्नोऽनन्तसंसारं दु सहान् क्लेशाननुभवतीत्यनार्यमिदमधर्मस्थानम् ॥ ६२ ॥

अथ द्वितीयं धर्मोपादानभूतं पक्षमाह—

## अनारम्भिणो यतय उग्रविहारिण एकचर्याश्च धर्मिणः ॥ ६३ ॥

**अनारम्भिण इति,** ये सर्वसावद्येभ्य सर्वथा विरता धर्मेणैवात्मनो वृत्तिं परिकल्पयन्ति तथा सुशीलाः सुव्रता यतय समिता गुप्ताः सर्वगात्रपरिकर्मविप्रमुक्ता उग्रविहारिणः प्रव्रज्यापर्याय-मनुपाल्याबाधारूपे रोगातङ्के समुत्पन्नेऽनुत्पन्ने वा भक्तप्रत्याख्यानं विदधति, किं बहुनोक्तेन यत्कृतेऽ-यमयोगोलकवन्निरास्वादः करवालधारामार्गवद्दुरध्यवसायः श्रमणभावोऽनुपाल्यते सम्यग्दर्शनज्ञान-चारित्राख्यं समर्थमनुपाल्याप्याहतमेकमनन्तं मोक्षकारणं केवलज्ञानमाप्नुवन्ति तदूर्ध्वं सर्वदुःखविमोक्ष-लक्षणं मोक्षमवाप्नुवन्ति, एके चैवञ्चर्या एकेन शरीरेणैकस्माद्वा भवात् सिद्धिगतिं गन्तारो भवन्ति, अपरे तथाविधपूर्वकर्मावशेषे सति तत्कर्मवशगा कालं कृत्वाऽन्यतमेषु वैमानिकेषु देवेषूत्पद्यन्ते, तत्रा पीन्द्रसामानिकत्रायस्त्रिंशलोकपालपार्षदात्मरक्षप्रकीर्णेषु नानाविधसमृद्धिषु भवन्ति न त्वाभियोगिक-किल्बिषिकादिषु । आगामिनि च काले शोभनमनुष्यभवसम्पदुपेता सद्धर्मप्रतिपत्तारश्च भवन्ति । तदेतत्स्थानमेकान्ततस्सम्यग्भूतमार्यं सुसाध्विति धर्मस्थानम् ॥ ६३ ॥

अथ धर्मभूयिष्ठं मिश्रपक्षमाचष्टे—

## स्थूलपरिग्रहनिवृत्तास्तत्त्वज्ञाः श्रमणोपासका मिश्राः ॥ ६४ ॥

**स्थूलेति,** एते धर्माधर्माभ्यामुपेता अपि गुणभूयिष्ठे पतितस्य दोषस्य गौणत्वाद्धार्मिकपक्षेऽ-वतरन्ति, एते हि शुभकर्माणो धार्मिकवृत्तय सूक्ष्मपरिग्रहारम्भादितोऽनिवृत्ताः स्थूलाच्च सङ्कल्पकृता-न्निवृत्ता नरकादिगमनहेतुभ्यः सावद्येभ्यो यन्त्रपीडननिर्लाञ्छनकपीवलादेर्निवृत्ता क्रयविक्रयादेरनिवृत्ताः श्रमणोपासनतोऽधिगतजीवाजीवस्वभावा अवगतपुण्यपापाः परिज्ञातबन्धमोक्षस्वरूपा धर्मादच्युता मेरु-रिव निष्प्रकम्पाः सुदृढमार्हते दर्शनेऽनुरक्ताः, मौनीन्द्रदर्शनाधाततो सता परितुष्टमानसाः सदोद्घाटित-गृहद्वारा अनवरतं श्रमणानुगुणकविहारिणो निर्ग्रन्थान् प्रासुकेनैषणीयेनाशनादिना पीठफलकशय्यासंस्तार-

यतिना च प्रतिलाभयन्त शीलव्रतगुणव्रतप्रत्याख्यानपौषधोपवासैर्बहूनि वर्षाण्यात्मानं भावयन्तस्तिष्ठन्ति, तदेवमेते प्रभूतकालमणुव्रतगुणव्रतशिक्षाव्रतानुष्ठायिनः साधूनामौषधवस्त्रपात्रादिनोपकारिणो यथाशक्ति सदनुष्ठायिनः उत्पन्ने कारणेऽनुत्पन्ने वा भक्तं प्रत्याख्यायाऽऽलोचितप्रतिक्रान्ता समाधिप्राप्ताः सन्तः कालं कृत्वाऽन्यतरेषु देवेषूत्पद्यन्ते, ततोऽपि च्युताः सुमानुषभावं प्रतिपद्य तेनैव भवेनोत्कृष्टतः सप्ताष्टसु वा भवेषु सिद्ध्यन्तीति ॥ ६४ ॥

अधर्मपक्षस्यानन्तसंसारतामाह—

## विविधप्रज्ञादिनोऽतिदुःखिनः संसाराव्यभिचारिणः ॥ ६५ ॥

विविधेति, त्रिषष्ट्युत्तरत्रिशतपरिमाणाः प्रावादुकाः सर्वेऽपि न मोक्षाङ्गभूतमहिंसां प्रतिपद्यन्ते, तेषु सम्यग्दर्शनादिकस्योपायस्याभावात् संसाराभावमिच्छन्तोऽपि न मुच्यन्ते मिथ्यात्वादित्वाच्च सांख्यादेरेव शाक्यैर्दशधर्मपथानामेव नैयायिकैरभिषेचनोपवासादीनामेव वैदिकैर्हिंसाया एव मोक्षाङ्गतयोक्तेः । एवं हि नानाप्रज्ञाः सर्वज्ञप्रणीतागमानाश्रयणात्, सर्वज्ञप्रणीतागमस्य हेतुपरम्परयाऽनादित्वेन तदभ्युपगन्तृणामेव प्रज्ञत्वात्, तेषां विविधप्रज्ञता च सांख्यैरेकान्तेन नित्यवादाश्रयणात्, बौद्धैरेकान्तेनानित्यवादाश्रयणात्, नैयायिकवैशेषिकैराकाशादीनामेकान्तेन नित्यत्वस्य घटपटादीनाञ्चैकान्तेनानित्यत्वस्याश्रयणात्सामान्यविशेषयोरेकान्तभेदाश्रयणाच्च स्फुटैव । तथा चाहिंसैव यत्र सम्पूर्णा तत्रैव परमार्थतो धर्म इति निश्चिते ये केचनाविदितपरमार्था ब्राह्मणादयः प्राण्युपतापकारिणा प्रकारेण धर्मं परेषां व्याचक्षते त आगामिनि काले स्वशरीरच्छेदाय भेदाय च आपद्यन्ते, बहूनि जन्ममरणादीनि प्राप्नुवन्ति तेजोवायुषु घोरैर्गोत्रोद्वलनैः कलकलीभावभाजो नानाविधदण्डभाजो भवन्ति न च ते लोकाग्रस्थानमाक्रमिष्यन्ति न तेऽष्टप्रकारेण कर्मणा मोक्ष्यन्ते । एवञ्च द्वादशक्रियास्थानेषु वर्तमाना जीवा न कदापि सिद्धाः सिद्ध्यन्ति सेत्स्यन्ति वा, न बुबुधिरे बुध्यन्ते भोत्स्यन्ते वा, न मुमुचुर्मुच्यन्ति मोक्ष्यन्ते वेति ॥ ६५ ॥

अथ कर्मक्षपणायोद्यतेन साधुना द्वादशक्रियास्थानपरिहारेणान्त्यक्रियास्थानसेविना सदाऽऽहारगुप्तेन भवितव्यम्, धर्माधारभूतशरीरस्याहाराधारत्वात्, स चाहार उद्देशकादिदोषरहितो ग्राह्य, स च प्रायः प्रसिद्ध्या कायानिति शुद्धाशुद्धभेदेन तं निरूपयितुमाह—

## चतुर्विधा वनस्पतिकायाः पृथिव्याद्याहारिणः ॥ ६६ ॥

चतुर्विधेति, अग्रमूलपर्वस्कन्धबीजलक्षणोत्पत्तिभेदविशिष्टा हि वनस्पतयः, शाल्यादीनां हि बीजमग्रे उत्पद्यते, अतस्तेऽग्रबीजाः, अथवाऽग्राण्येव येषामुत्पत्तौ कारणतामापद्यन्ते तेऽग्रबीजाः, कोरण्टादयः । आर्द्रकादयो मूलबीजाः, इक्ष्वादयः पर्वबीजाः, सल्लक्यादयः स्कन्धबीजाः, एतेषां स्वस्वबीजान्येवोत्पत्तिकारणम्, तादृशकर्मोदयवशादेवोत्पित्सवो वनस्पतावुत्पद्यमाना अपि पृथिवीयोनिका भवन्ति, आधारमन्तरेणोत्पत्तेरभावात्, ते पृथिवीमाश्रित्य तत्रैवोर्ध्वक्रमणलक्षणवृद्धिमन्तश्च, ते हि यथाविधकर्मवशगा वनस्पतिकायादागत्य तत्रैव पुनरप्युत्पद्यन्ते, सचित्ताचित्तमिश्रादिबहुप्रकारासु भूमिषु वृक्षतया विवर्तन्ते, ते च तत्रोत्पन्नाः पृथ्वीनां स्नेहमाददते स एव च तेषामाहारः,

एवमप्कायतेजोवायुवनस्पतीनामपि भाव्यम् । नानाविधानां त्रसानामपि प्राणिनां शरीरं स्वकायेनावष्टभ्य प्रासुकीकुर्वन्ति, एवमाहार्य स्वकायत्वेन परिणमय्य सरूपतां नीत्वा तच्छरीरं तन्मयतां प्रतिपद्यते, एवं तावत्पृथिवीयोनिका वृक्षाः, वनस्पतियोनिकेष्वेवापरे वनस्पतयस्तथाविधकर्मोदयादुत्पद्यन्ते, एवं वृक्षावयवेष्वपि परे वनस्पतिरूपा भवन्ति तेषामाहारः स्वयोनिभूतवनस्पतिशरीरं पृथिव्यप्तेजोवाय्वादीनां शरीरञ्च, एवमध्यवनस्पत्यादावपि द्रष्टव्यम् ॥ ६६ ॥

अमुमेव न्यायमन्यत्राप्यतिदिशति—

## एवं पृथिवीकायादयोऽपि स्वाधाराणां शरीरम् ॥ ६७ ॥

**एवमिति,** पूर्वोक्तप्रकारेण स्वकृतकर्मवशगा नानाविधत्रसस्थावराणां शरीरेषु सचित्तेष्वचित्तेषु वा पृथिवीत्वेनोत्पद्यन्ते, तथाऽप्काय आगत्य नानाविधानां दर्दुरादित्रसानां हरितलवणादिस्थावराणां सचित्ताचित्तभेदभिन्नेषु शरीरेषु जीवा अप्कायत्वेनोत्पद्यन्ते, अप्कायशरीरस्य वातयोनिकत्वादूर्ध्वं गतेष्वपि वायुपूर्ध्वभागी भवत्यप्कायः, अधस्ताद्गतेषु च तद्वशादधोभागी भवति, यथावश्यायहिमादयः, तथा तेजस्काया अपि सचित्ताचित्तमिश्रेषु त्रसस्थावराणां शरीरेषु प्रादुर्भवन्ति, एवं वायुकाया अपि, ये यत्रोत्पन्नास्ते तेषां नानाविधानां त्रसस्थावराणां स्नेहमाहारयन्ति, एवं विकलेन्द्रिया अपि, एषां स्वयोनिभूतसचित्तमचित्तगतानाञ्च मांसचर्मरुधिरादिकमाहारं भवतीति ॥ ६७ ॥

गर्भव्युत्क्रान्तमनुजानामाहारमाह—

## उभयोरेकस्याऽऽहारो नवनीतादयश्च मनुजानाम् ॥ ६८ ॥

**उभयोरिति,** शुक्राधिकः पुरुषस्य शोणिताधिकः स्त्रियास्तयोः समता नपुंसकस्य कारणतां प्रतिपद्यते, तदुभयमप्यविध्वस्तम्, स्त्रियो वामा कुक्षिः पुरुषस्य दक्षिणा षण्डस्य मिश्राऽऽश्रयः, योनौ बीजे चाविध्वस्ते उत्पत्तेरवकाशः, नारी यदा पञ्चपञ्चाशिका पुरुषश्च सप्तसप्ततिकस्तदा तयोर्विध्वंसः । तथा द्वादशमुहूर्तानि यावच्छुक्रशोणिते अविध्वस्तयोनिके भवतः, तत ऊर्ध्वं ध्वंसमुपगच्छत इति । तत्र वेदोदये पूर्वकर्मनिर्वर्तितायां योनौ रताभिलाषजनितेन संयोगेन तच्छुक्रशोणिते अवलम्ब्य जीवास्तैजसकार्मणाभ्यां शरीराभ्यां कर्मरज्जुसन्दानितास्तत्रोत्पद्यन्ते तत्र जीवा उभयोरपि स्नेहमाहार्य स्वकर्मविपाकेन यथास्वं स्त्रीपुंनपुंसकभावेनोत्पद्यन्ते, तदुत्तरकालं स्त्रियाऽऽहारितस्याहारस्य स्नेहमाददति तत्स्नेहेन च क्रमोपचयात्, कललबुद्बुदादिरूपेण निष्पद्यन्ते तदेवमनेन क्रमेण तदेकदेशेन वा मातुराहारमोजसा मिश्रेण वा लोमभिर्वाऽऽनुपूर्व्येणाहारयन्ति, क्रमेण वृद्धिमुपेता गर्भनिष्पत्तिमनुप्रपन्नास्ततो मातुः कायात् पृथग्भवन्तस्तद्योनेर्निर्गच्छन्ति, ततस्ते पूर्वाभ्यासादाहाराभिलाषिणो मातुः स्तन्यमाहारयन्ति क्रमेण प्रवृद्धा नवनीतदध्योदनादि भुञ्जते तथाऽऽहारत्वेनोपानतान् त्रसान् स्थावरांश्च प्राणिन आहारयन्ति, एवं तिर्यग्योनिका अपि किञ्चिद्विशेषेण भाव्याः ॥ ६८ ॥

तदेवमेते आहारेष्वगुप्ता अत एवैषां कर्मबन्धोऽवश्यम्भावीति तत्प्रत्याख्यानमुत्तरगुणसम्पादनाय सम्प्रति प्रदर्शयति—

## अप्रतिहतप्रत्याख्यातपापकर्मा कर्मबन्धकः ॥ ६९ ॥

अप्रतिहतेति, आत्मा ज्ञानादिमिथ्यात्वाविरतिप्रमादकषाययोगानुगतः स्वभावादेवाप्रत्याख्यानी भवति, स एव च कुतश्चिन्निमित्तात् प्रत्याख्यान्यपि भवति, तथाऽक्रियाकुशलो मिथ्यात्वोदयसंस्थितोऽपरप्राणिदण्डो रागद्वेषकलुषितो हिताहितप्राप्तिपरिहारविकलो भावसुप्तोऽप्रत्याख्यानक्रियत्वादेवाविचारितमनोवाक्कायश्च भवति, तदेवम्भूतो निर्विवेकतया पटुविज्ञानरहित स्वप्नमपि न पश्यति तस्य चाव्यक्तविज्ञानस्य स्वप्नमप्यपश्यत पाप कर्म बध्यते । नन्वव्यक्तविज्ञानस्य कथ पाप कर्म बध्यते, पापकर्म हि कर्माश्रवद्वारभूतैर्मनोवाक्कायैर्बध्यते न त्वेकेन्द्रियविकलेन्द्रियादेः कर्मबन्धसम्भवः, प्राणिघातकस्य मनोवाक्कायव्यापारस्य तत्राभावात्, अन्यथा मुक्तानामपि कर्मबन्धो भवेत्, तस्माज्ञाव्यक्तविज्ञानस्य कर्म बध्यते किन्तु प्रस्फुटविज्ञानस्येति चेन्न, अप्रतिहतप्रत्याख्यातपापकर्मत्वात्, प्रतिहत–विघ्नित प्रत्याख्यात-नियमित पाप कर्म येन स तथा, अतथाविधश्चाप्रतिहतप्रत्याख्यातपापकर्मा, तत्सद्भावादेकेन्द्रियविकलेन्द्रियादीना मिथ्यात्वाविरतिप्रमादकषाययोगानुगतत्व तद्भावात् प्राणातिपातादिदोषवन्तस्ते कथ न स्युः, तथाविधदोषवत्तया चाव्यक्तविज्ञाना अपि सन्तोऽस्वप्नावस्थायामपि कर्मबन्धका एव यथा हि वधकोऽवसरापेक्षी वध्यस्य व्यापत्तिमकुर्वाणोऽप्यमित्रभूतो भवत्येवं तथापि बालोऽस्पष्टविज्ञानो निवृत्तेरभावेन योग्यतया सर्वेषा प्राणिना व्यापादको भवत्येव, तदप्रत्ययिकेन च कर्मणा बध्यत एव । एव मृषावादादत्तादानमैथुनपरिग्रहेष्वपि वाच्यम् । तथा चाप्रतिहतप्रत्याख्यातक्रिय आत्मा पापानुबन्धी, सदा षड्जीवनिकायेषु प्रशठव्यतिपातचित्तदण्डत्वात्, स्वपरावसरापेक्षितया कदाचिदव्यापादयन्नपि राजादिवधकवधाऽऽसौ वधपरिणामादनिवृत्तत्वादव्यत्यामित्रभूतस्तथाऽऽत्मापि विरतेरभावात्सर्वेष्वपि सत्त्वेषु नित्य प्रशठव्यतिपातचित्तदण्ड, यत एव तस्मात् पापानुबन्धीति पञ्चावयवता । ननु सर्वे प्राणिनः सर्वेषामपि सत्त्वानां प्रत्येकममित्रभूता इत्यसिद्धम्, चतुर्दशरज्ज्वात्मके लोके प्राणिनामनन्तत्वेन देशकालस्वभावविप्रकृष्टत्वेन न दृष्टा न श्रुता न वा प्रातिभेन स्वयमेव विज्ञाता इति कथ तद्विषयस्तस्यामित्रभावः कथ वा प्रत्येक वध प्रति चित्तसमाधान भवेत्, न चासौ तान् प्रति नित्य प्रशठव्यतिपातचित्तदण्डो भवतीति चेन्नैवम्, तथापि देशकालस्वभावविप्रकृष्टेषु तेष्वमुक्तवैरत्वात्, अस्याविरतिप्रत्ययत्वात्, एवञ्च य इमे पृथिवीकायादयोऽसंज्ञिन प्राणिनः तेऽप्यहर्निशममित्रभूता मिथ्यासंस्थिता नित्य प्रशठव्यतिपातचित्तदण्डा दुःखोत्पादनघातपरितापनपरिच्छेदादेरप्रतिविरता असंज्ञिनोऽपि सन्तोऽहर्निश सदा प्राणातिपाते कर्त्तव्ये तद्योग्यतया तदसम्प्राप्तावपि प्राणघातकत्वदुपाख्यायन्ते किमुत संज्ञिनः ॥ ६९ ॥

ननु संज्ञित्वमसंज्ञित्व च भव्यत्वाभव्यत्ववन्नियतरूपम्, न तु संज्ञिनोऽसंज्ञिन, असंज्ञिनो वा संज्ञिनो भवन्तीत्याशङ्कायामाह—

**संज्ञित्वासंज्ञित्वे न नियते, तथाविधकर्मपरिणामात्, एकस्मिन्नेव भवे उभयदर्शनाच्च ॥ ७० ॥**

संज्ञित्वेति, पुरुषः पुरुष एव पशुरपि पशुरेव भवतीति वेदान्तिमतवन्न संज्ञित्वमसंज्ञित्वञ्च नियतम्, भव्यत्वाभव्यत्ववदनयोर्न व्यवस्थानियमः, एते हि कर्मायत्ते, तथाभूतकर्मपरिणामात्

संज्ञिनोऽप्यसंज्ञिनः, असंज्ञिनोऽपि संज्ञिनो भवन्ति, एकयोनयोऽपि खलु जीवाः पर्याप्त्यपेक्षया यावन्मन पर्याप्तिर्न निष्पद्यते तावदसंज्ञिनः, करणतः सन्त पश्चात् संज्ञिनो भवन्ति, अन्यजन्मापेक्षया त्वेकेन्द्रियादयोऽपि सन्त पश्चान्मनुष्यादयो भवन्ति, वेदान्तिमतन्तु प्रत्यक्षेणैव व्यभिचरितम्, संज्ञ्यपि कश्चिन्मूर्च्छाद्यवस्थायामसंज्ञित्व प्रतिपद्यते तदपगमे च पुनस्संज्ञित्वमिति दर्शनात् । यथा प्रतिबुद्धो निद्रोदयात् स्वपिति, सुप्तश्च प्रतिबुध्यत इत्येव स्वापप्रतिबोधयोरन्योऽन्यानुगमन तथा संज्ञ्यसंज्ञिनो. कर्मपरतन्त्रत्वादन्योऽन्यानुगतिरविरुद्धा । एवञ्चापरित्यक्तकर्मणोऽसंज्ञिकायात् संज्ञिकाय सङ्क्रामन्ति तथा संज्ञिकायादसंज्ञिकायम्, संज्ञिकायात्संज्ञिकायमसंज्ञिकायादसंज्ञिकायम्, यथा नारका सावशेषकर्माण एव नरकादुद्वृत्य प्रतनुवेदनेषु तिर्यक्षूत्पद्यन्ते, देवा अपि प्रायेण तत्कर्मशेषतया शुभस्थानेपूत्पद्यन्ते, तदेवमप्रत्याख्यानिनः कर्मसम्भवाच्चातुर्गतिक ससारमवगम्योत्पन्नवैराग्यः समतया सर्वान् प्राणिनो भावयन् धर्ममवगम्य सर्वाश्रवद्वारेभ्य. संवृतः सयम सम्यक् पालयेत् ॥ ७० ॥

परित्यक्तानाचारस्यैव प्रत्याख्यानमस्खलित भवतीत्यनाचारस्वरूप दर्शयति—

## मौनीन्द्रप्रवचनमाचारस्तदपरोऽनाचार. ॥ ७१ ॥

**मौनीन्द्रेति,** मौनीन्द्रप्रवचन मोक्षमार्गहेतुतया सम्यग्दर्शनज्ञानचारित्रात्मकम्, तथा च दर्शनाचारो ज्ञानाचारश्चारित्राचारश्चेत्याचारत्रैविध्य विज्ञेयम्, सम्यग्दर्शन तत्त्वार्थश्रद्धानम्, तत्त्व जीवाजीवपुण्यपापाश्रवबन्धसंवरनिर्जरामोक्षात्मकम्, तथा धर्माधर्माकाशपुद्गलजीवकालात्मकञ्च, द्रव्य नित्यानित्यस्वभावम्, सामान्यविशेषात्मकोऽनाद्यपर्यवसानश्चतुर्दशरज्ज्वात्मको वा लोकस्तत्त्वम्, ज्ञान तु मतिश्रुतावधिमन पर्यवकेवलस्वरूपम् । चारित्र सामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्पराय-यथाख्यातरूप पञ्चधैव मूलोत्तरगुणभेदतो वाऽनेकधा । एतत्प्रवचनादपरोऽनाचार, स नाचरेत् ॥७१॥

दर्शनाचारप्रतिपक्षमनाचारसूचनायाह—

## द्रव्यमनाद्यनन्तमन्यथा प्रवृत्तिनिवृत्त्यसम्भवात् ॥ ७२ ॥

**द्रव्यमिति,** धर्माधर्मादिक चतुर्दशरज्ज्वात्मकलोकस्वरूप वा न प्राथमिकोत्पत्तिमत्, न वा निरन्वयविनाशि, अपि त्वनाद्यनन्तमिति सर्वनयसमूहात्मकेन प्रमाणेन परिज्ञातम्, तद्भिन्नमेकनयावलम्बनेन शाश्वतमेव, अशाश्वतमेव वेति परिज्ञान दर्शनाचारप्रतिपक्षभूतोऽनाचारः, एवञ्च सामान्यांशमात्रावलम्बनेन सर्व शाश्वतमित्यवधारण न कुर्यात्, तथा विशेषांशमात्रावलम्बनेन सर्वमशाश्वतमित्यवधारण न कुर्यात्, तथाभ्युपगमे ह्यैहिकामुष्मिककार्ययोर्लोकस्य प्रवृत्तिनिवृत्ती न सम्भवतः, एकान्तनित्यत्वे नवपुराणादिभावेन प्रत्यक्षतो वस्तुनो दर्शनाभित्य इति व्यवहारो बाधितः स्यात्, आत्मनो नित्यत्वेन बन्धमोक्षाभावाद्यमनियमाद्यनर्थकताप्रसङ्गः, अप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वात् । तथा च लोकस्य क्वापि प्रवृत्तिनिवृत्ती न स्याताम् । एकान्तानित्यत्वेऽप्यनागतभोगार्थं लोकस्य धनधान्यघटपटादिसङ्ग्रहो न घटेत, आमुष्मिकेऽपि प्रवृत्तिर्न स्यात्, आत्मन एकान्तेन क्षणिकत्वात् । कथञ्चिन्नित्यानित्ये च वस्तुनि सामान्यांशावलम्बनतो नित्यत्वव्यवहारो विशेषांशावलम्बनेन चानित्यत्वा-

व्यवहारस्सूपपद्यते, तस्मादेकान्तपक्षयोरनाचारं विजानीयात् । एवञ्चोत्पादव्ययध्रौव्यात्मकान्यर्हद्दर्शनाश्रितानि वस्तूनि व्यवहाराक्षम् नान्यदर्शनाश्रितानि, तस्याभावात्, एवमर्हच्छासनप्रतिपन्नाः सर्वे भव्याः सिद्धिं यान्ति ततश्चोच्छिन्नभव्य जगत्स्यात्, जीवसद्भावेऽप्यपूर्वोत्पादाभावेनाभव्यस्य सिद्धिगमनासम्भवेन कालस्यानन्त्यादनारतञ्च सिद्धिगमनसम्भवेन तद्व्ययोपपत्तेरिति तथा सर्वेऽभव्या एव इति च न वक्तव्यम्, भव्यराशेर्भविष्यत्कालस्येवानन्तत्वात्, न वा सकलभव्यानां मुक्तिरवश्यम्भाविनी, तत्सामग्रीप्राप्त्यवश्यम्भावानियमात्, आगमेऽनन्तानन्तास्वप्युत्सर्पिण्यवसर्पिणीषु भव्यानामनन्तभाग एव सिद्ध्यतीत्युक्तेः । नापि सर्वेऽभव्या एव, अनन्तेषां सिद्धिगमनश्रुतेः, मुक्त्यभावे च संसारस्याप्यभावप्रसङ्गात्, सम्बन्धिशब्दौ ह्येतौ, न हि मुक्तिं संसारं विना संसारोऽपि मुक्तिं विना सम्भवतीति दर्शनाचारः ॥ ७२ ॥

चारित्राचारमाश्रित्याह—

**अध्यवसायात् कर्मबन्धो न वध्यसादृश्यवैसादृश्यतः ॥ ७३ ॥**

**अध्यवसायादिति,** एकेन्द्रियाद्यल्पकायानां हस्त्यादिमहाकायानाञ्च व्यापादने सदृशं कर्म वैरं वा, सर्वजन्तूनां तुल्यप्रदेशत्वादिति नैकान्तेन वक्तव्यम्, प्रदेशतुल्यतायामपीन्द्रियविज्ञानकायानां विसदृशत्वात्तद्व्यापत्तौ कर्म वैरं वा न समानमित्यप्येकान्तेन न वाच्यम्, भवेत्तदा तथा कर्मबन्धो वैरं वा यदा कर्मबन्धादिर्वध्यापेक्षः स्यात्, न तु तद्वशादेव बन्धः, किन्त्वध्यवसायवशादपि, तथा च तीव्राध्यवसायिनोऽल्पकायसत्त्वव्यापादनेऽपि महद्वैरं कर्मबन्धो वा, अकामस्य तु महाकायव्यापादनेऽपि स्वल्पमिति स्थिते तथावादोऽनाचारः, जीवसाम्यात्कर्मबन्धसादृश्यासम्भवात्, न हि जीवव्यापत्त्या हिंसा, तस्य शाश्वतत्वेन व्यापादनासम्भवात्, किन्त्विन्द्रियादिव्यापत्त्या । किञ्च भावसव्यपेक्षस्यैव कर्मबन्धोऽभ्युपेतुं युक्तः, आगमसव्यपेक्षस्य वैद्यस्य हि सम्यक् क्रियां कुर्वतो यद्यप्यातुरविपत्तिर्भवति तथापि न वैरानुषङ्गो भावदोषाभावात्, अपरस्य तु सर्पबुद्ध्या रज्जुमपि घ्नतो भावदोषात् कर्मबन्धः । तथा च वध्यवधकभावापेक्षया स्यात्सदृशत्वं स्यादसदृशत्वमित्याचारः, अन्यथाऽनाचारः । एवमाहारविषयाचारानाचारौ वक्तव्यौ, तथा हि—आधाकर्मोपभोगेनावश्यं कर्मबन्धो भवतीत्येव नो वदेत्, श्रुतोपदेशेन शुद्धमिति कृत्वाऽऽधाकर्मापि भुञ्जानस्य कर्मोपलेपाभावात्, न कर्मबन्धो भवतीत्यपि नो वदेत्, श्रुतोपदेशमन्तरेणाहारगृद्ध्या भुञ्जानस्य तन्निमित्तकर्मबन्धसद्भावात्, किन्त्वाधाकर्मोपभोगेन स्यात्कर्मबन्धः स्यान्न, अन्यथाऽनाचार इति । एवं तैजसकार्मणे शरीरे औदारिकवैक्रियाहारकेभ्योऽव्यतिरिक्ते एव ताभ्यां सह तेषां युगपदनुपलब्धेरिति न वदेत्, एवमेषां तेषामभेदे संज्ञाभेदः कार्यभेदश्च न स्यात्, तस्माद्भेद एवेति न वदेत्, किन्त्वेकोपलब्धेः स्यादभेदः, संज्ञादिभेदात्स्याद्भेद इति वक्तव्यम्, अन्यथाऽनाचार इति । तथा सर्वत्र सर्वस्य शक्तिरस्त्येव सत एव कारणात् कार्यकारणयोरभेदाच्चेति न वक्तव्यम्, सर्वथा कारणे कार्यस्य सत्त्व उत्पत्त्यसम्भवात्, निष्पन्नघटस्येव, मृत्पिण्डावस्थायामेव घटसम्बन्धिक्रियागुणव्यपदेशप्रसङ्गाच्च, न चानभिव्यक्ततयाऽस्तीति वक्तव्यम्, सर्वथा वर्तमानत्वासम्भवात्, कार्यकारणयोः सर्वथैकत्वे चेदं कारणमिदं कार्यमित्यादिव्यवहाराभावप्रसङ्गः, नाप्येकान्तेन कार्यं कारणेऽसदुत्पद्यत इति वक्तव्यम्, घटादेरिव मृत्पिण्डाच्छशशृङ्गादेरप्युत्पत्तिप्रसङ्गात् । तस्मात्सर्व-

पदार्थानां सत्त्वादिभिर्धर्मैः कथञ्चिदेकत्वम्, प्रतिनियतार्थकार्यतया यदेवार्थक्रियाकारि तदेव परमार्थतः सदिति कृत्वा कथञ्चिद्भेद इति सामान्यविशेषात्मकं वस्त्विति आचारः, अन्यथाऽनाचारः ॥ ७३ ॥

किम्बहुना सर्वत्र स्याद्वाद आचार इतरत्रानाचार इत्याह—

## लोकजीवधर्माधर्मबन्धमोक्षपुण्यपापाश्रवसंवरनिर्जरादयोऽनेकान्ता आचारः ॥ ७४ ॥

लोकेति, चतुर्दशरज्ज्वात्मको धर्माधर्माकाशादिपञ्चास्तिकायात्मको वा लोको नास्ति, अवयवद्वारेणावयविद्वारेण वा वस्तुनः प्रतिभासमानत्वासम्भवात्, अप्रतिभासमानस्याभ्युपगन्तुमशक्यत्वात्, अवयवो ह्यतिसूक्ष्मः परमाण्वात्मकश्छद्मस्थविज्ञानेन न द्रष्टुं शक्यः, अवयवी च विचार्यमाणो नैव सद्भावमलङ्करोति, अतो न किमपि वस्त्वात्मलाभं लभत इति तद्विशेषो लोकोऽलोकश्च कथं भवेदिति न वाच्यः, सर्वं यदि नास्ति तर्हि न कोऽपि प्रतिषेधकोऽस्तीति कथं सर्वाभावः सिद्ध्येत, अतोऽस्ति लोकः कथञ्चित्, तद्व्यतिरिक्तोऽलोकश्च, सम्बन्धिशब्दत्वात्, लोकव्यवस्थाऽन्यथाऽनुपपत्तेश्च, एकान्तेनैव अवयवा एव, अमी चावयविन एवेत्यनभ्युपगमेन तदाश्रितो दोषो नात्र सम्भवति । एवं प्रत्यक्षेणानुपलम्भाज्जीवो धर्मास्तिकायाद्यजीवो वा नास्त्येवेति संज्ञां न निवेशयेत्, सकलप्रमाणज्येष्ठेन प्रत्यक्षेणानुभूयमानत्वात्तद्गुणानाम् । किन्तु जीवः स्याज्जीवः, स्यादजीवः, अजीवोऽपि स्यादजीवः स्याज्जीव इति स्याद्वाद आदरणीयः । तथा श्रुतचारित्राख्यो जीवस्यात्मपरिणामः कर्मक्षयकारणं धर्मः, मिथ्यात्वादयः कर्मबन्धकारणमात्मपरिणाम एवाधर्मः, यतो कालेश्वरस्वभावनियत्यादिमतेन न विद्येते, धर्माधर्मव्यतिरेकेण जगद्वैचित्र्यस्य कालादय एवैकान्तेन कारणमित्येव मतिं न कुर्यात्, धर्माधर्मावन्तरेण केवलं कालादिना संसारवैचित्र्यस्यानुपपत्तेः, अतोऽस्ति धर्मः सम्यग्दर्शनादिकः, अस्त्यधर्मो मिथ्यात्वादिक इत्येव संज्ञां निवेशयेत् । प्रकृतिस्थित्यनुभावप्रदेशात्मकतया कर्मपुद्गलानां जीवेन स्वव्यापारतः स्वीकरणं बन्धः, स चामूर्तस्यात्मनो गगनस्येव न विद्यते तदभावाच्च मोक्षस्याप्यभाव इति न मतिं कुर्यात्, आकाशस्यापि सर्वव्यापित्वेन पुद्गलसम्बन्धस्य दुर्निवारत्वात्, अन्यथा तद्व्यापित्वमेव न स्यात्, तथा विज्ञानस्य हृत्पूरमदिरादिना विकारो दृश्यते न चासौ तत्सम्बन्धव्यतिरेकेण सम्भवति, किञ्च संसारिजीवाः सदा तैजसकार्मणशरीरिणोऽत आत्यन्तिकामूर्तत्वञ्च तेषां न सम्भवति, अतोऽस्ति बन्धोऽस्ति च तत्प्रतिपक्षभूतो मोक्ष इति संज्ञां निवेशयेत् । शुभप्रकृतिलक्षणं पुण्यं नास्ति तद्विपर्ययलक्षणञ्च पापमपि नास्तीत्येव संज्ञा न विधेया, तत्र हि कारणमित्थं वाच्यम्, पापमेवास्ति न पुण्यं, उत्कर्षावस्थापापस्यैव सुखनिबन्धनत्वात्, पुण्यमेवास्ति न तु पापम्, अपचीयमानपुण्यस्यैव दुःखनिबन्धनत्वात्, अथवोभयमपि नास्ति संसारवैचित्र्यस्य नियतस्वभावादिकृतत्वात्, तन्न युक्तम्, एकस्य सद्भावेऽपरसद्भावनान्तरीयकत्वात्, सम्बन्धिशब्दत्वात्तयोः पुण्यपापशब्दयोः, न वा द्वयोरभावः, जगद्वैचित्र्यानुपपत्तेः, नियत्यादीनामवैचित्र्येण ततोऽपि तद्वैचित्र्यासम्भवाच्च, एवं कर्मोपादानलक्षण आश्रवस्तन्निरोधः संवरः, एतौ द्वावपि न स्तः, कायवाङ्मनःकर्म हि योगः स आश्रव इति वक्तव्यं तत्र, कायादिव्यापारेण कर्मबन्धाभावात्, आत्मनो यदि जीवाजीवाभ्यां घटादि-

यमाश्रवः, अभेदेऽपि नाश्रव, सिद्धात्मनामपि तत्प्रसङ्गात्, एव तदभावेन तन्निरोधलक्षणसंवरस्याप्यभाव' इति मतिं न विदध्यात्, केवलकायव्यापारस्य कर्मबन्धकत्वानभ्युपगमात् किन्तु तदुपयुक्तस्य, तथैकान्तभेदाभेदपक्षाश्रयदोषोऽप्यनेकान्ते न भवति, तस्मादस्त्याश्रव संवरश्चेति विज्ञेयम् । कर्मपुद्गलपरिशाटनालक्षणा निर्जरा, तथा कर्मानुभवलक्षणवेदना च न विद्यते, पल्योपमसागरोपमशतानुभवनीयस्य कर्मणोऽन्तर्मुहूर्त्तेन क्षयाभ्युपगमात्, क्षपकश्रेण्याञ्च झटित्येव कर्मणो भस्मीकरणात्, यथाक्रमबद्धस्य चानुभवनाभावे वेदनाया अभावस्तदभावाच्च निर्जराया अपीति नो संज्ञां निवेशयेत्, यतः कस्यचिदेव कर्मण उक्तनीत्या क्षपणात् तपसा प्रदेशानुभवेन चापरस्य तूदयोदीरणाभ्यामनुभवनमित्यतोऽस्ति वेदना, तत्सिद्धौ निर्जरापि सिद्ध्येदित्यतोऽस्ति वेदना निर्जरा चेत्येव संज्ञां निवेशयेत् । एव क्रोधमानमायालोभादयोऽपि सन्तीत्येव विज्ञेयम्, तदेव भगवदुपदिष्टेष्वेषु स्थानेष्वात्मान वर्तयन् सत्संयमी मोक्ष यावत्संयमानुष्ठाने व्रजेत् ॥ ७४ ॥

एवेदमाचारानाचारौ प्रतिपाद्य तदशक्यानुष्ठान न भवतीति सूचयितु तदासेवक दृष्टान्तभूतमार्द्रक भगवत्समीपमागच्छन्त प्रति गोशालककृतप्रश्नमुपस्थापयति—

## तीर्थकृतो धर्मदेशना दम्भप्रदाना, पूर्वचर्यापरित्यागेनापरकल्पसमाश्रयादिति चेत् ॥ ७५ ॥

तीर्थकृतेति, गोशालक आह–हे आर्द्रक[1] भवत्तीर्थकृत् पूर्वमेकान्तचारी, तपश्चरणोद्युक्त आसीत्, साम्प्रत तपश्चरणविशेषैर्निर्भर्त्सितो मा विहाय प्रभूतशिष्यपरिकर कृत्वा देवादिमध्यगतो भवद्विधाना मुग्धजनाना धर्ममाचष्टे, बहुजनमध्यगतेन युष्मद्गुरुणा धर्मदेशना याऽऽरब्धा, साऽऽजीविका स्थापिता, एकाकी विहरन् लौकिकैः परिभूयत इति मत्वा, तदनेन दम्भप्रधानेनास्थिरेण जीविकार्थमिदमारब्धम्, तदेव पूर्वचर्यापरित्यागेनापरकल्पसमाश्रयणात्मक, एतस्य चानुष्ठान न पूर्वापरेण सगच्छते, यदि हि साम्प्रतीय वृत्त प्राकारत्रयसिंहासनाशोकवृक्षभामण्डलचामरादिक मोक्षाङ्गमभविष्यत् तदा प्राक्तनी यैकचर्या क्लेशबहुलाऽनेनानुष्ठिता साऽस्य केवल क्लेशाय भवेत्, यदि सा कर्मनिर्जरणहेतुका परमार्थभूता तर्हि साम्प्रतावस्था परप्रतारकत्वाद्दम्भकल्पा, अतो मौनव्रतिकधर्मदेशनारूपयोः पूर्वोत्तरानुष्ठानयोः परस्परतो विरोधः, यद्येकान्तचारित्वमेव शोभन पूर्वमाश्रितत्वात्, ततः सर्वदाऽन्यनिरपेक्षैस्तदेव कर्तव्यम्, अथ चेद साम्प्रत महापरिवारावृत्त साधु मन्यते ततस्तदेवादावप्याचरणीयमासीत्, द्वे अप्येते छायातपवदत्यन्तविरोधिनी नैकत्र समवाय गच्छत इति ॥ ७५ ॥

उत्तरयत्यार्द्रकः—

## न, प्राणिहिताय धर्मोपदेष्टु संयतत्वात् ॥ ७६ ॥

नेति, पूर्वोत्तरावस्थयोरसाङ्कर्य नास्तीत्यर्थः, तथा हि पूर्वं य मौनव्रतमेकचर्या च कृता सा छद्मस्थत्वाद्घातिकर्मचतुष्टयक्षयार्थम्, साम्प्रत यद्धर्मदेशनाविधान तत्प्राग्बद्धभवोपग्राहिकर्मचतुष्टयक्षपणोद्यतस्य विशेषतस्तीर्थकरनाम्नो वेदनार्थमपरासाञ्चोच्चैर्गोत्रशुभायुर्नामादीनां शुभप्रकृतीनाम् । अथवा पूर्वं साम्प्रत भविष्यति काले वा रागद्वेषरहितत्वादेकत्वभावनानतिक्रमणादेकत्वमेवाऽनुचरित

भगवानशेषजनहितं धर्मं कथयन् प्रतिसन्ध्याति, केवलालोकेन हि यथावस्थितं लोकमवगम्य प्राणिहितङ्करो द्वादशविधतपोनिष्टप्तदेहो लाभपूजादिनिरपेक्षेण प्राणिहितार्थं धर्ममाचक्षाणोऽपि छद्मस्थावस्थायामिव वाक्संयत एव, उत्पन्नदिव्यज्ञानत्वाद्भाषागुणदोषविवेकज्ञतया भाषणेनैव गुणावाप्ते, अनुत्पन्नदिव्यज्ञानस्य तु मौनव्रतिकत्वेन। देवासुरनरतिर्यक्सहस्रमध्येऽपि व्यवस्थितोऽसावेकाकितामेव साधयति, पङ्काधारपङ्कजवत्तद्दोषव्यासङ्गाभावात्, ममताविरहाद्रागद्वेषदोषविनिर्मुक्तत्वाच्च, न चैकाकिपरिकरोपेतावस्थयोरस्ति विशेष, प्रत्यक्षेणैवोपलभ्यमानत्वादिति वाच्यम्, बाह्यविशेषस्य परिदृश्यमानस्य सत्त्वेऽपि प्रधानस्याऽऽन्तरकषायजयित्वस्योभयोरवस्थयोरविशेषात्, न ह्यसावष्टप्रातिहार्योपेतोऽप्युत्सेकं याति, न वा शरीरं सत्कारायत्तं विदधाति, निष्कलङ्कस्य भगवतो जगदभ्युद्धरणप्रवृत्तस्यैकान्तपरहितप्रवृत्तस्य स्वकार्यनिरपेक्षस्य धर्मं कथयतोऽपि दोषलेशाभावात्, छद्मस्थस्य हि बाहुल्येन मौनव्रतमेव श्रेय, समुत्पन्नकेवलस्य तु भाषणमपि गुणायेति ॥ ७६ ॥

पुनर्गोशालाशङ्कामनूद्यार्द्रकेण निराकृतमाचष्टे—

**एकान्तचारिणस्तपस्विनस्तर्हि शीतोदकादिपरिभोगो न दोषायेति चेन्न, तथात्वे तस्याश्रमणत्वप्रसङ्गात् ॥ ७७ ॥**

एकान्तेति, यदि परार्थं प्रवृत्तस्याशोकादिप्रातिहार्यपरिग्रह शिष्यादिपरिकरो धर्मदेशना च न दोषाय तर्ह्यस्मदीये धर्मे प्रवृत्तस्यारामोद्यानादावेकाकिविहारोद्यतस्य तपस्विन शीतोदकबीजपत्रफलाद्युपभोगो न दोषाय भवेत्, ईदृक्कर्मवत्त्वेऽपि धर्माधारशरीरप्रतिपालनार्थत्वादिति यदुच्यते भवता तदपि न चारु, अप्रासुकोदकपरिभोगादीना श्रमणायोग्यत्वात्, अप्रव्रजिता हि तानि प्रायः प्रतिसेवन्ते, श्रमणास्तु 'अहिंसा सत्यमस्तेय ब्रह्मचर्यमलुब्धते'त्यादिलक्षणलक्षिता। तच्च लक्षण शीतोदकादिपरिभोगिना नास्तीति न ते परमार्थानुष्ठानत श्रमणा, यदि शीतोदकादिपरिभोगिनोऽपि श्रमणास्तर्हि गृहस्था अपि श्रमणा भवन्तु, तेषामपि देशिकावस्थायामाशंसावतामपि निष्किञ्चनतयैकाकिविहारित्व क्षुत्पिपासादिपीडनञ्च सम्भाव्यते, केवल स्त्रीपरिभोग एव तैर्द्रव्यतः परित्यक्त, शेषेण तु शीतोदकाद्युपभोगेन गृहस्थकल्पा एवेति ॥ ७७ ॥

पुनरप्याशङ्कामुद्भाव्य दूषितमादर्शयति—

**परनिन्दाऽऽत्मोत्कर्षयोः प्रसङ्ग इति चेन्न, वस्तुस्वरूपप्रकाशने तदसम्भवात् ॥ ७८ ॥**

परनिन्देति, ननु पूर्वोक्तप्रकारेण वदन् सर्वानपि प्रावादुकान् गर्हसि, आत्मन उत्कर्षं प्रकटयसि चेति ते परनिन्दाऽऽत्मोत्कर्षयोः प्रसङ्ग स्यादित्यपरमुत्तर दातुमसमर्थेन गोशालकेनान्यतीर्थिकसहायेन प्रोक्त निषेधति नेति, सर्वे हि प्रावादुका यथावस्थित स्वदर्शनं प्रादुष्कुर्वन्ति, तत्प्रामाण्याच्च वयमपि स्वदर्शनाविर्भावना कुर्म, अप्रासुकेन शीतोदकादिपरिभोगेन कर्मबन्ध एव केवल न संसारोच्छेद इत्यस्मदीय दर्शनम्, एवं व्यवस्थिते काऽत्र परनिन्दा, को वाऽऽत्मोत्कर्षं, प्रावादुका अपि स्वदर्शनप्रतिष्ठाशया परदर्शन गर्हमाणा स्वदर्शनगुणानाचक्षते, परस्परं व्याहत चानुष्ठानमनुतिष्ठन्ति,

यदन्तु युक्तिविकलत्वादेकान्तदर्शि निरस्य यथावस्थिततत्त्वस्वरूपं प्रतिपादयामो न कश्चिद्दोषः, केवलं स्वपरस्वरूपाविर्भावनं कुर्मः, न हि वस्तुस्वरूपाविर्भावने परापवादः। एवञ्च सावद्यधर्मदूरवर्त्तिभिः सर्वज्ञैः पूर्वापराव्याहतत्वेन यथावस्थितजीवादिपदार्थस्वरूपनिरूपणेन च प्रतिपादितः सम्यग्दर्शनादिक एवानुत्तरो मोक्षमार्गः, यथार्थप्ररूपणाद्रागद्वेषरहितस्य न च काचित्क्षतिः, अन्यथा शीतमुदकमुष्णोऽग्निः विषं मारणमित्येवमादि किञ्चिद्वस्तुस्वरूपं केनाप्याविर्भावनीयं न स्यादिति ॥ ७८ ॥

समाधानान्तरमाह—

## प्रेक्षापूर्वकारित्वेनानिच्छाकारित्वाभावात् ॥ ७९ ॥

**प्रेक्षेति**, ननु तीर्थकरो रागद्वेषभययुक्तः, आगन्तागारादौ शयनादिक्रियाऽकरणात्, तत्र प्रभूतशास्त्रविशारदानां सम्भवेन पराजयशङ्कासद्भावात्, कदाचिन्म्लेच्छविषयं गत्वा धर्मदेशनाऽकरणात्, आर्यदेशेऽपि क्वचिदेव करणाच्च रागद्वेषभययुक्तेति शङ्कायामाह **प्रेक्षेति**, भगवान् हि प्रेक्षापूर्वकारी, अतो नानिच्छाकारी भवति, यो ह्यप्रेक्षापूर्वकारी सोऽनिष्टमपि स्वपरनिरर्थकमपि कृत्यं कुर्यात्, सर्वज्ञः सर्वदर्शी परहितैकरतो भगवान् कथं स्वपरात्मनोर्निरुपकारकं कुर्यात्, न चासौ बालवदनालोचितकारी, न परानुरोधान्नापि गौरवाद्धर्मदेशनादिकं विधत्ते, अपि तु यदि कस्यचिद्भव्यसत्त्वस्योपकाराय तत्प्रभाषितं भवति ततः प्रवृत्तिर्भवति नान्यथा, तथा न राजाद्यभियोगेनासौ धर्मदेशनादौ कथञ्चित्प्रवर्त्तते ततः कुतस्तस्य भयेन प्रवृत्तिः स्यात्, न चासौ वीतरागो धर्मकथां किमिति करोतीति शक्यम्, तीर्थकृन्नामकर्मणः क्षपणाय सर्वहेयधर्मदूरवर्त्तिनामार्याणामुपकाराय च तत्करणात्। तत्रापि विनेयासन्नं गत्वाऽगत्वा वा यथा भव्यसत्त्वोपकारो भवति तथैव धर्मदेशनाकरणान्न तु रागद्वेषाभ्याम्। अनार्यास्तु न सम्यग्दर्शिनः, असौ भगवानित्येतावन्मात्रस्यापि ज्ञानस्याभावाद्दीर्घदर्शनाभावाच्च, ते हि शकयवनादयो वर्त्तमानसुखमेवैवमङ्गीकृत्य प्रवर्त्तन्ते न पारलौकिकमतः सद्धर्मपराङ्मुखेषु तेषु भगवान्न याति न तु तद्द्वेषाविशुद्ध्या। समस्ताः भावदुकास्तु भगवन्मुखमप्यवलोकितुं न समर्थाः वादस्तु दूरोत्सारित एव, एवञ्च यत्रैव स्वपरोपकारं केवलालोकेन पश्यति तत्रैव धर्मदेशनां विधत्ते। न च तस्य वणिगिव लाभापेक्षया धर्मदेशना प्रसक्तेति वाच्यम्, दृष्टान्तानुपपत्तेः, किं स देशतो दृष्टान्तः, सर्वसाधर्म्येण वा, नाद्यः क्षतभावात्, वणिग्वदुपचयप्रेक्षया प्रवृत्त्यङ्गीकारात्। न द्वितीयो भगवान् हि विदितवेद्यः सर्वपरित्राणशीलः सर्वथा सर्वसावद्यानुष्ठानविधुरः, वणिक् च न तथाविधः, चतुर्दशविधजन्तुसमूहोपमर्दनक्रियाकारित्वात्, वित्तेच्छयेतस्ततः परिभ्रमणात् सातगौरवादिषु मूर्च्छितत्वात्, लाभार्थं प्रवृत्तस्यापि तदसिद्धेः सिद्धेऽपि लाभेऽचिरेणैव विनाशाच्च कथं निर्विवेकिना वणिजा सर्वसाधर्म्यं सार्धानन्तलाभवता भगवता सङ्गच्छत इत्येवं गोशालको निरस्त आर्द्रकेण ॥ ७९ ॥

एवं तस्य शाक्यादिनिरासप्रकारमाह—

## अकुशलचित्तादेव कर्मचय इति चेन्न, अविवेकिनो भावशुद्ध्यसम्भवात् ॥ ८० ॥

**अकुशलेति**, शाक्यः कश्चिदाह—यथा कश्चित्कञ्चुकसन्नेषु प्रवृत्तः पिण्याकपिण्डं सञ्जप्राव्रत

कश्चिद् दृष्ट्वा पुरुषोऽयमिति मत्वा अग्राह्, ततश्च वस्त्रवेष्टितं पिण्याकपिण्डं पुरुषबुद्ध्या शूले प्रोतं पावके पचति, तथा कश्चिदलाबुकं कुमारोऽयमिति मत्वा वह्नौ पचति स च प्राणिवधजनितेन पातकेनाकुर्वन्नपि घस्तुनः प्राणातिपातं लिप्यते चित्तस्य दुष्टत्वात्, चित्तमूलत्वाच्च शुभाशुभबन्धस्य, तथा सत्यपुरुषमपि खलबुद्ध्या कश्चिच्छूले प्रोतमग्नौ पचेत् कुमारकं चालाबुकबुद्ध्या, न चासौ प्राणिवधजनितेन पातकेन लिप्यतेऽस्माकम्, एवं सर्वास्ववस्थास्वचित्तविचिन्तितं कर्मचयं न गच्छति 'अविज्ञानोपचितं परिज्ञानोपचितमीर्यापथिकं स्वप्नान्तिकञ्च कर्मोपचयं न यातीत्युक्तेरिति, तदेतन्मतं दूषयति नेति, पिण्याकपिण्डे पुरुषोऽयमित्येवमसत्यं जडस्यापि न बुद्धिरुदेति, तस्मात् एवं वक्ति सोऽसत्यमनार्यं एव, अत एव तथाविधं वचनमप्यसत्यं सत्त्वोपघातकरत्वात्, ततश्च निःशङ्कप्रवृत्तिपर्यालोचको निर्विवेकतया बध्यते, तस्मात् पिण्याककाष्ठादावपि प्रवर्तमानेन जीवोपमर्दनभीरुणा साशङ्केन प्रवर्तितव्यम्। वागभियोगादपि पापं कर्म भवत्यतो विवेकी भाषागुणज्ञो न तादृशीं भाषामुदाहरेत्, न हि प्रव्रजितो यथावस्थितार्थाभिधायीदं निःसारं निरुपपत्तिकं वचो ब्रूयात् पिण्याकोऽपि पुरुषः पुरुषोऽपि पिण्याकः, अलाबुकमेव बालको बालक एवालाबुकं इत्यादि। केवलमेवम्भाषणमज्ञानावृतमूढजनानाम्, तेषां च न भावशुद्ध्या शुद्धिः, अन्यथा संसारमोचकानामपि कर्मविमोक्षः स्यात्, तथा भावशुद्धिमेव केवलामभ्युपगच्छतां भवतां शिरस्तुण्डमुण्डनपिण्डपातादिकं चैत्यकर्मादिकञ्चानुष्ठानमनर्थकमापद्यते, तस्मान्नैवंविधया भावशुद्ध्या शुद्धिरुपजायते। मौनीन्द्रशासनप्रतिपन्नाश्च तन्मार्गानुसारिणो जीवानामवस्थाविशेषं तदुपमर्देन पीडां पर्यालोचयन्तोऽन्नविधौ द्विचत्वारिंशद्दोषरहितेनाहारेणाहारं कुर्वन्तो न तु यथा भवता पिशितमपि पात्रपतितं न दोषायेति। न चौदनादेरपि प्राण्यङ्गसमानतया मांसादिसादृश्यमिति वाच्यम्, लोकतीर्थान्तरीयमतानभिज्ञतया चोदनात्। तुल्येऽपि प्राण्यङ्गत्वे किञ्चिन्मांसं किञ्चिन्नामांसमिति व्यवह्रियते गोक्षीररुधिरादेर्भक्ष्याभक्ष्यव्यवस्था क्रियते, स्त्रीत्वे समानेऽपि भार्यास्वस्रादौ गम्यागम्यव्यवस्था विधीयते शुष्कतर्केदृशा, प्राण्यङ्गत्वादिति हेतुश्चानैकान्तिकविरुद्धदोषदुष्टः, प्रयोगश्च मांसं भक्षणीयं भवेत् प्राण्यङ्गत्वादोदनादिवदिति, श्वमांसादेरभक्ष्यत्वाद्दोषद्वयमेव, यथाऽयं हेतुर्मांसस्य भक्ष्यत्वं साधयति तथा बुद्धादामपूज्यत्वमपीति पूज्यत्वविरुद्धाव्यभिचारित्वं हेतोः, मांसौदनयोरसाम्याद् दृष्टान्तविरोधः लोकविरोधिनी च प्रतिज्ञा, तथा मांसभक्षणं रसगौरवगृद्धानामनार्याणामविवेकिनामासेवनं न धर्मश्रद्धावताम्, तदुक्तं 'श्रुत्वा दुःखपरम्परामतिघृणां मांसाशिनां दुर्गतिं ये कुर्वन्ति शुभोदयेन विरतिं मांसादनस्यादरात्। सद्दीर्घायुरदूषितं गतरुजः सम्भाव्य यास्यन्ति ते मर्त्येषूत्कटभोगधर्ममतिषु स्वर्गापवर्गेषु च' ॥ तदेवं सावद्यमारम्भं महान्तं दोषं इत्येवं मत्वा दयया ते परिवर्जयन्तः साधवो दानाय परिकल्पितमुद्दिष्टं भक्तपानादिकं परित्यजन्ति। एतेन यागादिविधिना ब्राह्मणानां सहस्रद्वयं भोजयेदित्यादिवादोऽपि परास्तः, निन्द्याजीविकोपगतानां नित्यं पिण्डपातान्वेषिणामसत्पात्राणां दाने तेषां दातुश्चाऽऽमिषगृद्धिभिरभिव्याप्तत्वाद्दुर्वेदननरकगतिप्राप्तेः, दयाप्रधानं धर्मं निन्दन्तः प्राण्युपमर्दकारिधर्मं प्रशंसन्त एकमपि निःशीलं निर्व्रतं षड्जीवनिकायोपमर्दनेन यो भोजयेत् स वराको नरकभूमिं याति कुतस्तस्याधमदेवेष्वपि प्राप्तिः सम्भाविनी। अतो याज्ञिकमतवादोऽपि न श्रेयान्, वेदान्तवादोऽपि न यथार्थाभिधायी, असर्वज्ञप्रणीतत्वात्, तस्य-

द्वैकान्तपक्षसमाश्रयणात्, एकान्तपक्षश्च प्रवृत्तिनिवृत्त्यसम्पादकत्वात्, न ह्येकान्तक्षणिके आत्मादौ एकान्ताक्षणिके वा प्रवृत्तिनिवृत्ती सम्भवतः, तदेव तीर्थिका लोकमजानाना धर्मं कथयन्तः स्वतो नष्टा अपरानपि नाशयन्ति, ये तु केवलालोकेन समाधिना युक्ताः परमहितैषिणः शुद्धचारित्रं धर्मं प्रतिपादयन्ति ते महापुरुषाः स्वतः संसारसागरं तीर्णाः परं सदुपदेशदानतस्तारयन्ति यथा देशिकः सम्यग् मार्गज्ञ आत्मानं परञ्च तदुपदेशवर्त्तिनं महाकान्ताराद्विवक्षितदेशप्रापणेन निस्तारयति । तस्मात्सर्वज्ञ प्ररूपणं भावशुद्धिप्रयोजकम्, विवेकवैधुर्यात्, यस्तु सर्वज्ञागमेन सद्धर्ममवाप्य तत्र सुस्थितो मनोवाक्कायैः सुप्रणिहितेन्द्रियो न परतीर्थिकतपःसमृद्ध्यादिदर्शनेन मौनीन्द्रदर्शनात् प्रच्यवते सम्यग्ज्ञानेन च यथावस्थितवस्तुप्ररूपणतः समस्तप्रावादुकवादनिराकरणेनापरेषां यथावस्थितमोक्षमार्गमाविर्भावयति सम्यक्चारित्रेण च समस्तभूतग्रामहितैषितया निरुद्धाश्रवद्वारस्तपोविशेषाद्यानेकभवोपार्जितं कर्म निर्जरयति स एव विवेकी भावशुद्धः स्वतोऽन्येषाञ्च समुद्धर्त्तेति ॥ ८० ॥

अथ श्रावकगतं विधिं सूचयितुमिन्द्रभूत्युदकयोः संवादं नालन्दाया राजगृहनगरबाहिरिकायाः समीपस्थ उद्याने मनोरथाख्ये सम्भूतं दर्शयति—

**अणुव्रतदाने तदन्यप्राण्युपघातजः कर्मबन्ध इति चेत् ॥ ८१ ॥**

अणुव्रतेति, गौतमस्वामिसमीपमेत्योदको भगवन्नस्ति मे प्रष्टव्यः कश्चन संशयः, तस्योत्तरं यथा च भगवता सन्दर्शितं तथैव भवद्भिः प्रतिपाद्यतामिति पृष्टः प्रश्नं निशम्य गुणदोषविचारणतोऽवधार्य च सम्यगहं ज्ञास्ये तदुच्यतां भवता स्वाभिप्राय इत्युक्तोऽवादीत् यथा—गृहपतिं श्रमणोपासकं नियमायोत्थितं निर्ग्रन्था युष्मदीयप्रवचनं प्रवदन्तः प्रत्याख्यानं कारयन्ति स्थूलेषु प्राणिषु दण्डस्य, नान्यत्र राजाद्यभियोगेन प्राण्युपघाते तस्य निवृत्तिर्भवति, तथा च स्थूलेति विशेषणात्तदन्येषामनुमतिप्रसङ्गदोषो भवेदेवमेव त्रसप्राणिविशेषणत्वेनापरत्रसभूतविशेषणरहितत्वेन प्रत्याख्यानं गृह्णतां श्रावकाणां दुष्प्रत्याख्यानं भवति, प्रत्याख्यानभङ्गसद्भावात्, दुष्टप्रत्याख्यानदानञ्च साधूनां दोषः, उभावपि च स्वां प्रतिज्ञामतिलङ्घयतः, प्रतिज्ञाभङ्गश्च—संसारे स्थावराः सन्तोऽपि प्राणिनस्तथाविधकर्मोदयात् त्रसतयोत्पद्यन्ते त्रसा अपि स्थावरतया, एवं परस्परगमनेन व्यवस्थितेऽवश्यम्भावी प्रतिज्ञाविलोपः, नागरिको हि कश्चिन्मया न हन्तव्य इत्येवं येन प्रतिज्ञा गृहीता स यदा बहिरारामादौ व्यवस्थितं नागरिकं व्यापादयेत्किमेतावता न तस्य प्रतिज्ञाविलोपः, अपि तु भवत्येव । अन्यभावेनोत्पन्नेषु च न तादृक् किञ्चिल्लिङ्गमुद्वीक्ष्यते येन स्थावरत्वेनाप्युत्पन्नास्त्रसाः परिहर्त्तुं शक्येरन्, यदि तु गृहपतिस्त्रसभूतेषु प्राणिषु दण्डं विहाय प्रत्याख्यानं करोति तदा न प्रतिज्ञाविलोपः, भूतत्वविशेषणाद्वर्त्तमानकाले त्रसत्वेनोत्पन्नेष्विति तदर्थः, एवमभ्युपगमे हि क्षीरविकृतिप्रत्याख्यायिनो यथा दधिभक्षणेऽपि न प्रतिज्ञाविलोपस्तथा न त्रसभूताः सत्त्वा हन्तव्या इत्येवं प्रतिज्ञावतः स्थावरहिंसायामपि ॥ ८१ ॥

अत्रोत्तरं गौतमोक्तमभिधत्ते—

**न, असद्भूतदोषोद्भावनात्, भूतशब्दस्यानेकार्थत्वाच्च ॥ ८२ ॥**

नेति, भूतशब्दविशेषणत्वेन प्रत्याख्यानमन्यथा दोषप्रदर्शनं नास्माकं रोचत इत्यर्थः, तत्र हेतु-

माहात्म्यतेति, ये हि श्रमणा ब्राह्मणा वा भूतशब्दविशेषणत्वेन प्रत्याख्यानमाचक्षते परैः पृष्टास्तथैव प्रत्याख्यानं भाषन्ते स्वतः कुर्वन्ति कारयन्ति च तथा, किन्तु सविशेषणप्रत्याख्यानप्ररूपणावसरे च सामान्येन प्ररूपयन्ति ब्राह्मणो न हन्तव्य इत्येवम्, तत्रापि स यदा वर्णान्तरे तिर्यक्षु वा व्यवस्थितो भवति तद्वधे ब्राह्मणवध आपद्यते भूतशब्दाविशेषणात्, तदेवं प्ररूपयन्तो न खलु ते श्रमणा वा ब्राह्मणा वा यथार्थां भाषां भाषन्ते किन्त्वनुतापिकाम्, अन्यथा भाषणे तथानुष्ठातुरपरेण ज्ञानवता बोधितस्य सतोऽनुतापो भवति, तथा यथावस्थितप्रत्याख्यानप्रदातॄन् साधूनभूतदोषोद्भावनतोऽभ्याख्यान्ति, यतः संसारिणः खलु प्राणिनः परस्परजातिसङ्क्रमणभाजोऽतस्त्रसाः स्थावरत्वेन स्थावराश्च त्रसत्वेन प्रत्यायन्ति, तेषाञ्च त्रसकाये समुत्पन्नानां स्थानमेतत्त्रसकायाख्यमघाताई भवति, तीव्राध्यवसायोत्पादकत्वाल्लोकगर्हितत्वाच्च, श्रावकेण च स्थूलप्राणातिपातविरमणं कृतं तन्निवृत्त्या तत्र स्थानमघात्यम्, स्थावरकायाच्चानिवृत्त इति तद्योग्यतया तत्स्थानं घात्यम्, तथा वर्त्तमानकालवाचिभूतशब्दोपादानमपि केवलं व्यामोहाय, भूतशब्दो ह्युपमानेऽपि वर्त्तते, देवलोकभूतं नगरमिदं न देवलोकं एवेत्यादौ, तथापि त्रससदृशानामेव प्राणातिपातनिवृत्तिः कृता स्यात्, न तु त्रसानाम्। तादर्थ्येऽपि भूतशब्दो दृश्यते शीतीभूतमुदकमित्यादौ, तथाऽत्र त्रसभूता इत्यस्य त्रसत्वं प्राप्ता इत्यर्थः स्यात्, तथा च सति त्रसशब्देनैव गतार्थत्वात् पौनरुक्त्यं स्यात्तथापि भूतशब्दोपादाने घटभूतो पटभूत इत्यादि प्रयोगप्रसङ्गः स्यात्, न चैवं कतरान् प्राणिनो यूयं वदथ किं त्रसा एव ये प्राणिनस्ते त्रसा इति किं वाऽन्यथा, उच्यते यान् प्राणिनो यूयं त्रसत्वेनेदानीमाविर्भूतानातीतानाप्येष्यान् वदथ त्रसाः प्राणिन इति तानेव वयं त्रसान् प्रब्रूमः केवलं यूयं त्रसभूता इति वदथ, शब्दभेद एव केवलमत्रान्यत्र, न त्वर्थभेदः कश्चित्, एवं व्यवस्थिते कोऽयं भवतां व्यामोहः, एकस्य पक्षस्याभिनन्दनेऽपरस्य चाक्रोशने, उभयोरपि पक्षयोः समानत्वात्, केवलं सविशेषणपक्षे भूतशब्दोपादानं मोहमावहतीति। न वा साधोरसदभ्येषा यथानुमतिः, स्थावरपर्यायापन्नं व्यापादयतो वा व्रतभङ्ग—गुरुः श्रमणाः प्रव्रज्यां कर्तुमसमर्थानां तद्व्यतिरेकेण धर्मं चिकीर्षूणां धर्मोपदेशप्रवणस्य साधोरमतः प्रथमं गृहस्थयोग्यं देशविरतिलक्षणं श्रावकधर्ममनिन्द्यमनुपालयामस्ततः पश्चादनुक्रमेण श्रमणधर्ममित्यवसाय प्रकटयता नान्यत्राभियोगेन व्यवस्था श्रावयन्ति ते। स चाभियोगो राजाभियोगो गणाभियोगो बलाभियोगो देवताभियोगो गुरुनिग्रहश्चेत्यादिनाऽभियोगेन त्रसं व्यापादयतोऽपि न व्रतभङ्गः। तदेवं देशविरतानां त्रसप्राणातिपातविरमणमपि कुशलहेतुत्वात् कुशलमेव, गृहपतिचोरविमोक्षणदृष्टान्तोऽत्र भाव्यः। स्थावरपर्यायापन्नत्रसव्यापादने यद्भिः स्वनागरिकव्यापादन इव यो व्रतभङ्ग उक्तस्तदपि न युज्यते, त्रसत्वेन यत्परिबद्धमायुष्कं तद्यदोदयप्राप्तं भवति तदा त्रससम्भारकृतेन कर्मणा जीवास्त्रसा इति व्यपदिश्यन्ते न तदा कथञ्चित्स्थावरत्वव्यपदेशः, सम्भारो नामावश्यं तस्य कर्मणो विपाकानुभवेन वेदनम्। त्रसकायस्थितिकं कर्म यदा परिक्षीणं भवति तत्कायस्थितेरभावात्तदायुष्कं ते परित्यजन्ति तच्च कर्म जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्सातिरेकसहस्रद्वयसागरोपमपरिमाणम्। तथा चापराण्यपि तत्सहचरितानि कर्माणि परित्यज्य स्थावरत्वेन प्रत्यायन्ति स्थावरा अपि स्थावरसंभारकृतेन कर्मणा तत्रोत्पद्यन्ते स्थावरादिनाम च तत्राभ्युपगतं भवति, अपराण्यपि तत्सहचरितानि कर्माणि सर्वात्मना त्रसत्वं परित्यज्य स्थावरत्वेनोदयं यान्ति, एवञ्च व्यवस्थिते

कथं स्थावरकायं व्यापादयतो गृहीतत्रसकायप्राणातिपातनिवृत्तेः श्रावकस्य व्रतभङ्गः, नगरदृष्टान्तोऽप्यनुपपन्नः, सादृश्याभावात्, नगरधर्मैरुपेतो नागरिकः, स च मया न हन्तव्य इति प्रतिज्ञां गृहीत्वा यदा तमेव व्यापादयति बहिःस्थितपर्यायापन्नं तदा तस्य व्रतभङ्ग इति भवतः पक्षः, स च न घटते बहिःस्थस्यापि तस्य नगरधर्मैरुपेतत्वेन नागरिकत्वात्, अतः पर्यायापन्न इत्येतद्विशेषणं नोपपद्यते, अथ सामस्त्येन परित्यज्य नगरधर्मानसौ वर्त्तते तदा तमेवेत्येतद्विशेषणं नोपपद्यते, अत्र तु जीवस्त्रसत्वपर्यायसत्तां परित्यज्य स्थावरः समुत्पद्यते नासौ त्रस एव तदा भवति पूर्वपरित्यागादपरपर्यायापन्नत्वात्, यथा नागरिकः पल्ल्यां प्रविष्टस्तद्धर्मोपेतत्वात् पूर्वधर्मपरित्यागाच्च नागरिक एवासौ न भवति।, न च परस्परसंसरणशीलत्वात् प्राणिनां त्रसकायात्तदायुषा विप्रमुच्यमानाः सर्वे स्थावरकाये स्थावरकायाच्च स्थायुषा विप्रमुच्यमानास्त्रसकाये यदि समुत्पद्यन्ते तदा सर्वेषां त्रसानां स्थावरकायसमुत्पन्नानां स्थानघात्यं वर्त्तते तेन श्रावकेण स्थावरकायवधनिवृत्तेरकरणात्, तथा च निर्विषयं तस्य त्रसवधनिवृत्तिरूपं प्रत्याख्यानं भवति यथा नगरवासी न हन्तव्य इति गृहीतव्रतस्य नगरे उद्वसिते निर्विषयमिति वाच्यम्, सर्वेऽपि त्रसा निर्लेपतया स्थावरत्वमापन्ना इत्येतस्यासम्भवात्, यद्यपि विवक्षितकालवर्त्तिनस्त्रसाः कालपर्यायेण स्थावरकायत्वेन यास्यन्ति तथाप्यपरापरत्रसोत्पत्त्या त्रसजात्यनुच्छेदान्न कदाचिदपि त्रसशून्यः संसारो भवति। अतो न निर्विषयं श्रावकस्येदं व्रतमित्यधिकं सूत्रकृताङ्गे। तदेवं ज्ञानदर्शनचारित्राणि सम्यगवगम्य पापकर्मणामकरणाय समुत्थितः श्रमणो निर्वृतिश्च सः सुगतिलक्षणस्य परलोकस्य परमयमस्य विघाताय तिष्ठति यस्तु महासत्त्वो रत्नाकरवद्गम्भीरो न श्रमणादीन् परिभाषते तेषु च परमां मैत्रीं मन्यते सम्यग्दर्शनज्ञानचारित्राण्यनुगम्य तथा पापानां कर्मणामकरणायोत्थितः स खलु परलोकविशुद्ध्याऽवतिष्ठत इति ॥ ८२ ॥

इत्थं सरलपदौघैः सूत्रकृताब्धेस्समुद्धृता मुक्ताः।
कोमलहृदयैर्हृदये कलिताः कलयन्तु सत्सौख्यम् ॥

इति श्रीतपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितायां सूत्रार्थमुक्तावल्यां सूत्रकृतलक्षणा तृतीया मुक्तासरिका वृत्ता।

विकल्पप्रसङ्गेन तद्दोषवाररूपात्, अत्रोच्यते, एकान्तेन भेदोऽभेदो वा तयोर्नाभ्युपगम्यते किन्त्ववयवा एव तथाविधैकपरिणामादवयविद्रव्यतया व्यपदिश्यन्ते, त एव च तथाविधविचित्रपरिणामापेक्षया अवयवा इति । अवयव्यभावे त्वेते घटावयवा एते पटावयवा इत्येवमसङ्कीर्णव्यवस्थाया असम्भव प्रसज्येत । न च तयोर्भेदः स्याद्विरुद्धधर्माध्यासादिति वक्तव्यम्, एकस्यैव प्रत्यक्षसंवेदनस्य त्वया परमार्थापेक्षया भ्रान्तत्वेन सव्यवहारापेक्षया त्वभ्रान्तत्वेनाभ्युपगमात्, अत्रापि यदि भ्रान्त तत्तर्हि कथमभ्रान्तमिति पर्यनुयोगस्य सम्भवात्, तथा चास्त्यवयविद्रव्यम्, अव्यभिचारितया तथैव प्रतिभासमानत्वात्, अवयववत्, नीलवद्वा, तथा प्रतिभासस्यानुभूयमानत्वादेव न हेतुरसिद्ध, निखिलवस्तूना व्यवस्थाया प्रतिभासाधीनत्वात्रानैकान्तिकत्वविरुद्धत्वे, अन्यथा न किञ्चिद्वस्तु सिद्ध्येत् । ननु नास्त्यात्माऽनुपलभ्यमानत्वात्, न ह्यसौ प्रत्यक्षेणोपलभ्यते, अतीन्द्रियत्वात्, नाप्यनुमानेन, लिङ्गलिङ्गिनोः साक्षात् सम्बन्धादर्शनात्, न वाऽऽगमवेद्यः, आगमानाम् योऽन्य विसंवादादिति चेन्न, विकल्पानुपपत्ते, अनुपलभ्यमानत्व किमेकपुरुषापेक्षया, सकलपुरुषापेक्षया वा, नाद्यः, सत्यपि वस्तुनि तस्य सम्भवात्, न ह्येकस्य कस्यचिद्घटादिग्राहकप्रमाणाप्रवृत्तौ सर्वत्र सर्वदा तदभावो निर्णेतु युज्यते, नापि प्रमाणनिवृत्तौ प्रमेय निवर्त्तते, प्रमाणस्य प्रमेयकार्यत्वेन कार्याभावे कारणाभावस्यादृष्टत्वात् । न द्वितीय पक्ष, असिद्धे, सकलपुरुषाश्रितानुपलम्भस्यासर्वज्ञदुर्ज्ञेयत्वात् । किञ्च विद्यते आत्मा, प्रत्यक्षादिभिरुपलभ्यमानत्वात्, घटादिवदित्यनुमानेन तत्सिद्धि, अहमादिप्रत्यक्षेण ह्यात्मा गम्यते, ज्ञानाभिन्नत्वात्तस्य, तदभिन्नत्वञ्च ज्ञानस्य तद्धर्मत्वात्, ज्ञान तु स्वसंविदितरूपम्, नीलज्ञानमुत्पन्नमासीदिति स्मृते न ह्यसंविदिते स्मृतिरुदेति, अन्यथा पुरुषान्तरज्ञानस्यापि स्मृतिविषयत्वप्रसङ्गात्, तस्मात्तदव्यतिरिक्तज्ञानगुणप्रत्यक्षत्वे गुण्यपि प्रत्यक्ष एव, रूपगुणप्रत्यक्षतया घटादिगुणिप्रत्यक्षवत् । शरीरमिद विद्यमानकर्तृकम्, भोग्यत्वादोदनवदित्यनुमानगम्योऽप्यात्मा, न चौदनकर्त्रवन्मूर्त्त आत्मा स्यादिति वाच्यम्, संसारिणो मूर्त्तत्वेनाभ्युपगमात् । 'एगे आया' इत्यागमगम्योऽप्यात्मा, न चायमागम आगमान्तरैर्विसंवादीति वक्तव्यम्, अस्य सुनिश्चिताऽऽप्तप्रणीतत्वात् । सोऽयमात्मा सप्रदेशः, निरवयवत्वे हस्ताद्यवयवानामेकत्वप्रसङ्ग, प्रत्यवयव स्पर्शाद्यनुपलब्धिप्रसङ्गश्च स्यात्, एवञ्च द्रव्यार्थतया एक आत्मेति, एक आत्मा कथञ्चिदिति वा व्यवसितम् । प्रतिक्षण सम्भवदपरापरकालकृतकुमारतरुणनरनारकत्वादिपर्यायैरुत्पादविनाशयोगेऽपि द्रव्यार्थतयास्यैकत्वात्, कालकृतपर्यायैरुत्पादविनाशेऽपि सर्वथा न नाशः स्वपरपर्यायरूपानन्तधर्मात्मकत्वाद्वस्तुन । प्रतिक्षण सर्वथा विनाशे हि 'प्रतिक्षण क्षयिणो भावाः' इति वचनात् क्षणभङ्गविज्ञान न स्यात्, असंख्यातसमयैरेव वाक्यार्थग्रहणपरिणामात्, एकैकमप्यक्षर हि पदसत्क संख्यातीतसमयसम्भूत संख्यातानि चाक्षराणि पद, पदसंघातश्च वाक्यम्, तदर्थग्रहणपरिणामाच्च सर्वं क्षणभङ्गुरमिति विज्ञान भवेत्, तच्च न समयविनश्वरस्य सम्भवति, तस्मादात्मोत्पादव्ययध्रौव्यात्मक, स्थिररूपापेक्षया नित्यो नित्यत्वाच्चैक, उत्पादव्ययापेक्षया त्वनित्यत्वादनेक इति । एक आत्मा कथञ्चिदिति प्रथमव्याख्याने च सामान्यविशेषरूपत्वाद्वस्तुनः सामान्यापेक्षया एको विशेषापेक्षया त्वनेक इति, सर्वात्मना तुल्य रूपमुपयोग, सर्वात्मसूपयोगाभावेऽनात्मत्वप्रसङ्गादिति ॥ २ ॥

---

अथ स्थानाङ्गसारार्थं वर्णयितुमारभते—

## अथ स्थानाङ्गसारः ॥ १ ॥

**अथेति,** मङ्गलार्थ आनन्तर्यद्योतकश्च, सारतया सूत्रकृताङ्गनिरूपणानन्तरमित्यर्थः, क्रमप्राप्तत्वात्, त्रिवर्षपर्यायस्य ह्याचारप्रकल्पनामाध्ययनं चतुर्वर्षस्य सूत्रकृतं नामाङ्गम्, दशाकल्पव्यवहाराः संवत्सरपञ्चकदीक्षितस्यैव, स्थानाङ्गसमवायावपि चाङ्गे अष्टवर्षस्य देये इति क्रमः । स्थानाङ्गसार इति, स्थानाङ्गसारार्थं उच्यत इत्यर्थः । तिष्ठन्त्यासते—वसन्ति यथावदभिधेयतयैकत्वादिविशेषिता आत्मादयः पदार्था यस्मिन् तत्स्थानम्, अथवा स्थानशब्देनेहैकादिकः संख्याभेदोऽभिधीयते, ततश्चात्मादिपदार्थगतानामेकादिदशान्तानां स्थानानामभिधायकत्वेन स्थानम्, स्थानञ्च तत् प्रवचनपुरुषस्य क्षायोपशमिकभावरूपस्याङ्गमिवाङ्गञ्चेति स्थानाङ्गं तस्य सारमिति ॥ १ ॥

अथ समुत्पन्नकेवलज्ञानेन सकलपदार्थव्याहृतवचनतयाऽऽप्ततीतान्तेन तीर्थकरनामकर्मोदिपरमपुण्यप्राग्भारेणाष्टमहाप्रातिहार्यनिखिलसम्परसमन्वितेन श्रीमहावीरेणैकत्वादिप्रकारेण समस्तवस्तुविस्तारव्याप्त्याऽऽख्यातमात्मादिवस्तुजातं दिशा प्रदर्शयितुकाम एकत्वेनात्मादिव्यापनप्रकारमावेदयति—

## स्यादेक आत्मा, उपयोगलक्षणत्वाद्द्रव्यार्थत्वाद्वा ॥ २ ॥

**स्यादेक इति,** जीवः कथञ्चिदेक इत्यर्थः, अतति सततं गच्छति जानातीत्यात्मा, सिद्धावस्थायां सर्वार्थवस्थायाञ्चोपयोगभावेनानवरतमवबोधस्य सद्भावात्, सततमुपयोगलक्षणावबोधाभावे हि जीवोऽजीवः स्यात्, यस्त्वजीवः स न जीवभावमापद्यते, अन्यथाऽऽकाशादीनामपि जीवत्वं प्रसज्येत, एवञ्च जीवानादिनत्वाभ्युपगमाभावप्रसङ्गः । अथवाऽतति स्वकीयान् ज्ञानादिपर्यायान्निरन्तरमुपयातीत्यात्मा, न च स्वस्वपर्यायेषु गगनादीनामपि गमनादात्मत्वप्रसङ्ग इति वाच्यम्, उपयोगलक्षणत्वात्, उपयोगो लक्षणमसाधारणो धर्मः प्रवृत्तिनिमित्तं यस्यात्मपदस्य स उपयोगलक्षणस्तस्य भावस्तत्त्वम्, तस्मादित्यर्थः, सततं पर्यायगमनं हि व्युत्पत्तिनिमित्तमात्रम्, न तु प्रवृत्तिनिमित्तं स चोपयोग एव सर्वात्मसाधारणोऽतस्तदपेक्षयाऽऽत्मा एक इति भावः, एकात्मद्रव्यापेक्षयाऽप्येकानेकत्वं प्रदर्शयति—**द्रव्यार्थत्वाद्वेति,** अवयविद्रव्यत्वादित्यर्थः, प्रदेशार्थता चावयवलक्षणार्थता, तदपेक्षया त्वनेकत्वं तस्यासंख्येयप्रदेशात्मकत्वात् । ननु नास्त्यवयविद्रव्यं विकल्पद्वयेन तत्साधकमानाभावात्, खरविषाणवत्, अवयविद्रव्यं हि यद्यवयवेभ्योऽभिन्नं तदाऽवयविवदवयवानामप्येकत्वं स्यादवयववद्वाऽवयविद्रव्यमनेकं भवेत्, अन्यथा भेद एव स्यात्, विरुद्धधर्माध्यासस्य भेदनिबन्धनत्वात् । यदि चावयवेभ्यस्तद्भिन्नं तर्ह्यवयवेषु किं प्रत्येकं सर्वात्मना वा समवैति, देशतो वा, यदि सर्वात्मना तर्ह्यवयवी नाना भवेत्, प्रत्येकं पर्याप्तत्वात्, यदि देशैः समवैति तदा यैर्देशैरवयवेषु सम्वर्तते तेष्वपि देशेषु तथैव

विकल्पप्रसङ्गेन तद्दोषतादवस्थ्यात्, अत्रोच्यते, एकान्तेन भेदोऽभेदो वा ययोर्नाभ्युपगम्यते । यत एव तथाविधैकपरिणामान्वयविद्रव्यतया व्यपदिश्यन्ते, त एव च तथाविधभिन्नापेक्षया अवयवा इति । अवयव्यभावे त्वेते पटावयवा एवं पटावयवा इत्येवमसङ्कीर्णव्यवहारासम्भवः प्रसज्येत । न च तयोर्भेदः स्याद्विरुद्धधर्माध्यासादिति वक्तव्यम्, एकस्यैव प्रत्या[...] परमार्थापेक्षया भ्रान्तत्वेन सद्व्यवहारापेक्षया त्वभ्रान्तत्वेनाभ्युपगमात्, अत्रापि तर्हि कथमभ्रान्तमिति पर्यनुयोगस्य सम्भवात्, तथा चाल्पावयविद्रव्यम्, अवयविभिन्नाभिन्नप्रतिभासमानत्वात्, अवयववत्, नीलवद्वा, यथा प्रतिभासमानमनुभूयमानत्वादेव न हि निखिलवस्तूनां व्यवस्थायाः प्रतिभासाधीनत्वान्नानैकान्तिकत्वविरुद्धत्वे, अन्यथा न सिद्ध्येत् । ननु नास्त्यात्माऽनुपलभ्यमानत्वात्, न ह्यसौ प्रत्यक्षेणोपलभ्यते, अतीन्द्रियत्वात्, नानुमानेन, लिङ्गलिङ्गिनोः साक्षात् सम्बन्धादर्शनात्, न चाऽऽगमवेद्यः, आगमानामन्योऽन्यविरोधादिति चेन्न, विकल्पानुपपत्तेः, अनुपलभ्यमानत्वं किमेकपुरुषापेक्षया, सकलपुरुषापेक्षया वा, नाद्यः, सत्यपि वस्तुनि तस्य सम्भवात्, न ह्येकस्य कस्यचिद्घटादिग्राहकप्रमाणाप्रवृत्तौ स तदभावो निर्णेतुं युज्यते, नापि प्रमाणनिवृत्तौ प्रमेयं निवर्तते, प्रमाणस्य प्रमेयकार्यत्वात् कारणाभावस्यादृष्टत्वात् । न द्वितीयः पक्षः, असिद्धेः, सकलपुरुषाधिगतानुपलम्भस्यासत्त्वात् । किञ्च विद्यते आत्मा, प्रत्यक्षादिभिरुपलभ्यमानत्वात्, घटादिवदित्यनुमानेन तदितरादिप्रत्यक्षेण ह्यात्मा गम्यते, ज्ञानाभिन्नत्वात्तस्य, तदभिन्नत्वञ्च ज्ञानस्य तद्धर्मत्वात्, स्वविदितरूपम्, नीलज्ञानमुत्पन्नमासीदिति स्मृतेः न ह्यसंविदितस्य स्मृतिरुदेति, अन्यथा ज्ञानस्यापि स्मृतिविषयताप्रसङ्गात्, तस्मात्तद्व्यतिरिक्तज्ञानगुणप्रत्यक्षत्वे गुण्यपि प्रत्यक्षः प्रत्यक्षतया घटादिगुणिप्रत्यक्षवत् । शरीरमिदं विद्यमानकर्तृकम्, भोग्यत्वादोदनवदित्यप्यात्मा, न चौदनकर्तृवन्मूर्त आत्मा स्यादिति वाच्यम्, संसारिणो मूर्तत्वेनाभ्युपगमात्, इत्यागमगम्योऽप्यात्मा, न चायमागम आगमान्तरैर्विसंवादीति वक्तव्यम्, आप्तप्रणीतत्वात् । सोऽयमात्मा सप्रदेशः, निरवयवत्वे हस्ताद्यवयवानामेकत्वप्रसङ्गः प्रत्यङ्गानुपलब्धिप्रसङ्गश्च स्यात्, एवञ्च द्रव्यार्थतया एक आत्मेति, एक आत्मा कथञ्चिदित्येवम् । प्रतिक्षणं सम्भवत्परापरकालकृतकुमारतरुणनरनारकत्वादिपर्यायैरुत्पादविनाशधर्मतयानेकत्वात्, कालकृतपर्यायोत्पादविनाशेऽपि सर्वथा न नाशः स्वपरपर्यायात्मकत्वाद्वस्तुनः । प्रतिक्षणं सर्वथा विनाशे हि 'प्रतिक्षणं क्षयिणो भावाः' इति पदविज्ञानं न स्यात्, असङ्ख्यातसमयैरेव वाक्यार्थग्रहणपरिणामात्, एकैकमप्यक्षरं हि पदगतीतसमयसम्भूतं सङ्ख्यातानि चाक्षराणि पदं, पदसङ्घातश्च वाक्यम्, तदर्थग्रहणपरिणामश्च क्षणभङ्गुरमिति विज्ञानं भवेत्, तच्च न समयविनश्वरस्य सम्भवति, तस्मादात्मोत्पादव्ययध्रौव्यात्मकः, स्थिररूपापेक्षया नित्यो नित्यत्वाच्चैकः, उत्पादव्ययापेक्षया त्वनित्यत्वादनेक इति कथञ्चिदिति प्रथमव्याख्याने च सामान्यविशेषरूपत्वाद्वस्तुनः सामान्यापेक्षया एको । त्वनेक इति, सर्वात्मना तुल्यरूपमुपयोगं, सर्वात्मसूपयोगाभावेऽनात्मत्वप्रसङ्गादिति ।

पापम्, तथाष्टादशविधमपि द्व्यशीतिभेदमपि पुण्यानुबन्धिपापानुबन्धिभेदाद्द्विविधमप्यनन्तसत्त्वाश्रितत्वादनन्तमपि वाऽशुभसामान्यादेकम् । ननु कर्मैव न विद्यते प्रमाणाविषयत्वाद्गगनकुसुमवदिति चेन्न, यदिदं जगत्यात्मत्वेनाविशिष्टानामात्मनां देवासुरनरतिर्यगादिरूपं नरपतिरङ्कमनीषिमन्दमहर्द्धिदरिद्रादिरूपं वा वैचित्र्यं तन्न निर्हेतुकम्, नित्यभावाभावदोषप्रसङ्गात्, यदेव च निमित्तं तत्र तत्कर्मेत्युच्यते, न च दृष्ट एवेष्टानिष्टविषयप्राप्तिमयो हेतुर्भविष्यति, किमदृष्टकर्मकल्पनया, न हि दृष्टेऽदृष्टकल्पना न्याय्या, अतिप्रसङ्गादिति वाच्यम्, इष्टसाधनशब्दादिविषयसमेतयोर्द्वयोरेकस्य दुःखानुभूतेरपरस्य च सुखानुभूतेर्दर्शनात्, एवं तु ससाधनसमेतयोरपि फलवैचित्र्यदर्शनान्न तद्धेतुक एवासौ फलविशेषः, साधनानां विपर्यासात्, यश्च तत्र विशिष्टो हेतुस्तदेव कर्म । एवं बालशरीरं शरीरान्तरपूर्वकम्, इन्द्रियादिमत्त्वात्, युवशरीरवदित्यनुमानेन शरीरान्तरस्य कर्मणः सिद्धिः, न च जन्मान्तरातीतशरीरपूर्वकमेवेति शक्यते वक्तुम्, तस्यापान्तरालगतावसत्त्वेन तत्पूर्वकत्वानुपपत्तेः, न चाशरीरिणो नियतगर्भदेशस्थानप्राप्तिः, नियामकाभावात्, तथा च यच्छरीरपूर्वकं बालशरीरं तत्कर्ममयमिति, तच्च पौद्गलिकम्, आत्मनः पारतन्त्र्यनिमित्तत्वात्, निगडादिवत्, न च क्रोधादिना व्यभिचारस्तन्निमित्तभूतस्य पौद्गलिकत्वात् । ननु भवतु कर्म, तच्च पापरूपमेव, न तु पुण्यरूपमपि, परमप्रकर्षावस्थं पापं कर्मोत्कृष्टदुःखफलं जनयति तस्यैव च तरतमयोगाद्धानिः क्रमेणापकर्षेण सुखकारणम्, यथाऽपथ्यस्य क्रमेण वृद्धौ रोगवृद्धिः क्रमेण च तस्यापकर्षे रोगशमनलक्षणं सुखं तथा प्रकृतेऽपि, एवं पापानभ्युपगमे पुण्यकर्मणोऽपचयोपचयभावेन सुखदुःखे चिन्तनीये, मैवम्, सुखदुःखे स्वानुरूपकारणके कार्यत्वाद्घटादिवत्, घटस्य ह्यनुरूपं कारणं परमाणवः, तथेहापि सुखस्य पुण्यं दुःखस्य पापमनुरूपं कारणमित्यनुमानाद्वयोः सिद्धेः । न चानुरूपकारणत्वे साध्ये सुखदुःखयोरात्मपरिणामत्वात्पुण्यपापात्मकं कर्मापि तथा स्यात्, यदि च तद्रूपवत्तर्हि नानुरूपं मूर्तत्वेन विलक्षणत्वादिति वाच्यम्, कार्यकारणयोः सर्वथा सारूप्यतायाः सर्वथा विरूपतायाः वाऽनिष्टत्वात्, सर्वथाऽनुरूपत्वे कार्यकारणयोर्भेद एव न स्यात् सर्वथा भेदे च घटस्य मृत्तिकैव कारणं न पाषाणादिरिति नियमो न भवेत्तस्मात्कार्यकारणयोस्तुल्यातुल्यरूपत्वमेवेति । पुण्यपापकर्मणोर्बन्धकारणमा**ह्यास्रवेति**, आस्रवन्ति प्रविशन्ति येन कर्माण्यात्मनीत्यास्रवः कर्मबन्धहेतुरिति भावः, स चेन्द्रियकषायाव्रतक्रियायोगरूपः क्रमेण पञ्चचतुःपञ्चपञ्चविंशतित्रिभेदः, तदेवं द्विचत्वारिंशद्विधोऽपि द्रव्यभावभेदाद् द्विविधोऽप्यास्रवसामान्यादेकः । आस्रवप्रतिपक्षसंवरमाह—**संवरेति**, संव्रियते कर्मकारणं प्राणातिपातादि निरुध्यते येन परिणामेन स संवरः, आस्रवनिरोध इत्यर्थः, स च समितिगुप्तिधर्मानुप्रेक्षापरीषहचारित्ररूपः क्रमेण पञ्चत्रिदशद्वादशद्वाविंशतिपञ्चभेदो द्रव्यतो भावतश्च द्विविधो वा तथापि संवरसामान्यादेकः । संवरविशेषे चायोग्यवस्थारूपे कर्मणां वेदनैव न बन्ध इति वेदनास्वरूपमाह **वेदनेति**, वेदनं वेदना स्वभावेनोदीरणाकरणेन वोदयावलिकाप्रविष्टस्य कर्मणोऽनुभवनम्, सा च ज्ञानावरणीयादिकर्मापेक्षयाऽष्टविधापि विपाकोदयप्रदेशोदयापेक्षया द्विविधापि वेदनासामान्यादेकैवेति । अनुभूतरसं कर्म प्रदेशेभ्यः परिशटतीति निर्जरास्वरूपं सङ्ग्रहमाह—**निर्जरेति**, निर्जरणं निर्जरा परिशटनमित्यर्थः, सा चाष्टविधकर्मापेक्षयाऽष्टविधापि द्वादशविधतपोजन्यतया द्वादशविधापि निर्जरासामान्यादेकविधैव । देशतः कर्मक्षयो निर्जरा सर्वतस्तु मोक्ष इति तयोर्भेद इति ॥ ४ ॥

वश्यकत्वात्, निषेध्यसदृशस्यैव पर्युदासनञावबोधात्। यथाऽपण्डित इत्युक्ते विशिष्टज्ञानविकलश्चेतन एव गम्यते न घटादि। **धर्माधर्मेति,** धर्मास्तिकायोऽधर्मास्तिकायश्चेति भाव, जीवपुद्गलाना स्वभावत एव गतिस्थितिपरिणतानामपेक्षाकारण धर्मास्तिकायोऽधर्मास्तिकायश्च, अलोकलक्षणाकाशाभ्युपगमे च धर्माधर्मौ लोकपरिमाणकारिणाववश्य स्याताम्, अन्यथाऽऽकाशस्य निर्विशिष्टतया लोकोऽलोको वेति विशेषो न स्यात्, तथा चाविशिष्ट एवाकाशे गतिमतामात्मना पुद्गलानाञ्च प्रतिघाताभावादनवस्थानेन सम्बन्धाभावात्सुखदुःखबन्धादिसव्यवहारो न स्यात्, स चाय धर्मोऽधर्मश्च प्रत्येक प्रदेशार्थतयाऽसङ्ख्यातप्रदेशात्मकोऽपि द्रव्यार्थतयैकरूप इति भावः। अथात्मनो लोकवृत्ते सदण्डस्य सक्रियस्य कर्मबन्धाद्बन्धमाश्रित्य सङ्ग्रहमाह **बन्धमोक्षेति,** सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते यस्मात्स बन्धः, स च प्रकृतिस्थितिप्रदेशानुभावभेदाच्चतुर्विधोऽपि बन्धसामान्यादेक इत्यर्थ, ननु बन्धो जीवस्य कर्मणा सयोग, स किं सादिरादिरहितो वा, प्रथमे किं पूर्वं जीव पश्चात्कर्म प्रसूयते, किं वा पूर्वं कर्म पश्चाज्जीव, अथवा द्वावपि युगपत्। तत्र न प्रथम जीवसम्भूति, निर्हेतुकत्वात्, खरविषाणवत्, जीवस्य नित्यत्वेऽपि कर्मबन्धो न स्यादकारणत्वाद्गगनवत्, यदि तु निष्कारणमेव भवेत् स्या मुक्तस्यापि पुनः स., कर्मयोगाभावे च नित्यमुक्त एव स्यात्, अथवा बन्धाभावे मुक्तत्वव्यपदेशोऽपि न स्यात्, न द्वितीयः, जीवस्य कर्तुस्तदानीमभावात् पूर्वं कर्म न भवेदक्रियमाणत्वात्, कर्त्रभावेऽपि तस्य भावे विनाशोऽपि तथैव भवेत्। नापि तृतीयः, युगपदुत्पन्नयोः कार्यकारणभावाभावेन जीवः कर्त्ता ज्ञानावरणादिक तस्य कर्मेति व्यपदेशो न स्यात्। कर्मणश्चानादित्वे मोक्षो न स्यात्, अनादित्वस्यानन्तत्वव्याप्यत्वात्, तस्मान्नास्ति बन्धो मोक्षो वेति चेदुच्यते सादिपक्षोऽनभ्युपगमान्निरस्त, अनादिपक्षस्याश्रयणात्, अनादित्वस्यान तत्वव्याप्यत्वे मानाभावात्, काञ्चनोपलयोः सयुक्तयोः सान्तत्वदर्शनात्, बीजाङ्कुरसन्तानस्य तन्मध्यगतस्यैकस्य दाहादिना विनाशे च सान्ततादर्शनात्, तथैव जीवकर्मसंयोगोऽनादिसन्तानगतोऽपि तपःसयमाद्युपायाद्व्यवच्छिद्यतेऽतो न मोक्षाभावः, एवमनादिजीवकर्मयोग कथञ्चिदनन्तः यथाऽभव्यानाम्, कथञ्चित्सान्तो यथा भव्यानाम्। जीवत्वसाम्येऽपि हि भव्याभव्यत्वविशेषो नरकतिर्यगादिविशेष इव भविष्यतीति न वक्तव्यम्, द्रव्यत्वादिसामान्येऽपि यथा चेतनाचेतनभेदः स्वभावतस्तथा भव्याभव्यत्वभेदोऽपि, न चैव जीवत्ववद्भव्यत्वस्याविनाशित्व स्यात्तथा च सति न निर्वाणम्, सिद्धो न भव्यो नाप्यभव्य इति वचनादिति वाच्यम्, घटप्रागभावस्यानादिस्वभावत्वेऽपि घटोत्पत्तौ विनाश इव ज्ञानतपश्चरणक्रियोपायतो भव्यत्वस्यापि विनाशसम्भवादिति। कर्मपाशवियोजन मोक्षः, स च ज्ञानावरणादिकर्मापेक्षयाऽष्टविधोऽपि मोचनसामान्यादेकः, मुक्तस्य पुनर्मोक्षाभावात्, कारणस्य कर्मणोऽभावात्, द्रव्यत्वे सत्यमूर्तत्वाद्वा गगनवन्नित्यो मुक्तात्मा, न चामूर्तद्रव्यत्वादाकाशवन्निष्क्रियत्व वक्तव्यम्, चेतनत्ववत्सक्रियत्वस्य तदानीमप्यङ्गीकारे बाधकाभावादन्यथा चेतनत्वमपि न स्यादिति। मोक्षस्य पुण्यपापक्षयाद्भावात्पुण्यपापयो सङ्ग्रहमाह—**पुण्यपापेति,** पुणति शुभीकरोति पुनाति वा—पवित्रीकरोत्यात्मानमिति पुण्यम्, सद्वेद्यादिशुभकर्म द्विचत्वारिंशद्विधमपि पुण्यानुबन्धिपापानुबन्धिभेदेन द्विविधमपि प्रतिप्राणिविचित्रत्वादनन्तभेदमपि वा पुण्यसामान्यादेकम्, पातयत्यात्मन आनन्दरसमिति पापमधःपतनकारित्वाद्वा

पापम्, तथाष्टादशविधमपि द्व्यशीतिभेदमपि पुण्यानुबन्धिपापानुबन्धिभेदाद्द्विविधमप्यनन्तसत्त्वाश्रितत्वादनन्तमपि वाऽशुभसामान्यादेकम् । ननु कर्मैव न विद्यते प्रमाणाविषयत्वाद्गगनकुसुमवदिति चेन्न, यदिदं जगत्यात्मत्वेनाविशिष्टानामात्मनां देवासुरनरतिर्यगादिरूपं नरपतिरङ्कमनीषिमन्दमहर्द्धिदरिद्रादिरूपं वा वैचित्र्यं तन्न निर्हेतुकम्, नित्यभावाभावदोषप्रसङ्गात्, यदेव च निमित्तं तत्र तत्कर्मेत्युच्यते, न च दृष्ट एवेष्टानिष्टविषयप्राप्तिमयो हेतुर्भविष्यति, किमदृष्टकर्मकल्पनया, न हि दृष्टेऽदृष्टकल्पना न्याय्या, अतिप्रसङ्गादिति वाच्यम्, इष्टसाधनशब्दादिविषयसमेतयोर्द्वयोरेकस्य दुःखानुभूतेरपरस्य च सुखानुभूतेर्दर्शनात्, एवं तु स्वसाधनसमेतयोरपि फलवैचित्र्यदर्शनान्न तद्धेतुक एवासौ फलविशेषः, साधनानां विपर्यासात्, यश्च तत्र विशिष्टो हेतुस्तदेव कर्म । एवं बालशरीरं शरीरान्तरपूर्वकम्, इन्द्रियादिमत्त्वात्, युवशरीरवदित्यनुमानेन शरीरान्तरस्य कर्मणः सिद्धिः, न च जन्मान्तरातीतशरीरपूर्वकमेवेति शक्यते वक्तुम्, तस्यापान्तरालगतावसत्त्वेन तत्पूर्वकत्वानुपपत्तेः, न चाशरीरिणो नियतगर्भदेशस्थानप्राप्तिः, नियामकाभावात्, तथा च यच्छरीरपूर्वकं बालशरीरं तत्कर्ममयमिति, तच्च पौद्गलिकम्, आत्मनः पारतन्त्र्यनिमित्तत्वात्, निगडादिवत्, न च क्रोधादिना व्यभिचारस्तन्निमित्तभूतस्य पौद्गलिकत्वात् । ननु भवतु कर्म, तच्च पापरूपमेव, न तु पुण्यरूपमपि, परमप्रकर्षावस्थं पापं कर्मोत्कृष्टदुःखफलं जनयति तस्यैव च तरतमयोगाद्धानिः क्रमेणापकर्षेण सुखकारणम्, यथाऽपथ्यस्य क्रमेण वृद्धौ रोगवृद्धिः क्रमेण च तस्यापकर्षे रोगशमनलक्षणं सुखं तथा प्रकृतेऽपि, एवं पापानभ्युपगमे पुण्यकर्मणोऽपचयोपचयभावेन सुखदुःखे चिन्तनीये, नैवम्, सुखदुःखे स्वानुरूपकारणके कार्यत्वाद्घटादिवत्, घटस्य ह्यनुरूपं कारणं परमाणवः, तथेहापि सुखस्य पुण्यं दुःखस्य पापमनुरूपं कारणमित्यनुमानात्तयोः सिद्धेः । न चानुरूपकारणत्वे साध्ये सुखदुःखयोरात्मपरिणामत्वात्पुण्यपापात्मकं कर्मापि तथा स्यात् यदि च तद्रूपवत्तर्हि नानुरूपं मूर्त्तत्वेन विलक्षणत्वादिति वाच्यम्, कार्यकारणयोः सर्वथा सारूप्यताया सर्वथा विरूपताया वाऽनिष्टत्वात्, सर्वथाऽनुरूपत्वे कार्यकारणयोर्भेद एव न स्यात् सर्वथा भेदे च घटस्य मृत्तिकैव कारणं न पाषाणादिरिति नियमो न भवेत्तस्मात्कार्यकारणयोस्तुल्यातुल्यरूपतैवेति । पुण्यपापकर्मणोर्बन्धकारणमाहास्रवेति, आस्रवन्ति प्रविशन्ति येन कर्माण्यात्मनीत्यास्रवः, कर्मबन्धहेतुरिति भावः, स चेन्द्रियकषायाव्रतक्रियायोगरूपः क्रमेण पञ्चचतुःपञ्चपञ्चविंशतित्रिभेदः, तदेवं द्विचत्वारिंशद्विधोऽपि द्रव्यभावभेदाद् द्विविधोऽप्यास्रवसामान्यादेकः । आस्रवप्रतिपक्षसंवरमाह—**संवरेति,** संव्रियते कर्मकारणं प्राणातिपातादि निरुध्यते येन परिणामेन स संवरः, आस्रवनिरोध इत्यर्थः, स च समितिगुप्तिधर्मानुप्रेक्षापरीषहचारित्ररूपः क्रमेण पञ्चत्रिदशद्वादशद्वाविंशतिपञ्चभेदो द्रव्यतो भावतश्च द्विविधो वा तथापि संवरसामान्यादेकः । संवरविशेषे चायोग्यवस्थारूपे कर्मणां वेदनैव न बन्ध इति वेदनास्वरूपमाह **वेदनेति,** वेदनं वेदना स्वभावेनोदीरणाकरणेन चोदयावलिकाप्रविष्टस्य कर्मणोऽनुभवनम्, सा च ज्ञानावरणीयादिकर्मापेक्षयाऽष्टविधापि विपाकोदयप्रदेशोदयापेक्षया द्विविधापि वेदनासामान्यादेकैवेति । अनुभूतरसं कर्म प्रदेशेभ्यः परिशटतीति निर्जरास्वरूपं सङ्ग्रहमाह—**निर्जरेति,** निर्जरणं निर्जरा परिशटनमित्यर्थः, सा चाष्टविधकर्मापेक्षयाऽष्टविधापि द्वादशविधतपोजन्यतया द्वादशविधापि निर्जरासामान्यादेकविधैव । देशतः कर्मक्षयो निर्जरा सर्वतस्तु मोक्ष इति तयोर्भेद इति ॥ ४ ॥

आत्मधर्माश्रयेणाह—

**भवधारणशरीरविकुर्वणामनोवाक्कायव्यापारादयोऽपि तथा, सामान्यादेकदैकस्यैव भावाच्च ॥ ५ ॥**

**भवेति,** वैक्रियशरीरं द्विविधं भवधारणीयमुत्तरवैक्रियञ्चेति । तत्र बाह्यपुद्गलग्रहणमन्तरेण भवधारणीयवैक्रियशरीररचना स्वस्वोत्पत्तिस्थाने जीवैः क्रियते, तच्च विरचनं सर्वं तत्सामान्यात्कथञ्चिदेकम्, एकस्मिन् समये एकजीवे एकस्यैव भावाद्वैकम्, उत्तरवैक्रियञ्च बाह्यपुद्गलग्रहणान्निवर्त्यते सा च रचना विचित्राभिप्रायपूर्वकत्वाद्वैक्रियलब्धिमतस्तथाविधशक्तिमत्त्वाच्चैकजीवस्याप्यनेकापि स्यात् । मननं मनः, औदारिकादिशरीरव्यापाराहृतमनोद्रव्यसाचिव्याज्जीवव्यापारो मनोयोग इति भावः, मन्यतेऽनेनेति वा मनो द्रव्यविशेषः तच्च मनः सत्यादिभेदादनेकमपि सञ्ज्ञिनां वाऽसङ्ख्यातत्वादसङ्ख्यातभेदमपि मननलक्षणत्वेन सर्वमनसामेकत्वादेकम्, यस्मिन् वा समये विचार्यते तस्मिन् समये एकजीवापेक्षया एक एव मनोयोगः न कदापि समये द्व्यादिसङ्ख्यः सम्भवति ततो जीवानामेकोपयोगादेकत्वं तस्य, न च नैकोपयोगो जीवे, युगपच्छीतोष्णस्पर्शविषयसंवेदनद्वयदर्शनात्तथाविधभिन्नविषयोपयोगपुरुषद्वयवदिति वाच्यम्, भिन्नसमयत्वाच्छीतोष्णोपयोगस्य, यौगपद्यप्रतीतिस्तु समयमनसोरतिसूक्ष्मत्वात्, न पुनर्युगपदेव, अन्यथाऽन्यत्र गतचेताः पुरोवस्थितं हस्तिनमपि किं न विषयीकरोतीति । सत्यादिस्वरूपाणां वा मनोयोगानामेकदैकस्यैव भावो न द्व्यादीनां विरोधादिति । वचनं वाक्, औदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्याज्जीवव्यापारो वाग्योगः, स च सत्यादिभेदादनेकोऽप्येक एव, सर्ववाचां वचनसामान्येऽन्तर्भावात्, एकस्यैकदा भावाद्वैकम् । औदारिकादिशरीरयुक्तस्यात्मनो वीर्यपरिणतिविशेषः काययोगः, स औदारिकादिभेदेन सप्तप्रकारोऽपि जीवानन्तत्वेनानन्तभेदोऽपि काययोगसामान्यादेक एव, सप्तानां काययोगानामेकदैकतरस्यैवैकस्य भावादेकदा स एक एव । नन्वेकदा कथं न काययोगद्वयम्, आहारकप्रयोगकाले चौदारिकावस्थितेः श्रूयमाणत्वादिति चेन्न, तत्सत्त्वेऽपि तस्य व्यापाराभावात्, तस्यापि तदा व्याप्रियमाणत्वे मिश्रयोगतैव स्यात्, केवलिसमुद्घाते सप्तमषष्ठद्वितीयसमयेष्वौदारिकमिश्रवत्, तथा च केवलाहारकप्रयोगो न लभ्येत, एवञ्च सति सप्तविधकाययोगप्रतिपादनमनर्थकं स्यादत एक एव काययोगः । एवं चक्रवर्त्यादेरपि कृतवैक्रियशरीरस्यौदारिकं निर्व्यापारमेव, सव्यापारत्वे चोभयस्य व्यापारवत्त्वेन मिश्रयोगतया तथाप्येकत्वस्याव्याहतत्वात्, क्रमेण व्याप्रियमाणत्वेऽपि यौगपद्यप्रतीतेर्भ्रान्तत्वेनैकत्वस्याव्याहतत्वाच्चेति । आदिपदेन कायव्यापारविशेषाणामुत्थानभ्रमणबलवीर्यपुरुषकारपराक्रमादीनां ग्रहणम्, एतेषां वीर्यान्तरायक्षयोपशमवैचित्र्यतः प्रत्येकं जघन्यादिभेदैरनेकत्वेऽप्येकजीवस्यैकदा क्षयोपशममाश्रित्य एकविधत्वादेकत्वं विभावनीयम् ॥ ५ ॥

पराक्रमादेश्च ज्ञानादेर्मोक्षमार्गस्य प्राप्तेर्ज्ञानादीनां निरूपणायाह—

**ज्ञानदर्शनचारित्राणि समयविशेषाश्च तथा ॥ ६ ॥**

**ज्ञानेति,** ज्ञायन्ते परिच्छिद्यन्तेऽर्था अनेनास्मिन्नस्माद्वेति ज्ञानम्, ज्ञानदर्शनावरणयोः क्षयः

क्षयोपशमो वा ज्ञातिर्वा, आवरणक्षयक्षयाद्याविर्भूत आत्मपर्यायविशेष. सामान्यविशेषात्मके वस्तुनि विशेषांशग्रहणप्रवण सामान्यांशग्राहकञ्च ज्ञानपञ्चकाज्ञानत्रयदर्शनचतुष्टयरूप , तथानेकमप्यवबोधसामान्यादुपयोगापेक्षया चैकम्, लब्धितो हि बहूना बोधविशेषाणामेकदा सम्भवेऽप्युपयोगत एक एव, एकोपयोगत्वाज्जीवानाम् । ननु कथ दर्शनस्य ज्ञानव्यपदेशो विषयभेदादिति चेन्न, अवबोधसामान्यात्तयोक्तेः, 'आभिनिबोहियनाणे अट्ठावीसं हवन्ति पयडीउ' इत्यागमे ज्ञानग्रहणेन दर्शनस्यापि गृहीतत्वाच्च, **दर्शनेति,** श्रद्धानमात्र दर्शनम्, ज्ञानादित्रयस्य सम्यक्छन्दलाञ्छितत्वे सति मोक्षमार्गतया विवक्षितत्वात्, मोक्षमार्गभूतञ्चैतत्त्रय श्रद्धानपर्यायेण दर्शनेनैव सहेति । दृश्यन्ते श्रद्धीयन्ते पदार्था अनन्तास्मादस्मिन् चेति दर्शन दर्शनमोहनीयस्य क्षय क्षयोपशमो दर्शनमोहनीयक्षयाद्याविर्भूततत्त्वश्रद्धानरूप आत्मपरिणामो वा, तथोपाधिभेदादनेकविधमपि श्रद्धानसामान्यादेकम्, एकस्य जीवस्य चैकदैकस्यैव भावात्, रुचिः सम्यक्त्व तत्कारणन्तु ज्ञानमिति, **चारित्राणीति,** पर्यंते मुमुक्षुभिरासेव्यते तदिति चारित्र यद्वा चयस्य कर्मणा रिक्तीकरणाच्चरित्रम्, चारित्रमोहनीयक्षयाद्याविर्भूत आत्मनो विरतिरूप परिणामः, तस्य सामायिकादिभेदत्वेऽपि विरतिसामान्यादेकस्यैकदा भावाद्वैकम्, ज्ञानादीन्युत्पादव्ययस्थितिमन्ति स्थितिश्च समयादिकेति समय प्ररूपयति **समयविशेषाश्चेति,** विशेषपदेन निरंशता सूच्यते, परमनिरुद्धकाल समय स चैक एव वर्त्तमानस्वरूप , अतीतानागतयोर्विनष्टानुत्पन्नत्वेनाभावात्, अथवाऽसावेक स्वरूपेण निरंशत्वात्, चशब्देन निरंशभूतयोः प्रदेशपरमाण्वोर्ग्रहणम्, प्रकृष्टो निरंशो धर्मादीना देशोऽवयवविशेषः प्रदेश स चैक स्वरूपत , सद्वितीयादौ देशव्यपदेशेन प्रदेशत्वाभावात् । परमाणुरत्यन्तसूक्ष्मो द्व्यणुकादीना कारणभूत , स च स्वरूपत एकोऽन्यथा परमाणुत्वासम्भवात् । अथवा समयादीना प्रत्येकमनन्तानामपि तुल्यरूपापेक्षयैकत्वमिति ॥ ६ ॥

अथ पुद्गलधर्माणा तदालिङ्गितजीवाप्रशस्तधर्माणामेकतामाह—

**रूपादयोऽव्रतकषायप्रेमद्वेषकलहाभ्याख्यानपैशुन्यपरपरिवादारतिरतिमायामृषामिथ्यात्वशल्यानि सविपक्षाणि च ॥ ७ ॥**

**रूपादय इति,** रूपरसगन्धस्पर्शशब्दा इत्यर्थ तत्र रूपादयः स्वस्वावान्तरभेदापेक्षयाऽनेकेऽपि स्वस्वसामान्यादेकरूपा इति भावः । **अव्रतेत्यादि,** प्राणातिपातो द्रव्यभावभेदेन द्विविधः, विनाशपरितापसङ्क्लेशभेदेन त्रिविधः, योगैः करणैर्नवविध , क्रोधादिभेदात् षट्त्रिंशद्विधो वा, मृषावादो द्रव्यभावभेदेन द्विविध , अभूतोद्भावनभूतनिह्नववस्त्वन्तरन्यासनिन्दाभेदेन चतुर्विध , अदत्तादान विविधोपाधिवशादनेकविधम्, मैथुनमौदारिकवैक्रियविषय करणैर्योगैरष्टादशविध विविधोपाधितो बहुतर , वा, परिग्रहो बाह्याभ्यन्तरभेदेन द्विविध., विविधोपाधितो बहुविधो वा । कषाया क्रोधमानमायालोभाः, कषायमोहनीयकर्मपुद्गलोदयसम्पाद्या जीवपरिणामाः, ते चानन्तानुबन्ध्यादिभेदतोऽसङ्ख्याताध्यवसायस्थानभेदतो वा बहुविधाः । प्रियस्य भावः कर्म वा प्रेम, तच्चानभिव्यक्तमायालोभलक्षणभेदस्वभावमभिष्वङ्गमात्रम्, द्वेषण द्वेषः स चानभिव्यक्तक्रोधमानलक्षणभेदस्वभावोऽप्रीतिमात्रमिति ।

कलहः, अभ्याख्यान–प्रकटमसद्दोषारोपणम्, पैशुन्य पिशुनकर्म प्रच्छन्न सदसद्दोषाविर्भावनम्, परेषां परिवादः परपरिवादो विकत्थनम्, अरतिस्त मोहनीयोदयजश्चित्तविकार उद्वेगलक्षणः, रतिस्तथाविधानन्दरूपा, अरतिरतीत्येकमेव विवक्षितम्, यतः क्वचन विषये या रतिस्तामेव विषयान्तरापेक्षयाऽरतिं तथाऽरतिमेव रतिं व्यपदिशन्तीत्यौपचारिकमेकत्वमनयो.। मायया सह मृषा मायामृषा, इद मानमृषादि सयोगदोषोपलक्षकम्। प्रेमादीनि विषयभेदादध्यवसायभेदाद्वा बहुविधानि, मिथ्यादर्शन विपर्यस्तदृष्टिः, तदेव शल्य दु खहेतुत्वात्, मिथ्यादर्शन च पञ्चधाऽभिग्रहिकानभिग्रहिकाभिनिवेशिकानाभोगिकसाशयिकभेदात्, उपाधिभेदतो बहुतर वा, सर्वेषामेषा प्राणातिपातादीनां स्वस्वसामान्यादेकत्वमवगन्तव्यम्। एषामष्टादशपापस्थानाना विपक्षा प्राणातिपातविरमणादिरूपा अपि तथैवेति दर्शयति **सविपक्षाणि चेति** ॥ ७ ॥

कालस्य स्थितिरूपत्वेन द्रव्यधर्मत्वात्तद्विशेषाश्रयेणाह—

## षडरका अवसर्पिण्युत्सर्पिणी च ॥ ८ ॥

**षडिति,** अवसर्पति हीयमानारकतया, अवसर्पयति वाऽऽयुष्कशरीरादिभावान् हापयतीत्यवसर्पिणी, सूक्ष्माद्धासागरोपमाणा दशकोटीकोट्यात्मक कालविशेषः, अत्र च समस्ता अपि शुभा भावाः क्रमेणानन्तगुणतया हीयन्ते, अशुभा भावाश्च क्रमेणानन्तगुणतया परिवर्द्धन्ते, अस्य षडरकाः, सुषमसुषमा सुषमा सुषमदु षमा दुःषमसुषमा दुःषमा दु षमदु षमा चेति, सुष्ठु शोभनाः समा वर्षाणि यस्या सा सुषमा, सुषमा चासौ सुषमा च सुषमसुषमा, तत्राद्याना तिसृणा समाना क्रमेण सागरोपमकोटीकोट्यश्चतुस्त्रिद्विसख्या, चतुर्थ्यास्त्वेका द्विचत्वारिंशद्वर्षसहस्रोना, अन्त्ययोस्तु प्रत्येक वर्षसहस्राण्येकविंशतिरिति। उत्सर्पति वर्धतेऽरकापेक्षया उत्सर्पयति वा भावानायुष्कादीन् वर्धयतीत्युत्सर्पिणी, इयमप्यवसर्पिणीप्रमाणा वैपरीत्येनारकषट्कयुता, एतेषां कालविशेषाणा समयराशीना स्वस्वसामान्यादेकत्व विभावनीयम् ॥ ८ ॥

अथ वर्गणाश्रयेणैकत्वमाह—

## नैरयिकादिचतुर्विंशतिवर्गणा अपि ॥ ९ ॥

**नैरयिकादीति,** नैरयिकासुरनागसुपर्णविद्युदग्निद्वीपोदधिदिक्पवनस्तनितकुमारपृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रियतिर्यङ्मनुष्यव्यन्तरज्योतिष्कवैमानिकसम्बन्धिचतुर्विंशतिवर्गणा अपि प्रत्येक सामान्यादेकरूपा, तत्र नैरयिकाः पृथिवीप्रस्तटनरकावासस्थितिभव्यत्वाभव्यत्वादिभेदादनेकविधास्तेषां समुदायो वर्गणा सस्याश्चैकत्व नारकत्वपर्यायसाम्यात्। नारकाश्च प्रकृष्टपापकर्मफलभोक्तृतया सिद्धा यथा देवाः प्रकृष्टपुण्यफलभोक्तृतया सिद्धाः। न च देवा अप्यसिद्धा इति वक्तव्यम्, देव इति सार्थक पद व्युत्पत्तिमच्छुद्धपदत्वाद्घटादिपदवदिति तत्सिद्धेः, न च गुणर्द्धिसम्पन्नो नर एव देवपदाभिधेय इति वाच्यम्, तत्र देवत्वस्यौपचरितत्वात्, उपचारश्च सता तथ्यार्थसिद्धौ भवति, यथाऽनुपचरितसिंहसद्भावे माणवके सिंहोपचारः। नारकादिस्तनितकुमारपर्यन्तेषु दर्शनत्रयमस्ति सम्यग्दृष्टिनैरयिकादिवर्गणाः, मिथ्यादृष्टिनैरयिकादिवर्गणाः, सम्यग्मिथ्यादृष्टिनैरयिकादिवर्गणा। पृथिव्यादिपञ्चानां मिथ्या-

त्वस्यैव सद्भावान्मिथ्यादृष्टिपृथिवीकायिकादिवर्गणा । द्वीन्द्रियादीनां त्रयाणां मिश्रताया अभावेन द्वीन्द्रियादीनां सम्यग्दृष्टीनां मिथ्यादृष्टीनां वर्गणा अप्येकैकरूपा सामान्यात्, शेषाः पञ्चेन्द्रियतिर्यङ्नरभवनव्यन्तरज्योतिष्कवैमानिकानां त्रिविधा अपि वर्गणा भवन्ति, कृष्णपाक्षिकाणां शुक्लपाक्षिकाणाञ्च नैरयिकादिचतुर्विंशतिमार्गणा अप्येकरूपाः, षड्लेश्यानां वर्गणा अपि । तत्र भवनपतिवानव्यन्तरपृथिव्यप्कायिकवनस्पतिकायानां प्राथमिकाश्चतस्रो लेश्या , तेजोवायुकायिकद्वित्रिचतुरिन्द्रियाणां तिस्रो लेश्याः, पञ्चेन्द्रियतिर्यग्योनिकानां मनुष्याणां षडपि । ज्योतिष्काणां तेजोलेश्या वैमानिकानामुत्तरास्तिस्रो लेश्या भवन्ति । तत्स्थानदृशानां ता वर्गणा एकैकाः । एवं यथायथं कृष्णादिलेश्यानां भव्यानामभव्यानां सम्यग्दृष्टीनां मिथ्यादृष्टीनां सम्यङ्मिथ्यादृष्टीनां कृष्णपाक्षिकाणां शुक्लपाक्षिकाणाञ्च वर्गणा एकरूपा विज्ञेया । तथाऽनन्तरसिद्धानां परम्परासिद्धानां वर्गणा परमाणूनां द्व्यादिप्रदेशानां यावदनन्तप्रदेशिकानां पुद्गलानामेकादिप्रदेशावगाढानां यावदसंख्येयप्रदेशावगाढानामेकादिसमयस्थितिकानां यावदसंख्येयसमयस्थितिकानामेकादिगुणकालकानां यावदनन्तगुणकालकानाञ्च पुद्गलानां वर्गणा भाव्या इति संक्षेप । तदेवं सामान्यनयाभिप्रायेणात्मादीनामेकत्वमुक्तम्, विशेषनयाभिप्रायेण तु तेषामनेकत्वमपि, तथा च जीवादीनां स्यादेकत्वं स्यादनेकत्वञ्चेति स्थितम् ॥ ९ ॥

अथ विशेषमाश्रित्यानेकत्वे प्रतिपादनीये संख्याक्रमेण प्रथमोपस्थितां द्वित्वसंख्यामाश्रित्याह—

**त्रसस्थावरसयोनिकायोनिकादयो जीवाः, आकाशनोआकाशधर्माधर्मादयोऽजीवाश्च ॥ १० ॥**

**त्रसेति,** पूर्वव्यावर्णितमात्मादिवस्तु सर्वं विवक्षितवस्तुतद्विपर्ययलक्षणयोर्द्वयोः स्थानयोरवतारात् द्विस्थानकं भवति, यथा जीवोऽजीवश्चेत्यादि, वस्तुमात्रं हि जीवरूपमजीवरूपञ्च, न तु राश्यन्तरम्, न चास्ति राश्यन्तरं नोजीवलक्षणमिति शङ्कनीयम्, नोशब्दस्य सर्वनिषेधकत्वेऽजीवस्यैव प्रतीते , देशनिषेधकत्वे तेन शब्देन जीवदेशप्रतीतावपि जीवस्यैव बोधात्, देशदेशिनोरव्यतिरिक्तत्वात् । जीवस्य द्विभेदमाह—**त्रसेति,** त्रसनामकर्मोदयात् त्रसन्तीति त्रसा द्वीन्द्रियादय , स्थावरनामकर्मोदयात् तिष्ठन्तीत्येवंशीला स्थावरा पृथिव्यादयः, योनिर्या उत्पत्तिस्थानेन सहेति सयोनिकाः संसारिण , अयोनिकाः सिद्धा , एवं सेन्द्रिया संसारिण , अनिन्द्रिया सिद्धा , सवेदका. स्त्रीवेदाद्युदयवन्तः, अवेदकाः सिद्धा विज्ञेया । अजीवभेदमाह **आकाशेति,** आकाशं व्योम, नोआकाशं तदन्यद्धर्मास्तिकायादि, धर्म , धर्मास्तिकायो गत्युपष्टम्भगुण तदन्योऽधर्म , अधर्मास्तिकायः स्थित्युपष्टम्भगुण , एवं बन्धो मोक्षश्च, पुण्यं पापञ्च, आस्रवः संवरश्च, वेदना निर्जरा च भाव्या. ॥ १० ॥

क्रियासद्भाव आत्मनो बन्धात् क्रिया निरूपयति—

**जीवाजीवक्रियाकायिकीप्राद्वेषिकीप्राणातिपातिक्यारम्भिकीमायाप्रत्ययिकीदृष्टिकीप्रातीत्यिकीस्वाहस्तिक्याज्ञापनिक्यनाभोगप्रत्ययिकीप्रेमप्रत्ययिकीरूपेण सद्वितीयाः क्रिया** ॥ ११ ॥

**जीवक्रियेति,** क्रिया द्विविधा, जीवक्रियाऽजीवक्रिया चेति, जीवव्यापारो जीवक्रिया, पुद्गलसमुदायस्याजीवस्य कर्मरूपतया परिणमनमजीवक्रिया, जीवक्रिया सम्यक्त्वमिथ्यात्वक्रियाभेदेन द्विधा, सम्यग्दर्शनमिथ्यात्वयोः सतोस्तयोर्भावात् । एवमैर्यापथिकी साम्परायिकी चेत्यजीवक्रिया द्विविधा, केवलयोगप्रत्ययमुपशान्तमोहादित्रयस्य सातवेदनीयकर्मतया यदजीवस्य पुद्गलराशेर्भवनं सैर्यापथिकी क्रिया, सतोऽपि जीवव्यापारस्याविवक्षणात् । अजीवस्य पुद्गलराशेः कर्मतापरिणतिरूपा साम्परायिकी, इयञ्च सूक्ष्मसम्परायान्तानां भवति । प्रकारान्तरेण क्रिया द्वैविध्यमादर्शयति **कायिकीति,** कायव्यापारः कायिकी, खड्गादिभवा क्रियाऽऽधिकरणिकी चेति द्विविधा क्रिया । कायिकी च द्विविधाऽनुपरतकायक्रिया दुष्प्रयुक्तकायक्रियाभेदात् । सावद्यादविरतस्य मिथ्यादृष्टेः सम्यग्दृष्टेर्वा कर्मबन्धनिबन्धनकायक्रिया प्रथमा, दुष्टप्रयोगवतो दुष्प्रणिहितस्येन्द्रियाण्याश्रित्येष्टानिष्टविषयप्राप्तौ मनाक् संवेगनिर्वेदगमनेन तथाऽनिन्द्रियमाश्रित्याशुभमनःसंकल्पद्वारेणापवर्गमार्गं प्रति दुर्व्यवस्थितस्य प्रमत्तसंयतस्य च या कायक्रिया सा द्वितीया । आधिकरणिकी द्विधा संयोजनाधिकरणिकी निर्वर्त्तनाधिकरणिकी च पूर्वं निर्वर्त्तितयोः खड्गतन्मुष्ट्यादिकयोः संयोजनक्रिया प्रथमा, मूलतस्तयोर्निर्वर्त्तनक्रिया द्वितीया । पुनर्द्विविधा क्रिया प्राद्वेषिकी पारितापनिकी चेति, प्रद्वेषो मत्सरस्तेन निर्वृत्ता प्राद्वेषिकी । परितापनं ताडनादिदुःखविशेषस्तेन भवा द्वितीया । आद्यापि जीवाजीवावाश्रित्य द्वितीया च स्वपरहस्ताश्रयेण द्विविधा भवति । तथा प्राणातिपातिक्यप्रत्याख्यानक्रीभेदेन द्विधा क्रिया, निर्वेदादिना स्वप्राणान् क्रोधादिना परप्राणान् वा स्वहस्तेन परहस्तेन वाऽतिपातयतः प्रथमा, अप्रत्याख्यानमविरतिस्तन्निमित्तो जीवाजीवविषयः कर्मबन्धोऽप्रत्याख्यानक्रिया । आरम्भिकी पारिग्रहिकी चेति द्विधा वा क्रिया, जीवान् पिष्टमयजीवाकाकृतान् वाऽऽरभमाणस्य कर्मबन्धो जीवाजीवविषयाऽऽरम्भिकी । जीवाजीवपरिग्रहप्रभवकर्मबन्धः पारिग्रहिकी । अथवा मायाप्रत्ययिकी मिथ्यादर्शनप्रत्ययिकी चेति क्रिया पुनर्द्विविधा, मायानिमित्तक कर्मबन्धः प्रथमा, इयमात्मविषया परविषया च, द्वितीयाऽप्यूनातिरिक्तमिथ्यादर्शनप्रत्यया, तद्व्यतिरिक्तमिथ्यादर्शनप्रत्ययेति । आत्मपरिमाणविषये शरीरव्यापकमप्यात्मानं कोऽपि मिथ्यादृष्टिरङ्गुष्ठपर्वमात्रं श्यामाकतन्दुलमात्रं वा हीनतयाऽन्यस्तु पञ्चधनुःशतिकं सर्वव्यापकं वा मन्यते, एतन्निमित्तं कर्मबन्धः प्रथमः, अपरस्तु नास्त्येवात्मेति यो वदति तस्य च यन्निमित्तं कर्मबन्धः स द्वितीयः । पुनः क्रिया दृष्टिकी स्पृष्टिकी भेदेन द्विधा, जीवस्याश्वादेर्दर्शनार्थं या गतिक्रिया तन्निमित्ताऽऽद्या, अपरा च जीवमजीवं वा रागद्वेषाभ्यां पश्यतः स्पृशतो वा भवति । प्रातीत्यिकी सामन्तोपनिपातिकी चेति पुनरपि क्रिया द्विविधा, जीवमजीवं वा बाह्यं वस्तु प्रतीत्य रागद्वेषोद्भूतिनिमित्ता क्रिया प्रथमा, द्वितीया जीवाजीवविषया, यथा कस्यापि षण्डो रूपवानस्ति तं च जनो यथा यथा प्रलोकयति प्रशंसयति च तथा तथा तस्स्वामी हृष्यतीति जीवविषया, अजीवविषया [redacted] रथादौ तथैव दृष्टव्यं । स्वाहस्तिकीनैसर्गिकीरूपेण पुनरपि सा द्विधा । उभयविधाऽपि क्रिया जीवाजीवविषया, स्वहस्तेन जीवमजीवं वा हिंसयतः प्रथमा । राजादिसमादेशाद् उदकादेर्यन्त्रादिभिर्निसर्जनम्, काण्डादीनां धनुरादिभिर्निसर्जनमिति वा द्वितीया । आज्ञापनिकीवैदारणिकीभेदेन पुनरपि सा द्विधा, द्वे अपि जीवाजीवविषये, अनाभोगप्रत्ययिक्यनवकांक्षप्रत्ययिकी

चेति पुनरपि द्विधा, आद्याऽज्ञाननिमित्ताऽनायुक्तादानताऽनायुक्तप्रमार्जनताभेदद्वयवती, द्वितीया स्वशरीराद्यनपेक्षनिमित्ता स्वशरीरानवकाङ्क्षप्रत्ययिकीपरशरीरानवकाङ्क्षप्रत्ययिकीलक्षणभेदवती। पुनरपि प्रेमप्रत्ययिकीदोषप्रत्ययिकीभेदेन क्रिया द्विविधा, मायालोभविषया प्रथमा, द्वितीया तु क्रोधमानविषयेति ॥ ११ ॥

क्रियाणामेतासां प्रायो गर्ह्यत्वाद्गर्हाद्वैविध्यमाह—

## मनोवाग्भ्यामल्पदीर्घकालाभ्यां चैता गर्ह्याः प्रत्याख्येयाश्च ॥ १२ ॥

**मन इति,** गर्हा हि द्विविधा स्वपरविषयभेदात्, सापि मिथ्यादृष्टेः, अनुपयुक्तस्य सम्यग्दृष्टेश्च द्रव्यगर्हा, अप्रधानभूतत्वात्, सूपयुक्तस्य सम्यग्दृष्टेश्च भावगर्हा, इयञ्च गर्हाऽतीते कर्मणि भवति, भविष्यति तु प्रत्याख्यानं प्रत्युत्पन्ने च संवरः, गर्हणीयभेदाच्चतुर्विधाऽपि बहुप्रकारापि वा करणविशेषापेक्षया द्विविधा मनःकरणिका वचःकरणिका चेति, तत्र प्रथमा मनसैव न वाचा, यथा कायोत्सर्गस्थो दुर्मुखसुमुखाभिधानपुरुषद्वयनिन्दिताभिष्टुतस्तद्वचनोपलब्धसामन्तपरिभूतस्वतनयराजवार्तो मनसा समारब्धपुनःपरिभवकारिसामन्तसङ्ग्रामो वैकल्पिकप्रहरणक्षये स्वशीर्षकग्रहणार्थव्यापारितहस्तस्पृष्टलुञ्चितमस्तकस्तत्समुपजातपश्चात्तापानलज्वालाकलापदन्दह्यमानसकलकर्मेन्धनो राजर्षिप्रसन्नचन्द्र इवैकः कोऽपि साध्वादिर्गर्हते तद्गर्हाम्। द्वितीया च वचसैव न मनसा भावतो दुश्चरितादिमुक्तत्वाज्जनरञ्जनार्थं गर्हाप्रवृत्ताङ्गारमर्दकाभिप्रायसाधुरवेत्कोऽन्यो गर्हेत इति। प्रकारान्तरेण गर्हाभेदमाहाल्पदीर्घेति, यावदेकः कोऽपि गर्हणीयमल्पकालं गर्हते न बृहत्कालम्, अन्यथा वा विवक्षयाऽल्पत्वं भावनीयम्, आपेक्षिकत्वाद्दीर्घह्रस्वयोः, एवं दीर्घकालं यावदेको गर्हेत इति। भविष्यत्कर्मापेक्षया प्रत्याख्यानमाचष्टे **प्रत्याख्येयाश्चेति,** विधिनिषेधविषया प्रतिज्ञा प्रत्याख्यानम्, तच्च द्रव्यतो मिथ्यादृष्टेः सम्यग्दृष्टेर्वाऽनुपयुक्तस्य, कृतचातुर्मासमासप्रत्याख्यानायाः पारणकदिने मासदानप्रवृत्ताया राजदुहितुरिव। भावप्रत्याख्यानमुपयुक्तस्य सम्यग्दृष्टेरिति। तच्च देशसर्वमूलोत्तरगुणभेदादनेकविधमपि कारणभेदात् कालभेदाच्च द्विविधम् ॥ १२ ॥

ननु संसारकान्तारव्यतिव्रजनं विद्यया चरणेन च यौगपद्येन भवति, एकैकशो विद्याक्रिययोरैहिकेष्वर्थेष्वपि कारणत्वादर्शनात्, सम्यग्दर्शनस्य च ज्ञानभेदत्वेन विद्यायामन्तर्भावात् सम्यग्दर्शनज्ञानचारित्राणां मोक्षमार्गत्वोक्तिर्विरुद्ध्यते, ते च विद्याचरणे कथमात्मा न लभते कथं वा लभत इति दर्शयितुमादावलाभं दर्शयति—

## अविज्ञायारम्भपरिग्रहौ धर्मबोधिप्रव्रज्याब्रह्मवाससंयमज्ञानादीन्नावाप्नोति ॥ १३ ॥

**अविज्ञायेति,** कृष्यादिद्वारेण पृथिव्याद्युपमर्दनमारम्भः, धर्मसाधनव्यतिरेकेण धनधान्यादयः परिग्रहस्तौ ज्ञपरिज्ञयाऽपरिज्ञाय यथैतावारम्भपरिग्रहावनर्थाय, अलं ममाऽऽभ्यामिति परिहाराभिमुख्यद्वारेण प्रत्याख्यानपरिज्ञयाऽप्रत्याख्याय च भगवदुक्तं श्रुतधर्मं श्रोतुं न लभते तथा दर्शन

सम्यक्त्वं न प्राप्नोति, विशुद्धां प्रव्रज्यामपि न प्रव्रजति न वा ब्रह्मचर्यमासेवते, नाप्यात्मानं पृथिव्यादिरक्षणलक्षणेन संयमेन संवरेण च रक्षति न चाप्याभिनिबोधिकश्रुतावधिमनःपर्यवकेवलज्ञानान्याप्नोति, किन्त्वारम्भपरिग्रहौ ज्ञपरिज्ञया विज्ञाय प्रत्याख्यानपरिज्ञया प्रत्याख्याय च भगवदुक्तं धर्मादि लभते, तथा च लाभालाभावाश्रित्य द्वे स्थाने आरम्भपरिग्रहरूपे इति भावः ॥ १३ ॥

ननु प्रत्याख्यातारम्भपरिग्रहो बोधिं यावत्केवलज्ञानमुत्पादयतीत्युक्तं तत्कदा कथमित्यत्राह—

## दण्डद्वयप्रयोजकोन्मादमोहनीयक्षयात् केवलम् ॥ १४ ॥

**दण्डद्वयेति,** केवलज्ञानं हि मोहनीयोन्मादक्षय एव भवति, तत्रोन्मादः—महो बुद्धिविप्लव इत्यर्थः, स च यक्षावेशेन दर्शनमोहनीयादेः कर्मण उदयेन च भवति, तत्र प्रथमो मोहजनितमहापेक्षयाऽकृच्छ्रानुभवनीयोऽनैकान्तिकानात्यन्तिकभ्रमरूपत्वादस्य, सुखविमोच्यतरकश्च मन्त्रमूलादिसाध्यत्वात्, मोहजस्तु तद्विपरीतः, ऐकान्तिकात्यन्तिकभ्रमस्वभावतयाऽत्यन्तानुचितप्रवृत्तिहेतुत्वेनानन्तभवकारणत्वात्, तथाऽऽन्तरकारणजनितत्वेन मन्त्राद्यसाध्यत्वात् कर्मक्षयोपशमादिनैव साध्यत्वात्। उन्मादाच्च प्राणी प्राणातिपातादिरूपेऽर्थदण्डेऽनर्थदण्डे च प्रवर्त्तते, तत्र नैरयिकादिचतुर्विंशतिदण्डकानि पूर्वोदितान्यवलम्ब्यार्थानर्थदण्डौ विज्ञेयौ। सम्यग्दर्शनादित्रययतान्तु दण्डो नास्तीति ॥ १४ ॥

अथ दर्शनमाश्रित्य द्वैविध्यं भावयति—

## निसर्गाभिगमसम्यग्दर्शनमभिग्रहिकानभिग्रहिकमिथ्यादर्शनञ्च ॥ १५ ॥

**निसर्गेति,** दर्शनं द्विविधम्, सम्यग्दर्शनं मिथ्यादर्शनञ्चेति, जिनोक्तानुसारितया तत्त्वेषु रुचिः सम्यग्दर्शनम्, वैपरीत्येन तत्त्वेषु रुचिर्मिथ्यादर्शनम्। सम्यग्दर्शनञ्च निसर्गसम्यग्दर्शनाभिगमसम्यग्दर्शनभेदेन द्विविधम्, स्वभावादेव जातमाद्यम्, गुरूपदेशादितः प्रभवं द्वितीयम्, उभयमपि प्रतिपातिअप्रतिपाति चेति द्विविधम्, प्रतिपाति सम्यग्दर्शनमौपशमिकं क्षायोपशमिकञ्च, अप्रतिपाति क्षायिकम्, औपशमिकस्य तस्यान्तर्मुहूर्त्तमात्रकालत्वात् सास्वादने च जघन्यतः समयमात्रत्वादुत्कृष्टतस्तु षडावलिकामात्रत्वात्, क्षायोपशमिकस्य च तस्य जघन्यतोऽन्तर्मुहूर्त्तस्थितिकत्वादुत्कर्षेण षट्षष्टिसागरोपमस्थितिकत्वाच्च क्षायिकस्त्वप्रतिपात्येव सिद्धत्वेऽप्यनुवृत्तेः। मिथ्यादर्शनमप्यभिग्रहिकानभिग्रहिकभेदेन द्विविधम्, कुमतयाथार्थ्यग्रहलक्षणमाद्यं सर्वदर्शनसमताग्रहलक्षणमपरम्, उभयमपि सपर्यवसितापर्यवसितभेदेन द्विविधम्, भव्यस्य सम्यक्त्वप्राप्तौ तदपगमात्, अभव्यस्य तदप्राप्त्या तदपगमाभावादिति ॥ १५ ॥

ज्ञानमाश्रित्य द्वैविध्यं दर्शयति—

## मतिश्रुते परोक्षे केवलनोकेवलज्ञाने प्रत्यक्षे ॥ १६ ॥

**मतीति,** विशेषावबोधो ज्ञानं तद्द्विविधम्, प्रत्यक्षञ्च परोक्षञ्च, परोक्षमप्याभिनिबोधिकज्ञानं श्रुतज्ञानञ्चेति द्विविधम्, अत्र प्रथममपि श्रुताश्रुतनिश्रितभेदाद् द्विविधम्, यत्पूर्वमेव श्रुतकृतोपकारस्येदानीं तदनपेक्षमेवानुप्रवर्त्तते तदवग्रहादिलक्षणं श्रुतनिश्रितम्, यत्तु पूर्वं तदपरिकर्मितमतेः क्षयोपशमपटीयस्त्वादौत्पत्तिक्यादिलक्षणमुपजायतेऽन्यद्वा श्रोत्रादिप्रभवं तदश्रुतनिश्रितमिति। उभयविधमपीदमर्थावग्रहव्यञ्जनावग्रहभेदेन द्विविधम्, सामान्यरूपस्याशेषविशेषनिरपेक्षस्यानिर्देश्यस्य रूपादेरर्थस्य

प्रथमपरिच्छेदोऽर्थावग्रहः, निर्विकल्पकज्ञानं दर्शनमिति चाभिधानान्तराण्यस्यैव, अयमेव नैश्चयिकः सामयिक उच्यते, यस्तु व्यावहारिकः शब्दोऽयमित्युल्लेखवान् स आन्तर्मौहूर्तिकः । अयञ्चेन्द्रियमनः-सम्बन्धात् षोढा । व्यञ्जनमुपकरणेन्द्रियं शब्दादितया परिणतद्रव्यसङ्घातो वा, तथा च व्यञ्जनेनोपकरणेन्द्रियेण व्यञ्जनानां शब्दादितया परिणतद्रव्याणामवग्रहो व्यञ्जनावग्रहः इन्द्रियशब्दादिद्रव्यसम्बन्धो वा व्यञ्जनम् । अयञ्च मनोनयनवर्जेन्द्रियाणां भवतीति चतुर्धा, नयनमनसोरप्राप्तार्थपरिच्छेदकत्वात् । ननु व्यञ्जनावग्रहः कथं ज्ञानं, इन्द्रियशब्दादिद्रव्यसम्बन्धकाले तदनुभवाभावाद्बधिरादीनामिवेति चेन्न, व्यञ्जनावग्रहान्ते तद्वस्तुग्रहणादेवोपलब्धिसद्भावात्, इह यस्य ज्ञेयवस्तुग्रहणस्यान्ते तत एव ज्ञेयवस्तूपादानादुपलब्धिर्भवति तज्ज्ञानं दृष्टम्, यथाऽर्थावग्रहपर्यन्ते तत एवार्थावग्रहमात्रवस्तुग्रहणादीहासद्भावादर्थावग्रहज्ञानमिति । किञ्च व्यञ्जनावग्रहकालेऽपि तदपि ज्ञानं सूक्ष्माव्यक्तत्वान्नोपलभ्यते, सुप्ताव्यक्तविज्ञानवदिति । ईहादयोऽपि श्रुतनिश्रिता एव, न सूक्ता, द्विस्थानकानुरोधात् । अश्रुतनिश्रितमप्यर्थावग्रहव्यञ्जनावग्रहभेदेन द्विविधम्, इदञ्च श्रोत्रादिप्रभवमेव, यदौत्पत्तिक्याद्यश्रुतनिश्रितं तत्रार्थावग्रहः सम्भवति न तु व्यञ्जनावग्रहः, तस्येन्द्रियाश्रितत्वात्, बुद्धीनां तु मानसत्वात्, ततो बुद्धिभ्योऽन्यत्र व्यञ्जनावग्रहो मन्तव्य इति । अङ्गप्रविष्टानङ्गप्रविष्टभेदेन श्रुतज्ञानं द्विविधम् । अनङ्गप्रविष्टञ्चाऽऽवश्यकतद्व्यतिरिक्तभेदेन द्विविधम्, तद्व्यतिरिक्तमपि कालिकोत्कालिकभेदेन द्विविधम्, कालिकमुत्तराध्ययनादि, उत्कालिकं दशकालिकादि । प्रत्यक्षञ्च केवलज्ञाननोकेवलज्ञानभेदेन द्विविधम्, भवस्थसिद्धकेवलज्ञानभेदेन प्रथमं द्विधा, भवस्थकेवलज्ञानमपि सयोग्ययोग्यपेक्षया सयोगिभवस्थकेवलज्ञानमपि प्रथमसमयाप्रथमसमयापेक्षया चरमाचरमसमयापेक्षया वा द्विधा, एवमयोगिभवस्थकेवलज्ञानमपि । सिद्धकेवलज्ञानमनन्तरपरम्परापेक्षया द्विविधम्, उभयमप्येकानेकापेक्षया द्विद्विभेदम् । अवधिमनःपर्यवभेदेन नोकेवलज्ञानं द्विविधम्, भवप्रत्ययक्षायोपशमिकभेदेनावधिज्ञानं द्विविधम्, भवप्रत्ययस्यापि क्षयोपशमनिमित्तकत्वेऽपि तत्क्षयोपशमे भवस्यैव निमित्तत्वात्तत्प्राधान्येन भवप्रत्ययत्वेन पृथगुक्तम्, भवप्रत्ययं देवानां नैरयिकाणाञ्च, क्षायोपशमिकन्तु मनुष्याणां पञ्चेन्द्रियतिर्यग्योनिकानाम् । ऋजुमतिविपुलमतिभेदतो मनःपर्यवज्ञानं द्विविधम् ॥ १६ ॥

श्रुतचारित्रापेक्षया द्वैविध्यमाह—

## सूत्रार्थौ श्रुतधर्मोऽगारानगारचारित्रे च चारित्रधर्मः ॥ १७ ॥

सूत्रार्थाविति, दुर्गतिप्रपतज्जीवरोधकः सुगतिप्रापकश्च धर्मः स द्विविधः श्रुतधर्मश्चारित्रधर्मश्चेति, द्वादशाङ्गरूपो धर्मः श्रुतधर्मः, मूलोत्तरगुणकलापरूपश्चारित्रधर्मः, तत्र प्रथमः सूत्रार्थभेदतो द्विविधः, द्वितीयोऽपि गृहिसाधुसम्बन्धित्वादगारानगारचारित्रभेदेन द्विविधः । रागसत्त्वसद्भावाभ्यामनगारचारित्रं सरागवीतरागचारित्रभेदेन द्विविधम् । असंख्यातसमयकिट्टिकावेदनतः सूक्ष्मलोभात्मककषायस्थूलकषायावाश्रित्य सरागसंयमः सूक्ष्मबादरसम्परायभेदतो द्विविधः, सूक्ष्मसम्परायसंयमश्च प्रथमाप्रथमसमयाभ्यां चरमाचरमसमयाभ्यां सङ्क्लिश्यमानविशुद्ध्यमानाभ्यां वा द्विविधः । द्वितीयोऽपि प्रथमाप्रथमसमयाभ्यां चरमाचरमसमयाभ्यां प्रतिपात्यप्रतिपातिभ्यां वा द्विविधः । उपशान्तकषायक्षीणकषायभेदतो वीतरागसंयमो द्विविधः, आद्यः प्रथमाप्रथमसमयभेदेन चरमाचरमसमयभेदेन वा

द्विविधः, द्वितीयश्च छद्मस्थकेवलिभेदेन द्विविधः, अत्रापि प्रथमः स्वयम्बुद्धबुद्धबोधितभेदेन द्विविधः, उभावपि प्रथमाप्रथमसमयभेदेन चरमाचरमभेदेन वा द्विविधौ । केवलिक्षीणकषायवीतरागसंयमस्तु सयोग्ययोगिभेदेन द्विविधः, उभावपि च प्रथमाप्रथमसमयापेक्षया चरमाचरमसमयापेक्षया वा द्विविधाविति ॥ १७ ॥

जीवविशेषाश्रयेणैव द्वैविध्यप्रकारमाह—

**अनन्तरावगाढगतिसमापन्नपरिणतपर्याप्तकसूक्ष्माः सविपक्षा एकेन्द्रियाः ॥ १८ ॥**

अनन्तरेति, एकेन्द्रियाः पृथिव्यादयः, सूक्ष्मबादरापेक्षया पर्याप्तकापर्याप्तकापेक्षया परिणतापरिणतापेक्षया गतिसमापन्नागतिसमापन्नापेक्षयाऽनन्तरावगाढपरम्परावगाढापेक्षया च द्विविधा भवन्ति, सूक्ष्मा बादरास्तत्तत्कर्मोदयवर्त्तिनः, सूक्ष्माः सर्वलोकव्यापिनो बादराः पृथिवीनगादयः, एषां सूक्ष्मबादरता नापेक्षिकी किन्तु कर्मोदयप्रयुक्तैव । अपर्याप्तनामकर्मोदयादपर्याप्तका ये स्वपर्याप्तीर्न पूरयन्ति, पर्याप्तनामकर्मोदयाच्च पर्याप्ता ये चतस्रः पर्याप्तीः पूरयन्ति, पर्याप्तिश्च पुद्गलोपचयजः शक्तिविशेषः, स चाहारशरीरेन्द्रियानपानभाषामनोभेदेन षोढा, तत्रैकेन्द्रियाणां चतस्रः, विकलेन्द्रियाणां पञ्च सञ्ज्ञिनां षट्, एता युगपदारब्धा अन्तर्मुहूर्त्तेन निर्वर्त्यन्ते, आहारपर्याप्तिस्तु निर्वृत्तिकाल समय एव । अपर्याप्तकाश्चोच्छ्वासपर्याप्त्याऽपर्याप्ता एव म्रियन्ते न तु शरीरेन्द्रियपर्याप्तिभ्याम्, आगामिभवायुष्कबन्धेन मरणात्तद्बन्धस्य च शरीरेन्द्रियादिपर्याप्त्या पर्याप्तेनैव साध्यत्वात् । स्वकायपरकायशस्त्राविना परिणामान्तरमापादिताः परिणता अचित्तीभूता इत्यर्थः, तत्र द्रव्यतः शस्त्रादिना मिश्रेण द्रव्येण, कालतः पौरुष्यादिना कालेन, भावतो वर्णगन्धरसस्पर्शान्यथात्वेन क्षेत्रतो योजनशतात् परतः परिणताः । ये पृथिवीकायिकायायुष्कोदयात् पृथिवीकायिकादिव्यपदेशवन्तो विग्रहगत्योत्पत्तिस्थानं व्रजन्ति ते गतिसमापन्नाः, अगतिसमापन्नास्तु स्थितिमन्तः । सम्प्रत्येव समये कचिदाकाशदेशे आश्रितास्त एवानन्तरावगाढाः, येषान्तु द्व्यादयः समया अवगाढानां ते परम्परावगाढाः । एवं द्रव्यं परिणतापरिणतभेदेन गतिसमापन्नागतिसमापन्नभेदेनानन्तरावगाढपरम्परावगाढभेदेन द्विविधम्, उत्सर्पिण्यवसर्पिणीभेदेन कालो लोकालोकभेदेनाकाशश्च द्विविधो विज्ञेयः ॥ १८ ॥

अथ चतुर्विंशतिदण्डकाश्रयेण शरीरद्वैविध्यमाह—

**देवनारकाणां कार्मणवैक्रिये एकेन्द्रियविकलेन्द्रियतिर्यङ्मनुष्याणां कार्मणौदारिकविशेषौ, सर्वेषां विग्रहे कार्मणतैजसे ॥ १९ ॥**

देवेति, अनुक्षणं चयापचयाभ्यां विनश्यतीति शरीरं तत्र देवानां नारकाणाञ्च कार्मणं वैक्रियञ्च भवत, कार्मणशरीरनामकर्मोदयनिर्वर्त्यमशेषकर्मणां प्ररोहभूमिराधारभूतं संसार्यात्मनो गत्यन्तरसंक्रमणे साधकतमं कार्मणं तदाभ्यन्तरमुच्यते, आभ्यन्तरत्वञ्च तस्य जीवप्रदेशैः सह क्षीरनीरन्यायेन लोलीभवनात्, भवान्तरगतावपि जीवस्यानुगमनस्वभावत्वादपवरकाद्यन्तः प्रविष्टपुरुषवदनतिशयिनामप्रत्यक्षत्वाच्च । वैक्रियञ्च बाह्यम्, बाह्यता चास्य जीवप्रदेशैः कस्यापि केषुचिदवयवेष्वव्याप्तेर्भवान्तराननु-

यावित्वाग्निरतिशयानामपि प्रायः प्रत्यक्षत्वाच्च । पृथिव्यादीनान्तु बाह्यमौदारिकमौदारिकशरीरनामकर्मोदयादुदारपुद्गलनिर्वृत्तम्, तत्रैकेन्द्रियाणां केवलमस्त्यातिनिरहितं वायूना वैक्रियं यत्तत्र विवक्षितं प्रायिकत्वात् । विग्रहगतिरेकगतिः, यदा विश्रेणिव्यवस्थितमुत्पत्तिस्थानं गन्तव्यं भवति तद्गतिं समापन्नानां तैजसकार्मणे द्वे शरीरे भवतः । शरीरस्य चोत्पत्ती रागेण द्वेषेण चेति द्विस्थानैर्भवतीति ॥१९॥

द्विस्थानकानुपातेन योग्यक्रियादिशमाह—

**प्रव्राजनमुण्डापनशिक्षणोत्थापनसम्भोजनसंवासस्वाध्यायोद्देशसमुद्देशानुज्ञालोचनप्रतिक्रमणातिचारनिन्दनगर्हणव्यतिवर्त्तनविशोधनाकरणाभ्युत्थानप्रायश्चित्तपादपोपगमनस्थितयः प्राच्यामुदीच्यां वा ॥ २० ॥**

**प्रव्राजनेति,** निर्ग्रन्थानां निर्ग्रन्थीनां वा रजोहरणदानेन प्रव्राजयितुं शिरोलोचनेन मुण्डयितुं ग्रहणशिक्षापेक्षया सूत्रार्थौ ग्राहयितुमासेवनाशिक्षापेक्षया प्रत्युपेक्षणादि शिक्षयितुं महाव्रतेषु व्यवस्थापयितुं भोजनमण्डल्यां निवेशयितुं संस्तारकमण्डल्यां निवेशयितुं योगविधिक्रमेणाङ्गादि सम्यग्योगेनाधीष्वेत्युपदेष्टुं योगसमाचार्यैव स्थिरपरिचितं कुर्विदमिति समुद्देष्टुं सम्यगेतद्धराय, अन्येषाञ्च प्रवेदयेत्यभिधातुं गुरवेऽपराधानभिवेदयितुं प्रतिक्रमणं कर्त्तुमतिचारान् स्वसमक्षं जुगुप्सितुं गुरुसमक्षञ्च वानेय जुगुप्सितुमतिचारानुबन्धं विच्छेदयितुमतिचारपङ्कापेक्षयाऽऽत्मानं विमलीकर्त्तुं पुनर्न करिष्यामीत्यभ्युत्थातुं प्रायश्चित्तं निर्विकृतिकादितपः प्रतिपत्तुं पादपोपगमनं प्रतिपत्तुं वत्राऽऽमरणं यावदनुत्सुकतया स्थातुञ्च पूर्वोत्तरा च दिक् कल्पत इति ॥ २० ॥

दयाश्रयाद्विविधमाह—

**कल्पोपपन्नाः कल्पातीता देवा ज्योतिष्काः स्थितिमन्तोऽनुपरतगतयश्च तत्रान्यत्र वेदनामनुभवन्ति ॥ २१ ॥**

**कल्पोपपन्ना इति,** ये देवा वैमानिका अनशनादेरुत्पन्ना ऊर्ध्वोपपन्नकाले सौधर्मादिदेवलोकोत्पन्ना ग्रैवेयकानुत्तरविमानोत्पन्नाश्च, समस्तज्योतिश्चक्रक्षेत्रे उत्पन्ना ज्योतिष्काः पादपोपगमनादेर्लब्धज्योतिष्कभावा समयक्षेत्रबहिर्वर्त्तिनः क्षेत्रवर्त्तिनश्च, ते देवा द्विविधाः सदा यज्ज्ञानावरणादिपापकर्म बध्नन्ति तस्य कर्मणोऽबाधाकालातिक्रमे सति केचित्तत्रैव देवभव एव वर्त्तमाना वेदनामनुभवन्ति कल्पातीतानां क्षेत्रान्तरादिगमनासम्भवात् । केचिच्च देवभवादन्यत्रैव भवान्तरे उत्पन्ना वेदनामनुभवन्ति, केचित्तूभयत्रापि, अन्ये विपाकोदयापेक्षया नोभयत्रापीति ॥ २१ ॥

नारकादीनां गत्यागती निरूपयति—

**नारका देवा मनुष्येभ्यस्तिर्यग्भ्यो वा पृथिव्यादयः पृथिवीकायादिभ्यो नोपृथिवीकायादिभ्यो वाऽऽगच्छन्ति गच्छन्ति च तत्रैव ॥ २२ ॥**

**नारका इति,** उदितनरकायुषो नारका मनुष्येभ्यस्तिर्यक्पञ्चेन्द्रियेभ्यो वाऽऽगत्योत्पद्यन्ते नारकत्वं परित्यजन्तश्च तत्रैव गच्छन्ति, असुरकुमारादयो देवास्तेभ्य एवागत्योत्पद्यन्ते परित्यजन्तश्च

तिर्यक्षु गच्छन्ति न तु तिर्यक्पञ्चेन्द्रियेष्वेवोत्पद्यन्ते, पृथिव्यादिष्वपि तदुत्पत्तेः । नोपृथिवीकायिकाविभ्य इति पृथिवीकायिकनिषेधद्वारेणाप्कायिकादयः सर्वे गृहीता द्विस्थानकानुरोधात् तेभ्यो नारकवर्जेभ्यः समुत्पद्यन्ते, गमनमपि देवनारकवर्जोप्कायादितयेति ॥ २२ ॥

तेषामेव भव्यत्वादीनाह—

**भवसिद्ध्यनन्तरप्रथमसमयगतिसमापन्नाहारकोच्छ्वासेन्द्रियपर्याप्तसंक्षिप्तभवसुलभबोधिकृष्णपाक्षिकचरमाः सविपक्षा नारकादयो द्विद्विभेदाः ॥ २३ ॥**

**भवसिद्धीति,** नारका भवसिद्धिकाभवसिद्धिकाभ्यामनन्तरोपपन्नपरम्परोपपन्नभेदाभ्यां प्रथमसमयोपपन्नाप्रथमसमयोपपन्नाभ्यां गतिसमापन्नागतिसमापन्नाभ्यामाहारकानाहारकाभ्यामुच्छ्वासकानुच्छ्वासकाभ्यां सेन्द्रियानिन्द्रियाभ्यां पर्याप्तकापर्याप्तकाभ्यां संक्षिप्तभवानन्तसंसारित्वाभ्यां सुलभबोधिदुर्लभबोधिभ्यां कृष्णपाक्षिकशुक्लपाक्षिकाभ्यां चरमाचरमाभ्यां च द्विभेदाः, एवं यावद्वैमानिका भाव्याः । चरमत्वं पुनर्नारकभावेनानुत्पादात्, शुक्लपाक्षिकत्वञ्च क्रियावादित्वात्, उक्तञ्च 'किरियावाई भवे णो अभवे सुक्कपक्खिए णो किण्हपक्खिए' इति ॥ २३ ॥

आत्ममात्रमधिकृत्याह—

**वैक्रियावैक्रियाभ्यामात्मा लोकं देशेन सर्वेण वा शब्दादीन् जानाति ॥२४॥**

**वैक्रियेति,** आत्मा यथावधि कदाचिद्वैक्रियसमुद्घातगतोऽन्यथा वाऽधोलोकमूर्ध्वलोकं तिर्यग्लोकं लोकमात्रं वाऽवधिज्ञानतो जानाति, अवधिदर्शनेन च पश्यति, तथा कृतवैक्रियशरीरेणाकृतवैक्रियशरीरेण विकुर्वितविकुर्वितेन वा । एवं देशेन शृणोति, एकश्रोत्रोपघाते सत्येकेन श्रोत्रेण शृणोति, सर्वेण वाऽनुपहतश्रोत्रेन्द्रियः, यो वा सम्भिन्नश्रोतोऽभिधानलब्धियुक्तः स सर्वैरिन्द्रियैः शृणोतीति सर्वेणेति व्यपदिश्यते, एवं रूपादीनपि, किन्तु जिह्वादेशस्य प्रसुप्त्यादिनोपघाताद्देशेनास्वादयति । एवं देशतः सर्वतश्चात्मनोऽवभासप्रद्योतनविकुर्वणमैथुनसेवनभाषणाहारणपरिणमनानुभवनपरित्यजनानि भाव्यानि ॥ २४ ॥

अथ जीवोपग्राहकपुद्गलधर्मानाह—

**पुद्गलानां शब्दादिसंघातविघटनपतनपरिशटनविध्वंसनादीनि स्वतः परतो वा ॥ २५ ॥**

**पुद्गलानामिति,** अभ्रादिष्विव स्वयमेव पुद्गलाः शब्दादितया संहन्यन्ते तत्राक्षरसम्बद्धनोअक्षरसम्बद्धभाषाशब्दः, आतोद्यायाभूषणादि नोभाषाशब्दश्च । परप्रयत्नेनापि पुद्गलाः संहताः क्रियन्ते, एवं भिद्यन्ते तथा पर्वतशिखरादेरिव परिपतन्ति कुड्यादेर्निमित्तात् कुल्यादिवत् परिशटन्ति घनपटलवद्विनश्यन्ति च, एवं भिदुरत्वाभिदुरत्वे परमाणुत्वस्कन्धत्वे सूक्ष्मत्वाबादरत्वे बद्धपार्श्वस्पृष्टत्वानो

धद्धपार्श्वस्पृष्टते जीवात्तत्वानात्तत्वे इष्टत्वानिष्टत्वे कान्तत्वाकान्तत्वे प्रियत्वाप्रियत्वे मनोज्ञत्वामनोज्ञत्वे मनोहरत्वामनोहरत्वे भावनीये ॥ २५ ॥

पुनर्जीवधर्मानाह—

**तपोवीर्यात्मकनोचारित्रचारित्रघटितनोदर्शनदर्शनाचारलक्षणो नो ज्ञानाचारो ज्ञानाचारश्चेति द्विविध आचारः ॥ २६ ॥**

तप इति, ज्ञानाचारनोज्ञानाचारभेदाभ्यामाचारो द्विविध, तत्र ज्ञानाचार श्रुतज्ञानविषयोऽष्टविध कालविनयबहुमानोपधानानिह्नवनव्यञ्जनार्थतदुभयभेदात् । नोज्ञानाचार एतद्विलक्षणो दर्शनाद्याचार, दर्शन सम्यक्त्व तदाचारो नि शङ्कितनिष्काङ्क्षितनिर्विचिकित्सितामूढदृष्ट्युपबृंहणस्थिरीकरणवात्सल्यप्रभावनारूपेणाष्टविध । नोदर्शनाचारश्चारित्रादिरिति पञ्चसु समितिषु तिसृषु गुप्तिषु प्रणिधानयोगयुक्तत्वादष्टधा । नोचारित्राचारो द्वादशधा तपआचार, वीर्याचारश्च ज्ञानादिष्वेव शक्तेरगोपनम्, तदनतिक्रमश्च । वीर्याचारस्यैव विशेष प्रतिमा समाधिप्रतिमोपधानप्रतिमा लक्षणा, प्रशस्तभावलक्षणस्य समाधेः प्रतिमा दशाश्रुतस्कन्धोक्ता श्रुतसमाधिप्रतिमा सामायिकादिचारित्रसमाधिप्रतिमा च । द्वादशभिक्षुप्रतिमा एकादशोपासकप्रतिमाश्चोपधानप्रतिमेति ॥ २६ ॥

क्षेत्रमाश्रित्य द्वैविध्यमाह—

**जम्बूद्वीपे मन्दरस्य दक्षिणेनोत्तरेण भरतैरवते वर्षे हैमवतैरण्यवते हरिवर्षरम्यकवर्षे पूर्वपश्चिमयो पूर्वापरविदेहौ दक्षिणोत्तरेण देवकुरूत्तरकुरू बहुसमतुल्यावितरेतर न लङ्घयत ॥ २७ ॥**

जम्बूद्वीप इति, परिपूर्णचन्द्रमण्डलाकार हि जम्बूद्वीप तन्मध्ये मेरोर्दक्षिणस्यामुत्तरस्याञ्च द्वे वर्षे स्त, ते च प्रमाणतोऽत्यन्तसदृशे नगनगरनद्यादिकृतविशेषरहिते अवसर्पिण्यादिकृतायुरादिभावभेदवर्जिते दैर्घ्येण पृथुत्वेनारोपितज्याधनुराकारेण संस्थानेन परिधिना च परस्पर न लङ्घयतः । जम्बूद्वीपस्य दक्षिणे भागे आ हिमवतो भरत तथैव चोत्तरे भाग ऐरवत शिखरिण परत । एव दक्षिणतो हिमवन्महाहिमवतोर्मध्ये हैमवतमुत्तरतो रुक्मिशिखरिणोरन्तो हिरण्यवत तथा दक्षिणतो महाहिमवन्निषधयोरन्तो हरिवर्षमुत्तरतश्च नीलरुक्मिणोरन्तो रम्यकवर्षमिति । पूर्वस्या पश्चिमायाञ्च पूर्वविदेहोऽपरविदेहश्च वर्त्तते, मन्दरस्योत्तरस्यामुत्तरकुरवो दक्षिणस्या देवकुरव, तत्राद्या विद्युत्प्रभसौमनसाभिधानवक्षस्कारपर्वताभ्या गजदन्ताकाराभ्यामावृता, इतरे तु गन्धमादनमाल्यवद्भ्यामावृताः, उभये चामी अर्धचन्द्राकारा दक्षिणोत्तरतो विस्तृता । वर्षा इव वर्षधरपर्वतौ मन्दरस्योत्तरदक्षिणतो भरतानन्तरो लघुर्हिमवान् तथा शिखरी तत्परमैरवत वर्षधरपर्वतौ स्त, तौ च पूर्वापरतो लवणसमुद्रावगाढौ भरतद्विगुणविस्तारौ योजनशतोच्छ्रायौ पञ्चविंशतियोजनावगाढौ भवत । एव दक्षिणतो महाहिमवानुत्तरतो रुक्मी च, एवमेव निषधनीलवन्तौ । आयामादयस्तु क्षेत्रसमासादवसेया । मन्दरस्य दक्षिणोत्तरेण [illegible] रचौ वैताढ्यनामकौ रजतमयौ सर्वतः सहस्र-

परिमाणौ स्त , हैमवते श्रद्धापातीनामा गैरण्यवते च विकटापातीनामा पर्वत., यत्र च क्रमेण स्वातिप्रभासौ देवौ वसत , तद्भवनभावादिति । एव हरिवर्षे गन्धापाती रम्यग्वर्षे माल्यवत्पर्वत क्रमेण चारुणेन पद्मेनाधिष्ठितो वर्त्तते। देवकुरुषु पूर्वपार्श्वेऽपरपार्श्वे च क्रमेण सौमनसविद्युत्प्रभावश्व-स्कन्धसदृशावाद्यन्तयोर्निम्नोन्नतावुत्तरकुरुषु गन्धमादनोऽपरपार्श्वे पूर्वपार्श्वे माल्यवानिति, भरतैरव-तयोस्तु दीर्घवैताढ्यौ पर्वतौ स्त तौ च तयोर्मध्यभागे पूर्वापरतो लवणोदधिं स्पृष्टवन्तौ पञ्चविंशतियो-जनोच्छ्रितौ तत्पादावगाढौ पञ्चाशद्विस्तृतावायतसस्थितौ सर्वराजतावुभयतो बहिःकाञ्चनमण्डनाङ्कौ विज्ञेयौ । एषु गुहाकूटादिविचारोऽन्यत्र द्रष्टव्य ॥ २७ ॥

जम्बूद्वीपसम्बन्धिभरतादिसत्ककालक्षणपर्यायानाह—

**भरतैरवतयोः सुषमदु.षमाया. स्थितिर्द्विसागरकोटीकोटिमाना, सुष-मायां मनुष्याणां द्विगव्यूतिरुच्चता, द्वे पल्योपमे परमायु., द्वावर्हच्चक्रवर्त्ति-वलदेववंशौ, द्वावेकसमयेऽर्हन्तौ चक्रवर्त्तिनौ वलदेवौ वासुदेवौ च ॥ २८ ॥**

भरतेति, जम्बूद्वीपे भरतैरवतवर्षेष्वतीतायामागामिन्याञ्चोत्सर्पिण्या सुषमदुःषमालक्षणस्य चतुर्थकालस्य स्थितिर्द्विसागरकोटीकोटिरूपा, एव वर्त्तमानाया अवसर्पिण्यास्तृतीयारकस्य सुषम-दु पमालक्षणकालस्यापि । तथा भरतैरवतयोरतीतायामागामिन्या वर्त्तमानायाञ्चोत्सर्पिण्या सुषमायां मनुष्याणामुच्चता गव्यूतिद्वयप्रमाणा, आयुश्च द्विपल्योपमप्रमाणम्, एव भरतेष्वैरवतेषु चैकस्मिन् युग एकस्मिन् समये द्वौ द्वार्हता चक्रवर्त्तिना वासुदेवानाञ्च वशौ, एवमेकसमये भरत एकोऽर्हन् चक्रवर्त्ती वलदेवो वासुदेवश्च, ऐरवतेऽप्येवमिति द्वौ द्वार्हन्तौ चक्रवर्त्तिनौ वलदेवौ वासुदेवौ च भवत इति ॥ २८ ॥

पुनर्विशेषमाह—

**कुरुद्वये सदा मनुजाः सुषमसुषमोत्तमर्द्धिं हरिवर्षरम्यकवर्षयोः सुषमो-त्तमर्द्धिं हैमवतैरण्यवतयोः सुषमदु षमोत्तमर्द्धिं पूर्वापरविदेहयोर्दु.षमसुष-मोत्तमर्द्धिं भरतैरवतयोस्तु षड्विधकालर्द्धिश्चानुभवन्ति ॥ २९ ॥**

कुरुद्वय इति, देवकुरूत्तरकुरुषु च सुषमसुषमासम्बन्धिनीं प्रधानविभूतिमुच्चैस्त्वायुःकल्पवृक्ष-दत्तभोगोपभोगादिका साक्षात्तामेवानुभवन्तो विहरन्ति, एवमेवाग्रेऽपि योजनीयम्, स्पष्ट मूलम् ॥ २९॥

कालव्यवस्थाकृज्ज्योतिष्कद्वित्वमाह—

**चन्द्रसूर्यनक्षत्राणा द्वित्वम् ॥ ३० ॥**

चन्द्रेति, जम्बूद्वीपे सदा द्वौ चन्द्रौ प्रभासयत , द्वौ सूर्यौ तापयत । तथा द्वे कृत्तिके रोहिण्यौ मृगशिरे आर्द्रे पुनर्वसू इत्येव द्वे द्वे नक्षत्रे भाव्ये, एवमेव वेदिकादीना गव्यूतद्वयमुच्चत्वा-दिकमन्यतो विज्ञेयम् ॥ ३० ॥

तदेव श्लोकेन पुद्गलजीवधर्मानभिधाय सर्वं जीवाजीवात्मकमित्येतत्सूचनायाह—

**समयावलिके आनपानस्तोकौ क्षणलवौ मुहूर्त्ताहोरात्रे पक्षमासौ ऋत्वयने संवत्सरयुगे जीवाजीवरूपे, तत्पर्यायत्वात् ॥ ३१ ॥**

**समयेति,** सर्वेषां कालप्रमाणानामाद्य परमसूक्ष्मोऽभेद्यो निरवयव उत्पलशतव्यतिभेदाद्युदाहरणोपलक्षित समय , असंख्यातसमयसमुदायात्मिकाऽऽवलिका क्षुल्लकभवग्रहणकालस्य षट्पञ्चाशदुत्तरद्विशततमभागभूता । तत्र समय इत्यावलिकेति वा यत्कालवस्तु तदविगानेन जीवो जीवपर्यायत्वात् पर्यायपर्यायिणोश्च कथञ्चिदभेदात्, पुद्गलानां पर्यायत्वे चाजीव इत्यभिधीयते, न तु जीवादिव्यतिरेकिणः समयादयो जीवाजीवानां हि सादिसपर्यवसानादिस्थितिविशेषा समयादय , स्थितिश्च तेषां धर्मत्वात्नात्यन्तं धर्मिणो भिन्ना, अत्यन्तभेदे हि विप्रकृष्टधर्ममात्रोपलम्भे प्रतिनियतधर्मविषय एव संशयो न स्यात्, तदन्येभ्योऽपि तस्य भेदाविशेषात्, अनुभूयते च विटपिविकटशाखाविसरान्तराले किमपि शुक्लं पश्यतः किमियं पताका बलाका वेति संशय प्रतिनियतधर्मिविषय । सर्वथाऽभेदेऽपि संशयानुपपत्तिरेव, गुणग्रहणे तदभिन्नगुणिनोऽपि ग्रहात् । उच्छ्वासनि श्वासकालो संख्यातावलिकाप्रमाणा आनपानौ । सप्तोच्छ्वासनि श्वासप्रमाण स्तोक । सप्त्यावानः पानऽभग क्षणः, सप्तस्तोकप्रमाणो लवः । त्रिंश मुहूर्त्तप्रमाणमहोरात्रम् । पञ्चदशाहोरात्रप्रमाणः पक्षः । द्विपक्षो मास । द्विमासमानो ऋतुः, ऋतुत्रयमानमयनम् । अयनद्वयमानः संवत्सरः । पञ्च संवत्सराणि युगम्, एवं चतुरशीतिवर्षलक्षप्रमाण पूर्वाङ्गं तदेव चतुरशीतिलक्षगुणितं पूर्वं, एवं पूर्वपूर्वं चतुरशीतिलक्षगुणित त्रुटिताङ्गादिक शीर्षप्रहेलिकापर्यन्त भाव्यम् । शीर्षप्रहेलिकान्तः साव्यवहारिकः संख्यातकाल , तेन च संख्यातायुषां प्रथमपृथिवीनारकाणां भवनपतिव्यन्तराणां भरतैरवतेषु सुषमदुःषमायाः पश्चिमे भागे नरतिरश्चाञ्चायुर्मीयते । अतः परं यः संख्यातकालः सोऽनतिशयिना न व्यवहारविषय इति कृत्वौपम्ये प्रक्षिप्तः [redacted] च पल्योपमादिरूप इति ॥ ३१ ॥

बद्धमुक्तभेदेन जीवानां द्वैविध्याद्बद्धापेक्षया बन्धद्वैविध्यमाचष्टे—

**रागद्वेषनिमित्तः पापबन्धः, आभ्युपगमिकवेदनयौपक्रमिकवेदनया चोदीरयन्ति वेदयन्ति निर्जरयन्ति च ॥ ३२ ॥**

**रागेति,** मायालोभकषायरूपो रागः, क्रोधमानकषायलक्षणो द्वेष , कारणाभ्यामाभ्यामशुभ भवनिबन्धनस्य पापकर्मणो बन्धो भवति, ननु मिथ्यात्वाविरतिकषाययोगानां बन्धहेतुत्वेन कथमत्र कषायाणामेव बन्धहेतुत्वमुक्तम्, युक्तम्, कषायाणां पापकर्मबन्धं प्रति प्राधान्यख्यापनाय तथोक्तेः तेषां प्राधान्यञ्च स्थित्यनुभागप्रकर्षकारणत्वात्, अत्यन्तानर्थकारित्वात्, द्विस्थानकानुरोधाद्वा बन्धहेतुदेशोक्ति । स्थानद्वयबद्धपापकर्मणश्च शिरोलोचनतपश्चरणादिकयाऽङ्गीकरणनिर्वृत्तया स्वैच्छिकया कर्मोदीरणकारणनिर्वृत्तया ज्वरातिसारादिजन्यया वा पीडयोदीरयन्ति, अप्राप्तावसरं सदुदये प्रवेशयन्ति, उदीरितं सद्विपाकतोऽनुभवन्ति प्रदेशेभ्यः शाटयन्ति च ॥ ३२ ॥

निर्जरणे च कर्मणो देशतः सर्वथा वा भवान्तरे सिद्धौ वा गच्छतः शरीराभिर्याणं भवतीत्याह—

**शरीरं देशेन सर्वेण वा स्पृष्ट्वा सस्पन्दं स्फुटं विशीर्णञ्च कृत्वा संवर्त्य निवर्त्य निर्याति ॥ ३३ ॥**

**शरीरमिति,** जीवः शरीरान्मरणकाले देहं कतिपयप्रदेशलक्षणेन देशेन स्पृष्ट्वा स्पृष्ट्वा निर्याति, केषाञ्चित्प्रदेशानामिलिकागत्योत्पादस्थानं गच्छता जीवेन शरीराद्बहिः क्षिप्तत्वात्। कन्दुकगत्योत्पादस्थानं गच्छता शरीराद्बहिः प्रदेशानामप्रक्षिप्तत्वात् सर्वजीवप्रदेशैः स्पृष्ट्वा निर्याति, अथवा देशेनापि सर्वेणापीति वाच्यम्, तदाऽवयवान्तरेभ्यः प्रदेशसंहाराच्छरीरदेशं पादादिकं स्पृष्ट्वा निर्याति, स च संसारी, सर्वेणेत्यत्रापि देशेनेत्यपेक्ष्यते, सर्वमपि शरीरं स्पृष्ट्वा निर्याति, स [illegible] सिद्धः। शरीरस्पर्शे स्फुरणस्य भावात्सस्पन्दमिति, ईलिकागतिकाले कियद्भिरात्मप्रदेशैर्गेन्दुकगतिकाले सर्वैरपि शरीरं सस्पन्दं कृत्वा निर्याति। अथवा पादादिनिर्याणकाले शरीरदेशं स्फोरयित्वा सर्वाङ्गनिर्याणावसरे सर्वं शरीरं स्फोरयित्वा निर्यातीति। स्फोरणाच्च सात्मकत्वं स्फुटं भवतीत्याह स्फुटमिति, आत्मदेशेन शरीरं सचेतनतया स्फुरणलिङ्गतः स्फुटं करोतीलिकागतौ, गेन्दुकगतौ सर्वैरपि शरीरं स्फुटं कृत्वेत्यर्थः। तथाऽक्ष्यादिविघातेन स्वविशरणेन वा देवदीपादिजीवप्रदेशविशीर्णं च कृत्वेति भावः। शरीरं सात्मकतया स्फुटीकुर्वन् कश्चित्तत्संवर्तनमपि करोतीत्याह संवर्त्येति, सङ्कोच्य, शरीरं देशेनेलिकागतौ शरीरस्थितप्रदेशैः सर्वात्मना गेन्दुकगतौ सर्वात्मप्रदेशानां शरीरस्थितत्वात्, अथवा देशतः संवर्तनं संसारिणो म्रियमाणस्य पादादिगतजीवप्रदेशसंहारात् सर्वतस्तु निर्वाणं गन्तुरिति, आत्मनः संवर्तनं कुर्वन् शरीरस्य निवर्तनं करोतीत्याह निवर्त्येति, ईलिकागतौ देशेन गेन्दुकगतौ सर्वेण जीवप्रदेशेभ्यः शरीरं पृथक् कृत्वेत्यर्थः, यद्वा देशतः शरीरं निवर्त्यात्मनः पादादिनिर्याणवान् सर्वतः सर्वाङ्गनिर्याणवानिति, अथवा पञ्चविधशरीरसमुदायापेक्षया देशतः शरीरमौदारिकादि निवर्त्य तैजसकार्मणे स्वादायैव, तथा सर्वं शरीरसमुदायं निवर्त्य निर्याति सिद्ध्यतीत्यर्थः ॥ ३३ ॥

सर्वनिर्याणस्य परम्परया प्रयोजकानि धर्मश्रवणादीन्याह—

**क्षयोपशमाभ्यां केवलिप्रज्ञप्तधर्मश्रवणादिलाभः ॥ ३४ ॥**

**क्षयेति,** उदयप्राप्तस्य कर्मणो ज्ञानावरणस्य दर्शनमोहनीयस्य च क्षयेण निर्जरणेनानुदितस्योपशमेन—विपाकानुभवनेन, क्षयोपशमेनेति भावः, ततश्च केवलिप्रज्ञप्तबोधिमुण्डनानगारिताब्रह्मचर्यवाससंयमसंवराभिनिबोधिकज्ञानादेर्लाभः, केवलज्ञानन्तु क्षयादेव, बोध्यादीनां सम्यक्त्वचारित्ररूपत्वात् क्षयेणोपशमेन लाभेऽपि श्रवणाभिनिबोधिकादीनां क्षयोपशमेनैव भावात्सर्वसाधारण्येन क्षयोपशमपरतया व्याख्यातमिति ॥ ३४ ॥

बोध्यादीनामुत्कर्षतः षट्षष्टिसागरोपमस्थितिकत्वात्सागरोपमस्य च पल्योपमाश्रितत्वात्तद्विभ्य भक्ति—

**सागरोपमं पल्योपमञ्चेत्यद्धौपमिकं द्विधा ॥ ३५ ॥**

**सागरोपममिति,** यत्कालप्रमाणमुपमानमन्तरेणानतिशयिना ग्रहीतुं न शक्यते तदौप-

सिकम्, तच्च द्विधा पल्योपमं सागरोपमञ्चेति, पल्यवत्पल्य., तेनोपमा यस्मिंस्तत्पल्योपमं सागरेणोपमा यस्मिंस्तत्सागरोपमम्, औपमिकं वाचत्सामान्येनोद्धाराद्धाक्षेत्रभेदेन त्रिधा, पुनरेकैकं सव्यवहारसूक्ष्मभेदाद्द्विधा, यावता कालेन योजनायामविष्कम्भोच्चत्व पल्यो मुण्डनानन्तरमेकादिसप्तान्ताहोरात्रप्ररूढाना वालाग्राणा भृत प्रतिसमय वालाग्रोद्धारे सति निर्लेपो भवति स कालो व्यावहारिकमुद्धारपल्योपममुच्यते, तेषां दशभि कोटीकोटीभिर्व्यावहारिकमुद्धारसागरोपममुच्यते, तेषामेव वालाग्राणां दृष्टिगोचरातिसूक्ष्मद्रव्यासङ्ख्येयभागमात्रसूक्ष्मपनकावगाहनाऽसङ्ख्यातगुणरूपखण्डीकृताना भृत. पल्यो येन कालेन निर्लेपो भवति तथैवोद्धारे तत्सूक्ष्ममुद्धारपल्योपमं तथैव च सूक्ष्ममुद्धारसागरोपमम्, अनेन च द्वीपसमुद्राः परिसङ्ख्यायन्ते, अद्धापल्योपमसागरोपमे अपि सूक्ष्मबादरभेदे एवमेव । नवरं वर्षशते वर्षशते वालस्य वालासङ्ख्येयखण्डस्य चोद्धार इति । अनेन नारकादिस्थितयो मीयन्ते, क्षेत्रतोऽपि ते द्विविधे एवमेव, नवरं प्रतिसमयमेकैकाकाशप्रदेशापहारे यावता कालेन वालाग्रस्पृष्टा एव प्रदेशा उद्ध्रियन्ते स कालो व्यावहारिक इति, यावता च वालाग्रासङ्ख्यातखण्डैः स्पृष्टा अस्पृष्टाश्चोद्ध्रियते स काल सूक्ष्म इति, एते च प्ररूपणामात्रविषये एव, आभ्याञ्च दृष्टिवादे स्पृष्टास्पृष्टप्रदेशविभागेन द्रव्यमाने प्रयोजनमिति श्रूयते, बादरे च त्रिविधे अपि प्ररूपणामात्रविषये एवेति, तदेवमिह प्रक्रमे उद्धारक्षेत्रौपमिकयोर्निरुपयोगित्वादद्धौपमिकस्य चोपयोगित्वादद्धेति सूत्रे विशेषणमुपात्तम् ॥ ३५ ॥

जीवस्य प्रशस्ताप्रशस्तमरणे निरूपयति—

**बलन्मरणवशार्त्तमरणे निदानमरणतद्भवमरणे गिरिपतनतरुपतने जलप्रवेशज्वलनप्रवेशौ विषभक्षणशस्त्रपाटने मरणे चाप्रशस्ते वैहानसगृध्रस्पृष्टे पादपोपगमनभक्तप्रत्याख्यानमरणे च प्रशस्तेऽनुज्ञाते ॥ ३६ ॥**

बलन्मरणेति, परीषहादिबाधितत्वात्संयमान्निवर्त्तमानानां मरणं बलन्मरणम्, इन्द्रियाधीनतां गतानां दीपकलिकावलोकनाकुलितपतङ्गादीनामिव मरणं वशार्त्तमरणम्, इमे द्वे मरणे निर्ग्रन्थानामुपादेयधिया भगवता न कीर्त्तिते न वा प्रशंसिते, एवमग्रेऽपि, ऋद्धिभोगादिप्रार्थनापूर्वकं मरणं निदानमरणम्, यस्मिन् भवे जन्तुर्वर्त्तते तद्भवयोग्यमेवायुर्बध्वा पुनर्म्रियमाणस्य मरणं तद्भवमरणम्, एतच्च सङ्ख्यातायुष्कनरतिरश्चामेव, तेषामेव हि तद्भवायुर्बन्धो भवति, विशुद्धसंयमिनान्तु देवायुष एव बन्धयोग्यत्वेन मनुजायुषो बन्धे सत्यप्रशस्तता, गिरितस्तरुतः पतित्वा च मरणे गिरिमरणतरुमरणे, जलप्रवेशो ज्वलनप्रवेशः, जले ज्वलने वा प्रविश्य मरणमिति भाव , विषं भक्षयित्वा मरणं विषभक्षणम्, स्वशरीरस्य शस्त्रादिना विदारयित्वा मरणं शस्त्रमरणमेतानि सर्वाण्यप्रशस्तान्यननुज्ञातानि च । शीलभङ्गरक्षणादिकारणे तु वैहानसगृध्रस्पृष्टे मरणे अनुज्ञाते, एवं विषभक्षणशस्त्रपाटने अपि, वृक्षशाखाद्युद्बन्धनादाभसि भवं मरणं वैहानसम्, गृध्रैर्भक्षणं गृध्रस्पृष्टम् । अथ प्रशस्तमरणमाह पादपेति—पादपस्य छिन्नपतितस्येवात्यन्तनिश्चेष्टतयाऽवस्थाय मरणम् , सकम्पस्यैव न चेष्टाया अपि पादपोपगमनं इदं प्रत्याख्यानं यत्र तद्भक्तप्रत्याख्यानम् । . इदं निर्हारिमानिर्हारिमभेदात्, यद्यसवेरेक-

देशो विधीयते ततः शरीरस्य निस्सारणान्निर्हारिमम् । यत्तु गिरिकन्दरादौ तदनिर्हरणादनिर्हारिमम्, नियमाच्छरीरप्रतिक्रियावर्जे पादपोपगमनं भवति । इङ्गितमरणन्त्विह नोक्तं द्विस्थानकानुरोधात् ॥ ३६ ॥

पुन सामान्येन बोध्यादीनाह—

**ज्ञानेन दर्शनेन च बुद्धा मूढा देशेन सर्वतश्च ज्ञानदर्शनावरणीये, सातासाते दर्शनचारित्रमोहनीये अद्धायुर्भवायु. शुभाशुभनामनी उच्चैर्नीचैर्गोत्रे प्रत्युत्पन्नविनाशिपिहितागामिपथावन्तरायौ प्रेमप्रत्ययद्वेषप्रत्यये मूर्च्छे श्रुतचारित्रे धर्माराधने अन्तक्रियाकल्पविमानोपपाते केवल्याराधने च ॥ ३७ ॥**

**ज्ञानेनेति,** जीवा बोधिमोहलक्षणधर्मयोगाद्बुद्धा मूढाश्च भवन्ति, तत्र केचिज्ज्ञानावरणक्षयोपशमसम्भूतज्ञानप्राप्त्या बुद्धाः, केचिच्च दर्शनमोहनीयक्षयोपशमादिसम्पन्नश्रद्धानप्राप्त्या, एते च धर्मत एव भिन्ना न धर्मितया, ज्ञानदर्शनयोरन्योऽन्याविनाभूतत्वात् । तथा ज्ञानावरणोदयात् केचिन्मूढाः केचित्तु सम्यग्दर्शनमोहोदयात्, मोहश्च ज्ञानावरणादिकर्मनिबन्धनमिति ज्ञानावरणादीन्याह—**देशेनेति,** यत्कर्माभिनिबोधिकादिमावृणोति तद्देशज्ञानावरणीयम्, यच्च केवलमावृणोति तत्सर्वज्ञानावरणीय केवलावरण ह्यादित्यकल्पस्य केवलज्ञानरूपस्य जीवस्याच्छादकतया सान्द्रमेघवृन्दकल्पमिति सर्वज्ञानावरणम्, मत्याद्यावरणन्तु घनातिच्छादितादित्येषत्प्रभाकल्पस्य केवलज्ञानदेशस्य कटकुड्यादिरूपावरणतुल्यमिति देशज्ञानावरणम् । अथवा देशोपघातिसर्वोपघातिफड्डकापेक्षया देशसर्वावरणत्वमस्य । चक्षुरचक्षुरवधिदर्शनावरणीय देशदर्शनावरणीयम्, निद्रादिपञ्चक केवलदर्शनावरणीयञ्च सर्वदर्शनावरणीयम् । सातरूपेणासातरूपेण च द्विविध वेदनीयम् । मिथ्यात्वसम्यक्त्वमिश्रभेद दर्शनमोहनीयम्, सामायिकादेर्मोहनीय चारित्रमोहनीय कषायनोकषायभेदम् । चतसृष्वपि गतिषु यद्बाह्यं सुखञ्च न ददाति सुखदुःखयोराधारं जीव देहस्थित धारयति च तदायु कायस्थितिरूप भवस्थितिरूपञ्च । तीर्थकरादिकर्म शुभनामकर्म, अनादेयत्वाद्यशुभनामकर्म जीवस्य विविधानि शुभाशुभेष्टानिष्टरूपाणि करोति । पूज्यत्वनिबन्धनमुच्चैर्गोत्रं तद्विपरीत नीचैर्गोत्रम् । जीवस्यार्थसाधनञ्चान्तरा पतीत्यन्तरायः प्रत्युत्पन्नार्थविनाशकस्वभावो लब्धव्यार्थनिरोधकश्च । अष्टविधस्यापि कर्मणो मूर्च्छाजन्यत्वात्तद्द्वैविध्य दर्शयति **प्रेमप्रत्ययेति,** मूर्च्छोपात्तकर्मणः क्षय आराधनयेति तामाह **श्रुतेति,** आराधना ज्ञानादिवस्तुनोऽनुकूलवर्त्तित्व निरतिचारज्ञानाद्यासेवना वा, धर्माराधनाकेवल्याराधनाभेदतो द्वेधा, धर्माराधना श्रुतधर्माराधनाचारित्रधर्माराधनाभेदतो द्विधा, अयञ्च भेदो विषयभेदात्, केवल्याराधना तु फलभेदात्, भवच्छेदहेतु शैलेशीरूपाऽऽराधनाऽन्तक्रियेत्युच्यते, उपचारात् । एषा च क्षायिकज्ञाने केवलिनामेव भवति । कल्पेषु देवलोकेषु न तु ज्योतिश्चारे विमानानि—देवावासविशेषाः यद्वा कल्पाः सौधर्मादयो विमानानि ग्रैवेयकादीनि तेषूत्पत्तिर्जन्म यस्याः सकाशात् सा कल्पविमानोपपाता ज्ञानाद्याराधना, एषा च श्रुतकेवल्यादीनामिति ॥ ३७ ॥

अथ निक्षेपकमाश्रित्य जीवधर्मानाह—

**नामस्थापनाद्रव्यभेदेन ज्ञानदर्शनचारित्रभेदेन देवासुरमनुष्यभेदेन चेन्द्रस्त्रिविधः ॥ ३८ ॥**

**नामेति,** नाम संज्ञा, ऐश्वर्यादिन्द्र इति यथार्थ इन्द्रेत्यक्षरात्मक इन्द्रो नामेन्द्रः, यद्वा सचेतनस्याचेतनस्य वा यस्येन्द्र इति नाम यथार्थं क्रियते स नामवद्वस्तोरभेदोपचारान्नामेन्द्र । अथवा नाम्नैवेन्द्र इन्द्रार्थशून्यत्वान्नामेन्द्र । नामलक्षणञ्च 'यद्वस्तुनोऽभिधान स्थितमन्यार्थे तदर्थनिरपेक्षम्। पर्यायानभिधेयञ्च नाम यादृच्छिकञ्च तथा' इति। इन्द्राद्यभिप्रायेण स्थाप्यत इति स्थापना लेप्यादिकर्म सैवेन्द्र स्थापनेन्द्र , इन्द्रप्रतिमा साकारस्थापनेन्द्र , अक्षादिन्यासस्त्वितर , स्थापनालक्षणञ्च 'यत्तु तदर्थवियुक्त तदभिप्रायेण यच्च तत्करणिः। लेप्यादिकर्म तत्स्थापनेति क्रियतेऽल्पकालञ्चे'ति । द्रव्यलक्षणन्तु 'भूतस्य भाविनो या भावस्य हि कारण [।] यल्लोके तद्द्रव्य तत्त्वज्ञै सचेतनाचेतन गदितम्' तथा 'अनुपयोगो द्रव्यमप्रधानञ्चे'ति । तत्तत्पर्यायगमनलक्षण द्रव्य तच्च भूतभाव भाविभावञ्च तथाविध इन्द्रो द्रव्येन्द्र । स चाऽऽगमतो नोआगमतश्चेति द्विधा, ज्ञानापेक्षया तद्विपययापेक्षयेति यावत्, इन्द्रशब्दाध्येताऽनुपयुक्तो द्रव्येन्द्र प्रथम । द्वितीयस्तु ज्ञशरीरभव्यशरीरतदुभयव्यतिरिक्तभेदात्त्रिविधः, इन्द्रपदार्थज्ञस्य यच्छरीरमात्मरहित तदतीतकालानुभूततद्भावानुवृत्त्या सिद्धशिलातलादिगतमपि घृतघटादिन्यायेन नोआगमतो द्रव्येन्द्र इति, इन्द्रज्ञानकारणत्वादिन्द्रज्ञानशून्यत्वाच्च । भाविनीं वृत्तिमङ्गीकृत्येन्द्रोपयोगाधार यच्छरीर मधुघटादिन्यायेनैव तद्बालादिशरीर भव्यशरीरद्रव्येन्द्र इन्द्रशब्दार्थज्ञानयोग्यत्वात् । तदुभयव्यतिरिक्तश्च भावेन्द्रकार्यव्यव्यापृतः, आगमतोऽनुपयुक्तद्रव्येन्द्रवत्, यच्छरीरमात्मद्रव्य चाऽतीतभावेन्द्रपरिणाम तदपि तथा ज्ञशरीरद्रव्येन्द्रवत्, यच्च भावीन्द्रपर्यायशरीरयोग्य पुद्गलराशिर्यच्च भावीन्द्रपर्यायमात्मद्रव्य तदपि तथा भव्यशरीरद्रव्येन्द्रवत् । स चावस्थाभेदेन त्रिविध , एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्चेति, योऽनन्तरभव एवेन्द्रतयोत्पत्स्यते स आद्यः, स चोत्कर्षतस्त्रीणि पल्योपमानि भवन्ति, देवकुर्वादिमिथुनकस्य भवनपत्यादीन्द्रतयोत्पत्तिसम्भवात् । स एवेन्द्रायुर्बन्धानन्तरं बद्धमायुरनेनेति बद्धायुरुच्यते, स चोत्कर्षत पूर्वकोटीत्रिभाग यावत्, ततः परमायुष्कबन्धाभावात्, सम्मुखे जघन्योत्कर्षाभ्या समयान्तमुहूर्तानन्तरभावितयेन्द्रसम्बन्धिनी नामगोत्रे यस्य सोऽभिमुखनामगोत्रः, तथा भावैश्वर्ययुक्ततीर्थकरादिभावेन्द्रापेक्षयाऽप्रधानत्वाच्छक्रादिरपि द्रव्येन्द्र एव, द्रव्यशब्दस्याप्रधानार्थेऽपि वृत्ते । भावेन्द्रस्त्विह निक्षेपकानुरोधान्नोक्त, तल्लक्षणञ्च 'भावो विवक्षितक्रियानुभूतियुक्तो हि वै समाख्यातः । सर्वज्ञैरिन्द्रादिवदिहेन्दनादिक्रियानुभवात्' इति, स चाऽऽगमतो नोआगमतश्च द्विधा, इन्द्रज्ञानोपयुक्तो जीवो भावेन्द्रः, नन्विन्द्रोपयोगमात्रात् कथ तन्मयता, न ह्यग्निज्ञानोपयुक्तो माणवकोऽग्निरेव, तदर्थक्रियाऽप्रसाधकत्वादिति चेन्न, अभिप्रायापरिज्ञानात्, संवित् ज्ञानमवगमो भाव इत्यनर्थान्तरम्, तत्रार्थाभिधानप्रत्ययास्तुल्यनामधेया इति सर्ववादिनामविसंवादस्थानम्, यथा कोऽयम् ? घट , किमयमाह ? घटशब्दम्, किमस्य ज्ञानम् ? घट इति। अग्निरिति च यज्ज्ञान तदव्यतिरिक्तो ज्ञाता तल्लक्षणो गृह्यते, अन्यथा तज्ज्ञानेऽपि नोपलभेत, अतन्मयत्वात्, प्रदीपहस्तान्धवत्, पुरुषान्तरवद्वा । न चानाकारं तत्, पदार्थान्तरवद्वि-

पक्षितपदार्थपरिच्छेदप्रसङ्गात्, बन्धाद्यभावश्च ज्ञानाज्ञानसुखदुःखपरिणामान्यत्वात् । न चानलः सर्व एव दहनाद्यर्थक्रियाप्रसाधकः, भस्मच्छन्नाग्निना व्यभिचारादिति । इन्द्रनामगोत्रे कर्मणी वेदयन् परमैश्वर्यभाजन नोआगमतो भावेन्द्र, इन्द्रव्यपदेशनिबन्धनतयेन्द्रपदार्थज्ञानस्याविवक्षितत्वात्, इन्दनक्रियाया एव विवक्षितत्वाच्च नात्र सर्वनिषेधवचनो नोशब्दः । स्थापनेन्द्र इन्द्राकारस्य लक्ष्यमाणत्वात्, तत्कर्तुः सद्भूतेन्द्राभिप्रायत्वात्, द्रष्टुस्तदाकारप्रत्ययेनेन्द्रप्रत्ययात् प्रणतिकृतधियः फलार्थिनस्तत्स्तुतिप्रवृत्तेः, तदेवतानुग्रहात् फलप्राप्तेश्चास्य नामद्रव्येन्द्राभ्यां भेदः । द्रव्येन्द्रस्य च भावेन्द्रकारणताप्राप्तेः भाविभूतापेक्षया तदुपयोगवत्त्वाच्च नामस्थापनेन्द्राभ्यां भेदः । भावेन्द्र त्रिस्थानकावतारेणाह—**ज्ञानेति,** ज्ञानस्य ज्ञाने वेन्द्रो ज्ञानेन्द्रः, अतिशयवच्छ्रुताद्यन्यतरज्ञानयथावद्विवेचितवस्तुविस्तरः केवली वा, दर्शनेन्द्रः क्षायिकसम्यग्दर्शनी, चारित्रेन्द्रो यथाख्यातचारित्र । एतेषां च सकलभावप्रधानक्षायिकेन भावेन, विवक्षितक्षायोपशमिकलक्षणेन वा परमार्थतो वेन्द्रत्वात्, अन्यसकलससार्यप्राप्तापूर्वगुणलक्ष्मीलक्षणपरमैश्वर्ययुक्तत्वाद्भावेन्द्रताऽवसेया । अथ बाह्यैश्वर्यापेक्षया प्राह—**देवेति,** देवाः वैमानिका ज्योतिष्कवैमानिका वा रूढेः, असुरा भवनपतिविशेषा भवनपतिव्यन्तरा वा सुरवर्युदासात्, मनुजेन्द्रश्चक्रवर्त्यादिरिति ॥ ३८ ॥

देवेन्द्रादीनां त्रयाणां वैक्रियकरणादिशक्तियुक्ततयेन्द्रत्वमिति विकुर्वणामाह—

**बाह्याभ्यन्तरतदुभयपुद्गलान् पर्यादायापर्यादायोभयथा वा विकुर्वणा, एकेन्द्रियवर्जा नारकादय कत्यकत्यवक्तव्यकसञ्चिताः ॥ ३९ ॥**

**बाह्येति,** भवधारणीयशरीरावगाढक्षेत्रप्रदेशवर्त्तिनो वैक्रियसमुद्घातेन बाह्यान् पुद्गलान् गृहीत्वैका विकुर्वणा क्रियते, या तु भवधारणीयरूपैव साऽपर्यादाय विकुर्वणा, यत्तु भवधारणीयस्यैव किञ्चिद्विशेषापादन सा पर्यादायाप्यपर्यादायापीति तृतीया व्यपदिश्यते । यद्वा विकुर्वणा विभूषण तत्र बाह्यपुद्गलानादायाभरणादीन्, अपर्यादाय केशनखसमारचनादिना, उभयतस्तूभयथेति । आभ्यन्तरान् पुद्गलान् पर्यादाय विकुर्वणा भवधारणीयेनौदारिकेण वा शरीरेण ये क्षेत्रप्रदेशा अवगाढास्तेष्वेव ये वर्त्तन्ते तेऽभ्यन्तरपुद्गला इति, तानपर्यादाय विकुर्वणा द्वितीया, उभयथेति तृतीया । भूपापक्षे निष्ठीवनादय आभ्यन्तरपुद्गला इति । तदुभयपुद्गलान् पर्यादायापर्यादायोभयथेति त्रैविध्यम्, उभयेषामुपादानाद्भवधारणीयनिष्पादन तदनन्तरं तस्यैव केशादिरचनञ्च, अनादानाच्चिरविकुर्वितस्यैव मुखादिविकारकरणम्, उभयतस्तु बाह्याभ्यन्तराणामनभिमतानामादानतोऽन्येषाञ्चानादानतोऽनिष्टरूपभवधारणीयेतररचनमिति । विकुर्वणा चैव नारकाणामपि भवत्यतो नारकाभयेणाह—**एकेन्द्रियवर्जा** इति, एकेन्द्रियेषु प्रतिसमयमसङ्ख्याता अनन्ता वाऽकतिशब्दवाच्या एवोत्पद्यन्ते न त्वेक सङ्ख्याता वा, अतस्तद्वर्जनम्, नारकादीत्यादिना चतुर्विंशतिदण्डकोक्ता वाच्याः, तत्र नारकाः कति—सङ्ख्याता एकैकसमये ये उत्पन्नाः सन्त सञ्चिता—कत्युत्पत्तिसाधर्म्याद् बुद्ध्या राशीकृता ते कतिसञ्चिताः । एकैकसमयेऽसंख्याता उत्पन्नाः सन्तस्तथैव सञ्चितास्तेऽकतिसञ्चिताः, यः परिणामविशेषो न कति नाप्यकतीति शक्यते वक्तुं सोऽवक्तव्यकः, स चैक इति तत्सञ्चिता अवक्तव्यकसञ्चिता समये समये एककयोत्पन्ना इत्यर्थः, उत्पद्यन्ते हि नारका एकसमये एकादयोऽसङ्ख्येयान्ता इति ॥ ३९ ॥

अथ योगनिरूपणायाह—

**विकलेन्द्रियवर्जानां मनोवाक्कायनिमित्तानि योगप्रयोगकरणान्यारम्भसंरम्भसमारम्भकरणानि च ॥ ४० ॥**

**विकलेति,** अपञ्चेन्द्रियेषु ह्येकेन्द्रियाणां काययोगस्यैव द्वित्रिचतुरिन्द्रियाणां कायवाग्योगयोरेव सत्त्वान्न त्रिविधयोगादय इति तद्वर्जनम्, वीर्यान्तरायक्षयक्षयोपशमसमुत्थलब्धिविशेषप्रत्ययमभिसन्ध्यनभिसन्धिपूर्वमात्मनो वीर्यं योगः सकरणाकरणभेदः । तत्राकरणः केवलिनोऽलेश्यस्य निखिलज्ञेयदृश्यार्थयोः केवलज्ञानदर्शनयोरुपयुञ्जानस्य योऽसावपरिस्पन्दोऽप्रतिघो वीर्यविशेषः स नेह विवक्षितः, किन्तु सकरण एव, वीर्यान्तरायक्षयोपशमजनितजीवपरिणामविशेषो योगः, मनसा करणेन युक्तस्य जीवस्य योगो मनोयोगः, दुर्बलस्य यष्टिकावदुपष्टम्भकरः । स चतुर्विधः, सत्यमनोयोगो मृषामनोयोगः सत्यमृषामनोयोगोऽसत्यामृषामनोयोगश्चेति । मनसो वा योगः करणकारणानुमतिरूपो व्यापारो मनोयोगः, एवं वाग्योगकाययोगावपि वाच्यौ । किन्तु काययोग औदारिकतन्मिश्रवैक्रियतन्मिश्राहारकतन्मिश्रकार्मणकाययोगभेदात्सप्तविधः, अपरिपूर्ण औदारिक एवौदारिकमिश्र उच्यते, यथा गुडमिश्रं दधि न गुडतया नापि दधितया व्यपदिश्यते ताभ्यामपरिपूर्णत्वादेवमौदारिकमिश्रं कार्मणेन नौदारिकतया नापि कार्मणतया व्यपदेष्टुं शक्यमपरिपूर्णत्वादिति । एवमन्यत्रापि । मनःप्रभृतीनां व्याप्रियमाणानां जीवेन हेतुकर्तृभूतेन यद्व्यापारणं प्रयोजनं स प्रयोगो मनसः प्रयोगो मनःप्रयोगः एवमन्यत्रापि । क्रियते येन तत्करणं मननादिक्रियासु प्रवर्त्तमानस्यात्मन उपकरणभूतस्तथातथापरिणामवान् पुद्गलसङ्घातः, मन एव करणं मनःकरणमेवमितरे अपि । करणत्रैविध्यं प्रकारान्तरेणाह **आरम्भेति,** पृथिव्याद्युपमर्दकरणमारम्भकरणम्, पृथिव्यादिविषयं मनःसंक्लेशकरणं संरम्भकरणम्, तेषामेव सन्तापकरणं समारम्भकरणम् । इदमारम्भादिकरणत्रयं नारकादिवैमानिकान्तानां भवति, केवलं संरम्भकरणमसञ्ज्ञिनां पूर्वभवसंस्कारानुवृत्तिमात्रतया भावनीयम् ॥ ४० ॥

आरम्भादिकरणस्य क्रियान्तरस्य च फलं दर्शयति—

**प्राणातिपातमृषावादाकल्प्यान्नपानादिवितरणमल्पायुषे वैपरीत्यं दीर्घायुषे ॥ ४१ ॥**

**प्राणातिपातेति,** प्राणातिपातो मृषावादो निर्ग्रन्थेभ्योऽप्रासुकान्नपानादिप्रदानं दातुरल्पायुषः कर्मणो निमित्तं भवति, अध्यवसायविशेषेणैतत्त्रयमुक्तफलं भवति, यो वा जीवो जिनादिगुणपक्षपातितया तत्पूजार्थं पृथिव्याद्यारम्भेण न्यासापहारादिना च प्राणातिपातादिषु वर्त्तते तस्य सरागसंयमनिरवद्यदाननिमित्तायुष्कापेक्षयाऽल्पायुष्कता विज्ञेया । प्राणातिपातविरत्यादीनाञ्च शुभस्यैव दीर्घायुषो निमित्तत्वमित्याह वैपरीत्यमिति । देवमनुष्यायुषी शुभे, प्राणातिपातमृषावादनिवृत्तिनिर्ग्रन्थवन्दननमस्कारसत्कारसन्मानकल्याणमङ्गलदैवतबुद्धिपूर्वकपर्युपासादितः शुभदीर्घायुषो बन्ध इति भावः ॥ ४१ ॥

प्राणानतिपातादिक गुप्तिसद्भाव इति तामाश्रित्याह—

**गुप्त्यगुप्तिदण्डास्त्रिविधा योगतः ॥ ४२ ॥**

**गुप्तीति,** गोपनं गुप्तिः, मनःप्रभृतीनां कुशलानां प्रवर्त्तनमकुशलानाञ्च निवर्त्तनं मनोगुप्तिवचोगुप्तिकायगुप्तय, एताः संयतानामेव । एतद्विपरीतास्तिस्रोऽगुप्तय., एताः एकेन्द्रियविकलेन्द्रियसंयतमनुष्यवर्जानाम्, एकेन्द्रियविकलेन्द्रियाणां यथायोगं वाङ्मनसोरसम्भवात्, संयतानाञ्च गुप्तयुक्तेः । विकलेन्द्रियवर्जानां त्रयो दण्डा, पापकर्माकरणतया स्वपरदण्डजुगुप्सालक्षणा गर्हापि त्रिविधा भाव्या तथा प्रत्याख्यानमपि ॥ ४२ ॥

पापकर्मप्रत्याख्यातारः परोपकारिणो भवन्तीति पुरुषान् प्ररूपयति—

**नामस्थापनाद्रव्यभेदाज्ज्ञानदर्शनचारित्रभेदाद्वेदचिह्नाभिलापभेदादुत्तममध्यमजघन्यभेदात्त्रिविधाः पुरुषा. ॥ ४३ ॥**

**नामेति,** पुरुष इति नामैव नामपुरुष , पुरुषप्रतिमादि स्थापनापुरुषः पुरुषत्वेन य उत्पत्स्यते उत्पन्नपूर्वो वा स द्रव्यपुरुष । भावपुरुषभेदाश्च ज्ञानपुरुषादयः ज्ञानादिप्राधान्यात् । पुरुषवेदानुभवनप्रधान पुरुषो वेदपुरुषः, स च स्त्रीपुनपुंसकसम्बन्धिषु त्रिष्वपि लिङ्गेषु भवति । श्मश्रुप्रभृतिभिश्चिह्नैरुपलक्षितः पुरुषश्चिह्नपुरुषः, यथा नपुंसकः श्मश्रुचिह्न इति, पुरुषवेदो वा चिह्नपुरुषत्वेन चिह्नपत्वे पुरुष इति कृत्वा । पुरुषवेषधारी वा कश्चिदिति । अभिलापः शब्दः स एव पुरुष पुंल्लिङ्गतयाऽभिधानात्, यथा घट कुटो वेति । अर्हन्तश्चक्रवर्तिनो वासुदेवा उत्तमपुरुषा भगवतो नाभेयस्य राज्यकाले च आरक्षका आसन् त उग्राः तत्रैव ये गुरवस्ते भोगाः, तत्रैव ये वयस्यास्ते राजन्या एते मध्यमपुरुषाः, दासीपुत्रादयो मूल्यतः कर्मकरा एते जघन्यपुरुषा इति ॥ ४३ ॥

अथ लेश्यास्त्रिस्थानकावतारेण निरूपयति—

**तेजोवायुविकलेन्द्रियनैरयिकाणामाद्यास्तिस्रो लेश्याः, कुमारवानव्यन्तराणां पृथिव्यब्वनस्पतीनाञ्च संक्लिष्टास्ता एव, पञ्चेन्द्रियतिर्यङ्मनुष्याणां संक्लिष्टा असंक्लिष्टाश्च तिस्र., असंक्लिष्टास्तिस्रो वैमानिकानाम् ॥ ४४ ॥**

**तेज इति,** आद्या इति कृष्णनीलकापोता इत्यर्थः, तेजोवायुविकलेन्द्रियेषु देवानुत्पत्त्या तेजोलेश्याया अभावात् निर्विशेषणतया लेश्यास्त्रय उक्ता , पृथिव्यब्वनस्पतिषु देवोत्पादसम्भवात्तेजोलेश्यासद्भावात्संक्लिष्टेति विशेषणमुपात्तम्, असुरकुमाराणां तेजोलेश्या वर्त्तते परं सा न संक्लिष्टेति । पञ्चेन्द्रियतिरश्चां मनुष्याणाञ्च संक्लिष्टा असंक्लिष्टास्तेजःपद्मशुक्ललेश्याः षडपि, वैमानिकानामसंक्लिष्टा एव त्रयः । ज्योतिष्काणां तेजोलेश्याया एव भावेन ते नोक्ताः, त्रिस्थानकानवतारादिति ॥ ४४ ॥

ज्योतिष्काणां देवानाञ्च चलनादिकारणान्याह—

**वैक्रियकरणपरिचरणसङ्क्रमणानि तारकाणां चलनहेतवः, देवस्य विद्युत्स्तनितक्रिययोर्वैक्रियकरणपरिचरणसमृद्ध्याद्युपदर्शनानि हेतवः ॥४५॥**

**वैक्रियकरणेति,** तारकमात्रं हि वैक्रियं कुर्वञ्चलेत्, परिचरन्-मैथुनार्थं संरम्भयुक्तं वा चलेत्, स्थानादेकस्मात्स्थानान्तरं सङ्क्रामद्गच्छेत्, यथा धातकीखण्डादि मेरुं परिहरेदिति, अथवा कश्चिन्महर्द्धिके देवादौ चमरवद्वैक्रियादि कुर्वति सति तन्मार्गदानार्थं चलेत्। **देवस्येति, वैक्रियकरणेति,** एतानि हि सदर्पस्य भवन्ति, सदर्पवृत्तस्य च दर्पोल्लासवशाच्चलनविद्युद्गर्जनादीन्यपि भवन्तीति चलनकिंशुकारादीनां वैक्रियादिकं कारणतयोक्तम्, विमानपरिवारादिः समृद्धिः, आदिना शरीराभरणादीनां द्युतेर्यशसो बलस्य पराक्रमस्य च ग्रहणम् ॥ ४५ ॥

अथ लोकान्धकारादीन्याह—

**सर्वत्रान्धकारोऽर्हन्निर्वाणतद्धर्मतच्छ्रुतव्यवच्छेदेभ्यः, उद्द्योतश्च तज्जन्मप्रव्रज्याज्ञानोत्पादमहिमासु, एवं देवसन्निपातादयोऽपि ॥ ४६ ॥**

**सर्वत्रेति,** सर्वत्र क्षेत्रात्मके लोकेऽर्हत्सु निर्वाणं गच्छत्सु तत्प्रज्ञप्ते वा धर्मे तच्छ्रुते वा व्यवच्छिद्यमाने द्रव्यतो लोकानुभावाद्भावतो वा प्रकाशस्वभावज्ञानाभावादन्धकारो भवेत्, अशोकाद्यष्टप्रकारा परमभक्तिपरसुरासुररचिता जन्मान्तरमहालवालविरूढानघवासनाजलाभिषिक्तपुण्यमहाद्रुमकल्याणफलकल्पा महाप्रातिहार्यरूपा पूजा निखिलप्रतिपन्थिप्रक्षयात्सिद्धिसौधशिखरारोहणमर्हन्तीत्यर्हन्तः । राजमरणे देशनगरभङ्गादावपि दृश्यते दिशामन्धकारमात्रं रजस्सलतया, भगवत्स्वर्हदादिषु च निखिलभुवनजनानवद्यनयनसमानेषु विगच्छत्सु लोकान्धकारं भवतीत्येतत्किमद्भुतम् । तथोद्योतश्चार्हत्सु जायमानेषु प्रव्रजमानेषु केवलज्ञानोत्पादे देवकृतमहोत्सवेषु च । एभिरेव त्रिभिः स्थानैर्देवानां भुवि समवतारो देवकृतः प्रमोदकलकलो देवाभ्युत्थानतदासनचलनचैत्यवृक्षचलनादयो भवन्ति ॥ ४६ ॥

अर्हतां धर्माचार्यतया तत्पूजायर्थं देवानां मनुजलोक आगमः, धर्माचार्याः दुःशक्यप्रत्युपकारा एतदेवाह—

**पितरौ भर्त्ता धर्माचार्यश्च सेवासर्वस्वदानसुदेशादिप्रापणैरपि दुष्प्रतिकराः, धर्मस्थापनेनैव च सुप्रतिकराः ॥ ४७ ॥**

**पितराविति,** एते त्रयः, दुःखेन—कृच्छ्रेण प्रतिक्रियन्ते कृतोपकारेण पुंसा प्रत्युपक्रियन्ते इति दुष्प्रतिकराः प्रत्युपकर्तुमशक्या इत्यर्थः, माता च पिता च पितरौ, जनकत्वेनैकत्वविवक्षणात्तस्यैकं स्थानम्, भर्त्ता पोषकः स्वामीत्यर्थः, धर्मदाता आचार्यो धर्माचार्यः, उक्तञ्च 'दुष्प्रतिकारौ मातापितरौ स्वामी गुरुश्च लोकेऽस्मिन् । तत्र ... दुष्करतरप्रतीकारः' इति, यो हि कश्चित्पुमान्मातापितरौ शतपाकसहस्रपाकाभ्यां ... गन्धद्रव्येणोद्वलनञ्च कृत्वा

अथ योनित्रैविध्यमाह—

**शीतोष्णमिश्रभेदात्सचित्ताचित्तमिश्रभेदात्संवृतविवृतमिश्रभेदात्कूर्मोन्नतशंखावर्त्तवंशीपत्रिकाभेदाच्च त्रिविधा योनिः ॥ ५१ ॥**

**शीतेति,** युवन्ति तैजसकार्मणशरीरवन्तः सन्त औदारिकादिशरीरेण मिश्रीभवन्त्यस्यामिति योनिर्जीवस्योत्पत्तिस्थानं शीतादिस्पर्शवत्, तत्र मिश्रयोनिका गर्भव्युत्क्रान्ताः सर्वे देवाश्च, तेजस्काया उष्णयोनिकाः, त्रिधा नरके, एकेन्द्रियविकलेन्द्रियाणां पञ्चेन्द्रियतिर्यक्पदे मनुष्यपदे च सम्मूर्च्छनजाना त्रिविधेति । प्रकारेणान्येन त्रैविध्यमाह **सचित्तेति,** नैरयिकाणां देवानाञ्चाचित्ता, गर्भवसतीनां मिश्रा, शेषाणान्तु त्रिविधा योनिरिति । पुनरन्यथा तामाह **संवृतेति,** संवृता—सङ्कटा घटिकालयवत्, विवृता विस्तृता, संवृतविवृता तूभयरूपा, एकेन्द्रिया नैरयिका देवाश्च संवृतयोनयः, विकलेन्द्रिया विवृतयोनयः, संवृतविवृता च गर्भे । प्रकारान्तरेणाह **शंखावर्त्तेति,** कच्छपवदुन्नता कूर्मोन्नता शङ्खस्येवावर्त्तो यस्यां सा शंखावर्त्ता, वंश्याः—वंशजाल्याः पत्रकमिव या सा वंशीपत्रिका, कूर्मोन्नतायां योनावर्हच्चक्रवर्त्तिबलदेववासुदेवा उत्पद्यन्ते, स्त्रीरत्नस्य शंखावर्त्तायां बहवो जीवास्तद्गर्भमायान्ति पुद्गलाश्चोत्पद्यन्ते विनश्यन्ति नतु जायन्ते । वंशीपत्रिकायान्तु सामान्यजनस्योत्पत्तिः ॥ ५१ ॥

जीवविशेषाश्रयेणाह—

**शीलव्रतादिरहिता राजानो माण्डलिका महारम्भा अप्रतिष्ठाननरकभाजः, परित्यक्तकामभोगा राजानः सेनापतयः प्रशास्तारः सर्वार्थसिद्ध उत्पद्यन्ते ॥ ५२ ॥**

**शीलेति,** शुभस्वभावरहिताः प्राणातिपातादिभ्योऽविरता प्रतिपन्नापरिपालनादिना निर्मर्यादाः प्रत्याख्यानपौषधोपवासादिरहिताश्च कालं कृत्वा सप्तमपृथिव्यामप्रतिष्ठाने नरके नारकत्वेन राजान —चक्रवर्त्तिवासुदेवा माण्डलिकाश्शेषा राजानो महारम्भाः पञ्चेन्द्रियादिव्यपरोपणप्रधानकर्मकारिण उत्पद्यन्ते, तत्र पृथिव्यादेकेन्द्रियतयाऽन्येषामप्युत्पादान्नारकत्वेनेत्युक्तम् । ये च सुशीलास्सुव्रतास्सद्गुणास्समर्यादास्सप्रत्याख्यानपौषधोपवासास्ते कालं कृत्वा सर्वार्थसिद्धे महाविमाने देवत्वेन परित्यक्तकामभोगा राजानः सेनापतयः प्रशास्तारो लेखाचार्यादयो धर्मशास्त्रपाठकाश्च समुत्पद्यन्ते ॥५२॥

लोकापेक्षया माह—

**नामस्थापनाद्रव्यभेदेन ज्ञानदर्शनचारित्रभेदेनोर्ध्वाधस्तिर्यग्भेदेन लोकः ॥ ५३ ॥**

**नामेति,** नामलोकः स्थापनालोकश्च पूर्ववत्, उभयव्यतिरिक्तद्रव्यलोको धर्मास्तिकायादीनि जीवाजीवरूपाणि रूप्यरूपीणि सप्रदेशाप्रदेशानि द्रव्याण्येव, भावलोकं त्रिधाऽऽह **ज्ञानेति,** आगमनोआगमभेदेन स द्विविधः, लोकपर्यालोचनोपयोगः, तदुपयोगानन्यत्वात् पुरुषो वाऽऽगमतो भावलोकः, नोआगमतस्तु ज्ञानादिलोकः, [illegible] हि त्रय प्रत्येकं परस्परसव्यपेक्षं नागमं एव केवलो नाप्यनागमः,

ज्ञानलोकस्य भावलोकता च क्षायिकक्षायोपशमिकभावरूपत्वात्, एवं दर्शनचारित्रलोकावपि । क्षेत्रलोकं त्रिधा वक्ति-ऊर्ध्वेति, रत्नप्रभाभागे बहुभूमिसमभागे मेरुमध्येऽष्टप्रदेशो रुचको भवति, तस्योपरितनप्रस्तरस्योपरिष्टान्नवयोजनशतानि यावज्ज्योतिश्चक्रस्योपरितलस्तावत्तिर्यग्लोकः, ततः परत ऊर्ध्वलोकः ऊर्ध्वभागस्थितत्वात्, देशोनसप्तरज्जुप्रमाणः । रुचकस्याधस्तनप्रस्तरस्याधो नवयोजनशतानि यावत्तिर्यग्लोकः, ततः परतोऽधोलोकोऽधःस्थितत्वात् सातिरेकसप्तरज्जुप्रमाणः । तदुभयलोकयोर्मध्येऽष्टादशयोजनशतप्रमाणस्तिर्यग्लोकः, तिर्यग्भागस्थितत्वात् ॥ ५३ ॥

धर्मादिलाभसमयमाह—

**त्रिभिर्यामैर्वयोभिश्च धर्मश्रवणबोध्यादिलाभः ॥ ५४ ॥**

**त्रिभिरिति,** यद्यपि रात्रेर्दिनस्य च चतुर्थभागोऽपि प्रसिद्धस्तथापि त्रिभाग एव पूर्वमध्यापरभेदेन त्रिस्थानकानुरोधाद्विवक्षित, धर्मश्रवणबोधिमुण्डनागारप्रव्रज्याब्रह्मचर्यवाससंयमसंवराभिनिबोधिकज्ञानकेवलदर्शनादयो दिनस्य रात्रेर्वा यामेषु भवन्ति, तथा प्रथमे मध्यमे पश्चिमे वा वयसीति ॥ ५४ ॥

अथ बोध्यादिसाधिताह—

**बुद्धा मूढाश्च ज्ञानदर्शनचारित्रेषु, इहपरद्विधाप्रतिबद्धभेदात् पुरतो मार्गतो द्विधाप्रतिबद्धभेदात्तोदयित्वा प्लावयित्वा सम्भाष्येति भेदादवपाताख्यात सङ्केतभेदाच्च त्रिधा प्रव्रज्या ॥ ५५ ॥**

**बुद्धा इति,** सम्यग्बोधविशिष्टाः पुरुषास्त्रिधा ज्ञानबुद्धादयः, मूढा अपि ज्ञानमूढादिरूपेण त्रिविधाः, चारित्रबुद्धाश्च सत्यां प्रव्रज्यायामवस्थामाह— **इहेति,** पापाचरणव्यापारेषु गमनं प्रव्रज्या, चरणयोगगमनं मोक्षगमनमेव तत्कारणे तण्डुलान् वर्षति पर्जन्य इतिवत्कार्योपचारात् । इहलोकप्रतिबद्धा ऐहलौकिकभोजनादिकार्यार्थिनां परलोकप्रतिबद्धा जन्मान्तरकामाद्यर्थिनाम्, द्विधाप्रतिबद्धा चोभयार्थिनाम् । प्रव्रज्यापर्यायभाविषु शिष्यादिष्वभत आशंसनतः प्रतिबन्धादग्रतः प्रतिबद्धा । मार्गतः प्रतिबद्धा पृष्ठतः स्वजनादिषु स्नेहाच्छेदात्, द्विधाप्रतिबद्धा उभयथापि । तोदयित्वा प्रव्रज्या सा या व्यथामुत्पाद्य दीयते यथा मुनिचन्द्रपुत्रस्य सागरचन्द्रेण । प्लावयित्वा प्रव्रज्या च सा याऽन्यत्र नीत्वा दीयते यथाऽऽर्यरक्षितस्य । सम्भाष्य प्रव्रज्या गौतमेन कर्षकवत् । अवपातः-सद्गुरूणां सेवा ततो या साऽवपातप्रव्रज्या । आख्यातेन-धर्मदेशनेन, आख्यातस्य प्रव्रजेत्यभिहितस्य वा गुरुभिर्या साऽऽख्यातप्रव्रज्या, फल्गुरक्षितस्येव । सङ्केताद्या सा संकेतप्रव्रज्या मेतार्यादीनामिव, अथवा यदि, प्रव्रजसि तदा मया प्रव्रजितव्यमित्येव या सा तथेति ॥ ५५ ॥

निर्ग्रन्थस्वरूपमाह—

**नोसंज्ञोपयुक्तनिर्ग्रन्थाः पुलाकनिर्ग्रन्थस्नातकाः, संज्ञोपयुक्ताश्च बकुशप्रतिसेवनाकुशीलकषायकुशीलाः, उत्कृष्टमध्यमजघन्याः शैक्षभूमयः, जातिश्रुतपर्यायस्थविराः स्थविरभूमयः ॥ ५६ ॥**

नोसंज्ञेति, आहाराद्यभिलाषरूपसंज्ञाया पूर्वानुभूतस्मरणानागतचिन्ताद्वारेण नैवोपयुक्ता ये निर्ग्रन्थास्ते तथा, ते च त्रिविधाः, लब्ध्युपजीवनादिना संयमासारतानारकः पुलाकः, उपशान्तमोहः क्षीणमोहो वा निर्ग्रन्थो घातिकर्ममलक्षालनावाप्तशुद्धज्ञानस्वरूपः स्नातकः । संज्ञा आहारादिविषया नोसंज्ञा च तदभावलक्षणा तयोरुपयुक्तास्त्रिविधाः, तत्र बकुशः-शरीरोपकरणविभूषादिना शबलचारित्रपटः । प्रतिसेवनया मूलगुणादिविषयया कुत्सितं शीलं यस्य स प्रतिसेवनाकुशीलः । कषायेण कुत्सितशीलः कषायकुशीलः । निर्ग्रन्थाश्चारोपितव्रता भवन्ति केचित्, अतो व्रतारोपणकालविशेषमाह—उत्कृष्टेति, शिक्षामधीत इति शैक्षस्तस्य भूमयो महाव्रतारोपणकाललक्षणा अवस्थापदव्यः शैक्षभूमयः, उत्कृष्टा षड्भिर्मासैरुत्कर्षत उत्थाप्यते न तानतिक्रम्यत इति, मध्यमा चतुर्मासिका जघन्या रात्रिंदिवसप्तकमाना । शैक्षविपर्ययस्थविरभूमिनिरूपणायाह—जातीति, जन्मनाऽऽगमेन प्रव्रज्यया च ये वृद्धास्ते तथोच्यन्त इति भावः, तत्र षष्टिवर्षजातः श्रमणो जातिस्थविरः, स्थानाङ्गसमवायधरो निर्ग्रन्थः श्रुतस्थविरः, विंशतिवर्षपर्यायः श्रमणः पर्यायस्थविर इति, एते त्रयः क्रमेणानुकम्पापूजावन्दनायोग्या इति ॥ ५६ ॥

अथ लोकस्थितिं दिगपेक्षया जीवानां गत्यादि च निरूपयति—

**आकाशवातोदधिप्रतिष्ठिता पृथिवी, ऊर्ध्वाधस्तिर्यग्दिग्भ्यो गत्यागतिव्युत्क्रान्त्यादयः ॥ ५७ ॥**

आकाशेति, आकाशे घनवाततनुवातलक्षणो वातो व्यवस्थितः, सर्वद्रव्याणामाकाशप्रतिष्ठितत्वात्, वातप्रतिष्ठितो घनोदधिस्तत्र प्रतिष्ठिता तमस्तमःप्रभादिका पृथिवीत्यर्थः । एवंविधे लोके जीवानां दिशोऽधिकृत्य गत्यादिभावमाह—ऊर्ध्वेति, पूर्वादितया वस्तु यया व्यपदिश्यते सा दिक्, अत्र तिर्यग्रूपत्वेन पूर्वाद्याश्चतस्र एव दिशो गृह्यन्ते विदिक्षु गत्यागतिव्युत्क्रान्तीनामघटमानत्वात्, जीवानामनुश्रेणिगमनात्, आदिपदग्राह्याहारवृद्धिहानिचलनसमुद्घातकालसंयोगदर्शनज्ञानाभिगमजीवाभिगमेषु च विदिशामविवक्षितत्वात् । गतिः प्रज्ञापकस्थानापेक्षया मृत्वाऽन्यत्र गमनम्, आगतिः प्रज्ञापकप्रत्यासन्नस्थाने आगमनम्, व्युत्क्रान्तिरुत्पत्तिः, आहारः प्रसिद्धः, वृद्धिहानी शरीरस्य, जीवस्य एव चलनम्, वेदनादिलक्षणः समुद्घातः, कालसंयोगो वर्त्तनादिकाललक्षणानुभूतिर्मरणयोगो वा; दर्शनाभिगमः प्रत्यक्षप्रमाणभूतेनावध्यादिना बोधः, एवं ज्ञानाभिगमः, जीवानां ज्ञेयानामवध्यादिनैव बोधो जीवाभिगमः । एवं जीवानामजीवाभिगमः ऊर्ध्वाधस्तिर्यग्दिग्भ्यः । एते जीवाभिगमान्ताः सामस्त्येन पञ्चेन्द्रियतिर्यक्षु मनुष्येषु सम्भवन्ति, न तु नारकादीनां द्वाविंशतेर्जीवविशेषाणाम्, तेषां नारकदेवेषूत्पादाभावादूर्ध्वाधोदिशोर्विवक्षया गत्यागत्योरभावः, एवं दर्शनज्ञानजीवाभिगमा गुणप्रत्यया अवध्यादिप्रत्यक्षरूपा दिक्त्रये तेषां न सन्त्येव, भवप्रत्ययावधिपक्षे तु नारकज्योतिष्कास्तिर्यगवधयो भवनपतिव्यन्तरा ऊर्ध्वावधयो वैमानिका अधोऽवधयः, एकेन्द्रियविकलेन्द्रियाणान्तु नास्त्येवावधिरिति ॥ ५७ ॥

प्रत्येकं पृथिव्यादयः प्रायोऽङ्गुलासंख्येयभागमात्रावगाहनत्वाच्छेद्यादिस्वभावा व्यवहारतो भवन्तीति निश्चयेन तत्स्वभावाच्छेद्यादीनाह—

**समयप्रदेशपरमाणवोऽच्छेद्याभेद्यादाह्याश्च, प्रमादेन कृतं दुःखं भीरवः प्राणिनोऽप्रमादेन च तद्वेद्यते ॥ ५८ ॥**

**समयेति,** समयः कालविशेषः, प्रदेशो धर्माधर्माकाशजीवपुद्गलानां निरवयवोंऽशः, परमाणुः स्कन्धः पुद्गलः, एते तुद्ध्या क्षुरिकादिशस्त्रेण वा च्छेत्तुमशक्याः, अन्यथा समयादित्वायोगात्। सूच्यादिनाऽभेद्याः, अग्निक्षारादिनाऽदाह्याः चशब्देनानर्घो विभागद्वयाभावात्, अमध्या विभागत्रयाभावात्, अप्रदेशा निरवयवा, अविभाज्या विभक्तुमशक्या इत्येते समुच्चीयन्ते। प्राणिनः कृतो दुःख भवतीत्यत्राह **प्रमादेनेति,** अज्ञानसंशयमिथ्याज्ञानरागद्वेषमतिभ्रंशधर्मानादरयोगदुष्प्रणिधानलक्षणप्रमादेन बन्धहेतुना जीवेन कृतं दुःखं मरणादिरूपम्, प्राणिनश्च दुःखभीरवः, दुःखञ्च बन्धहेतुप्रतिपक्षभूतेनाप्रमादेन वेद्यते क्षिप्यत इति ॥ ५८ ॥

अथ तीर्थान्तरीयमतमाशङ्क्य निषेधति—

**कृता क्रियते, कृता न क्रियते, अकृता न क्रियत इति न वक्तव्यं किन्त्वकृता क्रियत इति वक्तव्यं तन्न, प्रतिनियतव्यवहाराभावप्रसङ्गेन कृता क्रियत इति युक्तत्वात् ॥ ५९ ॥**

**कृतेति,** कृता क्रिया दुःखाय भवतीत्येको भङ्गः, स न युज्यते पूर्वकालकृतत्वस्याप्रत्यक्षतयाऽसत्त्वात्, कृतं कर्म दुःखाय न भवतीति द्वितीयो भङ्गः, अयं न युज्यतेऽत्यन्तविरोधेनासम्भवात्, यदि हि कृतं कर्म कथं न दुःखाय भवति, यदि तु दुःखाय न भवति तर्हि कथं कृतं तत्, कृतस्य कर्मणोऽभवनाभावात्। अकृतं कर्म दुःखाय न भवतीति तृतीयो भङ्गः, सोऽपि न युक्तः, अकृतस्यासत्त्वश्च कर्मणः खरविषाणकल्पत्वात्, किन्त्वकृतं पूर्वमविहितं कर्म दुःखाय सम्पद्यत इत्येव चतुर्थो भङ्गो वक्तव्यः, पूर्वकालकृतत्वस्याप्रत्यक्षतयाऽसत्त्वेन दुःखानुभूतेश्च प्रत्यक्षतया सत्त्वेनाकृतकर्मभवनपक्षस्य सम्भवत्वात्, यदि निर्ग्रन्था अप्यकृतमेव कर्म दुःखाय देहिनां भवतीति प्रतिपद्यन्ते तर्हि शोभनम्, तथा चाकृत्वाऽकृत्वा कर्म देहिनो वेदनामनुभवन्तीत्यन्यतीर्थिकानां प्ररूपणा, तां निरस्यति **तन्नेति,** अज्ञानोपहतबुद्धीनां तत्प्ररूपणं मिथ्या, अकृतकर्मानुभवने हि बद्धमुक्तसुखित्वदुःखित्वादिप्रतिनियतव्यवहारो न भवेत्, तस्मात् कृतं कर्म दुःखाय भवति, कृत्वा कृत्वा देहिनः कर्मकृतशुभाशुभानुभूतिमनुभवन्तीति सम्यग्वादिना वक्तव्यमिति भावः ॥ ५९ ॥

पुनर्जीवधर्मापेक्षया त्रिस्थानमाह—

**कृतवान् कुर्वन् करिष्यन् वाऽकार्यमकीर्त्यवर्णाविनयैर्वा कीर्तियशःपूजासत्कारहानिभ्यो वाऽऽलोचनप्रतिक्रमणनिन्दादीनि न प्रतिपद्यते, इहपरलोकोपपातगर्हाप्रशंसाभिस्तु प्रतिपद्यते ॥ ६० ॥**

**कृतवानिति,** मायावी हि गोपनीयं यत्किञ्चिदकार्यं कृत्वाऽकार्यमिदमहमतः कथं निन्दामि, आलोचयिष्यामि स्वसाधुत्वहानिप्राप्तेरित्यभिमानादथवा करोमि चाहमिदानीमेव कथमस्मान्निन्दामि

भणामि, यद्वा करिष्यामि चाहमेतदकृत्यमनागतकालेऽपि तत्कथं प्रायश्चित्तं प्रतिपद्ये इत्यभिमानाद्गुरवे निवेदनलक्षणमालोचनं न प्रतिपद्यते नापि मिथ्यादुष्कृतप्रदानरूपं प्रतिक्रमणं न चात्मसाक्षिकां निन्दां नापि गुरुसाक्षिकां गर्हां न वा तदध्यवसायविच्छेदनात्मकं वित्रोटनं नापि वाऽऽत्मनश्चारित्रस्य वाऽतीचारमलक्षालनस्वरूपं विशोधनं नाप्यकरणताभ्युत्थानं न वा यथोचितं पापच्छेदकं निर्विकृतिकादि तपः प्रतिपद्यते, एकदिग्गामिनी प्रसिद्धिः कीर्त्तिः, सर्वदिग्गामिनी प्रसिद्धिर्वर्णस्तदभावभीत्या साधुकृतादिविनयभीत्या च नालोचनादि प्रतिपद्यते, इदञ्चाप्राप्तप्रसिद्धिपुरुषापेक्षम् । तथा कीर्तियशः पूजासत्काराणां हीनता स्यादिति नालोचनादिकं प्रतिपद्यते, इदन्तु प्राप्तप्रसिद्धिपुरुषापेक्षयोक्तम् । किन्तु स कथमालोचनादि प्रतिपद्यत इत्यत्राह—इहेति, इहलोको गर्हितो भवति, आगामी गर्हितो भवति, उपपातो गर्हितो भवतीत्यालोचनादि प्रतिपद्यते-तथेहलोकः प्रशस्तो भवति, आगामिलोकः प्रशस्तो भवति, उपपातः प्रशस्तो भवतीति च । अकृत्यकरणकाल एव मायी, न त्वालोचनादिकाले, आलोचनान्यथानुपपत्तेरिति बोध्यम् ॥ ६० ॥

यस्त्वमायी स आलोचनादिकं प्रतिपद्य निरतिचारो भवति तथाभूतस्य ज्ञानादीनि स्वस्वरूपं लभन्ते ततश्च विशुद्धत्वाभ्यन्तरसम्पत्तयो भवन्तीति तां त्रिधा कुर्वन्नाह—

**सूत्रार्थतदुभयधराणां निर्ग्रन्थानां जङ्गमिकभङ्गिकक्षौमिकाणि वस्त्राण्यलाबूदारुमृन्मयपात्राणि च धर्तुं परिभोक्तुञ्च कल्पन्ते ॥ ६१ ॥**

सूत्रेति, सूत्रधरोऽर्थधरस्तदुभयधरश्चेत्यर्थः, यथोत्तरं प्रधाना एते, जङ्गमिकमौर्णिकादि, भङ्गिकमतसीमयं क्षौमिकं कार्पासिकम्, वस्त्रग्रहणकारणानि च लज्जाविगुताङ्गदर्शनजप्रवचनजुगुप्सापरिहरणादीनि । एतानि वस्त्राणि निर्ग्रन्थानां निर्ग्रन्थीनाञ्च धर्तुं परिभोक्तुं च युज्यन्ते, अग्रे स्पष्टम् ॥ ६१ ॥

निर्ग्रन्थधर्मानाचष्टे—

**दृष्ट्वा निशम्य तृतीयमृषावादमाश्रित्याऽऽलोचनं च निर्ग्रन्थः साधर्मिकं साम्भोगिकं विसम्भोगिकं कुर्वन्नातिक्रामति, अनुज्ञासमनुज्ञोपसम्पदाद्य आचार्योपाध्यायगणित्वैस्त्रिधा ॥ ६२ ॥**

दृष्ट्वेति, यो निर्ग्रन्थः साधर्मिकं समानधर्मधारिणं साम्भोगिकं—संभोगः—साधूनां समानसामाचारीकतया परस्परमुपध्यादिदानग्रहणसव्यवहारलक्षणः स विद्यते यस्य स तथा विसंभोगो दानादिभिरसव्यवहारः स यस्यास्तीति तं विसम्भोगिकं करोति स त्रिभिः स्थानैराज्ञां सामायिकं वा न लङ्घयति विहितकारित्वात्, त्रिस्थानञ्च दृष्ट्वा साक्षात् साम्भोगिकेन क्रियमाणामसाम्भोगिकदानग्रहणादिकामसमाचारीं विलोक्य, निशम्य-श्रद्धेयवचनान्यसाधोर्वचनमवधार्य, अकल्पग्रहणपार्श्वस्थदानादिना सावद्यविषयप्रतिज्ञाभङ्गलक्षणमेकवारं द्विवारं त्रिवारं वाऽनाभोगतः कृतं मृषावादमाश्रित्यालोचनं प्रायश्चित्तं च । चतुर्थं मृषावादमाश्रित्य तु प्रायो नालोचनयोग्यः, तस्य दर्पत एव भावात्, आलोचनेऽपि नास्य प्रायश्चित्तं दीयते, अत्राह ... यदस्तत्र ज्ञातमात्रे श्रुतमात्रे च

विसंभोगः क्रियते, तृतीयन्त्वल्पतरदोषाश्रयम्, तत्र हि चतुर्थवेलायां स विधीयत इति । अनुज्ञेति, अनुज्ञा-अधिकारदानम्, समनुज्ञा-औत्सर्गिकगुणयुक्तत्वेनोचिताऽऽचार्यादितयाऽनुज्ञा, उपसम्पत्तिः-ज्ञानाद्यर्थं भवदीयोऽहमित्यभ्युपगमः, यथा हि कश्चित्स्वाचार्यादिसन्दिष्टः सम्यक्श्रुतग्रन्थानां दर्शनप्रभावकशास्त्राणां वा सूत्रार्थयोर्ग्रहणस्थिरीकरणविस्मृतसन्धानार्थं चारित्रविशेषभूताय वैयावृत्त्याय क्षपणाय वा सन्दिष्टमाचार्यान्तरं यदुपसम्पद्यते सेयमाचार्योपसम्पत्, एवमुपाध्यायगणिनोरपि । अनुज्ञासमनुज्ञोपसम्पत्त्रयं प्रत्येकमाचार्यत्वादिभेदेन त्रिधैव । आदिपदग्राह्य आचार्यादेः परित्यागोऽपि त्रिधा, स च स्वकीयप्रमाददोषमाश्रित्य वैयावृत्त्यक्षपणार्थमाचार्यान्तरोपसम्पत्त्या भवति, अथवाऽऽचार्यो विज्ञानाद्यर्थमुपसम्पन्नं यतिं तमर्थमननुतिष्ठन्तं सिद्धप्रयोजनं वा यत् परित्यजति, स आचार्यविपरित्याग इति ॥ ६२ ॥

वाङ्मनसोस्त्रैविध्यमाह—

**तत्तदन्यवचननोअवचनरूपं वचनं तद्विपर्ययादवचनं तथा मनः ॥६३॥**

**तदिति,** विवक्षितार्थस्य कथनं तद्वचनं यथा घटार्थापेक्षया घटवचनम्, व्युत्पत्तिनिमित्तभूतधर्मविशिष्टपदार्थकथनं वा तद्वचनम् यथा ज्वलनतपनादिः । आचार्यादेर्वा वचनं तद्वचनम् । विवक्षितार्थव्यतिरिक्तार्थबोधकं वचनं तदन्यवचनं यथा घटापेक्षया पटवचनम्, व्युत्पत्तिनिमित्तधर्मव्यतिरिक्तप्रवृत्तिनिमित्तधर्मविशिष्टबोधकं वा तदन्यवचनं यथा मण्डपादिवचनम्, आचार्यव्यतिरिक्तवचनं वा तदन्यवचनम् । अभणननिवृत्तिर्वचनमात्रं वा नोअवचनम्, यथा डित्थादिवचनम्, व्युत्पत्तिप्रवृत्तिनिमित्तधर्मविशिष्टान्यवचनं नोअवचनं यथा डित्थादिवचनम्, अविवक्षितप्रणेतृविशेषं वा वचनं नोअवचनमिति । **तद्विपर्ययादिति,** घटापेक्षया पटवचनमतद्वचनं घटापेक्षया घटवचनमतदन्यवचनम्, वचनमात्रनिवृत्तिर्नोअवचनम्, एवं व्याख्यान्तरापेक्षयापि भाव्यम् । देवदत्तस्य मनस्तन्मनः, घटादौ वा मनस्तन्मनः, देवदत्तान्ययज्ञदत्तादेर्मनस्तदन्यमनः, घटापेक्षया पटादौ वा मनस्तदन्यमनः, अविवक्षितसम्बन्धिविशेषं मनोमात्रं नोअमनः, एतद्वैपरीत्येनामनोऽपि भावनीयम् ॥ ६३ ॥

देवाश्रयेण स्थानत्रैविध्यमादर्शयति—

**दिव्यविषयप्रसक्त्या दिव्यप्रेमसङ्क्रान्त्याऽसमासकर्त्तव्यतया च देवा इच्छन्तोऽपि मनुजलोकं शीघ्रमागन्तुमशक्ताः, आचार्यादीन् सन्मानयामि भगवतो वन्दे मनुजभवीयमातापित्रादिसमीपे प्रकटीभवामीति बुद्ध्या चागन्तुमिच्छन्ति ॥ ६४ ॥**

**दिव्येति,** देवलोकेषु मध्ये कश्चिद्देवलोकेऽधुनोपपन्नो देवो मनुजलोकमागन्तुमभिलषन्नपि त्रिभिः कारणैर्नागन्तुं शक्नोति, तत्र प्रथमं कारणं दिव्यविषयप्रसक्तिः, दिवि देवलोके भवा दिव्याः ये विषयाः शब्दरूपरसगन्धस्पर्शाः, तेषु प्रकर्षेणाऽऽसक्तिः-मूर्च्छा तत्स्वरूपस्यानित्यत्वादेर्विबोधाक्षम-

त्वात्, ततो देवो । अत एव तस्य मानुषकामभोगेषु नादरो न वा तान् वस्तुभूततया स जानाति, नापि तेषां किञ्चित् प्रयोजनं मन्यते न वा ममैते भूयासुरिति निदानं प्रकरोति न चैते मे स्थिरीभवन्त्विति कामयते। दिव्यप्रेमसङ्क्रान्तिर्द्वितीयं कारणम्, स्वर्गगतकामोपभोगेषु मूर्च्छितत्वादेव मनुष्यविषयः स्नेहो व्युच्छिन्नो येन न मनुष्यलोकमागच्छेत्, तृतीयञ्च कारणमसमाप्तकर्त्तव्यता, दिव्यकामोपभोगेषु मूर्च्छितत्वादेव तस्यैव मनो भवति यथा मुहूर्तेनास्य कृत्यस्य समाप्तौ यास्यामि न त्विदानीमेव, कृतकृत्यो हि क्वचिद्गन्तुं शक्यः, अथवा मानुजा मात्रादयोऽल्पायुषः यद्दर्शनार्थं जिगमिषामि, ते च कालधर्मं गताः कस्य दर्शनार्थं गच्छेयमिति। दिव्यकामेषु कश्चिद्देवोऽमूर्च्छितोऽपि भवति तस्य च मन एवं भवति, मनुष्यभवे ममाऽऽचार्य उपाध्यायः प्रवर्त्तकः स्थविरो गणी गणावच्छेदो वा विद्यते येषां प्रभावेण ईदृशी दिव्यर्द्धिर्दिव्यद्युतिर्दिव्यशक्तिर्दिव्यपरिवारादिसंयोगो मयेदानीमुपलब्धस्तान् पूज्यान् स्तुतिभिर्वन्दे प्रणामेन नमस्याम्यादरकरणेन सत्करोमि वस्त्रादिना वा सन्मानयामि कल्याणं मङ्गलं चैत्यमिति बुद्ध्या सेवे इति हेतोः, तथा भगवतः सिंहगुहाकायोत्सर्गकारणादीनां मध्ये दुष्करमनुरक्तपूर्वोपभुक्तप्रार्थनापरतरुणीमन्दिरवासाप्रकम्प्यब्रह्मचर्यानुपालनादिकारिणः स्थूलभद्रस्य वन्दनादिकं कुर्वे इति हेतोः, एवं सन्ति मम मनुजभवे मातापित्रादयस्तत्र गच्छामि तेषामन्तिके प्रकटीभवामि येन ते मम दिव्यरूपर्द्ध्यादीन् पश्यन्त्विति हेतोर्मानुषं लोकं शीघ्रमागन्तुमिच्छति शक्यते चायान्तुमिति ॥ ६४ ॥

पुनरपि देवविशेषाश्रयेणाह—

**मनुष्यजन्मार्यक्षेत्रजन्म सुकुलप्रत्यायातिश्च देवा अभिलषन्ति पश्चात्तापं कुर्वन्ति च बहुश्रुतानध्ययनाद्दीर्घश्रामण्यपर्यायापालनादृद्धिरससातगुरुकतया भोगाशंसागृद्धतया च विशुद्धचारित्रास्पर्शनात् ॥ ६५ ॥**

**मनुष्यजन्मेति,** आर्यक्षेत्र-अर्धषड्विंशतिजनपदानामन्यतरन्मगधादि तत्र जन्म, सुकुलप्रत्यायाति-इक्ष्वाकादौ सुकुले देवलोकात्प्रतिनिवृत्तिः तत्र जन्मेति यावत्। पश्चात्तापकरणे निमित्तं प्रथममाह—**बहुश्रुतानध्ययनादिति,** बलवीर्यपुरुषकारपराक्रमनिरुपद्रवसुभिक्षकालनीरोगदेहानां सर्वेषामपीषां सद्भावेऽप्यहो नाचार्यादिभ्यो बहुश्रुतमधीतमतो हेतोरित्यर्थः, द्वितीयं निमित्तमाह-**दीर्घश्रामण्यपर्यायापालनादिति,** विषयपिपासयेहलोकप्रतिबद्धपरलोकपराङ्मुखतया न सुदीर्घकालं यावच्छ्रामण्यपर्यायः पालित इति हेतोरित्यर्थः, तृतीयमाह **ऋद्धीत्यादिना,** ऋद्धि -आचार्यत्वादौ नरेन्द्रादिपूजा, रसा -मनोज्ञा मधुरादयः, सातं सुखमेभिर्गुरुकः, तेषां प्राप्तावभिमानतोऽप्राप्तौ च प्रार्थनातोऽशुभभावोपात्तकर्मभारतयाऽलघुकः, तस्य भावस्तत्ता तया, तथा भोगाशंसागृद्धतया, भोगेषु कामेष्वाशंसा-अप्राप्तप्रार्थनं, गृद्ध-प्राप्तातृप्तिर्यस्य स भोगाशंसागृद्धस्तस्य भावस्तया, न निरतिचारं स्पृष्टमिति हेतोरित्यर्थः ॥ ६५ ॥

प्रकारान्तरेण तदपेक्षयैव त्रैविध्यमभिधत्ते—

**निष्प्रभविमानाभरणचैत्यवृक्षप्रकम्पनस्वशरीरदीप्तिहानिभिर्निजच्य-**

**च्यवनज्ञा देवा इतश्च्यवनौजःशुक्रसश्लिष्टाहाराभ्यवहाराशुचिगर्भवासेभ्य उद्वेगं यान्ति ॥ ६६ ॥**

**निष्प्रभेति,** त्रिभिः स्थानैर्देवाः स्वच्यवनमितो जानन्ति, यथा विमानाभरणानां निष्प्रभत्वमौत्पातिकं तच्चतुर्विभ्रमरूपं वा यस्मात्तथा चैत्यवृक्षस्य प्रकम्पनादेव निजशरीरस्य दीप्तेर्हानेश्च, एवंविधानि चिह्नानि देवानां च्यवनकालेऽवश्यं भवन्ति । त्रिभ्यः कारणेभ्यो उद्वेगं शोकं यान्ति, मनैवञ्च्यवनं भविष्यतीत्येकं कारणम्, अपरञ्चौजः शुक्रसश्लिष्टाहाराभ्यवहार्ये मातुरोजः-आर्तवं पितुः शुक्रस्तदुभयलक्षणः परस्परमेकीभूतो य आहारः स गर्भवासकालस्य प्रथमसमय एवाभ्यवहर्तव्यो भविष्यतीति, अन्यत्तु जठरगतमलसमूहलक्षणायामशुचिभूतायामुद्वेगकारिण्यां भयानकायां गर्भरूपायां वसतौ वस्तव्यं हन्त ! एतादृश्यो दिव्यर्द्धिसुखयो देवानुभावा लब्धाः परित्यजनीया इति ॥६६॥

नारकाश्रयेणाह—

**विकलेन्द्रियवर्जाः सम्यङ्मिथ्यामिश्रदृष्टयः, नैरयिकतिर्यङ्मनुष्या दुःस्थाः, सुस्थाश्च सिद्धदेवमनुष्या ॥ ६७ ॥**

**विकलेति,** एकेन्द्रियविकलेन्द्रियभिन्ना इत्यर्थः, पृथिव्यादीनां मिथ्यादृष्टित्वात् द्वित्रिचतुरिन्द्रियाणां मिश्रदृष्टित्वाभावाच, त्रिविधदर्शनाश्च सुगतिदुर्गतियोगात्सुस्था दुःस्थाश्च भवन्ति, मनुष्याणां दुःस्थता विवक्षयैव, सुस्थताया अप्युक्तेरिति ॥ ६७ ॥

अथ पुद्गलं नरकं चापेक्ष्याह—

**प्रयोगमिश्रविस्रसापरिणताः पुद्गला, नैगमसङ्ग्रहव्यवहाराणामृजुसूत्रस्य शब्दनयानाञ्च नरकाः पृथिव्याकाशात्मप्रतिष्ठिता ॥ ६८ ॥**

**प्रयोगेति,** जीवव्यापारेण पटादिपुद्गलाः पटादितया परिणतिमुपनीताः प्रयोगपरिणताः, पटपुद्गला एव प्रयोगेण पटतया विस्रसापरिणामेन चानुपभोगेऽपि पुराणतया परिणताः मिश्रपरिणताः, अभ्रेन्द्रधनुरादिरूपेण परिणताश्च स्वभावलक्षणविस्रसया परिणताः, विस्रसापरिणतपुद्गलरूपाणां नरकावासानां नयापेक्षया त्रिस्थानप्रतिष्ठानमाह **नैगमेति,** नैगमसङ्ग्रहव्यवहाराणामशुद्धत्वात् प्रायो लोकव्यवहारपरत्वाच्च तन्मतेन नरकाणां पृथिवीप्रतिष्ठितत्वम्, ऋजुसूत्रस्य शुद्धत्वादाकाशस्य गच्छतां तिष्ठतां वा सर्वभावानामैकान्तिकाधारत्वाद्भुवोऽनैकान्तिकत्वाच्चाकाशप्रतिष्ठितत्वं मतम्, शब्दनयानां त्रयाणां शुद्धतरत्वात् सर्वभावानां स्वभावलक्षणाधिकरणस्यान्तरङ्गत्वादव्यभिचारित्वाच्चात्मप्रतिष्ठितत्वमिति, न हि स्वभावं विहाय परस्वभावाधिकरणा भावाः कदाचनापि भवन्ति ॥ ६८ ॥

नरकेषु मिथ्यात्वाज्जीवानां गतेर्मिथ्यात्वस्वरूपमाह—

**योगप्रयोगक्रिया, अनन्तरपरम्परतदुभयसमुदानक्रिया मतिश्रुतविभङ्गाज्ञानक्रिया चाक्रिया, देशत्यागनिरालम्बनता नानाप्रेमद्वेषमविनयो देशसर्वभावाज्ञानमज्ञानमिति मिथ्यात्वम् ॥ ६९ ॥**

**योगेति,** मिथ्यात्वमक्रियाऽविनयाज्ञानभेदेन त्रिधा, अत्र मिथ्यात्वं क्रियादीनामसम्यक्त्वं मिथ्यादर्शनानाभोगादिजनितविपर्यासरूपं वा विवक्षितं न तु विपर्ययस्वश्रद्धानम्, प्रयोगक्रियादिष्वसम्बध्यमानत्वात्, अक्रिया च मिथ्यात्वाद्युपहतस्यामोक्षसाधकानुष्ठानरूपा दुष्टक्रिया, विनयः प्रतिपत्तिविशेषस्तत्प्रतिषेधादविनयः, अज्ञानञ्चासम्यग्ज्ञानम्, अक्रियाऽपि प्रयोगसमुदानाज्ञानक्रियाभेदात्त्रिधा, वीर्यान्तरायक्षयोपशमाविर्भूतवीर्येणात्मना प्रयुज्यते व्यापार्यत इति प्रयोगो मनोवाक्कायलक्षणस्तस्य क्रिया-व्यापृतिरिति प्रयोगक्रिया प्रयोगैर्वा मनःप्रभृतिभिः क्रियते बध्यत इति प्रयोगक्रिया सा च कर्म, सा क्रिया दुष्टत्वादक्रिया, मन आदिसम्बन्धित्वाच्च त्रिधा, प्रयोगक्रियागृहीतानां कर्मवर्गणानां प्रकृतिबन्धादिभेदेन देशसर्वोपघातिरूपतया च सम्यक् स्वीकरणं समुदानं, सैव क्रिया समुदानक्रिया, इयञ्च प्रथमसमयवर्त्तिन्यनन्तरसमुदानक्रिया, द्वितीयादिसमयवर्त्तिनी तु परम्परसमुदानक्रिया, प्रथमाप्रथमसमयापेक्षया च तदुभयसमुदानक्रियेति त्रिधा । अज्ञानाच्चेष्टा कर्म वाऽज्ञानक्रिया सा मत्यज्ञानात् क्रिया-अनुष्ठानं मत्यज्ञानक्रिया, एवं श्रुताज्ञानक्रिया, मिथ्यादृष्टेरवधिरेवाज्ञानं ततः क्रिया विभङ्गाज्ञानक्रियेति त्रिधा । जन्मक्षेत्रादेर्देशस्य यस्मादविनयात्त्यागः स देशत्यागः प्रभुगालीप्रदानादिरूपोऽविनयः । गच्छकुटुम्बादेराश्रयणीयादालम्बनान्निर्गतस्तद्भावो निरालम्बनता, पुष्टालम्बनाभावेनोचितप्रतिपत्तिभ्रंशो वा निरालम्बनता, आराध्यतत्सम्मतविषयः प्रेम, आराध्यासम्मतविषयो द्वेषः, एतौ च विनयौ, नानाप्रकारौ एतौ-नानाप्रेमद्वेषावविनयः, आराध्यतत्सम्मतेतरलक्षणविशेषानपेक्षत्वेनानियतविषयत्वात्, इत्येवं त्रिधाऽज्ञानक्रिया, अज्ञानमपि देशसर्वभावभेदेन त्रिविधम्, ज्ञानं हि सर्वद्रव्यपर्यायविषयो बोधः, तन्निषेधोऽज्ञानम्, तत्र विवक्षितद्रव्यस्य देशतोऽज्ञाने देशाज्ञानं सर्वतोऽज्ञाने सर्वाज्ञानं, यदा विवक्षितपर्यायतो न जानाति तदा भावाज्ञानमित्येतत्सर्वं मिथ्यात्वमिति भावः ॥६९॥

मिथ्यात्वविपर्ययं धर्ममाह—

**श्रुतचारित्रास्तिकायधर्मभेदो धर्मः, धार्मिकाधार्मिकमिश्रभेदः स्वकीयपरकीयमिश्रभेदो वोपक्रमः तथा वैयावृत्त्यानुग्रहादयोऽपि ॥ ७० ॥**

**श्रुतेति,** श्रुतधर्मः स्वाध्यायः, चारित्रधर्मः क्षान्त्यादिश्रमणधर्मः, एतौ द्वौ भावधर्मौ विज्ञेयौ, अस्तित्वेन प्रदेशा प्राज्ञा, तेषां कायः-समूहोऽस्तिकायः, तत्सङ्को धर्मोऽस्तिकायधर्मः, गत्युपष्टम्भको धर्मास्तिकाय इत्यर्थः, अयञ्च द्रव्यधर्मः श्रुतचारित्रधर्मविशेषानाह—धार्मिकेति, उपक्रमः-उपायपूर्वकारम्भः, श्रुतचारित्रार्थः आरम्भो धार्मिकः, अश्रुतसंयमार्थ आरम्भोऽधार्मिकः, मिश्रश्च देशविरत्यारम्भः । नामस्थापनाद्रव्यक्षेत्रकालभावभेदाद्वोपक्रमः षड्विधः, नामस्थापने सुज्ञाने, द्रव्योपक्रमस्तूभयव्यतिरिक्तः सचित्ताचित्तमिश्रभेदात्त्रिविधः, आद्यो द्विपदचतुष्पदापदभेदवान्, प्रत्येकं परिकर्मवस्तुविनाशापेक्षया द्विविधः, तत्र परिकर्मद्रव्यस्य गुणविशेषकरणं यथा घृताद्युपयोगेन पुरुषस्य वर्णादिकरणम्, शुकसारिकादीनां वा शिक्षागुणविशेषकरणम्, चतुष्पदानां हस्त्यादीनामपदानाञ्च वृक्षादीनां तदायुर्वेदोपदेशाद्वार्धक्यादिगुणापादनम्, वस्तुविनाशः पुरुषहस्त्यादीनां खड्गादिभिर्विनाशकरणम् । पद्मरागादिमणेः क्षारमृत्पुटपाकादिना नैर्मल्यापादनं विनाशश्चाचित्तद्रव्योपक्रमः । कटकादिविभूषितपुरुषादिद्रव्यस्य

**वनज्ञा देवा इतश्च्यवनौजःशुक्रसश्लिष्टाहाराभ्यवहाराशुचिगर्भवासेभ्य उद्वेग यान्ति ॥ ६६ ॥**

**निष्प्रभेति,** त्रिभि. स्थानैर्देवाः स्वच्यवनमितो जानन्ति, यथा विमानाभरणाना निष्प्रभत्वमौत्पातिक तच्चक्षुर्विभ्रमरूप वा तस्मात्तथा चैत्यवृक्षस्य प्रकम्पनादेव निजशरीरस्य दीप्तेर्हानेश्च, एवविधानि छिद्रानि देवाना च्यवनकालेऽवश्य भवन्ति । त्रिभ्य कारणेभ्यो उद्वेग शोक यान्ति, ममेतश्च्यवन भविष्यतीत्येक कारणम्, अपरश्चौजः शुक्रसश्लिष्टाहाराभ्यवहारो मातुरोजः-आर्तव पितुः शुक्रस्तदुभयलक्षण परस्परमेकीभूतो य आहारः स गर्भवासकालस्य प्रथमसमय एवाभ्यवहर्तव्यो भविष्यतीति, अन्यत्तु जठरगतमलसमूहलक्षणायामशुचिभूतायामुद्वेगकारिण्या भयानकायां गर्भरूपाया वसतौ वस्तव्य हन्त ! एवादृश्यो दिव्यर्द्धिद्युतयो देवानुभावा लब्धाः परित्यजनीया इति ॥६६॥

नारकाद्याश्रयेणाह—

**विकलेन्द्रियवर्जाः सम्यङ्मिथ्यामिश्रदृष्टयः, नैरयिकतिर्यङ्मनुष्या दुःस्थाः, सुस्थाश्च सिद्धदेवमनुष्या ॥ ६७ ॥**

**विकलेति,** एकेन्द्रियविकलेन्द्रियभिन्ना इत्यर्थ , पृथिव्यादीनां मिथ्यादृष्टित्वात् द्वित्रिचतुरिन्द्रियाणा मिश्रदृष्टित्वाभावाच्च, त्रिविधदर्शनाश्च सुगतिदुर्गतियोगात्सुस्था दुःस्थाश्च भवन्ति, मनुष्याणा दु स्थता विवक्षयैव, सुस्थताया अप्युक्तेरिति ॥ ६७ ॥

अथ पुद्गल नरक चापेक्ष्याह—

**प्रयोगमिश्रविस्रसापरिणता पुद्गला., नैगमसङ्ग्रहव्यवहाराणामृजुसूत्रस्य शब्दनयानाञ्च नरका पृथिव्याकाशात्मप्रतिष्ठिता ॥ ६८ ॥**

**प्रयोगेति,** जीवव्यापारेण पटादिपुद्गलाः पटादितया परिणतिमुपनीताः प्रयोगपरिणताः, पटपुद्गला एव प्रयोगेण पटतया विस्रसापरिणामेन चानुपभोगेऽपि पुराणतया परिणताः मिश्रपरिणताः, अभ्रेन्द्रधनुरादिरूपेण परिणताश्च स्वभावलक्षणविस्रसया परिणताः, विस्रसापरिणतपुद्गलरूपाणा नरकावासाना नयापेक्षया निधानप्रतिष्ठानमाह **नैगमेति,** नैगमसङ्ग्रहव्यवहाराणामशुद्धत्वात् प्रायो लोकव्यवहारपरत्वाच्च त मतेन नरकाणा पृथिवीप्रतिष्ठितत्वम्, ऋजुसूत्रस्य शुद्धत्वादाकाशस्य गच्छतां तिष्ठतां वा सर्वभावानामैकान्तिकाधारत्वाद्ध्रुवोऽनैकान्तिकत्वाच्चाकाशप्रतिष्ठितत्व मतम्, शब्दनयाना त्रयाणा शुद्धतरत्वात् सर्वभावाना स्वभावलक्षणाधिकरणस्यान्तरङ्गत्वादव्यभिचारित्वाच्चात्मप्रतिष्ठितत्वमिति, न हि स्वभाव विहाय परस्वभावाधिकरणा भावाः कदाचनापि भवन्ति ॥ ६८ ॥

नरकेषु मिथ्यात्वाज्जीवाना गतेर्मिथ्यात्वस्वरूपमाह—

**योगप्रयोगक्रिया, अनन्तरपरम्परतदुभयसमुदानक्रिया मतिश्रुतविभङ्गाज्ञानक्रिया चाक्रिया, देशत्यागनिरालम्बनता नानाप्रेमद्वेषमविनयो देशसर्वभावाज्ञानमज्ञानमिति मिथ्यात्वम् ॥ ६९ ॥**

**योगेति**, मिथ्यात्वमक्रियाऽविनयाज्ञानभेदेन त्रिधा, अत्र मिथ्यात्वं क्रियादीनामसम्यक्प्रत्व मिथ्यादर्शनानाभोगादिजनितविपर्यासरूपं वा विवक्षितं न तु विपर्यस्तश्रद्धानम्, प्रयोगक्रियादिष्वसम्यक्त्वमानत्वात्, अक्रिया च मिथ्यात्वाद्युपहतस्यामोक्षसाधकानुष्ठानरूपा दुष्टक्रिया, विनयः प्रतिपत्तिविशेषस्तत्प्रतिषेधादविनयः, अज्ञानञ्चासम्यग्ज्ञानम्, अक्रियाऽपि प्रयोगसमुदानाज्ञानक्रियाभेदात्त्रिधा, वीर्यान्तरायक्षयोपशमाविर्भूतवीर्येणात्मना प्रयुज्यते व्यापार्यत इति प्रयोगो मनोवाक्कायलक्षणस्तस्य क्रिया-व्यापृतिरिति प्रयोगक्रिया प्रयोगैर्वा मन प्रभृतिभिः क्रियते बध्यत इति प्रयोगक्रिया सा च कर्म, सा क्रिया दुष्टत्वादक्रिया, मन आदिसम्बन्धित्वाच्च त्रिधा, प्रयोगक्रियागृहीतानां कर्मवर्गणानां प्रकृतिबन्धादिभेदेन देशसर्वोपघातिरूपतया च सम्यक् स्वीकरणं समुदानं, सैव क्रिया समुदानक्रिया, इयञ्च प्रथमसमयवर्त्तिन्यनन्तरसमुदानक्रिया, द्वितीयादिसमयवर्त्तिनी तु परम्परसमुदानक्रिया, प्रथमाप्रथमसमयापेक्षया च तदुभयसमुदानक्रियेति त्रिधा। अज्ञानाच्चेष्टा कर्म वाऽज्ञानक्रिया सा मत्यज्ञाना क्रिया-अनुष्ठानं मत्यज्ञानक्रिया, एवं श्रुताज्ञानक्रिया, मिथ्यादृष्टेरवधिरेवाज्ञानं ततः क्रिया विभङ्गाज्ञानक्रियेति त्रिधा। जन्मक्षेत्रादेर्देशस्य यस्मादविनयात्त्यागः स देशत्यागः प्रभुगालीप्रदानादिरूपोऽविनयः। गच्छकुटुम्बादेराश्रयणीयादालम्बनान्निर्गतस्तद्भावो निरालम्बनता, पुष्टालम्बनाभावेनोचितप्रतिपत्तिभ्रंशो वा निरालम्बनता, आराध्यतत्सम्मतविषयः प्रेम, आराध्यासम्मतविषयो द्वेषः, एतौ च विनयौ, नानाप्रकारौ एतौ-नानाप्रेमद्वेषावविनयः, आराध्यतत्सम्मतेतरलक्षणविशेषानपेक्षत्वेनानियतविषयत्वात्, इत्येवं त्रिधाऽज्ञानक्रिया, अज्ञानमपि देशसर्वभावभेदेन त्रिविधम्, ज्ञानं हि सर्वद्रव्यपर्यायविषयो बोधः, तन्निषेधोऽज्ञानम्, तत्र विवक्षितद्रव्यस्य देशतोऽज्ञाने देशाज्ञानं सर्वतोऽज्ञाने सर्वाज्ञानं, यदा विवक्षितपर्यायतो न जानाति तदा भावाज्ञानमित्येतत्सर्वं मिथ्यात्वमिति भावः ॥६९॥

मिथ्यात्वविपर्ययं धर्ममाह—

**श्रुतचारित्रास्तिकायधर्मभेदो धर्मः, धार्मिकाधार्मिकमिश्रभेदः स्वकीयपरकीयमिश्रभेदो वोपक्रमः तथा वैयावृत्त्यानुग्रहादयोऽपि ॥ ७० ॥**

**श्रुतेति**, श्रुतधर्मः स्वाध्यायः, चारित्रधर्मः क्षान्त्यादिः श्रमणधर्मः, एतौ द्वौ भावधर्मौ विज्ञेयौ, अस्तिशब्देन प्रदेशा भाष्यन्ते, तेषां कायः-समूहोऽस्तिकायः, तल्लक्षणो धर्मोऽस्तिकायधर्मः, गत्युपष्टम्भको धर्मास्तिकाय इत्यर्थः, अयञ्च द्रव्यधर्मः श्रुतचारित्रधर्मविशेषणादाह—**धार्मिकेति**, उपक्रमः-उपायपूर्वक आरम्भः, श्रुतचारित्रार्थः आरम्भो धार्मिकः, असंयमार्थः आरम्भोऽधार्मिकः, मिश्रश्च देशविरत्यारम्भः। नामस्थापनाद्रव्यक्षेत्रकालभावभेदाच्चोपक्रमः षड्विधः, नामस्थापने सुज्ञाने, द्रव्योपक्रमस्तूभयव्यतिरिक्तः सचित्ताचित्तमिश्रभेदात्त्रिविधः, आद्यो द्विपदचतुष्पदापदभेदवान्, प्रत्येकं परिकर्मवस्तुविनाशापेक्षया द्विविधः, तत्र परिकर्मद्रव्यस्य गुणविशेषकरणं यथा घृताद्युपयोगेन पुरुषस्य वर्णादिकरणम्, शुकसारिकादीनां वा शिक्षागुणविशेषकरणम्, चतुष्पदानां हस्त्यादीनामपदानाञ्च वृक्षादीनां तदायुर्वेदोपदेशाद्वार्धक्यादिगुणापादनम्, वस्तुविनाशः पुरुषहस्त्यादीनां खड्गादिभिर्विनाशकरणम्। पद्मरागादिमणेः क्षारमृत्पुटपाकादिना नैर्मल्यापादनं विनाशश्चाचित्तद्रव्योपक्रमः। कटकादिविभूषितपुरुषादिद्रव्यस्य

तथा करणं मिश्रद्रव्योपक्रमः । शालिक्षेत्रादेः परिकर्म विनाशो वा क्षेत्रोपक्रमः । चन्द्रोपरागादिलक्षणकालस्योपायेन परिज्ञानं कालोपक्रमः । प्रशस्ताप्रशस्तभावस्योपायतः परिज्ञानमेव भावोपक्रमः, तत्राप्रशस्तो ब्राह्मणीगणिकामात्यदृष्टान्तादवसेयः, प्रशस्तश्च श्रुतादिनिमित्तमाचार्यादिभावोपक्रम इति । एवञ्च धार्मिकस्य-संयतस्य चारित्राद्यर्थं द्रव्यक्षेत्रकालभावानामुपक्रमो धार्मिकोपक्रमः । असंयतस्यासंयमार्थं तथाविधोपक्रमोऽधार्मिकोपक्रमः, देशविरतस्य तथाविधोपक्रमो मिश्रोपक्रमः । स्वाम्यन्तरभेदेनोपक्रमं त्रिधाऽभिधत्ते-स्वकीयेति, स्वस्य-आत्मनोऽनुकूलोपसर्गादौ शीलरक्षणनिमित्तमुपक्रमः-वैहानसादिना विनाशः परिकर्म वा, अथवाऽन्यवस्तुन आत्मार्थमुपक्रमः स्वकीयोपक्रमः, परस्य परार्थं वोपक्रमः परकीयोपक्रमः, स्वपरयोस्तदुभयार्थं वोपक्रमो मिश्रोपक्रमः । एवं स्वपरमिश्रभेदेन वैयावृत्त्यादयोऽपि वाच्या इत्याह तथेति, वैयावृत्त्यं-भक्तादिभिरुपष्टम्भः, तत्रात्मवैयावृत्त्यं गच्छनिर्गतस्यैव, परवैयावृत्त्यं ग्लानादिप्रतिजागरकस्य, उभयवैयावृत्त्यं गच्छवासिनः । अनुग्रहो ज्ञानाद्युपकारः, आत्मानुग्रहोऽध्ययनादिप्रवृत्तस्य, परानुग्रहो वाचनादिप्रवृत्तस्य, उभयानुग्रहः शास्त्रव्याख्यानशिष्यसङ्ग्रहादिप्रवृत्तस्य । आदिनाऽनुशासनोपालम्भयोर्ग्रहणम्, अनुशासनमात्मनः 'द्विचत्वारिंशदेषणासङ्कटे गहने जीव ! नैव छलितः । इदानीं यथा न छल्यसे भुञ्जानो रागद्वेषाभ्यामि'ति । परानुशासनं यथा 'तत्त्व तेषां भाववैरी भवदुःखनिपीडिता एते त्वाम् । हन्दि शरणं प्रपन्ना मोचयितव्या प्रयत्नेने'ति । उभयानुशासनं यथा 'कथं कथमपि मानुषत्वादि प्राप्तं प्रवरं चारित्ररत्नञ्च । तद्भो ! अत्र प्रमादो न कदापि युज्यतेऽस्माक'मिति । उपालम्भः अनौचित्यप्रतिपादनगर्भमनुशासनमेव, स चात्मनो यथा 'भोजनादिदृष्टान्तैर्दुर्लभं लब्ध्वा मानुषं जन्म । यन्न करोषि जिनधर्मं आत्मा किं वैरी तव ?' इति, परोपालम्भो यथा 'उत्तमकुलसम्भूत उत्तमगुरुदीक्षित त्वं वत्स ! । उत्तमज्ञानगुणाढ्यः कथं सहसा व्यवसितोऽसि' इति । उभयोपालम्भो यथा 'एकस्य कृते निजजीवितस्य बहुका जीवकोटीः । दुःखे स्थापयन्ति ये केचित्तेषां किं शाश्वतं जीवितमिति ॥ ७० ॥

अथ श्रुतधर्मभेदा उच्यन्ते—

## अर्थधर्मकामकथाभेदा कथा, तद्विनिश्चयभेदश्च विनिश्चयः ॥ ७१ ॥

**अर्थेति,** लक्ष्म्युपायप्रतिपादकवाक्यप्रबन्धोऽर्थकथा, यदुक्तं 'सामादिधातुवादादिकृष्यादिप्रतिपादिका । अर्थोपादानपरमा कथाऽर्थस्य प्रकीर्तिते'ति । यथा 'अर्थाख्यः पुरुषार्थोऽयं प्रधानः प्रतिभासते । तृणादपि लघुं लोके धिगर्थरहितं नरमि'ति, इयञ्च कामन्दकादिशास्त्ररूपा । धर्मोपायकथा धर्मकथा, उक्तञ्च 'दयादानक्षमाद्येषु धर्माङ्गेषु प्रतिष्ठिता । धर्मोपादेयतागर्भा बुधैर्धर्मकथोच्यत' इति, यथा 'धर्माख्यः पुरुषार्थोऽयं प्रधान इति गीयते । पापसक्तं पशोस्तुल्यं धिग्धर्मरहितं नरमि'ति । इयञ्चोत्तराध्ययनादिरूपा । एवं कामकथापि, यदाह 'कामोपादानगर्भा च वयोदाक्षिण्यसूचिका । अनुरागेङ्गितादुत्था कथा कामस्य वर्णिते'ति, यथा 'सिवं न लक्षेण वचो न कोटिभिर्न कोटिलक्षैः सविलासमीक्षितम् । अवाप्यतेऽन्यैर्हृदयोपगूहनं न कोटिकोट्यापि तदस्ति कामिनाम्' । इतीयमपि वात्स्यायनादिरूपा । अर्थधर्मकामविनिश्चयाश्च तत्तत्स्वरूपपरिज्ञानरूपाः, ते च 'अर्थानामर्जने दुःखमर्जिता-

नाञ्च रक्षणे । नाशे दुःखं व्यये दुःखं धिगर्थं दुःखकारणम् ॥ धनदो धनार्थिनां धर्मः कामदः सर्वकामिनाम् । धर्म एवापवर्गस्य पारम्पर्येण साधकः ॥ शल्यं कामा विषं कामा कामा आशीविषोपमाः । कामानभिलषन्तोऽपि निष्कामा यान्ति दुर्गतिमि'त्यादयः ॥ ७१ ॥

अर्थोदिविनिश्चयकारणपरम्परफलमाह—

## श्रवणज्ञानविज्ञानादि फलं श्रमणपर्युपासनस्य ॥ ७२ ॥

**श्रवणेति,** श्रमणस्य सेवायाः फलं श्रवणं, साधूनां धर्मकथास्वाध्यायादिकारित्वेन तत्सेवाया तच्छ्रवणलाभात्, श्रवणस्य च ज्ञानं—श्रुतज्ञानं फलम्, ज्ञानस्य विज्ञानं—अर्थादीनां हेयोपादेयता-निर्णयः फलम्, एवं विज्ञानस्य प्रत्याख्यानं—निवृत्तिद्वारेण प्रतिज्ञाकरणं तस्य प्राणातिपाताद्यकरण-लक्षणः संयमस्तस्य नूतनकर्मानुपादानरूपानाश्रवस्तस्य च लघुकर्मत्वेनानशनादिभेदं तपः, तस्यापि पूर्वकृतकर्मविनाशः तस्य योगनिरोधलक्षणाऽक्रिया तस्याश्च कर्मकृतविकाररहितत्वलक्षणं निर्वाणं तस्य तु सिद्धिगतिः प्रयोजनमिति ॥ ७२ ॥

अथ जीवपर्यायान्तराण्याह—

## प्रज्ञापनासम्यक्त्वाराधनादयो ज्ञानदर्शनचारित्राणाम् ॥ ७३ ॥

**प्रज्ञापनेति,** भेदाद्यभिधानं प्रज्ञापना, सा च पञ्चधा ज्ञानं दर्शनं क्षायिकादि त्रिधा, चारित्रं सामायिकादि पञ्चधेति। सम्यक्त्वमविपरीतता-मोक्षसिद्धिं प्रत्यानुकूल्यम्, तदपि ज्ञानसम्यक्त्वं दर्शन-सम्यक्त्वं चारित्रसम्यक्त्वं चेति त्रिधा । आराधना ज्ञानादेः, श्रुतस्य कालाध्ययनादिष्वष्टस्वाचारेषु प्रवृत्त्या निरतिचारपरिपालना ज्ञानाराधना । निःशङ्कितत्वाद्याचारेषु प्रवृत्त्या दर्शनस्य निरतिचारपरि-पालना दर्शनाराधना, चारित्रस्य समितिगुप्तिषु प्रवृत्त्या निरतिचारपरिपालना चारित्राराधना । सा चाराधना भावभेदात्कालभेदाद्वोत्कृष्टादिभेदा भवति । आदिपदेनैते ग्राह्याः, तथाहि, ज्ञानादेः सङ्क्लेशः-सङ्क्लिश्यमानपरिणामाज्ज्ञानादिप्रतिपतनलक्षणो ज्ञानादिसङ्क्लेशः, विशुद्ध्यमानपरिणामहेतुकज्ञानादिवि-शुद्धिर्ज्ञानाद्यसंक्लेशः, एवमेव ज्ञानादिविषया अतिक्रमव्यतिक्रमातिचारानाचारा विज्ञेयाः, ज्ञानाद्यति-क्रमादीनालोचयेत् प्रतिक्रमेन्निन्देद्गर्हेत् परिवर्जयेच्च ॥ ७३ ॥

प्रव्राजनायोग्यानाह—

## पण्डकवातिकक्लीवाः प्रव्रज्याद्ययोग्याः ॥ ७४ ॥

**पण्डकेति,** पण्डको नपुंसकं, स च महिलास्वभावस्वरवर्णभेदादिलक्षणादिना परिज्ञाय परिहर्तव्यः, स्वनिमित्ततोऽन्यथा वा कषायिते मेहने प्रतिसेवनमन्तरेण वेदधारणासमर्थो वातिकः, स च त्याज्यो निरुद्धवेदस्य नपुंसकतया परिणामसम्भवात्, दृष्टिशब्दाऽऽदिग्धनिमन्त्रणक्लीबभेदात् क्लीबश्चतुर्विधः, तत्र यस्यानुरागतो विवसनायतस्य विपक्षं पश्यतो मेहनं गलति स दृष्टिक्लीबः, यस्य तु सुरतादिशब्दं शृण्वतस्तथा स शब्दक्लीबः, यस्तु विपक्षेणावगूढो निमन्त्रितो वा व्रतं रक्षितुं न शक्नोति स आदिग्धक्लीबो निमन्त्रितक्लीबश्च, चतुर्विधोऽप्ययं निरोधे नपुंसकतया परिणमति, एते च सर्वे उत्कृ-

वेदनया व्रतपालनासहिष्णव इति न प्रव्राजयितुं कल्पन्ते प्रव्राजकस्याप्याज्ञाभङ्गेन दोषप्रसङ्गश्च। बालवृद्धजडादीनामन्येषामप्ययोग्यानां सत्त्वेऽपि शिक्षाग्रकानुरोधाच्चे नाभिहिताः। एवं कथञ्चिच्छलितेन प्रव्राजिता अप्येते शिरोलोचनेन मुण्डयितुं प्रत्युपेक्षणादिसमाचारीं ग्राहयितुं महाव्रतेषु व्यवस्थापयितुमुपध्यादिना सम्भोक्तुमात्मसमीपे संवासयितुञ्च न कल्पन्ते ॥ ७४ ॥

अवाचनीयानाह—

**अविनीतविकृतिप्रतिबद्धाव्यवसितप्राभृता अवाचनीयाः, दुष्टमूढव्युद्ग्राहिताश्च दुस्संज्ञाप्याः ॥ ७५ ॥**

**अविनीतेति,** सूत्रार्थदातुर्वन्दनादिविनयरहितोऽविनीतः, तद्वाचने हि बहवो दोषा भवेयुः। घृतादिरसविशेषगृद्धो विकृतिप्रतिबद्धः, अस्यापि वाचने तपोयोगेप्सितफलादीनामभावो दोषः। अनुपशान्तपरमक्रोधोऽव्यवसितप्राभृतः, एतस्य वाचने इह लोकतस्त्यागोऽस्य प्रेरणायां कलहनात्, प्रान्तदेवता छलनाच्च, परलोकतोऽपि त्यागः, तत्र दत्तस्य श्रुतस्य निष्फलत्वात्, ऊपरक्षिप्तबीजवत्। अतो विनीतः, अविकृतप्रतिबद्धः, व्यवसितप्राभृतश्च सूत्रार्थवाचनयोग्यः। सम्यक्त्वस्यायोग्यानाह—**दुष्टेति,** तत्त्वं प्रज्ञापकं वा प्रति द्विष्टो दुष्टः स चाप्रज्ञापनीयः, द्वेषेणोपदेशाप्रतिपत्तेः। गुणदोषानभिज्ञो मूढः, कुप्रज्ञापकदृढीकृतविपर्यासो व्युद्ग्राहितः, सोऽप्युपदेशं न प्रतिपद्यते, किन्त्वेतद्विपरीताः सुसंज्ञाप्याः प्रज्ञापितानामर्थानामनायासतो विज्ञानादिति ॥ ७५ ॥

अथ कल्पस्थितिमाह—

**सामायिकच्छेदोपस्थापनीयनिर्विशमानकल्पस्थितिभेदान्निर्विष्टजिनस्थविरकल्पस्थितिभेदाद्वा त्रिधा कल्पस्थितिः ॥ ७६ ॥**

**सामायिकेति,** संयमविशेषः सामायिकं तस्य तदेव वा कल्पः-करणमाचारः, तदुक्तं 'सामर्थ्ये वर्णनायाञ्च करणे छेदने तथा। औपम्ये चाधिवासे च कल्पशब्दं विदुर्बुधा' इति। सामायिकस्येत्वरः, स च प्रथमचरमतीर्थयोः साधूनामल्पकालः, छेदोपस्थापनीयस्य सद्भावात्, मध्यमतीर्थेषु महाविदेहेषु च यावत्कथिकः, छेदोपस्थापनीयाभावात्, तदेव तस्य तत्र वा स्थितिः—मर्यादा सामायिककल्पस्थितिः। सा च नियमरूपाऽनियमरूपा च शय्यातरपिण्डपरिहारे चतुर्यामपालने पुरुषज्येष्ठत्वे बृहत्पर्यायस्येतरेण वन्दनकदाने च नियमरूपा, अचेलतायामाधाकर्मिकभक्ताद्यग्रहणे राजपिण्डाग्रहणे प्रतिक्रमणकरणे मासकल्पकरणे पर्युषणकल्पकरणे चानियमरूपा। पूर्वपर्यायच्छेदेनारोपणीयं छेदोपस्थापनीयम्, व्यक्तितो महाव्रतारोपणमित्यर्थः, तच्च प्रथमचरमतीर्थयोरेव, तत्कल्पस्थितिश्च पूर्वोक्तेषु दशसु स्थानकेष्ववश्यपालनरूपा। ये परिहारविशुद्धितपोऽनुचरन्ति ते निर्विशमानास्तेषां कल्पे स्थितिर्निर्विशमानकल्पस्थितिः, तद्यथा ग्रीष्मशीतवर्षाकालेषु क्रमेण जघन्यं चतुर्थषष्ठाष्टमानि मध्यमं षष्ठादीनि, उत्कृष्टमष्टमादीनि तपः, पारणञ्चायाममेव, पिण्डैषणासप्तके चाद्ययोरभिग्रह एव, पञ्चसु पुनरेकया भक्तैषणया च पानकमित्येकं द्वयोरभिग्रह इति। आसेवितविवक्षितचारित्रा निर्विष्टाः, अनुपहारिका इत्यर्थः, तत्कल्पस्थितिः, प्रतिदिनमायाममात्रं तपो भिक्षा तथैवेति। निर्विशमानका निर्वि-

ष्टाश्च परिहारविशुद्धिका उच्यन्ते । गच्छनिर्गतसाधुविशेषा जिनास्तेषां कल्पस्थितिर्जिनकल्पस्थितिः, जघन्यतोऽपि नवमपूर्वस्य तृतीयवस्तुनि सत्युत्कृष्टतस्तु दशसु भिन्नेषु प्रथमे संहनने जिनकल्पं प्रतिपद्यते, दिव्याद्युपसर्गं रोगवेदनाश्चासौ सहते, एकाक्येव भवति, दशगुणोपेतस्थण्डिल एवोच्चारादि जीर्णवस्त्राणि च त्यजति, अस्य वसतिः सर्वोपाधिविशुद्धा, तृतीयपौरुष्यां भिक्षाचर्या पिण्डैषणा चोत्तरासां पञ्चानामेकतरैव, मासकल्पेन विहारः, तस्यामेव वीथ्यां षष्ठदिने भिक्षाटनमिति । गच्छप्रतिबद्धा आचार्यादयः स्थविरास्तेषां कल्पस्थितिः स्थविरकल्पस्थितिः, सा च प्रव्रज्या शिक्षा व्रतान्यर्थग्रहणमनियतवास शिष्याणां निष्पत्तिर्विहारसामाचारीस्थितिश्च । एवञ्च सामायिके सति छेदोपस्थापनीयं तस्मिन् निर्विशमानकं ततो निर्विष्टकायिकं ततश्च जिनकल्पः स्थविरकल्पो वा भवतीति क्रमः ॥ ७६ ॥

कल्पस्थितिव्यतिक्रामिणश्च प्रत्यनीका अपि भवन्तीत्याह—

**आचार्योपाध्यायस्थविराणामिहपरोभयलोकानां कुलगणसङ्घानां तपस्विग्लानशैक्षकाणां ज्ञानदर्शनचारित्राणां सूत्रार्थतदुभयानां गुरुगतिसमूहानुकम्पाभावश्रुतान्याश्रित्य प्रत्यनीका अपि केचित् ॥ ७७ ॥**

**आचार्येति,** आचार्यादीनां प्रत्यनीकता-प्रतिकूलताऽवर्णवादादिभिः, इयञ्च तत्त्वाभिधायकं गुरुमाश्रित्य । मानुषत्वलक्षणपर्यायस्येहलोकस्य प्रत्यक्षस्य प्रत्यनीकः, इन्द्रियार्थप्रतिकूलकारित्वात्, पञ्चाग्नितपस्विवत् । भोगसाधनादीनामिहलोकोपकारिणां योपद्रवकारीहलोकप्रत्यनीकः । जन्मान्तरं प्रति प्रत्यनीक इन्द्रियार्थतत्परः, ज्ञानादीनामुपद्रवकारी वा परलोकप्रत्यनीकः । उभयलोकप्रत्यनीकश्च चौर्यादिभिरिन्द्रियार्थसाधनपरो भोगसाधनज्ञानादीनामुपद्रवकारी वा । वत्तल्लोकवितथप्ररूपणा वा वत्तल्लोकप्रत्यनीकता । इयञ्च मानुषत्वादिगत्याश्रयेण । कुलं चान्द्रादिकं कोटिकादिर्गणः कुलसमूहः, गणसमूहः, सङ्घः, एषां प्रत्यनीकताऽवर्णवादादिभिः, समूहमाश्रित्य ज्ञेयम् । अनुकम्पामाश्रित्य तपस्वी क्षपकः, ग्लानो रोगादिभिरसमर्थः, अभिनवप्रव्रजितः शैक्षः, एतेऽनुकम्पनीया भवन्ति, तदकरणाकारणाभ्याञ्च प्रत्यनीकता । भावः पर्यायो जीवाजीवगतः, तत्र जीवगतः प्रशस्तः क्षायिकादिरप्रशस्तो विवक्षयौदयिकः, क्षायिकादिश्च ज्ञानादिरूपः, ततश्च भावं ज्ञानादि प्रतीत्य प्रत्यनीको वितथप्ररूपणतो दूषणतो वा । सूत्रं व्याख्येयम्, अर्थस्तद्व्याख्यानं निर्युक्त्यादिस्तदुभयं द्वितयमिति श्रुतमाश्रित्य तत्प्रत्यनीकता तत्र दोषोद्भावनमिति ॥ ७७ ॥

स्थविरकल्पस्थितिप्रतिपन्नस्य विशिष्टनिर्जराकारणान्याह—

**मनोवाक्कायैर्निर्ग्रन्थस्य श्रुताध्ययनैकाकिविहारप्रतिमोपसम्पदपश्चिममारणान्तिकसंलेखनाऽऽकाङ्क्षणं महानिर्जरायै ॥ ७८ ॥**

**मन इति,** कथमहमल्पं बहु वा श्रुतमध्येष्यामि, कथमेकाकिविहारप्रतिमामुपसम्पद्य विहरिष्यामि कथं वाऽपश्चिममारणान्तिकसंलेखनाधाम् कृतभक्तपानप्रत्याख्यानः पादपोपगतः कालमनवकाङ्क्षमाणो विहरिष्यामीति मनसा वचसा कायेन पर्यालोचयति यस्तस्य महती कर्मक्षपणा भवति ॥ ७८ ॥

कर्मनिर्जरायाः पुद्गलपरिणामत्वात्तत्परिणामविशेषं तद्विचारं चाह—

**पुद्गलः पुद्गलान्तरं प्राप्य रूक्षतया लोकान्ते वा प्रतिहन्येत, एकद्वित्रिभेदाच्चक्षुस्त्रिधा, ऊर्ध्वाधस्तिर्यग्भेदतो वस्तुपरिच्छेदः ॥ ७९ ॥**

पुद्गल इति, परमाणुपुद्गलोऽन्यं परमाणुपुद्गलं प्राप्य गतेः प्रतिघातमापद्येत, रूक्षतया वा तथाविधपरिणामान्तरात् प्रतिहन्येत, लोकान्ते वा, परतो धर्मास्तिकायाभावात् । सचक्षुपामेव तदवगमाच्चक्षुर्निरूपयति—एकेति, चक्षुर्लोचनं तद्द्रव्यतोऽक्षि, भावतो ज्ञानं, तदस्यास्ति स तद्योगाच्चक्षुरेव, चक्षुष्मान् इत्यर्थः । स सङ्ख्याभेदात्त्रिधा, अतिशयवच्छ्रुतज्ञानादिविवर्जितं छद्मस्थश्चक्षुरिन्द्रियापेक्षयैकचक्षुः, देवो द्विचक्षुः, चक्षुरिन्द्रियावधिभ्याम्, आवरणक्षयोपशमोत्पन्नश्रुतावधिज्ञानदर्शनवान् त्रिचक्षुश्चक्षुरिन्द्रियपरमश्रुतावधिभिः, स हि साक्षादिव समस्तवस्तूनि हेयोपादेयान्यवलोकयति । केवलज्ञानी त्विह न व्याख्यातः, केवलज्ञानदर्शनलक्षणचक्षुर्द्वयकल्पनासम्भवेऽपि चक्षुरिन्द्रियलक्षणचक्षुष उपयोगाभावेनासत्कल्पतया चक्षुस्त्रयाभावात्, द्रव्येन्द्रियापेक्षया तु सोऽपि न विरुध्यते । चक्षुष्मतोऽविपरीततया संशयराहित्येन वस्तुपरिच्छेदाज्ज्ञानविशेषापेक्षयाऽऽह—ऊर्ध्वेति, भेदत्रयेणाय वस्तुपरिच्छेदः परमावधिना न तु केवलेन, क्रमोपयोगाभावेनोर्ध्वादिक्रमोत्पादासम्भवात् । ज्ञानोत्पादानन्तरं प्रथममूर्ध्वलोकं जानाति ततस्तिर्यग्लोकं ततश्चाधोलोकमिति क्रमेण पर्यन्ताधिगम्यत्वादधोलोको दुरभिगम इति सामर्थ्यात् प्राप्तम् ॥ ७९ ॥

ज्ञानलक्षणर्द्धिसाधर्म्यादृद्धिभेदानाह—

**विमानवैक्रियपरिचारणर्द्धयो देवर्द्धयोऽतियाननिर्याणबलायुधर्द्धयो राजर्द्धयो ज्ञानदर्शनचारित्रर्द्धयो गण्यृद्धयः ॥ ८० ॥**

विमानेति, इन्द्रादेरैश्वर्यं देवर्द्धिः, तत्र विमानसमृद्धिर्द्वात्रिंशल्लक्षादिकबाहुल्यं महत्त्वं रत्नादिरमणीयत्वञ्च, वैक्रियर्द्धिर्वैक्रियकरणं वैक्रियशरीरैर्हि जम्बूद्वीपद्वयमसङ्ख्यातान् द्वीपसमुद्रान् वा पूरयन्ति, कामसेवाया ऋद्धिः परिचारणर्द्धिः, अन्यान् देवानन्यसत्का देवीः स्वकीया देवीरभियुज्यात्मानञ्च विकृत्य परिचारयतीत्येवंलक्षणा । नगरप्रवेशे तोरणहट्टशोभाजनसमर्दादिलक्षणाऽतियानर्द्धिः, नगरादिनिर्गमे हस्तिकल्पनसामन्तपरिवारादिका निर्याणर्द्धिः, चतुरङ्गवाहनभाण्डागारादिर्बलायुधर्द्धिः, एता राजसम्पदः । विशिष्टश्रुतसम्पत् ज्ञानर्द्धिः, प्रवचने निःशङ्कितत्वादिकं प्रवचनप्रभावकशास्त्रसम्पद्वा दर्शनर्द्धिः निरतिचारिता चारित्रर्द्धिः एता गणिन आचार्यस्य सम्पदः ॥ ८० ॥

अथ लेश्याश्रयेणाह—

**दुरभिगन्धलेश्याः कृष्णनीलकापोताः, सुरभिगन्धलेश्यास्तेजःपद्मशुक्लाः, स्थितसंक्लिष्टपर्यवजातलेश्यानां बालमरणं स्थितासंक्लिष्टपर्यवजातलेश्यानां पण्डितमरणं स्थितासंक्लिष्टापर्यवजातलेश्यानां बालपण्डितमरणम् ॥ ८१ ॥**

**दुरभिगन्धेति,** कृष्णनीलकापोतलेश्यानां पुद्गलात्मकतया गन्धवत्त्वाद्दुरभिगन्धता तेजःपद्मशुक्लानाञ्च सुरभिगन्धता विज्ञेया । एतासां वर्णानामानुरूप्यं, तेजोलेश्या लोहितवर्णा पद्मलेश्या पीतवर्णेति, आद्या नरकतिर्यग्गतिप्रदा सङ्क्लेशहेतवोऽमनोहरा वर्णतोऽविशुद्धा स्पर्शतः शीतरूक्षा, अन्यास्तिस्रो मनुष्यदेवगतिप्रदा असङ्क्लिष्टा मनोहरा विशुद्धा स्निग्धोष्णाश्च । मरणञ्च बालपण्डितमिश्रभेदम्, विरतिसाधकविवेकरहितत्वादसंयतो बालस्तस्य मरणं बालमरणं फलवद्विज्ञानसंयुतत्वात्पण्डितः संयतस्तस्य मरणं पण्डितमरणम्, अविरतत्वेन बालत्वाद्विरतत्वेन च पण्डितत्वात्संयतासंयतो बालपण्डितस्तस्य मरणमिति, तत्र बालमरणस्य त्रिभेदमाह—**स्थितेति,** अविशुद्ध्यासङ्क्लिश्यमानं कृष्णादिलेश्यावस्थितं स्थितलेश्यं, सङ्क्लिश्यमानलेश्यावस्थितं सङ्क्लिष्टलेश्यं, विशुद्ध्या वर्धमानलेश्यावस्थितं पर्यवजातलेश्यं, प्रथमं कृष्णादिलेश्यः सन् यदा कृष्णादिलेश्येष्वेव नरकादिषूत्पद्यते तदा प्रथमं भवति, यदा तु नीलादिलेश्यः सन् कृष्णादिलेश्येषूत्पद्यते तदा द्वितीयम् । यदा च कृष्णादिलेश्यः सन् नीलकापोतलेश्येषूत्पद्यते तदा तृतीयम्, पण्डितमरणे संयतत्वादेव लेश्यायाः सङ्क्लिश्यमानता नास्तीति बालमरणाद्विशेषो बालपण्डितमरणे तु लेश्यायाः सङ्क्लिश्यमानता विशुद्ध्यमानता च नास्ति मिश्रत्वादिति विशेषः । वस्तुतः पण्डितमरणं द्विविधमेव, सङ्क्लिश्यमानलेश्यानिषेधेनावस्थितवर्धमानलेश्यत्वात्, व्यपदेशमात्रादेव च त्रिविधत्वमुक्तम्, बालपण्डितमरणन्त्वेकविधमेव सङ्क्लिश्यमानपर्यवजातलेश्यानिषेधेऽवस्थितलेश्यत्वात् त्रैविध्यन्त्वस्येतरव्यावृत्तितो व्यपदेशत्रयप्रवृत्तेरिति ॥८१॥

जन्मान्तरेऽधिकारभेदात्प्राप्यमाह—

**प्रवचनमहाव्रतजीवनिकायेषु शङ्काकांक्षाविचिकित्सादिमान्निर्ग्रन्थः परीषहाभिभूतः, विपरीतश्च परीषहानभिभवति ॥ ८२ ॥**

**प्रवचनेति,** प्रशस्तं प्रगतं प्रथमं वा वचनं प्रवचनम्-आगमः, महाव्रतानि प्रसिद्धानि, जीवनिकायो जीवसमूहः, यो ह्यनगारितां प्रपद्य प्रवचनादौ देशतः सर्वतः संशयवान् मतान्तरस्यापि साधुतया मन्ता फलं प्रति शङ्कोपेतश्चात एव द्वैधीभावमापन्नो नैवमेतदिति प्रतिपत्तिको वा प्रवचनादिकं न सामान्यतः प्रत्येति न वा प्रीतिविषयं करोति नापि तदुक्तं चिकीर्षति तं प्रव्रजिताभासं क्षुधादयः परीषहा एत्य पुनः पुनरभिभवन्ति, तदेवमनिश्चयवतोऽपराक्रमवतः प्रवचनादीनि त्रीणि स्थानानि न हिताय न सुखाय न निःश्रेयसाय न शुभानुबन्धाय भवन्ति । यश्च निर्ग्रन्थः प्रवचनादौ निश्शङ्कितः निष्कांक्षितो निर्विचिकित्सितो न वा कलुषितः स परीषहानभिभवति न तु तैरभिभूयते तस्य च प्रवचनादीनि हिताय सुखाय निःश्रेयसाय शुभानुबन्धाय च भवन्ति ॥ ८२ ॥

अथैवंविधः साधुरिहैव पृथिव्यां भवतीत्यर्थेन सम्बन्धेन पृथिवीस्वरूपमाह—

**घनोदधिघनवाततनुवातवलयिता पृथिवी, तत्रैकेन्द्रियवर्जानां त्रिसामयिकविग्रहेणोत्पादः ॥ ८३ ॥**

**घनोदधीति,** रत्नप्रभादिका पृथिवी दिक्षु विदिक्षु च घनोदध्यादिभिः क्रमेणाऽऽवेष्टिता, तत्राभ्यन्तरं घनोदधिवलयं ततो घनवातवलयं ततश्च तनुवातवलयमिति, एतासु पृथिवीपूत्कर्षेण समय-

त्रयभाविना वक्रगमनेन नारकादीनामुत्पाद , त्रसाना हि त्रसनाड्यन्तरुत्पादाद्वक्रद्वय भवति, तत्र च त्रय एव समया , आग्नेयदिशो नैर्ऋतदिशमेकेन समयेन गच्छति, ततो द्वितीयेन समश्रेण्याऽध , ततस्तृतीयेन वायव्यदिशि समश्रेण्यैवेति । त्रसानामेव त्रसोत्पत्तावेवविध उत्कर्षेण विग्रह । एकेन्द्रियास्त्वेकेन्द्रियेषु पञ्चसामयिकेनाप्युत्पद्यन्ते, बहिस्तात्त्रसनाडीतो बहिरपि तेषामुत्पादात्, तथाहि विदिशो दिशि प्रथमे द्वितीये लोकनाड्या प्रविशति तृतीय उपरि धावति चतुर्थे बहिर्नाड्या निर्गच्छति विदिशि पञ्चमे गत्वैकेन्द्रियत्वेनोत्पद्यत इति, सम्भव एवायम्, चतु सामयिक एव भावस्य भगवत्यामुक्तत्वात् ॥ ८३ ॥

अथ चतु स्थानक वक्तुमुपक्रमते तत्र पूर्व कर्म कार्य भवोत्पत्तिरुक्ता, सम्प्रति तत्कार्यस्य भवस्यान्तक्रियोच्यते—

**तपोवेदनयोस्तारतम्याद्ध्रस्वदीर्घाभ्या प्रव्रज्यापर्यायाभ्यामन्तक्रिया ॥८४॥**

**तप इति,** चतस्रोऽन्तक्रिया , अन्तक्रिया भवस्यान्तकरणम्, यो देवलोकादौ गत्वाऽल्पकर्मतया मानुषत्व प्रत्यागत स द्रव्यतो भावतश्चानगारिता प्रतिपन्नो द्रव्यभावस्नेहरहितरसमाधिबहुल तपस्वी सोऽल्पकर्मप्रत्यायातत्वान्नात्यन्तघोर तप करोति न वा तस्योपसर्गादिसम्पाद्याऽतिघोरा वेदना भवति तवश्च दीर्घेण प्रव्रज्यापर्यायेण सिद्धिगमनयोग्यो भवति, सकलकर्मनायकमोहनीयघातात्, ततो घातिचतुष्टयघातेन केवलज्ञानात्समस्तवस्तूनि बुद्ध्यन्वे ततो भवोपग्राहिकर्मभ्यो मुक्त्वा सर्वदु खानामन्त करोति, यथा भरत इति प्रथमस्थानम् । यस्य न तथाविध तपो नापि परीषहादिजनिता तथाविधा वेदना दीर्घेण च पर्यायेण सिद्धिर्भवति सैकान्तक्रियेति भाव । यो गुरुकर्मभिर्महाकर्मा सन् प्रत्यायातोऽत एव तत्क्षपणाय तथाप्रकार घोर तप करोति तथाविधामुपसर्गादिवेदनामनुभवति स गजसुकुमार इवाल्पेनैव प्रव्रज्यापर्यायेण सिद्धो भवति तद्द्वितीय स्थानम् । यो महाकर्मप्रत्यायातो महातपा महावेदनश्च दीर्घतरपर्यायेण सिद्ध्यति यथा सनत्कुमार , तद्भवे सिद्ध्यभावेन भवान्तरे सेत्स्यमानत्वादिति तृतीयम् । यश्चाल्पकर्मप्रत्यायातोऽविद्यमानतपोवेदनोऽल्पेनैव पर्यायेण सिद्धो भवति यथा मरुदेवीति चतुर्थ स्थानम् ॥ ८४ ॥

पुरुषविशेषाणां स्वरूपमाह—

**द्रव्यभावाभ्यामुन्नताः प्रणताश्च पुरुषा ॥ ८५ ॥**

**द्रव्येति,** अगार्यनगारी वा पुरुष कश्चिद्द्रव्यभावाभ्यामुन्नत कुलैश्वर्यादिभिर्लौकिकगुणे शरीरेण वा गृहस्थपर्याये प्रव्रज्यापर्याये च लोकोत्तरैर्ज्ञानादिभिरुन्नत , अथवोत्तमभवत्वेनोन्नत शुभगतित्वेन चोन्नत इति द्रव्यभावाभ्यामुन्नत इत्येक स्थानम् । उन्नतस्तथैव कश्चित् ज्ञानविहारादिहीनतया दुर्गतिगमनाद्वा शिथिलत्वे प्रणतो हीन , यथा शैलकराजर्षिरिति द्वितीयम् । तृतीयन्त्वादौ प्रणतस्तत आगतसंवेग उन्नतः शैलकवत्, मेतार्यवद्वा । चतुर्थश्च द्रव्यभावाभ्या प्रणतः, उदायिनृपमारकवत् कालशौकरिकवद्वा । एव परिणाममप्याश्रित्यापि भाव्यम्, आकारबोधक्रियाभेदात् स त्रिधा, तथा मनःसङ्कल्पप्रकाशनलक्षणबोधापेक्षया लीलाचारव्यवहारादिक्रियापेक्षयाप्युन्नतत्व-

प्रणतत्वे द्रव्यभावाभ्यां वेदितव्ये, आकारो रूपमुन्नतत्वं तस्य सत्संस्थानावयवादिसौन्दर्यात्। उन्नतमना जात्यादिगुणैरुन्नतत्वात् प्रकृत्योदार्यादियुक्तमनस्त्वाद्वा, सङ्कल्पो मनोविशेष एव विमर्श इत्यर्थः, तस्योन्नतत्वमौदार्यादियुक्ततया सदर्थविषयतया वा, प्रज्ञा सूक्ष्मार्थविवेचकत्वम्, तस्याश्चोन्नतत्वमविसंवादित्वात्, दर्शनं चक्षुर्दर्शनं नयमतं वा तदुन्नतत्वमप्यविसंवादित्वादेव, शीलं समाधिस्तत्प्रधान आचारः शीलाचारस्तस्योन्नतत्वमदूषणत्वात्, व्यवहारोऽन्योन्यदानग्रहणादिर्विवादो वा, उन्नतत्वमस्य श्लाघ्यत्वात्, सर्वत्रोन्नतविपर्ययः प्रणतत्वमिति ॥ ८५ ॥

पुनरप्याह—

**एवमृजुवक्राभ्यां शुद्धाशुद्धाभ्यां शुच्यशुचिभ्यां चतुर्भङ्गः ॥८६॥**

**एवमिति,** द्रव्यभावाभ्यां यथासम्भवमित्यर्थः, ऋजुरवक्रो बहिस्ताच्छरीरगतिवाक्चेष्टाभिः, तथा ऋजुरन्तर्निर्मायत्वेन सुसाधुवदित्येकः, तथैव ऋजुरन्तर्मायित्वेन वक्रः, कारणवशप्रयुक्तार्जवभावद्साधुवदिति द्वितीयः, तृतीयस्तु कारणवशाद्दर्शितबहिरनार्जवोऽन्तर्निर्माय इति, शासनरक्षाप्रवृत्तसाधुवत्। चतुर्थ उभयतो वक्रः, तथाविधशठवदिति। कालभेदेन वा पूर्वं ऋजुः सम्प्रत्यपि ऋजुरिति पूर्वं ऋजुः पश्चाद्वक्र इति, पूर्वं वक्रः पश्चादृजुरिति पूर्वं पश्चाच्च वक्र इति चतुर्भङ्गः। एवं परिणाममाश्रित्यापि वाच्यम्। **शुद्धाशुद्धाभ्यामिति,** शुद्धो जात्यादिना पुनः शुद्धो निर्मलज्ञानादिगुणतया एतद्विपक्षोऽशुद्धः, आभ्यामपि चतुर्भङ्गः। **शुच्यशुचिभ्यामिति,** अत्र शुचिः पुरुषोऽपूतिशरीरतया, पुनः शुचिश्च स्वभावेन चतुर्भङ्गः। एवं परिणाममाश्रित्यापि ॥ ८६ ॥

पुनरप्याह—

**अतिजातानुजातापजातकुलाङ्गाराः पुत्राः ॥ ८७ ॥**

**अतिजातेति,** पितुः सम्पदमतिलंघ्य जातः सम्वृद्धोऽतिजातः, अतिरम्य या वा यातः प्राप्तोऽतियात इति वा वाच्यम्। ऋषभवत्। अनुरूपः सम्पदा पितुस्तुल्यो जातोऽनुजातः, अनुयातो वा वाच्यः, अनुगतः पितृविभूत्याऽनुयातः पितृसम इत्यर्थः, महायशोवत्, आदित्ययशसा पित्रा तुल्यत्वात्तस्य। अपेतपसदो हीनः पितुः सम्पदो जातोऽपजातः, पितुः सकाशादीषद्धीनगुण इत्यर्थः, आदित्ययशोवत्, भरतापेक्षया तस्य हीनत्वात्। कुलस्य स्वगोत्रस्याङ्गार इवाङ्गारो दूषकत्वात्तदुपतापकत्वाद्वेति कुलाङ्गारः कण्डरीकवत्, शिष्येष्वपि पुत्रशब्दप्रयोगदर्शनात्सोऽपि चतुर्विधः, तत्रातिजातः सिंहगिर्यपेक्षया वैरस्वामिवत्, अनुजातः शय्यम्भवापेक्षया यशोभद्रवत्, अपजातो भद्रबाहुस्वाम्यपेक्षया स्थूलभद्रवत्, कुलाङ्गारः कुलवालकवत्, उदायिनृपमारकवद्वेति ॥ ८७ ॥

पुनरप्याह—

**त्वक्खादछल्लीखादकाष्ठखादसारखादघुणसमानां भिक्षूणा सारखादकाष्ठखादछल्लिखादत्वक्खादसमानानि तपांसि ॥ ८८ ॥**

**त्वक्खादेति,** त्वचं बाह्यवल्कं खादतीति त्वक्खादः, छल्लीरभ्यन्तरं वल्कं, काष्ठं प्रसिद्धम्, सारः काष्ठमध्यम्, व्युत्पत्तिः पूर्ववत्, घुणेन समा अल्पं सन्तोषित्वात्, आचाम्ला

प्रान्ताहारभक्षकत्वात्त्वक्खादघुणसमा भिक्षवः, एवं छल्लीखादघुणसमाः, अलेपाहारकत्वात्, काष्ठखादघुणसमा निर्विकृतिकाहारतया, सारखादघुणसमानाश्च सर्वकामगुणाहारत्वात्, एतेषां चतुर्णामपि भिक्षुकाणां क्रमतस्तपोविशेषानाह **सारखादेति,** त्वक्कल्पासाराहाराभ्यवहर्तुर्निरभिष्वङ्गत्वात् कर्मभेदमङ्गीकृत्य वज्रसारं सारखादसमानं तपो भवति, सारखादघुणस्य सारखादत्वादेव समर्थत्वाद्वज्रतुण्डत्वाच्च । छल्लीखादघुणसमस्य कर्मभेदं प्रति काष्ठखादसमानं तपः, अस्य हि त्वक्खादघुणसमानापेक्षया किञ्चिद्विशिष्टभोजित्वेन किञ्चित्साभिष्वङ्गत्वात् सारखादकाष्ठखादघुणसमानापेक्षया त्वसारभोजित्वेन निरभिष्वङ्गित्वाच्च सारखादघुणवन्नातितीव्रं त्वक्छल्लीखादघुणवन्नातिमन्दावि तपो भवति, काष्ठखादघुणसमानस्य च साधोः सारखादघुणसमानापेक्षयाऽसारभोजित्वेन निरभिष्वङ्गत्वात् त्वक्छल्लीखादघुणसमानापेक्षया सारतरभोजित्वेन साभिष्वङ्गत्वाच्च छल्लीखादघुणसमानं तपः प्रज्ञप्तम्, कर्मभेदं प्रति न सारखादकाष्ठखादघुणवदतिसमर्थमपि नापि त्वक्खादघुणवदतिमन्दम् । सारखादसमानस्य तु साभिष्वङ्गतया त्वक्खादसमानं कर्मसारभेदं प्रत्यसमर्थं तपः स्यात् त्वक्खादघुणस्य हि तस्यादेव सारभेदनं प्रत्यसमर्थत्वादिति ॥ ८८ ॥

जीवसाम्यान्नारकाश्रयेणाह—

**नैरयिको नरलोकमायातुमिच्छति न च शक्नोति, तीव्रवेदनाभिभूतत्वात्, निरयपालैः समाक्रम्यमाणत्वात्, अनिर्जीर्णनिरयवेदनीयत्वादवेदितनिरयायुष्कत्वाच्च ॥ ८९ ॥**

**नैरयिक इति,** अधुनोपपन्नो निर्गतमय शुभमस्मादिति निरयस्तत्र भवो नैरयिको नारक इत्यर्थः, स तस्मान्मानुषं क्षेत्रं शीघ्रमागन्तुमिच्छत्यतिप्रबलतयोत्पन्नदुःखस्यानुभवात्, अत एव च न समर्थो भवत्यागन्तुं तीव्रवेदनाभिभूतो हि नागन्तुं शक्तः । अम्बादिभिर्नरकपालैः पुनः पुनः समाक्रम्यमाणत्वादागन्तुमिच्छति तैरत्यन्ताक्रान्तत्वादागन्तुमशक्यत्वान्न शक्नोति चायातुम् । तथा निरययोग्यं यद्वेदनीयमसाताद्यशुभनामकर्मादिकमसातवेदनीयं वा तस्मिन्नक्षीणेऽवेदितेऽनिर्जीर्णे च मनुष्यलोकागमनेच्छा जायते, अथ तद्वेद्यकर्मनिगडनियन्त्रितत्वाच्च न चायातुं समर्थः । एवं निरयायुष्के कर्मण्यक्षीणेऽवेदितेऽनिर्जीर्णे चेति ॥ ८९ ॥

नारकत्वं ध्यानविशेषादिति ध्यानाश्रयेणाह—

**क्रन्दनशोचनतेपनपरिदेवनतालक्ष्यमार्त्तम् ॥ ९० ॥**

**क्रन्दनेति,** अन्तर्मुहूर्तमात्रमेकत्र वस्तुनि मनोऽवस्थानं छद्मस्थानां ध्यानम्, तच्चतुर्विधमार्त्तरौद्रधर्मशुक्लभेदात्, तत्र ऋते दुःखे तन्निमित्तं ध्यानमार्त्तम् । तच्चतुर्विधमनिष्टविषयसंयोगयुक्तस्य तद्वियोगाय चिन्तनमेकम्, धनधान्यादिमनोज्ञविषयसम्बद्धस्य तदविप्रयोगाय चिन्तनं द्वितीयम्, रोगयुक्तस्य तद्विप्रयोगाय चिन्तनं तृतीयम्, परिजुषितकामभोगसम्प्रयोगसम्प्रयुक्तस्य तदविप्रयोगाय चिन्तनं चतुर्थम् । द्वितीयं प्रियधनादिविषयं चतुर्थं तत्सम्पाद्यशब्दादिभोगविषयमिति तयोर्भेदः । शास्त्रान्तरे तु द्वितीय-

चतुर्थयोरेकत्वेन चतुर्थं निदानमित्युक्तम्। एवम्भूतमार्त्तध्यानं, क्रन्दनता महता शब्देन विरवणं, शोचनता दीनता, तेपनता अश्रुविमोचनम्, परिदेवनता पुनः पुनः क्लिष्टभाषणमित्येतैश्चतुर्भिर्लक्ष्यत इति ॥९०॥

रौद्रध्यानमाश्रित्याह—

## ओसन्नबहुज्ञानामरणान्तदोषलक्ष्य रौद्रम् ॥ ९१ ॥

ओसन्नेति, दोषशब्दस्य प्रत्येकमभिसम्बन्धः, सत्त्वानां वधबन्धनादिपीडाकरणशील पिशुनासभ्यासद्भूतादिवचनानुबन्धि तीव्रक्रोधलोभाकुलतया परद्रव्यहरणानुबन्धि विषयसाधनधनस्य सर्वोपायैः परिरक्षणानुबन्धि च प्रणिधानस्वरूपं रौद्रध्यानं हिंसानृतस्तेयसंरक्षणेषु बाहुल्येनानुपरतिलक्षणादोसन्नदोषात् सर्वेष्वपि हिंसादिप्रवृत्तिरूपाद्बहुदोषात् कुशास्त्रसंस्कारेणाधर्मस्वरूपेषु हिंसादिषु नरकादिकारणेषु धर्मबुद्ध्याऽभ्युदयार्थं या प्रवृत्तिलक्षणादज्ञानदोषादामरणान्तमसञ्जातानुतापस्य कालसौकरिकादेरिव हिंसादौ प्रवृत्तिलक्षणामरणान्तदोषाच्चाभिव्यज्यत इति ॥ ९१ ॥

अथ धर्मध्यानं स्वरूपलक्षणालम्बनानुप्रेक्षात्रयेणाह—

## आज्ञापायविपाकसंस्थानविचयस्वरूपमाज्ञानिसर्गसूत्रावगाढरुचिलक्ष्य वाचनाप्रतिप्रच्छनापरिवर्तनानुप्रेक्षालम्बनमेकानित्याशरणसंसारानुप्रेक्षं ध्यानं धर्म्यम् ॥ ९२ ॥

आज्ञेति, आ-अभिविधिना ज्ञायन्तेऽर्था यया साऽऽज्ञा प्रवचनं सा विचीयते निर्णीयते पर्यालोच्यते वा यस्मिंस्तदाज्ञाविचयं धर्मध्यानम्, अपाया रागादिजनिता प्राणिनामैहिकामुष्मिका अनर्थाः सा विचीयते यस्मिंस्तदपायविचयम्, विपाको ज्ञानावरणाद्युत्थानि कर्मफलं स विचीयते यस्मिंस्तद्विपाकविचयम्, संस्थानानि लोकद्वीपसमुद्रजीवादीनां तानि विचीयन्ते यस्मिंस्तत् संस्थानविचयमिति चत्वारि धर्मध्यानस्य स्वरूपाणि। सूत्रव्याख्याने निर्युक्त्यादौ श्रद्धानमाज्ञारुचि, अनुपदेशेन श्रद्धानं निसर्गरुचिः, आगमे आगमाद्वा श्रद्धा सूत्ररुचिः, द्वादशाङ्गस्य विस्तराधिगमेन श्रद्धानमवगाढरुचिरित्येतानि तल्लक्षणानि, शिष्याय निर्जरार्थं सूत्रदानादि वाचना शङ्किते सूत्रादौ तदपनोदनाय गुरोः प्रच्छनं प्रतिप्रच्छनम्, पूर्वाधीतस्यैव सूत्रादेरविस्मरणनिर्जरार्थमभ्यासः परिवर्त्तना, सूत्रार्थानुस्मरणमनुप्रेक्षेत्यालम्बनं तस्य। 'एकोऽहं न च मे कश्चिन्नाहमन्यस्य कस्यचित्। न तं पश्यामि यस्याहं नासौ भावीति यो मम'त्येवमात्मनोऽसहायस्य भावना एकानुप्रेक्षा, 'कायः सन्निहितापायः सम्पदः पदमापदाम्। समागमाः सापगमाः सर्वमुत्पादिभङ्गुर'मित्येवं पदार्थानां नित्यत्वस्य भावनाऽनित्यानुप्रेक्षा, 'जन्मजरामरणभयैरभिद्रुते व्याधिवेदनाग्रस्ते। जिनवरवचनादन्यत्र नास्ति शरणं क्वचिल्लोके' इत्यत्राणस्यात्मनो भावनाऽशरणानुप्रेक्षा, 'माता भूत्वा दुहिता भगिनी भार्या च भवति संसारे। व्रजति सुतः पितृतां भ्रातृतां पुनः शत्रुतां चैव' इति चतसृषु गतिषु सर्वावस्थासु संसरणलक्षणसंसारस्य भावना संसारानुप्रेक्षेति ध्यानानन्तरं पर्यालोचनानि ॥ ९२ ॥

अथ शुक्लध्यानं स्वरूपलक्षणालम्बनानुप्रेक्षणान्याश्रित्याह—

**सविचारपृथक्त्वाविचारैकत्ववितर्कानिवर्त्तिसूक्ष्मक्रियाप्रतिपातिसमुच्छिन्नक्रियस्वरूपमव्यथाऽसमोहविवेकव्युत्सर्गलक्ष्यं क्षान्तिमार्दवार्जवमुक्त्यालम्बनमनन्तवृत्तिविपरिणामाशुभापायानुप्रेक्ष शुक्लं ध्यानम् ॥ ९३ ॥**

**सविचारेति,** विचार —अर्थाद्व्यञ्जने व्यञ्जनादर्थे तथा मनःप्रभृतीनां योगानामन्यतरस्मादन्यतरस्मिन् विचरणम्, तेन युतं तथैकद्रव्याश्रितानामुत्पादादिपर्यायाणां पृथक्त्वेन भेदेन पूर्वगतश्रुतालम्बनो नाना नयानुसरणलक्षणो वितर्को यस्मिंस्तथाविधमेकं स्वरूपम् । अर्थव्यञ्जनयोरितरस्मादितरत्र मनःप्रभृतीनाञ्चान्यतरस्माद् यत्र सञ्चरणलक्षणविचारविधुरं तथोत्पादादिपर्यायाणामेकत्वेनाभेदेनान्यतमपर्यायालम्बनतया पूर्वगतश्रुताश्रयो व्यञ्जनरूपोऽर्थरूपो वा वितर्को यत्र तथाविधं द्वितीयम् । प्रवर्धमानतरपरिणामादनिवर्त्ति केवलिनो निर्वाणगमनकाले निरुद्धमनोवाग्योगस्यार्द्धनिरुद्धकाययोगस्य कायिकी उच्छ्वासादिका सूक्ष्मा क्रिया यस्मिंस्तादृशं तृतीयम् । अनुपरतिस्वभावं तथा शैलेशीकरणे निरुद्धयोगत्वाद्यस्मिन् कायिक्यादिका क्रिया क्षीणा तथा स्वरूपं चतुर्थम् । तस्य लक्षणानि देवादिकृतोपसर्गादिजनितचलनाभावः, अव्यथा, देवादिकृतमायाजनितस्य सूक्ष्मपदार्थविषयस्य च मोहाभावोऽसमोहः, देहादात्मन आत्मनो वा सर्वसंयोगानां बुद्ध्या पृथक्करणं विवेकः, निस्सङ्गतया देहोपाधित्यागो व्युत्सर्गः, याभिः शुक्लध्यानं समारोहति ता क्षान्त्यादय आलम्बनानि, भवसन्तानस्यानन्ततयाऽनुप्रेक्षणमनन्तवृत्तितानुप्रेक्षा, वस्तूनां नानाप्रकारेण परिणमनभावना विपरिणामानुप्रेक्षा, संसारस्याशुभत्वभावनाऽशुभानुप्रेक्षा, आश्रवाणामपायभावनाऽपायानुप्रेक्षेति तस्यानुप्रेक्षाः ॥ ९३ ॥

अथ मोहविशेषकषायाश्रयेणाह—

**कषाया आत्मपरोभयतदभावप्रतिष्ठिताः क्षेत्रवास्तुशरीरोपध्याश्रिता अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनशीला आभोगानाभोगोपशान्तानुपशान्ताश्च कर्मचयनफलाः ॥ ९४ ॥**

**कषाया इति,** क्रोधमानमायालोभरूपा इत्यर्थः, कषति हिनस्ति देहिन इति कषं कर्म तस्यायो लाभहेतुत्वात् कषायः, क्रोधमोहनीयोदयसम्पाद्यो जीवस्य परिणामविशेषः क्रोधः, क्रोधमोहनीयकर्मैव वा, एवं मानादयोऽपि, तत्र सामान्यतः कषायाश्चत्वारश्चतुर्विंशतितमे पदे यावद्वैमानिकानां भवन्ति । ते चतुःप्रतिष्ठिताः, यथाऽऽत्मापराधेनैहिकामुष्मिकापायदर्शनादात्मविषया आत्मप्रतिष्ठिताः, परेणाक्रोशादिनोदीरिताः परविषया वा परप्रतिष्ठिताः, आत्मपरविषया उभयप्रतिष्ठिताः, आक्रोशादिकारणनिरपेक्षाः केवलं क्रोधादिवेदनीयोदयाद् भवन्ति तेऽप्रतिष्ठिताः, अयं च चतुर्थभेदो जीवप्रतिष्ठितोऽप्यात्मादिविषयत्वेनाऽनुत्पन्नत्वादप्रतिष्ठित उक्तो न तु सर्वथाऽप्रतिष्ठितः । एकेन्द्रियविकलेन्द्रियाणां कोपस्यात्मप्रतिष्ठितत्वं पूर्वभवे तत्परिणामपरिणतमरणेनोत्पन्नानामिति । ते च नारकादीनां स्वं स्वमुत्पत्तिस्थानलक्षणं क्षेत्रं वास्तु–गृहं दुःसंस्थितं विरूपं वा शरीरं यद्यस्योपकरणं तदाश्रित्य भवन्ति, एकेन्द्रियाणां तु-

भवान्तरापेक्षया । एवमनन्त भवमनुबध्नन्ति–अविच्छिन्न कुर्वन्तीत्येवंशीला अनन्तानुबन्धिनः, सम्यग्दर्शनसहभाविक्षमादिस्वरूपोपशमादिचरणलवविबन्धिन , तेषां चारित्रमोहनीयत्वात् । न चोपशमादिभिरेव चारित्री, अल्पत्वात्, यथाऽमनस्को न संज्ञी किन्तु महता मूलगुणादिरूपेण चारित्रेण चारित्री, मन संज्ञया संज्ञिवत्, अत एव त्रिविध दर्शनमोहनीय पञ्चविंशतिविध चारित्रमोहनीयमिति, न विद्यते प्रत्याख्यानमणुव्रतादिरूप यस्मिन् सोऽप्रत्याख्यानो देशविरत्यावारकः, प्रत्याख्यान सर्वविरतिरूपमेव आवृणोतीति प्रत्याख्यानावरणम् । सज्वलयति दीपयति मनाक्सार्वविरतिमपि, इन्द्रियार्थसम्पाते वा सज्वलयति दीप्यत इति सज्वलनो यथाख्यातचारित्रावारक । आभोगो ज्ञान तेन निर्वर्त्तितो यज्जानन् कोपविपाकादि कुप्यति स आभोगनिर्वर्त्तित क्रोधादि , इतरस्तु यदजानन् कुप्यति सोऽनाभोगनिर्वर्त्तित , उपशान्तोऽनुदयावस्थ , तत्प्रतिपक्षोऽनुपशान्तः, एकेन्द्रियादीनामाभोगनिर्वर्त्तित संज्ञिपूर्वभवापेक्षया, अनाभोगनिर्वर्त्तितस्तु तद्भवापेक्षयापि, उपशान्तो नारकादीना विशिष्टोदयाभावात्, अनुपशान्तो निर्विचार एव । एभिः क्रोधादिभिश्चतुर्भिर्जीवः कर्मप्रकृतीना कालत्रयेऽपि चयन, उपचयन बन्धनमुदीरण वेदन देशनिर्जरणञ्च करोति, तत्र कषायपरिणतस्य कर्मपुद्गलोपादानमात्र चयनम्, चितस्याबाधाकाल मुक्त्वा ज्ञानावरणादितया निषेक उपचयनम्, तस्यैव निषिक्तस्य पुनरपि कषायपरिणतिविशेषान्निकाचन बन्धनम्, अनुदयप्राप्तस्य करणेनाकृष्योदये प्रक्षेपणमुदीरणम्, स्थितिक्षयादुदयप्राप्तस्य कर्मण उदीरणाकरणेनवोदयभावमुपनीतस्यानुभवन वेदनम् । कर्मणोऽकर्मत्वभवन निर्जरण तच देशत सर्वनिर्जरायाश्चतुर्विंशतिदण्डकेऽसम्भवात् ॥ ९४ ॥

पुरुषविशेषानधिकृत्यैव पुनराह—

## आपातासंवासभद्रकाः संवासानापातभद्रका आपातसंवासभद्रका अनापातासंवासभद्रका पुरुषा ॥ ९५ ॥

**आपातेति,** आपतनमापात प्रथममीलकस्तत्र भद्रको भद्रकारी, संवास चिर सहवासस्तत्र न भद्रको हिंसकत्वात् संसारकारणनियोजकत्वाद्वेति, सह संवसतामत्यन्तोपकारितया संवासभद्रकस्तथाऽनालापकठोरालापादिनाऽऽपातभद्रकश्चेति, एवमेवान्यौ द्वावपि भाव्यौ ॥ ९५ ॥

पुनरप्याह—

## आत्मपराश्रयेण वर्ज्यस्य दर्शनोदीरणोपशमना ॥ ९६ ॥

**आत्मेति,** वर्ज्य हिंसानृतादि पाप कर्म तदात्मनः सम्बन्धि कलहादौ पश्यति पश्चात्तापान्वितत्वात्न परस्य त प्रत्युदासीनत्वादित्येक स्थानम्, अन्यस्तु परस्य नात्मनः साभिमानत्वादिति द्वितीयम्, इतर उभयोः, निरनुशयत्वेन यथावद्वस्तुबोधात्, अपरस्तु नोभयोर्विमूढत्वात् । एव दृष्ट्वा चैक आत्मन सम्बन्ध्यवद्यमुदीरयति भणति यदुत मया कृतमेतदिति, उपशान्त वा पुन. प्रवर्त्तयति, एवमुपशमयति निवर्त्तयति पाप कर्म चेति ॥ ९६ ॥

संसारापेक्षया चतुःस्थानमाह—

**द्रव्यक्षेत्रकालभावलक्षणः संसारः, परिकर्मसूत्रपूर्वगतानुयोगरूपो दृष्टिवादः ॥ ९७ ॥**

**द्रव्येति,** इतश्चेतश्च परिभ्रमणं संसारः, तत्र संसारशब्दार्थस्सत्रानुपयुक्तः, जीवपुद्गलानां द्रव्याणां वा यथायोगं भ्रमणं द्रव्यसंसारः । तेषामेव क्षेत्रे चतुर्दशरज्ज्वात्मके यत्संसरणं स क्षेत्रसंसारः, यत्र वा क्षेत्रे संसारो व्याख्यायते तदेव क्षेत्रमभेदोपचारात् संसारो यथा रसवती गुणनिकेत्यादि । कालस्य दिवसपक्षमासर्त्वयनसंवत्सरादिलक्षणस्य संसरणं चक्रन्यायेन भ्रमणम्, पल्योपमादिकालविशेषविशेषितं वा यत्कस्यापि जीवस्य नरकादिषु स कालसंसारः, यस्मिन् वा काले पौरुष्यादिके संसारो व्याख्यायते स कालोऽपि संसार उच्यते अभेदात् । संसारशब्दाभिन्नस्तत्रोपयुक्तो जीवपुद्गलयोर्वा संसरणमात्रमुपसर्जनीकृतसम्बन्धिद्रव्यं भावानां चौदयिकादीनां वर्णादीनां वा संसरणपरिणामो भावसंसारः । अयञ्च द्रव्यादिसंसारोऽनेकनयैर्दृष्टिवादे विचार्यत इति दृष्टिवादचतुःस्थानमाह **परिकर्मेति,** दृष्टयो दर्शनानि नया उच्यन्तेऽभिधीयन्तेऽवतरन्ति यस्मिन्नसौ दृष्टिवादो द्वादशमङ्गम्, तत्र सूत्रादिग्रहणयोग्यतासम्पादनसमर्थं परिकर्म, तच्च सिद्धसेनिकादि, सूत्राणि ऋजुसूत्रादीनि द्वाविंशतिर्भवन्ति, इह सर्वद्रव्यपर्यायनयाद्यर्थसूचनात्सूत्राणि । समस्तश्रुतात् पूर्वं करणात् पूर्वाणि, तानि चोत्पादमग्रायणीयं वीर्यमस्तिनास्तिप्रवादं ज्ञानप्रवादं सत्यप्रवादमात्मप्रवादं कर्मप्रवादं पूर्वं प्रत्याख्यानं विद्यानुवादमवन्ध्यं प्राणायुःक्रियाविशालं पूर्वं बिन्दुसारश्चेति चतुर्दश, तेषु प्रविष्टं श्रुतं पूर्वगतं पूर्वाण्येव, योजनं योगः, अनुरूपोऽनुकूलो वा सूत्रस्य निजाभिधेयेन योग इत्यनुयोगः, स चैकतीर्थकराणां प्रथमसम्यक्त्वावाप्तिपूर्वभवादिगोचरो यः स मूलप्रथमानुयोगोऽभिधीयते । यत्तु कुलकरादिवक्तव्यतागोचरः स गण्डिकानुयोग इति ॥ ९७ ॥

पूर्वगते प्रायश्चित्ताभिधानात्तस्य चतुःस्थानमाह—

**ज्ञानदर्शनचारित्रव्यक्तकृत्यभेदात् प्रतिषेवणसंयोजनारोपणपरिकुञ्चनभेदाद्वा प्रायश्चित्तम् ॥ ९८ ॥**

**ज्ञानेति,** ज्ञानमेव पापं छिनत्ति प्रायः चित्तं वा शोधयतीति निरुक्त्या ज्ञानप्रायश्चित्तम्, एवमन्यत्रापि, जीवोऽत्र चित्तशब्देनोच्यते चित्तचित्तवतोरभेदात्, व्यक्तस्य भावतो गीतार्थस्य कृत्यं करणीयं व्यक्तकृत्यं प्रायश्चित्तं गीतार्थो हि गुरुलाघवपर्यालोचनेन यत्किञ्चित् करोति, तत्सर्वं पापविशोधकमेव भवति, अथवा ज्ञानाद्यतिचारविशुद्ध्यर्थं यान्यालोचनादीनि प्रायश्चित्तानि विशेषतोऽभिहितानि तानि तथा व्यपदिश्यन्ते, अथवा विदुषः कृत्य, विशेषेणावद्यायोऽस्थितेर विशेषानभिहितमपि वितीर्णमभयमुद्दाल यत्किञ्चिन्मध्यस्थगीतार्थेन कृत्यमनुष्ठानं तदिदत्तकृत्यं प्रायश्चित्तमेव, प्रकारान्तरेणाह **प्रतिषेवणेति,** प्रतिषिद्धस्यासेवनमकल्प्यसमाचरणं प्रतिषेवणम्, तच्च द्विधा परिणामभेदात् प्रतिषेवणीयभेदाद्वा, भावः प्रतिषेवणा स पुनः कुशलोऽकुशलो वा भवेत्, कुशलेन भवति कल्पः, अकुशलपरिणामाद्दर्पः । प्रतिषेवणीयभेदात्तु 'मूलगुणोत्तरगुणेषु द्विविधा प्रतिषेवणा समासेन । मूलगुणेषु पञ्चविधा पिण्ड-

विशोध्यादिका इतरा' ॥ तस्यां प्रायश्चित्तमालोचनादि । संयोजनमेकजातीयातिचारमीलनम्, यथा शय्यातरपिण्डो गृहीतः सोऽप्युदकार्द्रहस्तादिना सोऽप्यभ्याहृतः सोऽप्याधाकर्मिकस्तत्र यत् प्रायश्चित्त तत्संयोजनाप्रायश्चित्तम्, तथाऽऽरोपणमेकापराधप्रायश्चित्ते पुन पुनरासेवनेन विजातीयप्रायश्चित्ताध्यारोपणम्, यथा पञ्चरात्रिंदिवप्रायश्चित्तमापन्न पुनस्तत्सेवने दशरात्रिंदिव पुनः पञ्चदशरात्रिंदिवमेव यावत् षण्मासात् ततस्तस्याधिक तपो देय न भवति, अपि तु शेषतपांसि तत्रैवान्तर्भावनीयानि, इह तीर्थे षण्मासान्तत्वात्तपस इति । आरोपणया प्रायश्चित्तमारोपणाप्रायश्चित्तम् । परिकुञ्चनमपराधस्य द्रव्यक्षेत्रकालभावाना गोपायनमन्यथा सतामन्यथाभणन परिकुञ्चना परियञ्चना वा तस्याः प्रायश्चित्तमिति ॥ ९८ ॥

प्रायश्चित्तस्य कालापेक्षत्वात्काल निरूपयति—

**प्रमाणयथायुर्निर्वृत्तिमरणाद्धाकालभेद॰ काल॰ ॥ ९९ ॥**

**प्रमाणेति,** प्रमीयते परिच्छिद्यते येन वर्षशतपल्योपमादि तत्प्रमाण तदेव काल प्रमाणकालः, स चाद्धाविशेष एव दिवसादिलक्षणो मनुष्यक्षेत्रान्तर्वर्त्तीति, यथा—यत्प्रकारेण नरकादिभेदेन आयुः—कर्मविशेषो यथायु, तस्य रौद्रादिध्यानादिना निर्वृत्तिर्बन्धन तस्या सकाशात्तः कालो नारकादित्वेन स्थितिर्जीवाना स यथायुर्निर्वृत्तिकालः, अयमप्यद्धाकाल एवायुष्ककर्मानुभवविशिष्टः सर्वससारिजीवाना वर्त्तनादिरूप. । मृत्योः कालो मरणकालः, अयमद्धासमयविशेष एव मरणविशिष्टो मरणमेव वा काल मरणपर्यायत्वादिति, अद्धैव कालोऽद्धाकाल., कालशब्दो हि वर्णप्रमाणकालादिष्वपि वर्त्तते ततोऽद्धाशब्देन विशिष्यते, अयञ्च सूर्यक्रियाविशिष्टो मनुष्यक्षेत्रवर्त्ती समयादिरूपोऽवसेय इति ॥ ९९ ॥

अथ जीवाश्रयेणाह—

**भरतैरवतेषु मध्यमा द्वाविंशतिरर्हन्तश्चतुर्यामं धर्मं सर्वत॰ प्राणातिपातविरमणं मृषावादविरमणमदत्तादानविरमणं बहिर्द्धापरिग्रहविरमण प्रज्ञापयन्ति सर्वेषु महाविदेहेष्वर्हन्तोऽपि ॥ १०० ॥**

**भरतेति,** मध्यमा पूर्वपश्चिमवर्जाः, चत्वारो यमा एव यामा निवृत्तयो यस्मिन्स, बहिर्द्धा मैथुन परिग्रहविशेषः परिग्रहस्तयोर्द्वन्द्वैकत्वम्, अथवा बहिस्तात्परिग्रहविरमण धर्मोपकरणाद्बहिः परिग्राह्य वस्तु ततो निवृत्तिरित्यर्थः, अत्र पक्षे मैथुन परिग्रहेऽन्तर्भवति, न ह्यपरिगृहीता योषिद्भुज्यत इति प्रज्ञाप्येयस्य चतुर्विधत्वाच्चतुर्यामता धर्मस्य । इय चेह भावना, मध्यमतीर्थकराणा विदेहकानाञ्च चतुर्यामधर्मस्य पूर्वपश्चिमतीर्थकरयोश्च पञ्चयामधर्मस्य प्ररूपणा शिष्यापेक्षया परमार्थतस्तु पञ्चयामस्यैवोभयेषामप्यसौ, यत प्रथमपश्चिमतीर्थकरतीर्थसाधव ऋजुजडा वक्रजडाश्चेति, ततस्तादेव परिग्रहो वर्जनीय इत्युपदिष्टे मैथुनवर्जनमवबोद्धु पालयितुञ्च न क्षमा, मध्यमविदेहजतीर्थकरतीर्थसाधवस्तु ऋजुप्रज्ञत्वात्तद्बोद्धु वर्जयितुञ्च क्षमा इति ॥ १०० ॥

हिंसाविभ्योऽनुपरतोपरतानां दुर्गतिसुगती भवत इति पत्रेणाह—

**नैरयिकतिर्यग्योनिकमनुष्यदेवभेदा दुर्गतिः, सिद्धदेवमनुजसुकुलप्रत्यायातिभेदा सुगतिः ॥ १०१ ॥**

नैरयिकेति, स्पष्टं निन्दितमनुष्यापेक्षया मनुष्यदुर्गतिः, किल्बिषिकाद्यपेक्षया देवदुर्गतिः, देवकुलादौ गत्वा सुकुले इक्ष्वाकादौ प्रत्यायातिः प्रत्यागमनं सुकुलप्रत्यायातिः, इयञ्च तीर्थंकरादीनामेवेति मनुष्यसुगतेर्भोगभूमिजादिमनुष्यत्वरूपाया भिद्यते ॥ १०१ ॥

पुनर्जीवाश्रयेणाह—

**क्रोधमानमायालोभैर्मनोवाक्कायेन्द्रियैर्वा प्रतिसंलीना अप्रतिसंलीनाश्च ॥ १०२ ॥**

क्रोधेति, क्रोधादिकं वस्तु यस्तु प्रति सम्यग्लीना निरोधवन्तः प्रतिसंलीनाः, तत्र क्रोधं प्रत्युदयनिरोधेनोदयप्राप्तविफलीकरणेन च प्रतिसंलीनः क्रोधप्रतिसंलीनः। एवमग्रेऽपि, कुशलमनउदीरणेनाकुशलमनोनिरोधेन च मनः यस्य प्रतिसंलीनं स मनःप्रतिसंलीनः, शब्दादिषु मनोज्ञामनोज्ञेषु रागद्वेषपरिहारीन्द्रियप्रतिसंलीनः, एतद्विपर्ययोऽप्रतिसंलीनः ॥ १०२ ॥

असंलीनता प्रकारान्तरेण दर्शयति—

**दीनादीनताभ्यां परिणामरूपमनःसंकल्पैः पुरुषाश्चतुर्विधाः ॥ १०३ ॥**

दीनेति, दीनो दैन्यवान् क्षीणोर्जितवृत्तिः पूर्वं पश्चादपि दीन एव, अथवा बहिर्वृत्त्या दीनोऽन्तर्वृत्त्यापि दीन इत्येको भङ्गः दीनोऽदीनश्चेति द्वितीयः, अदीनो दीनश्चेति तृतीयः, उभयथाऽदीन इति चतुर्थः, परिणामापेक्षया बहिर्वृत्त्या म्लानवदनत्वादिगुणयुक्तशरीरेण दीनः सन् पुनर्दीनतया परिणतोऽन्तर्वृत्त्या दीनः सन्नदीनपरिणतः, अदीनः सन् दीनपरिणतः, अदीनः सन्नदीनपरिणतश्चेति एवं रूपाद्यपेक्षयापि दीनरूपः मलिनजीर्णवस्त्रादिनेपथ्यापेक्षया, दीनमनाः स्वभावत एवानुन्नतचेताः, दीनसंकल्पः उन्नतचित्तस्वाभाव्येऽपि कथञ्चिद्दीनविमर्शः एवं प्रज्ञादृष्टिशीलसमाचाराद्यपेक्षयापि भाव्यम् ॥ १०३ ॥

वाचःस्वरूपभणनाय विकथाकथाप्रकरणमाह—

**स्त्रीभक्तदेशराजकथा विकथाः, आक्षेपणीविक्षेपणीसंवेदनीनिर्वेदनीकथा धर्मकथा ॥ १०४ ॥**

स्त्रीति, संयमबाधकत्वेन विरुद्धा कथा वचनपद्धतिर्विकथा, स्त्रीणां स्त्रीषु वा कथा स्त्रीकथा, एवं भक्तस्य भोजनस्य देशस्य जनपदस्य राज्ञो नृपस्य कथेति। तत्र स्त्रीकथा जातिकुलरूपनेपथ्याश्रयेण, तत्र 'धिग्ब्राह्मणीर्धवाभावे या जीवन्ति मृता इव। धन्या मन्ये जने शूद्रीः पतिलक्षेऽप्यनिन्दिताः' इति ब्राह्मणीप्रभृतीनामन्यतमाया या प्रशंसा निन्दा वा सा जातिकथा। 'अहो चौलुक्यपुत्रीणां साहसं

जगतोऽधिकम्। पत्युर्मृत्यौ विशन्त्यग्नौ याः प्रेमरहिता अपी'त्युग्रादिकुलोत्पन्नानामन्यतमाया यत् प्रशंसादि सा कुलकथा। 'चन्द्रवक्त्रा सरोजाक्षी सद्गीः पीनघनस्तनी। किं लाटी नो मता साऽस्य देवानामपि दुर्लभे'त्यान्ध्रीप्रभृतीनामन्यतमाया रूपस्य यत्प्रशंसादि सा रूपकथा। 'धिग्नारीरौदीच्या बहुवसनाच्छादिताङ्गलतिकत्वात्। यद्यौवनं न यूनाञ्चक्षुर्मोदाय भवति सदे'ति तासामेवान्यतमायाः कच्छाबन्धादिनेपथ्यस्य यत्प्रशंसादि सा नेपथ्यकथेति। स्त्रीकथायाश्चैते दोषाः 'आत्मपरयोर्मोहोदीरणोड्डाहः सूत्रादिपरिहानिः। ब्रह्मचर्यस्यागुप्तिः प्रसङ्गदोषाश्च गमनादि' इति। आवापनिर्वापारम्भनिष्ठानकथाश्रयेण भक्तकथा भवति, शाकघृतादीन्येतावन्ति तस्यां रसवत्यामुपयुज्यन्त इत्येव रूपाऽऽवापकथा, एतावन्तस्तत्र पक्वापक्वान्नभेदा व्यञ्जनभेदा वेति निर्वापकथा, तित्तिरादीनामियता तत्रोपयोग इत्यारम्भकथा, एतावद्द्रविणं तत्रोपयुज्यत इति निष्ठानकथा, तत्र दोषाः 'आहारमन्तरेणापि गृद्ध्या जायते साङ्गारम्। अजितेन्द्रियतौदरिकवादस्त्वनुज्ञादोषश्चे'ति। देशविधिदेशविकल्पदेशच्छन्ददेशनेपथ्यकथाश्रया देशकथा, देशे मगधादौ विधिर्विरचना भोजनमणिभूमिकादीनां भुज्यते वा यदग्र प्रथमतयेति देशविधिः तत्कथा देशविधिकथा, एवमग्रेऽपि, विकल्पः सस्यनिष्पत्तिः, वप्रकूपादिदेवकुलभवनादिविशेषश्चेति, छन्दो गम्यागम्यविभागो यथा लाटदेशे मातुलभगिनी गम्या, अन्यत्रागम्येति, नेपथ्यं स्त्रीपुरुषाणां वेषः स्वाभाविको विभूषाप्रत्ययश्चेति, इह दोषाः 'रागद्वेषोत्पत्तिः स्वपक्षपरपक्षतश्चाधिकरणम्। बहुगुण एष इति देशः श्रुत्वा गमनं चान्येषामि'ति। अतियानकथा निर्याणकथा बलवाहनकथा कोशकोष्ठागारकथा च राजकथा राजादेर्नगरादौ प्रवेशकथाऽतियानकथा, यथा 'सितसिन्धुरस्कन्धगतः सितचामरः श्वेतछत्रच्छन्ननभाः। जननयनकिरणश्चैव एष प्रविशति पुरे राजे'ति। निर्गमकथा निर्याणकथा, यथा 'वाद्यमानातुच्छमन्दनन्दिशब्दं मिलत्सामन्तम्। सङ्क्षुब्धसैन्यमुत्कूचिह्नं नगरान्नृपो निर्याती' इति। बलं हस्त्यादि, वाहनं वेगसरादि तत्कथा यथा 'हेषद्धयं गर्जद्गजं घनघनायमानरथलक्षम्। कस्यान्यस्यापि सैन्यं निर्नाशितशत्रुसैन्यं भोः' इति, भाण्डागारं कोशः, धान्यागारं कोष्ठागारं तत्कथा यथा 'पुरुषपरम्पराप्राप्तेन भृतविश्वम्भरेण कोशेन। निर्जितवैश्रवणेन तेन समः को नृपोऽन्य' इति। तत्रैते दोषाः 'चारिकचौराभिमरा हतमारितशङ्का कर्तुकामा वा। भुक्ताभुक्तयोरवधावनं कुर्यादाऽऽशंसाप्रयोगमि'ति। अथ धर्मकथा प्राह आक्षेपणीति, आक्षिप्यते मोहात्तत्त्वं प्रत्याकृष्यते श्रोताऽनयेत्याक्षेपणी, विक्षिप्यते सन्मार्गात् कुमार्गे कुमार्गाद्वा सन्मार्गे श्रोताऽनयेति विक्षेपणी धर्मकथाधिकारात्तत्रोत्तरपक्ष एव प्राह्य, संवेगयति संवेगं करोति संवेज्यते संवेगं ग्राह्यते वा श्रोताऽनयेति संवेदनी संवेजनी वा, निर्विद्यते संसारादेर्निर्विण्णः क्रियतेऽनयेति निर्वेदनीकथा। आचारव्यवहारप्रज्ञप्तिदृष्टिवादाश्रयेणाद्या कथा भवति, आचारो लोचास्नानादि., तत्प्रकाशनेनाक्षेपणी, व्यवहारः कथञ्चिदापन्नदोषव्यपोहाय प्रायश्चित्तलक्षणं, प्रज्ञप्तिः संशयापन्नस्य श्रोतुर्मधुरवचनैः प्रज्ञापनम्, दृष्टिवादः श्रोत्रपेक्षया नयानुसारेण सूक्ष्मजीवादिभावकथनम्, आचारादयो ग्रन्था वा। विक्षेपणीकथा च स्वसिद्धान्तगुणानुदीपयित्वा ततः परसमयदोषकथनम्, तथा परसमयकथनपूर्वकं स्वसमयगुणव्यवस्थापनम्, एवं परसमयेषु घुणाक्षरन्यायेन यो यावान् जिनागमतत्त्ववादसदृशतया सम्यग्वादस्तं कथयित्वा तेष्वेव यो जिनप्रणीततत्त्वविरुद्धत्वान्मिथ्यावादस्तस्य दोषदर्शनपूर्वकं वमनम्, परसम-

येष्वेव मिथ्यावाद कथयित्वा सम्यग्वादस्थापनमिति । इहपरलोकस्वपरशरीराश्रयेण संवेदनी, तत्रेह-लोको मनुष्यजन्म, सर्वमिद मानुषत्वमसारमध्रुव कदलीस्तम्भसमानमित्यादिरूपतया तत्स्वरूपकथनेन संवेगोत्पादनम्, देवा अपीर्ष्याविषादभयवियोगादिदुःखैरभिभूताः किं पुनस्तिर्यगादय इति देवादिभव-स्वरूपकथनरूपा परलोकसंवेदनी, यदेतदस्मदीय शरीर तदशुच्यशुचिकारणजातमशुचिद्वारविनिर्गतमिति न प्रतिबन्धस्थानमित्यादिकथनरूपाऽऽत्मशरीरसंवेदनी कथा । एव परशरीरसंवेदन्यपि भाव्या। इहलोके दुश्चीर्णानि कर्माणीहलोके दुःखफलविपाकयुतानि भवन्ति, कानिचित् परलोके दुःखानु-भवयुतानि च, परलोके दुश्चीर्णानि चेहलोके दुःखफलविपाकसंयुक्तानि, कानिचिच्च परलोक इति व्यावर्णन निर्वेदनी कथा एव सुचीर्णकर्माश्रयेणापि चतुर्भङ्गो वाच्यः ॥ १०४ ॥

वाग्विशेषमभिधाय कायविशेषमाह—

**शरीरस्य कृशदृढत्वाभ्यां ज्ञानदर्शनम् ॥ १०५ ॥**

**शरीरस्येति,** केचित्पूर्वं पश्चादपि कृशा, अन्ये पूर्वं कृशाः पश्चाद्दृढाः, अपरे पूर्वं दृढाः पश्चात् कृशाः, इतरे तु पूर्वं पश्चादपि दृढा । भावेन कृशो हीनसत्त्वादित्वात्, पुनः कृशः शरीरादिभिरिति चतुर्भङ्गः । तथा कृशशरीरस्य विचित्रतपसा भावितस्य शुभपरिणामसम्भवेन तदावरणक्षयोपशमादि-भावात्, ज्ञानदर्शन–ज्ञानञ्च दर्शनञ्च, ज्ञानेन सह वा दर्शन छाद्मस्थिक कैवलिक वा तत्समुत्पद्यते न दृढशरीरस्य, तस्य सुपचितत्वेन बहुमोहतया तथाविधशुभपरिणामाभावेन क्षयोपशमाद्यभावादित्येक, तथाऽमन्दसंहननस्याल्पमोहस्य दृढशरीरस्यैव ज्ञानदर्शनमुत्पद्यते, स्वस्थशरीरतया मनःस्वास्थ्येन शुभ-परिणामभावत क्षयोपशमादिभावात्, न कृशशरीरस्य, अस्वास्थ्यादिति द्वितीय., तथा कृशस्य दृढस्य वा तदुत्पद्यते विशिष्टसंहननस्याल्पमोहस्योभयथापि शुभपरिणामभावात् कृशत्वदृढत्वे नापेक्षत इति तृतीयः । कृशशरीरस्य दृढशरीरस्य च न तदुत्पद्यत इति चतुर्थं, तथाविधपरिणामाभावात् ॥ १०५ ॥

ज्ञानदर्शनव्याघातमाह—

**स्त्र्यादिकथावादिनो विवेकव्युत्सर्गाभ्यां न सम्यगात्मानं भावयितुः पूर्वरात्रापररात्रकालसमये न धर्मजागरिकया जागृतस्य प्रासुकस्यैषणीय-स्योञ्छस्य सामुदानिकस्य सम्यङ् न गवेषयितुर्निर्ग्रन्थस्यातिशयवज्ज्ञानं न भवति ॥ १०६ ॥**

**स्त्र्यादीति,** आदिना भक्तदेशराजग्रहणम्, विवेकोऽशुद्धादित्याग, व्युत्सर्ग—कायव्युत्सर्गः, पूर्वरात्रः रात्रेः पूर्वो भागः, अपररात्रः रात्रेरपरो भागः, तावेव कालः, स एव समयोऽवसरः, तस्मिन् कुटुम्बजागरिकान्यवच्छेदेन धर्मप्रधाना जागरिका—निद्राक्षयेण बोधो धर्मजागरिका भावप्रत्यु-पेक्षेत्यर्थः, तया जागृतः—जागरकस्तस्य, प्रासुको निर्जीवः, एषणीयः कल्प्य, उद्गमादिदोषरहितत्वात्, उञ्छः भक्तपानादिः, अल्पाल्पतया गृह्यमाणत्वात्, समुदाने भिक्षणे याञ्चाया भवः सामुदानिकः,

इत्येवप्रकारे -निर्ग्रन्थस्येत्युपलक्षण, तेन निर्ग्रन्थस्य निर्ग्रन्थ्या वेत्यर्थः, अतिशयवज्ज्ञान—केवलमित्यर्थः, मत्यादितोऽविशयवत्त्वात् । एवमेतद्विपर्ययेण तदुत्पत्तिर्भाव्या ॥ १०६ ॥

निर्ग्रन्थानामकृत्यनिषेधायाह—

आपाढाश्विनकार्त्तिकचैत्रप्रतिपद् प्रथमपश्चिमसंध्यामध्याह्नार्धरात्रयो न स्वाध्याययोग्याः ॥ १०७ ॥

आपाढेति, एता महाप्रतिपदः, महोत्सवानन्तरवृत्तित्वेनोत्सवानुवृत्त्या शेषप्रतिपद्धर्मविलक्षणत्वात्, अत एवापाढस्य पौर्णमास्या अनन्तरा प्रतिपदापाढप्रतिपदेवमन्यत्रापि, इह च यत्र विषये यतो दिवसान्महामहाः प्रवर्त्तन्ते तत्र तद्दिवसान्महसमाप्तिदिनं यावत् स्वाध्यायो नन्दादिसूत्रविषयो वाचनादिर्न विधीयते, अनुप्रेक्षा तु न निषिध्यते, तच पौर्णमास्येव, प्रतिपदस्तु क्षणानुवृत्तिसम्भवेन वर्ज्यन्ते, तथा प्रथमा संध्या अनुदिते सूर्ये, पश्चिमा चास्तसमये, अकालस्वाध्यायेऽमी दोषाः—'श्रुतज्ञानेऽभक्तिर्लोकविरुद्धता प्रमत्तछलना च । विद्यासाधनवैगुण्यधर्मता इति मा कुरु' इति ॥ १०७ ॥

पुरुषविशेषानेवाह—

आत्मपरान्तकरा आत्मपरतमा आत्मपरदमाश्च पुरुषाः ॥ १०८ ॥

आत्मेति, आत्मनो भवस्यान्तं कुर्वन्तीत्यात्मान्तकरा न परस्य भवान्तकरा धर्मदेशनानासेवकाः प्रत्येकबुद्धादिरित्येको भङ्गः, परस्य भवान्तं कुर्वन्ति मार्गप्रवर्त्तनेन, नात्मान्तकरा अचरमशरीरा आचार्यादयः, स्वपरात्मान्तकरास्तीर्थकरादयः, न स्वपरात्मान्तकरा दुष्पमाचार्यादय । यद्वाऽऽत्मनोऽन्त मरण कुर्वन्तीत्यात्मान्तकराः, अत्र प्रथमः आत्मवधक , द्वितीयः परवधकः, तृतीय उभयहन्ता, चतुर्थस्त्वयवधकः । एवमात्मान तमयति खेदयतीत्यात्मतमः, आचार्यादिः, आत्मनि तमोऽज्ञानं क्रोधो वा यस्य स आत्मतमाः, आत्मान दमयति शमवन्तं करोति शिक्षयति वेत्यात्मदम , आचार्योऽश्वदमकादिर्वा परश्चात्र शिष्योऽश्वादिर्वा ॥ १०८ ॥

दमश्च गर्हागर्हातः स्यादिति गर्हामाह—

उपसम्पद्ये विचिकित्सामि यत्किञ्चन मिथ्या मे एवमपि प्रज्ञप्तेति गर्हा ॥ १०९ ॥

उपसम्पद्य इति, गुरुसाक्षिकाऽऽत्मनो निन्दा गर्हा, तत्रोपसम्पद्ये गुरु स्वदोषनिवेदनार्थमाश्रयामि, अभ्युपगच्छामि वोचित प्रायश्चित्तमित्येवप्रकारः परिणाम एका गर्हा । [illegible] तथाविधपरिणामस्य गर्हाहेतुत्वेन कारणे कार्योपचारात्, गर्हासमानफलत्वाच । [illegible] चिकित्सामि गर्हणीयान् दोषान् प्रतिकरोमि निराकरोमीत्येष विकल्पात्मिकाऽन्या [illegible] । [illegible] चित तन्मिथ्या—विपरीत दुष्टु मे—मम, इत्येव वासनागर्भवचनरूपाऽपरा [illegible] गर्हायाः । एवमपि प्रज्ञप्ता—अनेन स्वदोषगर्हणप्रकारेणापि [illegible] गर्हा, एवविधप्रतिपत्तेर्गर्हाकारणत्वादिति ॥ १०९ ॥

वातहरः कोऽपि पित्तहरः कोऽपि कफहरः कोऽपि मारकः कोऽपि बुद्धिकरः कोऽपि व्यामोहकरः, एव कर्मप्रकृतिः काचिज्ज्ञानं काचिद्दर्शनमावृणोति काचित्सुखदुःखादिवेदनमुत्पादयति, तथा तस्यैव मोदकस्य यथाऽविनाशभावेन कालनियमरूपा स्थितिरेव कर्मणोऽपि तद्भावेन नियतकालावस्थानं स्थितिबन्धः, यथा मोदकस्य स्निग्धमधुरादिरेकगुणद्विगुणादिभावेन रसो भवत्येव कर्मणोऽपि देशसर्वघातिशुभाशुभतीव्रमन्दादिरनुभावबन्धः, तस्यैव मोदकस्य यथा नागरादिद्रव्याणां परिमाणवत्त्वमेव कर्मणोऽपि पुद्गलानां प्रतिनियतप्रमाणता प्रदेशबन्ध इति । कर्मणो बद्धत्वोदीरितत्वादिना परिणमनहेतुर्जीवस्य शक्तिविशेष उपक्रमो योऽन्यत्र करणमिति रूढो बन्धादीनामारम्भो वोपक्रमः । तत्र कर्मपुद्गलानां जीवप्रदेशानाञ्च परस्परं सम्बन्धनं बन्धनं तस्योपक्रमः, इदञ्च सूत्रमात्रनद्धलोहशलाकासम्बन्धोपमम् । असङ्कलितावस्थस्य वा कर्मणो बद्धावस्थीकरणं तदेवोपक्रमो बन्धनोपक्रमः, वस्तुपरिकर्मवस्तुविनाशरूपस्याप्युपक्रमत्वात् । एवमप्राप्तकालफलानां कर्मणामुदयप्रवेशनमुदीरणा, उदयोदीरणानिधत्तनिकाचनाकरणानामयोग्यत्वेन कर्मणोऽवस्थापनमुपशमना कर्मणां त्रिविधे प्रकारे सत्त्वोदयक्षयक्षयोपशमोद्वर्त्तनापवर्त्तनादिभिः परिणमनं गिरिसरिदुपलन्यायेन द्रव्यक्षेत्रादिभिर्वा करणविशेषेण वाऽवस्थान्तरापादनं विपरिणामना, इय बन्धनादिषु तदन्येष्वप्युदयादिष्वप्यस्तीति सामान्यरूपत्वादिह भेदेनोक्ता । बन्धनोपक्रमश्चतुर्धा प्रकृत्यादिभिः, तत्र प्रकृतिबन्धनोपक्रमो जीवपरिणामो योगरूपः, तस्य प्रकृतिबन्धहेतुत्वादेव प्रदेशबन्धनोपक्रमोऽपि, स्थितिबन्धनोपक्रमोऽनुभागबन्धनोपक्रमश्च परिणाम एव कषायरूपः, तयोः कषायहेतुकत्वात् । एवमुदीरणोपक्रमणाविपरिणामना अपि चतुर्विधा प्रकृत्यादिभिः, मूलोत्तरप्रकृतीनां दलिकं वीर्यविशेषेणाकृष्योदये यद्दीयते सा प्रकृत्युदीरणा, वीर्यादेव च प्राप्तोदयया स्थित्या सहाप्राप्तोदया या स्थितिरनुभूयते सा स्थित्युदीरणा, तथैव प्राप्तोदयेन रसेन सहाप्राप्तोदयो रसो यो वेद्यते साऽनुभागोदीरणा, तथा प्राप्तोदयैर्नियतपरिणामकर्मप्रदेशैः सहाप्राप्तोदयानां नियतपरिणामानां कर्मप्रदेशानां यद्वेदनं सा प्रदेशोदीरणा, इहापि कषाययोगरूपः परिणाम उपक्रमार्थः । प्रकृत्युपशमनोपक्रमादयश्चत्वारोऽपि सामान्योपशमनोपक्रमानुसारेण प्रकृतिविपरिणामनोपक्रमादयोऽपि सामान्यविपरिणामनोपक्रमलक्षणानुसारेण चावगन्तव्याः, उपक्रमस्तु प्रकृत्यादित्वेन पुद्गलानां परिणमनसमर्थं जीववीर्यमिति । अल्पं स्तोकं बहु प्रभूतं तद्भावोऽल्पबहुत्वम्, प्रकृतिविषयमल्पबहुत्वं बन्धापेक्षया, यथा सर्वस्तोकप्रकृतिबन्धक उपशान्तमोहादिः, एकविधबन्धकत्वात्, बहुतरबन्धक उपशमकादिसूक्ष्मसम्परायः षड्विधबन्धकत्वात् बहुतरबन्धकः सप्तविधबन्धकस्ततोऽष्टविधबन्धक इति । स्थितिविषयमल्पबहुत्वं यथा संयतस्य जघन्यः स्थितिबन्धः सर्वस्तोकः, एकेन्द्रियबादरपर्याप्तकस्य जघन्यः स्थितिबन्धोऽसङ्ख्यातगुण इत्यादि । अनुभागं प्रत्यल्पबहुत्वं यथा अनन्तगुणवृद्धिस्थानानि सर्वस्तोकानि, असंख्येयगुणवृद्धिस्थानान्यसंख्येयगुणानि यावदनन्तभागवृद्धिस्थानान्यसंख्येयगुणानीत्यादि, प्रदेशाल्पबहुत्वं यथाऽष्टविधबन्धकस्याऽऽयुर्भागः स्तोको नामगोत्रयोस्तुल्यो विशेषाधिको ज्ञानदर्शनावरणान्तरायाणां तुल्यो विशेषाधिको मोहस्य विशेषाधिको वेदनीयस्य विशेषाधिक इत्यादि । जीवो यां प्रकृतिं बध्नाति तदनुभावेन प्रकृत्यन्तरस्य दलिकं वीर्यविशेषेण यत्परिणमति स सङ्क्रमः, तत्र प्रकृतिसङ्क्रमः सामान्यलक्षणावगम्य एव, मूलोत्तरप्रकृतीनां स्थितेर्यदुत्कर्षणमपकर्षणं वा प्रकृत्यन्तरस्थितौ

वा नयनं स स्थितिसंक्रमः । अनुभावसंक्रमोऽप्येवमेव । यत्कर्मद्रव्यमन्यप्रकृतिस्वभावेन परिणम्यते स प्रदेशसंक्रमः । उद्वर्त्तनापवर्त्तनावर्जितानां शेषकरणायोग्यत्वेन कर्मणोऽवस्थापनं निधत्तम्, कर्मणः सर्वकरणायोग्यत्वेनावस्थापनं निकाचितम् अथवा पूर्वबद्धस्य कर्मणस्तप्तसमीलितलोहशलाकासम्बन्धसमानं निधत्तं, तप्तमिलितघनकुट्टितलोहशलाकासम्बन्धसमानं निकाचितम्, उभयत्रापि प्रकृत्यादिविशेषः सामान्यलक्षणानुसारेण नेय इति ॥ १११ ॥

सर्वमिदं पूर्वोदितं जिनोक्तत्वात्सत्यमिति तन्निरूपयति—

**नामस्थापनाद्रव्यभावभेदं सत्यम्, उग्रघोरतपोरसपरित्यागजिह्वेन्द्रियसंलीनता आजीविकानां तपांसि मनोवाक्कायोपकरणभेदाः संयमाः एव त्यागाकिंचनते ॥ ११२ ॥**

**नामेति,** नामस्थापनासत्ये प्रसिद्धे द्रव्यसत्यमनुपयुक्तस्य भावसत्यन्तु स्वपरानुरोधेनोपयुक्तस्येति । आजीविकानां गोशालकशिष्याणामुग्रतपः अष्टमादि, घोरं आत्मनिरपेक्षम् । घृतादिरसपरित्यागः, मनोज्ञामनोज्ञेष्वाहारेषु रागद्वेषपरिहारो जिह्वेन्द्रियसंलीनता । आर्हतानान्तु द्वादशधा । मनोवाक्कायानामकुशलत्वेन निरोधाः, कुशलत्वेन तूदीरणानि संयमाः, उपकरणसंयमो महामूल्यवस्त्रादिपरिहारः, पुस्तकवस्त्रतृणचर्मपञ्चकपरिहारो वा । वस्त्रपञ्चकं द्विधा, अप्रत्युपेक्षितदुष्प्रत्युपेक्षितभेदात्, अजैडकगोमहिषीमृगाणामजिनं चर्मपञ्चकम् । मनःप्रभृतीनां त्यागः प्रतीत एव, मनःप्रभृतिभिरशनादेः साधुभ्यो दानं वा त्यागः । उपकरणेन पात्रादिना भक्तादेस्तस्य वा त्याग उपकरणत्यागः । न विद्यते किञ्चन द्रव्यजातमस्येत्यकिञ्चनस्तद्भावोऽकिञ्चनता निष्परिग्रहतेत्यर्थः ॥ ११२ ॥

अथ भावचातुर्विध्यमाह—

**कर्दमखञ्जनवालुकाशैलोदकसमो भावः ॥ ११३ ॥**

कर्दमेति, यत्र प्रविष्टः पादादिर्मोक्तुं शक्यते कष्टेन वा शक्यते स कर्दमः, दीपादिखञ्जनतुल्यः पादादिलेपकारी कर्दमविशेष एव खञ्जनं, वालुकाप्रतीता, सा तु लग्नापि जलशोषे पादादेरल्पेनैव प्रयत्नेनापैतीत्यल्पलेपकारिणी, शैलास्तु पाषाणाः श्लक्ष्णरूपास्ते पादादेः स्पर्शनेनैव किञ्चिदुःखमुत्पादयन्ति न तु तथाविधं लेपमुपजनयन्ति कर्दमादिप्रधानान्युदकानि कर्दमोदकादीनि, तत्समो भावो जीवस्य रागादिपरिणामः, तस्य कर्दमोदकादिसाम्यं तत्स्वरूपानुसारेण कर्मलेपमङ्गीकृत्य मन्तव्यम् तच्छ्रावयुतो जीवो मृत्वा क्रमेण नैरयिकादिषूत्पद्यते ॥ ११३ ॥

तद्वतः पुरुषान् निरूपयति—

**रुतरूपाभ्यां प्रीत्यप्रीतिभ्यां पुरुषाणां चतुर्भङ्गः ॥ ११४ ॥**

**रुतेति,** रुतं मनोज्ञशब्दः रूपमपि तथा, तत्र यथा कश्चित् पक्षी मनोज्ञशब्देन सम्पन्नो न च रूपेण मनोज्ञेन, कोकिलवत्, कश्चिद्रूपसम्पन्नो न रुतसम्पन्नः प्राकृतशुकवत्, उभयसम्पन्नो मयूरवत्, अनुभयसम्पन्नः काकवत्तथा पुरुषोऽपि यथायोगं मनोज्ञशब्दः प्रशस्तरूपश्च प्रियवादित्वसन्नेपथ्यत्वाभ्यां

साधुर्वा सिद्धसिद्धान्तप्रसिद्धशुद्धधर्मदेशनादिस्वाध्यायप्रबन्धनात् लोचविरलवालोत्तमाङ्गवातपस्तनुतनुत्वमलमलिनदेहताऽल्पोपकरणवादिलक्षणसुविहितसाधुरूपधारी पा योज्य । एव कश्चित् प्रीतिं करोमीति परिणतः प्रीतिमेव करोति स्थिरपरिणामत्वादुचितप्रतिपत्तिनिपुणत्वात् सौभाग्यवत्त्वाद्वा । अन्यस्तु प्रीतिकरणे परिणतोऽप्रीतिं करोत्युक्तवैपरीत्यात् । अपरोऽप्रीतौ परिणतः प्रीतिमेव करोति सञ्जातपूर्वभावनिवृत्तत्वात् परस्य चाऽप्रीतिहेतुतोऽपि प्रीत्युत्पत्तिस्वभावत्वात् । कश्चिच्चाप्रीतिपरिणतोऽप्रीतिमेव करोति । अथवा कश्चिदात्मनो भोजनाच्छादनादिभिरानन्दमुत्पादयति न परस्य, आत्मार्थप्रधानत्वात्, अन्य' परस्य परार्थप्रधानत्वान्नात्मनः, अपर उभयस्याप्युभयार्थप्रधानत्वात्, इतरो नोभयस्यापि, उभयार्थशून्यत्वादिति ॥ १४ ॥

पुनरप्याह—

**शीलव्रतगुणव्रतविरमणप्रत्याख्यानपोषधोपवासप्रतिपत्तु· सामायिकदेशावकाशिकानुपालयितुश्चतुष्पव्यां सम्यक् परिपूर्णं पोषधमनुपालयितु· कृतसलेखनाभक्तपानप्रत्याख्यानपादपोपगतस्य कालमनवकांक्षमाणस्य च श्रमणोपासकस्याऽऽश्वासाश्चत्वार' ॥ १५ ॥**

**शीलेति,** श्रमणोपासक साधूपासक श्रावकस्तस्याऽऽश्वासाः सावद्यव्यापारलक्षणभारविमोचनेन विश्रामाश्चित्तस्याश्वासस्थानीद मे परलोकभीतस्य त्राणमित्येव रूपाणि, स हि जिनागमसङ्गमावदातबुद्धितयाऽऽरम्भपरिग्रहौ दु खपरम्परानारिससारकान्तारपारणभूततया परित्यज्याविलाकलयन् करणभरवशतया तयोः प्रवर्त्तमानो महान्त खेदसन्ताप भयश्चोद्वहति भावयति च 'हृदये जिनानामाज्ञा चरित्र ममेदृशमपुण्यस्य । एवमालप्यालमाश्चर्यं दूर विसवदति ॥ इदमस्माक ज्ञान इदमस्माक मनुष्यमाहात्म्यम् । यत्किल लब्धविवेका अपि विचेष्टामो बालबाला इवे'ति । यद्वा शीलानि-समाधानविशेषा ब्रह्मचर्यविशेषा वा, व्रतानि स्थूलप्राणातिपातविरमणादीनि, गुणव्रते-दिग्व्रतोपभोगपरिभोगव्रतलक्षणे विरमणान्यनर्थदण्डविरतिप्रकारा रागादिविरतयो वा, प्रत्याख्यानानि-नमस्कारसहितादीनि, पोषधः पर्वदिनमष्टम्यादि तत्रोपवसनमभक्तार्थ , एता योऽभ्युपगच्छति तदा तस्यैक आश्वास । सामायिक सावद्ययोगपरिवर्जननिरवद्ययोगप्रतिसेवनलक्षण यत्र व्यवस्थित श्राद्धः श्रमणकल्पो भवति, तथा देशे दिग्व्रतगृहीतस्य दिक् परिमाणस्य विभागेऽवकाशोऽवस्थानमवतारो विषयो यस्य तद्देशावकाश तदेव देशावकाशिक दिग्व्रतगृहीतस्य दिक्परिमाणस्य प्रतिदिन सक्षेपकरण सर्वव्रतसक्षेपकरण वा योऽनुपालयति प्रतिपत्त्यनन्तरमखण्डभावेनासेवते तस्यैक आश्वासः । चतुष्पर्वी चतुर्दश्यष्टम्यमावास्यापूर्णिमारूपा तस्या परिपूर्णमहोरात्र यावदाहारशरीरसत्कारत्यागब्रह्मचर्याव्यापारलक्षणभेदोपेत पोषधमासेवते तस्यापर आश्वास , सलेखना तपोविशेषः, सा चापश्चिममारणान्तिकी सलेखना कृता येन, तथा भक्तपानयो [illegible] त येन, तथा पादपोपगमनमनशनविशेष प्रतिपन्नस्य काल [illegible] इत्यर्थ ॥ १५ ॥

पुनरप्याह—

**उदितोदित उदितास्तमितोस्तमितोदितोस्तमितास्तमितश्च ॥ १६ ॥**

**उदितेति,** उदितश्चासौ उदितश्च, उन्नतकुलबलसमृद्धिनिरवद्यकर्मभिरभ्युदयवान् परमसुखसन्दोहोदयेनोदितश्चोदितोदितः, यथा भरत, तथैवोदितो भास्कर इवास्तमितश्च सर्वसमृद्धिभ्रष्टत्वादुर्गतिगतत्वाच्चेत्युदितास्तमितो यथा ब्रह्मदत्तचक्रवर्त्ती, स हि पूर्वमुदित उन्नतकुलोत्पन्नत्वादिना स्वभुजोपार्जितसाम्राज्यत्वेन च, पश्चादस्तमितोऽतथाविधकारणकुपितब्राह्मणप्रयुक्तपशुपालधनुर्गोलिकाप्रक्षेपणोपायप्रस्फोटिताक्षिगोलकतया मरणानन्तराप्रतिष्ठानमहानरकमहावेदनाप्राप्ततया चेति । तथाऽस्तमितो हीनकुलोत्पत्तिदुर्भगत्वदुर्गतत्वादिना, उदितश्च समृद्धिकीर्त्तिसुगतिलाभादिनेत्यस्तमितोदितो यथा हरिकेशबलाभिधानोऽनगार, स हि ज मा तरोपात्तनीचैर्गोत्रकर्मवशावाप्तहरिकेशाभिधानचाण्डालकुलतया दुर्भगतया दरिद्रतया च पूर्वमस्तमित आदित्य इवानभ्युदयवत्वादस्तमित इति, पश्चात्तु प्रतिपन्नप्रव्रज्यो निष्प्रकम्पचरणगुणावर्जितदेवकृतसान्निध्यतया प्राप्तप्रसिद्धितया सुगतिगततया चोदित इति । अस्तमितो दुष्कुलतया दुष्कर्मकारितया च कीर्त्तिसमृद्धिलक्षणतेजोवर्जितत्वात् पुनरस्तमितो दुर्गतिगमनादित्यस्तमितास्तमित, यथा कालाभिधान सौकरिक, स हि सूकरैर्मृगया करोति दुष्कुलोत्पन्नः प्रतिदिन महिषपञ्चशतीव्यापादक इति पूर्वमस्तमित, पश्चादपि मृत्वा सप्तमनरकपृथिवीं गत इत्यस्तमित एवेति ॥ १६ ॥

पुरुषाश्रयेणैवाह—

**जातिकुलबलरूपश्रुतशीलचारित्रेषु द्विकयोगाच्चतुर्भङ्ग ॥ १७ ॥**

**जातीति,** केचिज्जातिसम्पन्ना न कुलसम्पन्ना, अपरे जातिसम्पन्ना कुलसम्पन्नाश्च, अन्ये न जातिसम्पन्नाः कुलसम्पन्नाश्च, इतरे न जातिसम्पन्ना न वा कुलसम्पन्नाः, एव जातिबलयोगेन जातिरूपयोगेन जातिश्रुतयोगेन जातिशीलयोगेन जातिचारित्रयोगेन कुलबलयोगेन कुलरूपयोगेन कुलश्रुतयोगेन कुलशीलयोगेन कुलचारित्रयोगेनेत्येवरूपतया पुरुषाश्चतुर्भङ्गपातिनो विज्ञेयाः ॥ १७ ॥

पुन पुरुषाश्रयेणाह—

**आत्मपराभ्या वैयावृत्त्येतत्कर्तृत्वप्रतीच्छाभ्यां च ॥ १८ ॥**

**आत्मेति,** कश्चित्पुरुष आत्मवैयावृत्त्यमेव करोति न परस्य, अलसो विसम्भोगिको वा, परस्यैव वैयावृत्त्यकर स्वार्थनिरपेक्ष, स्वपरवैयावृत्त्यकर स्थविरकल्पिक कोऽप्युभयनिवृत्तोऽनशनविशेषप्रतिपन्नकारि । वैयावृत्त्य करोत्येवैको नेच्छति निःस्पृहत्वात्, अन्यः प्रतीच्छत्येव आचार्यत्वग्लानत्वादिना, अपर करोति प्रतीच्छति च स्थविरविशेष, उभयनिवृत्तोऽन्यो जिनकल्पिकादिः ॥१८॥

तथा—

**गणस्यार्थसङ्ग्रहशोभाशोधिकर्तृत्वमानकर्तृत्वाभ्याञ्च ॥ १९ ॥**

**गणस्येति,** सामान्येन कश्चिदर्थकार्येषु हिताहितप्राप्तिपरिहारादीन् राजादीना विज्ञापनादी करोति, मन्त्री नैमित्तिको वा, स चार्थकरो न मानकर, कथमहमनर्थितः कथयिष्यामीत्यवलेपव-

र्जितः, एवमितरे त्रय । गणस्य साधुसमुदायस्यार्थान् प्रयोजनान्याहारादिभि स गणस्यार्थकरो न च मानकरः, अभ्यर्थनानपेक्षत्वात्, एवमन्ये त्रयो भङ्गा । गणस्याहारोपधिशयनादिकैर्ज्ञानादिना च सङ्ग्रहं करोति सङ्ग्रहकर न मानकर्त्ता न मानयति, एवमन्येऽपि । गणस्य शोभाकर्त्ता, अनवद्यसाधुसामाचारीप्रवर्त्तनेन वादिधर्मकथिनैमित्तिकविद्यासिद्धत्वादिना वा, नो मानकर्त्ता, अभ्यर्थनानपेक्षितया महाभावेन वा, एवमन्येऽपि । गणस्य यथायोग प्रायश्चित्तादिना शोधे शुद्धे कर्त्ता, अथवा शङ्किते भक्तादौ सति गृहिकुले गत्वाऽनभ्यर्थितो यो भक्तशुद्धिं करोति स प्रथम , यस्तु मानाश्च गच्छति स द्वितीय , यस्त्वभ्यर्थितो गच्छति स तृतीय , यस्तु नाभ्यर्थनापेक्षी नापि तत्र गन्ता स चतुर्थ इति ॥ १९ ॥

तथा—

## रूपधर्मयोर्धर्ममर्यादयोर्हानाहानाभ्याञ्च ॥ २० ॥

रूपेति, रूप साधुनेपथ्य तत्कारणवशात् कश्चित्त्यजति न धर्मं चारित्रलक्षण बोटिकसम्यक्षितमुनिवत्, अन्यस्तु धर्मं न रूपम्, निह्नववत्, उभयमपि कश्चित् उत्प्रव्रजितवत्, नोभय कश्चित् सुसाधुवत् । धर्ममर्यादयोरिति, धर्मं त्यजत्येको जिनाज्ञारूप न मर्यादा स्वगच्छकृताम्, इह कैश्चिदाचार्यैः तीर्थंकरानुपदेशेन मर्यादा कृता यथा—नास्माभिर्महाकल्पाद्यविज्ञयश्रुतमन्यगणसत्काय देयमिति, तत्र यश्च योऽन्यगणसत्काय न तद्दाति स धर्मं त्यजति न मर्यादाम्, जिनाज्ञाननुपालनात्, तीर्थंकरोपदेशो ह्येवम्—सर्वेभ्यो योग्येभ्य श्रुत दातव्यमिति प्रथम. । यस्तु ददाति स द्वितीयः, यस्त्वयोग्येभ्यस्तद्ददाति स तृतीयः । यस्तु श्रुताव्यवच्छेदार्थं तदव्यवच्छेदसमर्थस्य परशिष्यस्य स्वशिष्यवद्गन्धं कृत्वा श्रुत ददाति तेन न धर्मो नापि मर्यादा त्यक्तेति स चतुर्थ ॥ २० ॥

तथा—

## मातापितृभ्रातृमित्रसपत्नीसमा आदर्शपताकास्थाणुखरकण्टकसमाश्च श्रमणोपासका. ॥ २१ ॥

मातापित्रिति, श्रमणोपासको मातापितृसमान , उपचार विना साधुष्वेकान्तेनैव वत्सलत्वात्, भ्रातृसमोऽल्पतरप्रेमत्वात् तत्त्वविचारादौ निष्ठुरवचनादप्रीते , तथाविधप्रयोजने त्वत्यन्तवत्सलत्वाच, मित्रसमः सोपचारवचनादिना प्रीतिक्षते , तत्क्षतौ चापदप्युपेक्षकत्वात्, सपत्नीसम , समानः पतिरस्याः सा सपत्नी यथा सा सपत्न्या ईर्ष्यावशादपराधान् वीक्षते, एव यः साधुषु दूषणदर्शनतत्परोऽनुपकारी च स सपत्नीसमोऽभिधीयते । एवमादर्शसमो यो हि साधुभिः प्रज्ञाप्यमानानुत्सर्गोपवादादीनागमिकान् भावान् यथावत् प्रतिपद्यते सन्निहितार्थानादर्शकवत् स आदर्शसमानः, यस्य बोध. पताकेवानवस्थितो विचित्रदेशनालक्षणवायुना सर्वतोऽपह्रियमाणत्वात्स पताकासम । यस्य बोधोऽनमनस्वभावो गीतार्थदेशनया कुतोऽपि न चाल्यते कदाग्रहान् सोऽप्रज्ञापनीय स्थाणुसमान , यस्तु प्रज्ञाप्यमानो न केवल स्वाग्रहान्न चलत्यपि तु प्रज्ञापक दुर्वचनकण्टकैर्विध्यति स खरकण्टकसमानः, खराः निष्ठुराः कण्टका यस्मिन्सत् खरकण्टक बब्बुलादिशाखा, सा च विलग्ना चीवर न॰

केवलमविनाशितं मुखमपि तु वह्निमोचक पुरुषादिक इखाविपु कण्टकैर्विध्यति, श्रमणस्य भगवतो महावीरस्य श्रमणोपासकानां सौधर्मकल्पेऽरुणाभे विमाने चत्वारि पल्योपमानि स्थितिरिति ॥ २१ ॥

अन्धकाराश्रयत आह—

**अर्हद्धर्मपूर्वगतजाततेजोव्युच्छेदेऽन्धकारः ॥ २२ ॥**

**अर्हदिति,** अर्हद्भिर्व्यवच्छिद्यमानैर्लोके तमिस्रं भवति यथ द्रव्यतः, तस्योत्पातरूपत्वात्, छत्रभङ्गादौ रजउद्घातादिवत्, वह्निव्यवच्छेदेऽन्धकारमपि द्रव्यत एव, तथास्वभावात्, दीपादेरभावाद्वा, भावतोऽपि वा एकान्तदुष्षमायामागमादेरभावात् । अन्यत्स्पष्टम् । एवं लोकोद्योतोऽप्यर्हद्भिर्जायमानैरर्हद्भिः प्रव्रज्यमानैरर्हतां ज्ञानोत्पादपरिनिर्वाणमहिमासु चेति । एवं देवान्धकारदेवोद्योतदेवसन्निपातदेवोत्कलिकादेवकलकलास्तथा देवेन्द्राणां मनुष्यलोके आगमनञ्च भाव्यम् ॥ २२ ॥

अर्हतां प्रवचने दुःस्थितस्य साधोर्दुःखशय्या भवतीति तदाश्रयेण चतुःस्थानमाचष्टे—

**प्रवचने शङ्काकांक्षाविचिकित्सादिभिरश्रद्दधानस्य साधोः परलाभाभिलाषुकस्य दिव्यमानुषकामभोगाकांक्षिणोऽगारवासगात्रसंमर्दनाद्यपेक्षिणश्च दुःखशय्या ॥ २३ ॥**

**प्रवचन इति,** दुःखदा शय्या दुःखशय्या, साश्च द्रव्यतोऽननुकूलखट्वादिरूपाः, भावतस्तु दुःस्थचित्ततया दुःश्रमणतास्वभावा प्रवचनाश्रद्धानपरलाभप्रार्थनकामाशंसनस्नानादिप्रार्थनरूपाः, तत्र यः कश्चिद्गुरुकर्मा शासने भगवदुक्ते शङ्कितः एकस्मिन्नपि भावे संशयितः काङ्क्षायुतो मतान्तरमपि साध्विति मन्वा फलं प्रति शङ्कावान् भगवच्छासनोक्तमिदं सर्वमेवमन्यथा वेति बुद्धिद्वैधं समाश्रितो नैतदेवमिति विपर्यस्तो वा सन् प्रवचनं सामान्येनैवमिदमिति न श्रद्धत्ते न वाऽभिलाषातिरेकेणाऽऽसेवनाभिमुखो भवति तथाविधस्य तस्य मनोऽसमञ्जसं याति ततो धर्मभ्रष्टः संसारं वाऽऽपद्यत इत्यसौ श्रामण्यशय्याया दुःखमास्त इत्येका दुःखशय्या, यश्च साधुर्न स्वकीयेन लाभेन तुष्यति परस्य चाशनादेर्लाभस्याशां करोति स नूनं मे दास्यतीति लभते चेल्लुब्ध एव, ततोऽधिकतरमपि वाञ्छति तदेवंभूतस्य मनसोऽनवस्थानाद्धर्मभ्रंशः संसारं वा प्राप्नोतीति द्वितीया । यस्तु प्रव्रजितो यदाऽहमगारवासमावसामि तदा शरीरस्य मर्दनं तैलाभ्यङ्गमङ्गधावनं च लभे न मां कश्चिन्निषेधति यदा तु प्रव्रजितोऽस्मि तदा नाहमेतानि लभ इत्येवं यदा गात्रसमर्दनाद्यभिलषति तदा तस्य मनसोऽस्थिरत्वाच्चतुर्थी । एतद्वैपरीत्येन सुखशय्या भाव्या ॥ २३ ॥

पुनः पुरुषविशेषानाह—

**आत्मम्भरिपरम्भरयो दुर्गतसुगता दुर्गतसुव्रता दुर्गतदुष्प्रत्यानन्दा दुर्गतदुर्गतिगामिनश्च ॥ २४ ॥**

**आत्मम्भरीति,** आत्मानं बिभर्ति पुष्णातीत्यात्मम्भरिः, तत्र कश्चित् आत्मम्भरिर्न परम्भरिः यथा स्वार्थकारक एव, ■ ■ जिनकल्पिकोऽन्यः परम्भरिर्नात्मम्भरिर्यथा परार्थकारक एव, स च

भगवानर्हन् तस्य विवक्षया सकलस्वार्थसमाप्तेः परप्रयोजनप्रापणप्रवणप्राणितत्वात्, अपर आत्मम्भरि परम्भरिश्च यथा स्वपरार्थकारी, स च स्थविरकल्पिको विहितानुष्ठानं साधकत्वात्, विधिवत्सिद्धान्तदेशनाच्च परार्थसम्पादकत्वात्। इतरस्तु नात्मम्भरिर्नापि परम्भरिर्यथोभयानुपकारी मुग्धमतिः कश्चिद्यथाच्छन्दो वेति। उभयानुपकारी दुर्गत एव स्यादिति तदाश्रयेणाह **दुर्गतसुगता** इति, पूर्वं दुर्गतो दरिद्रो धनविहीनत्वात् ज्ञानादिरत्नविहीनत्वाद्वा, पश्चादपि दुर्गतस्तथैवेत्येकः। दुर्गतः सुगतो द्वितीयः सुगतो दुर्गतस्तृतीयः, उभयथा सुगतश्चेति चतुर्थः। अत्र सुगतो द्रव्यतो धनी, भावतो ज्ञानादिगुणवान्। दुर्गतः कोऽपि व्रती स्यादित्यत आह **दुर्गतसुव्रता** इति, दरिद्रः सन् दुर्गतः, असम्यग्व्रतः, दुर्गतः सन् सुव्रतो निरतिचारनियमः, इतरौ प्रतीतौ। दुर्गतदुष्प्रत्यानन्दाः, कश्चिद्दुर्गतस्तथैव दुष्प्रत्यानन्दश्च, उपकृतेन कृतमुपकारं यो नाभिमन्यत इत्येकः, अपरो दुर्गतस्सन् सुप्रत्यानन्दो य उपकारं मन्यते, इतरौ सूह्यौ। **दुर्गतदुर्गतिगामिन** इति, तथैव दुर्गतः सन् दुर्गतिं गमिष्यतीत्येकः, दुर्गतः सन् सुगतिं गमिष्यतीत्यपरः, अन्यावप्येवम् ॥ २४ ॥

तथा—

## परिज्ञातकर्मसंज्ञाः परिज्ञातकर्मगृहावासा इहपरार्थाश्च ॥ २५ ॥

**परिज्ञातेति,** कश्चित् परिज्ञातकर्मा न परिज्ञातसंज्ञः, ज्ञपरिज्ञया स्वरूपतोऽवगतानि प्रत्याख्यानपरिज्ञया च परिहृतानि कर्माणि कृष्यादीनि येन स, न च परिज्ञाता आहारादिसंज्ञा येन स इत्येको भङ्गः, यथाऽभावितात्मा प्रव्रजितः श्रावको वा। अपरः परिज्ञातसंज्ञो न परिज्ञातकर्मा यथा श्रावकः, सद्भावनाभावितत्वात्, कृष्यादितोऽनिवृत्तेश्च, तृतीयः साधुः चतुर्थोऽसंयत इति। परिज्ञातकर्मा सावद्यकरणकारणानुमतिनिवृत्तत्वात् कृष्यादिनिवृत्तत्वाद्वा, न परिज्ञातगृहावासोऽप्रव्रजित इत्येकः, अन्यस्तु परिज्ञातगृहावासो न त्यक्तारम्भो दुष्प्रव्रजित इति द्वितीयः, तृतीयः साधुश्चतुर्थोऽसंयतः, एवं त्यक्तसंज्ञो विशिष्टगुणस्थानकत्वादत्यक्तगृहावासो गृहस्थत्वादित्येकः, अन्यस्तु परिहृतगृहावासो यतित्वात्, अभावितत्वान्न परिहृतसंज्ञः, अन्य उभयथा, अन्यो नोभयथेति भाव्यम्। इह जन्मन्यर्थः प्रयोजनं भोगसुखादि यस्य स इहार्थो न तु परार्थ इत्येको भङ्गः, यथा भोगपुरुषः, परत्र यस्यार्थो नेह स इत्यपरो यथा साधुः, इह परत्र च यस्यार्थः स सुश्रावक इत्यन्यः, उभयप्रतिषेधवान् कालसौकरिकादिरित्यपरः ॥ २५ ॥

तथा—

## एकेन द्वाभ्यां हानिवृद्धितश्च ॥ २६ ॥

**एकेनेति,** चतुर्धा पुरुषा इति शेषः, कश्चिदेकेन श्रुतेनैव वर्द्धते, एकेन च सम्यग्दर्शनेन हीयत इत्येकः, एकेन श्रुतेनैवान्यो वर्द्धते द्वाभ्यां सम्यग्दर्शनविनयाभ्यां हीयत इति द्वितीयः, द्वाभ्यां श्रुतानुष्ठानाभ्यामन्यो वर्द्धते, एकेन सम्यग्दर्शनेन हीयत इति तृतीयः, द्वाभ्यां श्रुतानुष्ठानाभ्यामन्यो वर्द्धते द्वाभ्यां सम्यग्दर्शनविनयाभ्यां हीयत इति चतुर्थः, अथवा ज्ञानेन वर्द्धते रागेण हीयत इत्येकः, अन्यो ज्ञानेन वर्द्धते रागद्वेषाभ्यां हीयत इति द्वितीयः, अन्यो ज्ञानसंयमाभ्यां वर्द्धते रागेण हीयत

इति तृतीय, अन्यो ज्ञानसंयमाभ्यां वर्द्धते रागद्वेषाभ्यां हीयत इति चतुर्थ । अथवा क्रोधेन वर्द्धते मायया हीयते, क्रोधेन वर्द्धते मायालोभाभ्यां हीयते, क्रोधमानाभ्यां वर्द्धते मायया हीयते क्रोधमानाभ्यां वर्द्धते मायालोभाभ्यां हीयत इति ॥ २६ ॥

संयतपुरुषाश्रयेणाह—

**शय्यावस्त्रपात्रस्थानप्रतिमाः प्रत्येकं चतस्रः ॥ २७ ॥**

**शय्येति,** शय्यते यस्यां सा शय्या संस्तारक, तस्याः प्रतिमा अभिग्रहा, यत्र उद्दिष्ट फलकादीनामन्यतमद्ग्रहीष्यामि नेतरदित्येका, यदेव प्रागुद्दिष्टं तदेव यदि द्रक्ष्यामि तदा तदेव ग्रहीष्यामि नान्यदित्यन्या, तदपि यदि तस्यैव शय्यातरस्य गृहे भवति ततो ग्रहीष्यामि नान्यत आनीय तत्र शयिष्य इति तृतीया, तदपि फलकादिकं यदि यथासंस्तृतमेवाऽऽस्ते ततो ग्रहीष्यामि नान्यथेति चतुर्थी, आसु च प्रतिमास्वाद्ययो प्रतिमयोर्गच्छनिर्गतानामग्रह उत्तरयोरन्यतरस्यामभिग्रहः, गच्छान्तर्गतानां तु चतस्रोऽपि कल्पन्त इति । वस्त्रग्रहणविषये प्रतिज्ञा वस्त्रप्रतिमा कार्पासिकादीनामेवमुद्दिष्टं वस्त्रं याचिष्य इति प्रथमा, प्रेक्षितं वस्त्रं याचिष्ये नापरमिति द्वितीया, अन्तरपरिभोगेनोत्तरीयपरिभोगेन वा शय्यातरेण परिभुक्तप्रायं वस्त्रं ग्रहीष्यामीति तृतीया, तदेवोज्झितधर्मकं ग्रहीष्यामीति चतुर्थी । अथ पात्रप्रतिमा उद्दिष्टदारुपात्रादि याचिष्य इति प्रथमा, प्रेक्षितमिति द्वितीया, दातुः स्वाङ्गिक परिभुक्तप्रायं द्वित्रेषु वा पात्रेषु पर्यायेण परिभुज्यमानं पात्रं याचिष्य इति तृतीया, उज्झितधर्मिकमिति चतुर्थी । कायोत्सर्गाद्यर्थं स्थानप्रतिमा, तत्र कस्यचिद्भिक्षोरेवम्भूतोऽभिग्रहो भवति यथाऽहमचित्तं स्थानमुपाश्रयिष्यामि तत्र चाकुञ्चनप्रसारणादिकां क्रियां करिष्ये तथा किञ्चिदचित्तं कुड्यादिकमवलम्बयिष्ये तथा तत्रैव स्तोकपादविहरणं समाश्रयिष्यामीति प्रथमा प्रतिमा, द्वितीया त्वाकुञ्चनप्रसारणादिक्रियामवलम्बनञ्च करिष्ये न पादविहरणमिति, तृतीया त्वाकुञ्चनप्रसारणमेव नावलम्बनपादविहरणे इति, चतुर्थी च यत्र त्रयमपि न विधत्त इति ॥ २७ ॥

पूर्वं शरीरचेष्टानिरोधस्योक्तत्वात्तत्प्रसङ्गेनाह—

**वैक्रियाहारकतैजसकार्मणशरीराणि जीवस्पृष्टानि, औदारिकवैक्रियाहारकतैजसानि कार्मणमिश्राणि, धर्माधर्मजीवपुद्गलास्तिकायैर्लोको व्याप्तो बादरपृथिव्यम्बुवायुवनस्पतिभिरुत्पद्यमानैश्च ॥ २८ ॥**

**वैक्रियेति,** स्पष्टम्, जीवेन व्याप्तानि जीवस्पृष्टानि, जीवेन हि स्पृष्टान्येव वैक्रियादीनि भवन्ति, यथौदारिकं जीवमुक्तमपि भवति मृतावस्थायां न तु तथैतानीति । कार्मणेन शरीरेण मिश्राणि न केवलानि यथौदारिकादीनि त्रीणि वैक्रियादिभिरमिश्राण्यपि भवन्ति नैवं कार्मणेनेति । व्याप्त इति, प्रतिप्रदेशं व्याप्त इत्यर्थः । **बादरेति,** सूक्ष्माणां पञ्चानामपि सर्वलोकात् सर्वलोके उत्पादात्, बादरतैजसानान्तु सर्वलोकादुद्धृत्य मनुष्यक्षेत्रे ऋजुगत्या वक्रगत्या चोत्पद्यमानानां द्वयोरूर्ध्वकपाटयोरेव बादरतैजसत्वव्यपदेशस्येष्टत्वाच्च तैजसं विहाय बादरेत्युक्तम् । बादरा हि पृथिव्यम्बुवायुवनस्पतयः सर्वतो

लोकाद्बहिः पृथिव्यादिपनोदध्यादिघनवातवलयादिघनोदध्यादिषु यथाक्रममुत्पादस्थानेषूत्पत्तये गच्छन्तो यदा अपर्याप्तावस्थायामविग्रहत्वात्सकलं लोकं प्रत्येकं स्पृशन्ति पर्याप्तास्त्वेते बादरतेजस्कायिकास्त्रसाश्च लोकासंख्येयभागमेव स्पृशन्तीति ॥ २८ ॥

पृथिवीप्रसङ्गादाह—

**पृथिव्यप्तेजोवनस्पतिकायशरीरं न सुखदृश्यम्, शब्दगन्धरसस्पर्शाः इन्द्रियस्पृष्टा वेद्या जीवपुद्गला गत्यभावनिरुपग्रहत्वरूक्षत्वलोकानुभावैरलोकगमनासमर्थाः ॥ २९ ॥**

**पृथिवीति,** बादरवायुना सूक्ष्माणां पञ्चानामपि पृथिव्यादिकायानामेकमनेकं वा शरीरमदृश्यमिति बोध्यम्, वनस्पतय इह साधारणा एव ग्राह्याः प्रत्येकशरीरस्यैकस्यापि दृश्यत्वात् । न सुखदृश्यमिति, न चक्षुषा प्रत्यक्षदृश्यमनुमानादिभिस्तु दृश्यमपीत्यर्थः । शब्देति, श्रोत्रादीन्द्रियसम्बद्धा एवे आत्मना ज्ञायन्ते नयनमनोवर्जानां श्रोत्रादीनां प्राप्यपरिच्छेदस्वभावत्वात्, उक्तञ्च 'स्पृष्टं शृणोति शब्दं रूपं पुनः पश्यत्यस्पृष्टं तु । गन्धं रसञ्च स्पर्शञ्च बद्धस्पृष्टं व्यागृणीयादि'ति । **जीवपुद्गला इति,** अन्येषां गत्यभावात् । एते चालोके गमनाय न शक्नुवन्ति गत्यभावादिहेतुभिः, तत्र गत्यभावो लोकान्तात् परतस्तेषां गतिलक्षणस्वभावाभावः, यथाऽधो दीपशिखायाः । निरुपग्रहत्वं धर्मास्तिकायाभावेन तज्जनितगत्युपष्टम्भाभावः, गन्त्र्यादिरहितपङ्गुवत् । रूक्षत्व—सिकतामुष्टिवत्, लोकान्तेषु हि पुद्गला रूक्षतया तथा परिणमन्ति यथा परतो गमनाय नालम्, कर्मपुद्गलानाञ्च तथात्वे जीवा अपि, सिद्धास्तु निरुपग्रहतयैवेति । लोकानुभावो लोकमर्यादा, विषयक्षेत्रादन्यत्र मार्तण्डमण्डलवत् ॥ २९ ॥

अथ दृष्टान्ततः प्रायः उक्तार्थानां प्रतीतेस्तद्भेदानाह—

**आहरणतद्देशतद्दोषोपन्यासभेदं ज्ञातम् ॥ ३० ॥**

**आहरणेति,** ज्ञायतेऽस्मिन् सति दार्ष्टान्तिकोऽर्थ इत्यधिकरणे क्तप्रत्यये ज्ञातं दृष्टान्तः स द्विविधः साधर्म्यवैधर्म्यभेदात्, साधनसद्भावे साध्यस्यावश्यम्भावो यथाऽग्निरत्र धूमाद्यथा महानसमिति प्रथमः, साध्याभावे साधनस्यावश्यमभावो यथा तत्रैवाग्न्यभावे धूमो न भवति यथा जलाशय इति द्वितीयः । यद्वा आख्यानकरूपं ज्ञातं तच्च चरितकल्पितभेदाद्द्विधा, तत्र चरितं यथा निदानं दुःखाय ब्रह्मदत्तस्येव, कल्पितं यथा प्रमादवतामनित्यं यौवनादीति देशनीयम्, यथा पाण्डुपत्रेण किसलयानां देशितं तथाहि 'जह तुब्भे तह अम्हे तुब्भेऽवि य होहिहा जहा अम्हे । अप्पाहेइ पडंतं पंडुयपत्तं किसलयाणं ॥' इति, अथवा उपमानमात्रं ज्ञातम्, सुकुमारः करः किसलयमिवेत्यादिवत् । यद्वा उपपत्तिमात्रं ज्ञातं ज्ञातहेतुत्वात्, कस्मादनया नीयन्ते ? यस्मान्मुधा न लभ्यन्त इत्यादिरिति, एवमनेकधा साध्यप्रसाधनस्वरूपं ज्ञातमुपाधिभेदाच्चतुर्विधमाह **आहरणेति,** यत्र सपुटितं एव दार्ष्टान्तिकोऽर्थ उपनीयते यथा पापं दुःखाय ब्रह्मदत्तस्येवेति तदाहरणम् । यत्र दृष्टान्तार्धदर्शनेन दार्ष्टान्तिकार्थस्योपनयनं क्रियते तत् तद्देशोदाहरणम्, यथा चन्द्र इव मुखमस्या इति, अत्र हि चन्द्रे सौम्यत्व-

लक्षणेनैव देशेन गुरस्योपनयनम्, नानिष्टेन नयनानासावर्जितत्वफलङ्करत्वादिनेति। यत्साध्यविकल-त्वादिदोषदुष्टं तत् तद्दोषोदाहरणम्, यथा नित्यः शब्दोऽमूर्त्तत्वात् घटवदिति, अत्र साध्यसाधनवैकल्य नाम दृष्टान्तदोष । यथासभ्यादिवचनरूप तदपि तद्दोष, यथा सर्वथाऽहमसत्य परिहरामि गुरुम-खकर्त्तनवदिति । यद्वा साध्यसिद्धिं कुर्वदपि दोषान्तरमुपनयति तदपि तदेव, यथा सत्य धर्मसि-च्छन्ति लौकिकमुनयोऽपि 'वर कूपशताद्वापी वर वापीशतात् क्रतु । वर क्रतुशतात् पुत्रः सत्य पुत्र-शताद्वर'मिति वचनवक्तृनारदवदिति, अनेन च श्रोतुः पुत्रक्रतुप्रभृतिषु प्रायः ससारकारणेषु धर्म-प्रतीतिराहितेति । यथा वा बुद्धिमता केनापि कृतमिद जगत् सन्निवेशविशेषवत्त्वात्, घटवत्, स चेश्वर इति, अनेन हि स बुद्धिमान कुम्भकारतुल्योऽनीश्वर सिद्ध्यतीति ईश्वरश्च स विवक्षित इति । वादिना अभिमतार्थसाधनाय कृते वस्तूपन्यासे तद्विघटनाय यः प्रतिवादिना विरुद्धार्थोपनयः क्रियते, पर्यनुयोगोपन्यासे वा य उत्तरोपनय स उपन्यासोपनय, उत्तररूपमुपपत्तिमात्रमपि ज्ञातमेव, ज्ञात-हेतुत्वादिति । यथाऽकर्त्ता आत्मा अमूर्त्तत्वादाकाशवदित्युक्ते अन्य आह–आकाशवदेवाभोक्त्रपि प्राप्तमनिष्टञ्चैवदिति । यथा वा मासभक्षणमदुष्ट प्राण्यङ्गत्वादोदनादिवत्, अत्राहान्य –ओदनादिवदेव स्वपुत्रादिमासभक्षणमप्यदुष्टमिति । यथा वा स्वचसङ्घा वचापात्रादिसङ्ग्रह न कुर्वन्ति ऋषभादिवत्, अत्राह कुण्डिकाद्यपि ते न गृह्णन्ति तद्वदेवेति, तथा कस्मात् कर्म कुरुषे यस्मात्धनार्थीति । इह प्रथम ज्ञात सर्वसाधर्म्यरूप द्वितीय देशसाधर्म्यरूप तृतीय सदोष चतुर्थञ्च प्रतिवाद्युत्तररूपमित्येषा स्वरूप-विभाग ॥ ३० ॥

लोकाश्रयेणाह—

**नरकनैरयिकपापकर्माशुभपुद्गला अधोलोकेऽन्धकारकारीण., चन्द्र-सूर्यमणिज्योतींषि तिर्यग्लोक उद्द्योतकारीणि, देवदेवीविमानाभरणान्यूर्ध्वलोके ॥ ३१ ॥**

**नरकेति,** नरका नारकावासा, नैरयिका –नारका एते कृष्णस्वरूपत्वादन्धकारं कुर्वन्ति, पापानि कर्माणि–ज्ञानावरणादीनि मिथ्यात्वाज्ञानलक्षणभावान्धकारकारित्वादन्धकार कुर्वन्तीत्युच्यन्ते, अथवा अन्धकारस्वरूपेऽधोलोके प्राणिनामुत्पादकत्वेन पापाना कर्मणामन्धकारकर्त्तृत्वम् । अशुभपु-द्गलाः–तमिस्रभावेन परिणता । शेष स्पष्टम् ॥ ३१ ॥

भोगसुखाश्रयेण प्रसर्पकानाह—

**अनुत्पन्नभोगोत्पादनाय पूर्वोत्पन्नभोगाविप्रयोगायानुत्पन्नसुखोपभोगाय पूर्वोत्पन्नसुखाविप्रयोगाय प्रसर्पकाः ॥ ३२ ॥**

**अनुत्पन्नेति,** प्रकर्षेण सर्पन्ति गच्छन्ति भोगाद्यर्थं देशाद्देश सञ्चरन्ति, आरम्भपरिग्रहतो वा विस्तार यान्तीति प्रसर्पकाः, अनुत्पन्नानसम्पन्नान् भोगान् शब्दादीन् तत्कारणद्रविणाङ्गनादीन् वा सम्पादयितुमनुत्पन्नाना वा भोगानामुत्पादनार्थम् । उक्तञ्च 'धावति रोहण तरति सागर भ्राम्यति

गिरिनिकुञ्जेषु। मारयति बान्धवमपि पुरुषो यो भवेद्धनलुब्ध ॥ अटति बहु वहति भारं सहते क्षुधां पापमाचरति धृष्टः। कुलशीलजातिप्रत्ययस्थितिञ्च लोभोपद्रुतस्त्यजति ॥' इति, पूर्वोत्पन्नानाञ्च भोगानामविप्रयोगाय रक्षणार्थमिति, एवममेऽपि सुखञ्च भोगसम्प्राप्त्यानन्दविशेष इति ॥ १३२ ॥

भोगाद्यर्थं यतमानो बद्धा कर्म नारकतयोत्पद्यत इति नानाऽऽहारतो निरूपयति—

**अङ्गारमुर्मुरोपमशीतलहिमशीतला नारकाहारा, कङ्कबिलपाणमासपुत्रमांसोपमास्तिर्यग्योनिकाहाराः, अशनपानखादिमस्वादिमाहारा मनुष्याः वर्णगन्धरसस्पर्शमयाहारा देवा. ॥ १३३ ॥**

अङ्गारेति, अल्पकालदाहत्वादङ्गारोपमः, स्थिरतरदाहत्वान्मुर्मुरोपम, शीतवेदनोत्पादकत्वाच्छीतलः अत्यन्तशीतवेदनाजनकत्वाद्धिमशीतलः, अधोऽध इति क्रमः। कङ्क पक्षिविशेषस्तस्याहारेण समः कङ्कोपमः, यथाहि कङ्कस्य दुर्जरोऽपि स्वरूपेणाहार सुखभक्ष्य सुखपरिणामश्च भवति तथा यस्तिरश्चां सुभक्षः सुखपरिणामश्च स कङ्कोपमः। तथा बिले प्रविशद्द्रव्य बिलमेव तेनोपमा यत्र स तथा, बिले ह्यलब्धरसास्वाद झगिति किञ्चिद्यथा प्रविशति तथा यस्तेषां गलबिले प्रविशति स तथोच्यते। पाणो मातङ्गः, तन्मासमस्पृश्यत्वेन जुगुप्सया दु खाद्य स्यादेव यस्तेषां दुःखाद्यः स पाणमासोपमः। पुत्रमांसन्तु स्नेहपरतया दुःखाद्यतर स्यादेव यो दुःखाद्यतरः स पुत्रमांसोपमः। क्रमेण चैते शुभसमाशुभाशुभतरा वेदितव्या, शेष सुगमम् ॥ १३३ ॥

अथ चिकित्साश्रयेणाह—

**व्रणकर्तृत्वतत्परिमर्शित्वाभ्यां तत्कर्तृत्वतत्संरक्षणाभ्यां तत्कर्तृत्वतत्संरोहित्वाभ्याञ्च चतुर्भङ्गश्चिकित्सकानाम् ॥ १३४ ॥**

व्रणकर्तृत्वेति, चिकित्सका द्रव्यतो ज्वरादिरोगान् प्रति, भावतो रागादीन् प्रतीति, तत्रात्मनो ज्वरादेः कामादेर्वा चिकित्सक आत्मचिकित्सक उच्यते तद्भेदा अत्रोक्ता ज्ञाता। तत्र कश्चित् व्रण देहे क्षत स्वय करोति रुधिरादिनिर्गालनार्थमिति व्रणकरः पर न व्रण परिमृशतीत्येक, केचिदपन्यकृत व्रण परिमृशति न च तत्करोतीति द्वितीयः, अपर परिमृशति करोति च, इतरस्तु नोभयथा। एव भावव्रणमतिचारलक्षण करोति कायेन, न च तदेव पुन पुन संस्मरणेन स्पृशति। अन्यस्तु तत्परिमृशत्यभिलापात्, न च करोति कायतः संसारभयादिति। एवमितरौ। व्रण करोति न च तत्पट्टबन्धादिना संरक्षति कश्चित्, कृत संरक्षति न च करोत्यन्यः, भावव्रणन्त्वाश्रित्यातिचारं करोति न च त सानुबन्ध भवन्त कुशीलादिसंसर्गवर्जनादिपरिहारतो रक्षत्येक, अन्यस्तु पूर्वकृतातिचारं निदानपरिहारतो रक्षति नव च न करोति, एवमन्यौ भाव्यौ। एको व्रणकर्ता न व्रणसंरोही नैव व्रण संरोहयत्यौषधदानादिना, भावव्रणापेक्षया प्रायश्चित्ताप्रतिपत्तेः। अपरो व्रणसंरोही पूर्वकृतातिचारप्रायश्चित्तप्रतिपत्त्या, नो ... ॥ १३४ ॥

पुन पुरुषभेदानाह—

**अन्तर्बहिर्भ्यां शल्यदुष्टत्वतश्च ॥ १३५ ॥**

**अन्तरिति,** एकेऽन्तश्शल्या न बहिश्शल्या, यस्यान्तो मध्ये शल्य तत्तथा, यच्छल्य व्रणस्यान्तरल्प बहिस्तु बहु तद्बहिरिव बहिरुच्यते तद्विद्यते येषा ते बहिश्शल्या, यदि पुन सर्वथैव तत् ततो बहि॰ स्यात्तदा शल्यतैव न स्यात्, उद्धृतत्वे वा भूतभावितया स्यादपीति, अपरे बहि शल्या नान्त -शल्या, येषामन्तर्बहु बहिरप्युपलभ्यते ते उभयशल्या, चतुर्थ शून्यः, अन्तर्बहिर्भ्यां भिन्नस्य शल्यस्यैवाभावात्। भावापेक्षया गुरुसमक्षमनालोचितत्वेनान्त शल्यमतिचाररूप यस्य स तथा बहि शल्यमालोचिततया यस्य। अन्तर्बहिश्च शल्यमालोचितत्वानालोचितत्वाभ्याम्, चतुर्थ शून्य। अन्तर्दुष्टः शठतया सवृताकारत्वान्न बहिरित्येक॰, अन्यस्तु करणेनोपदर्शितवाक्पारुष्यादित्वाद्बहिरेवेत्यूह्यमन्यत् ॥

अथ प्रव्रज्या निरूपयति—

**इहपरोभयलोकप्रतिबद्धाप्रतिबद्धस्वरूपा अग्रतः पृष्ठत उभयतः प्रतिबद्धाप्रतिबद्धस्वरूपा नटभटसिंहशृगालखादितारूपा च प्रव्रज्या ॥१३६॥**

**इहेति,** इहलोकप्रतिबद्धा प्रव्रज्या निर्वाहादिमात्रार्थिनाम्, परलोकप्रतिबद्धा जन्मान्तरकामाद्यर्थिनाम्, उभयार्थिनामुभयलोकप्रतिबद्धा, विशिष्टसामायिकवतामप्रतिबद्धा। अग्रत प्रव्रज्यापर्यायभाविषु शिष्याहारादिषु या प्रतिबद्धा साऽग्रत प्रतिबद्धा। पृष्ठत प्रतिबद्धा स्वजनादिषु, द्विधापि काचिदुभयत प्रतिबद्धा अप्रतिबद्धा तु पूर्ववत्। नटस्येव सवेगविकलधर्मकथाकरणोपार्जितभोजनादीनां नटखादितारूपा, तथाविधबलोपदर्शनलब्धभोजनादेर्भटखादितास्वरूपा, शौर्यातिरेकाद्यक्षयोपात्तस्य यथालब्धभक्षणेन वा खादिता सिंहखादितारूपा, व्याक्षुल्योपात्तस्यान्यान्यस्थानभक्षणेन वा खादिता शृगालखादितारूपेति ॥ १३६ ॥

पुनस्तस्या एव भेदानाह—

**अवपाताख्यातसंकेतविग्रहगतिप्रव्रज्यालक्षणा तोदयित्वा प्लावयित्वा सभाष्य परिप्लुतयित्वा च प्रव्रज्या ॥ १३७ ॥**

**अवपातेति,** सद्गुरूणा सेवाऽवपातस्ततो या प्रव्रज्या साऽवपातप्रव्रज्या। आख्यातस्य प्रव्राजयेत्यागुरुक्तस्य या स्यात्साऽऽख्यातप्रव्रज्या यथाऽऽर्यरक्षितभ्रातुः फल्गुरक्षितस्य, सङ्केताद्या सा सङ्केतप्रव्रज्या मेतार्यादीनामिव, अथवा यदि त्व प्रव्रजसि तदाऽहमपीत्येव या सा तथेति। विग्रहगत्या पक्षिन्यायेन परिवारादिवियोगेनैकाकिनो देशान्तरगमनेन च या सा विग्रहगतिप्रव्रज्या। तथा तोदयित्वा व्यथामुत्पाद्य या प्रव्रज्या दीयते मुनिचन्द्रपुत्रस्य सागरचन्द्रेणेव सा तथोच्यते, प्लावयित्वा अन्यत्र नीत्वाऽऽर्यरक्षितवत्, सम्भाष्य गौतमेन कर्षकवत्, वचन वा पूर्वपक्षरूप कारयित्वा निगृह्य च प्रतिज्ञावचन वा कारयित्वा या सा तथोक्ता। घृतादिभि परिप्लुतभोजनः परिप्लुत एव त कृत्वा परिप्लुतयित्वा सुहृद्विना रङ्कवत् या सा तथोच्यते ॥ १३७ ॥

पुनरपि वन्द्भेदानाह—

**वपनपरिवपनशोधनपरिशोधनवती, धान्यपुञ्जितविरेल्लितविकीर्णसङ्कर्षितसमाना च ॥ १३८ ॥**

**वपनेति,** यथा कृषि सकृद्धान्यवपनवती द्विस्त्रिर्वा उत्पाट्य स्थानान्तरारोपणत परिवपनवती विजातीयतृणाद्यपनयनेन शोधिता द्विस्त्रिर्वा तृणादिशोधनेन परिशोधिता भवति तथा प्रव्रज्यापि सामायिकारोपणेन वपनवती महाव्रतारोपणेन निरतिचारस्य सातिचारस्य वा मूलप्रायश्चित्तदानत परिवपनवती सकृदतिचारालोचनेन शोधिता पुन पुनश्च तेन परिशोधिता च भवति । एव खले लूनपूनविशुद्धपुञ्जीकृतधान्यसमाना सकलातिचारकचवरविरहेण लब्धस्वस्वभावत्वादेका । अन्या खलक एव यद्विरेल्लित विसारित वायुना पूनमपुञ्जीकृत धान्य तत्समाना या हि लघुनापि यत्नेन स्वस्वभाव लप्स्यत इति । अपरा तु यद्विकीर्णं गोखुरक्षुण्णतया विक्षिप्त धान्य तत्समाना, या हि सहजसमुत्पन्नातिचारकचवरयुक्तत्वात् सामग्र्यन्तरापेक्षितया कालक्षेपलभ्यस्वस्वभावा सा धान्यविकीर्णसमानोच्यते, इतरा च यत्सङ्कर्षित क्षेत्रादाकर्षित धान्य तत्समाना या हि बहुतरातिचारोपेतत्वाद्बहुतरकालप्राप्यस्वस्वभावा सा धान्यसङ्कर्षितसमानेति ॥ १३८ ॥

उपसर्गभेदानाह—

**दिव्यमानुषतिर्यग्योनिकात्मसवेदनारूपा उपसर्गाः ॥ १३९ ॥**

**दिव्येति,** उपसृज्यते धर्मात् प्रच्याव्यते जन्तुरेभिरित्युपसर्गा बाधाविशेषा , ते च कर्तृभेदाच्चतुर्विधाः, तत्र हास्यात् प्रद्वेषाद्विमर्शाद्विमात्रातो वा दिव्या उपसर्गा भवन्ति, मानुष्या हासात् प्रद्वेषाद्विमर्शात् कुशीलप्रतिसेवनात , भयात् प्रद्वेषादाहारादपत्यरक्षणार्थं वा तैरश्चो घट्टनस्तम्भनप्रपतनसलेषणतो वाऽऽत्मसवेद ॥ १३९ ॥

उपसर्गसहनाज्ज्ञानावरणीयादिकर्मक्षयाद्बुद्धिभेदानाह—

**औत्पत्तिकी वैनयिकी कर्मजा पारिणामिकी च बुद्धिः ॥ १४० ॥**

**औत्पत्तिकीति,** उत्पत्तिरेव प्रयोजन यस्याः सा औत्पत्तिकी, ननु क्षयोपशमः कारणमस्याः, सत्यम्, किन्तु स खल्वन्तरङ्गत्वात् सर्वबुद्धिसाधारण इति न विवक्ष्यते, न चान्यत् शास्त्रकर्माभ्यासादिकमपेक्षत इति । यद्वा बुद्ध्युत्पादनात् पूर्वं स्वयमदृष्टोऽन्यतश्चाश्रुतो मनसाप्यनालोचितस्तस्मिन्नेव क्षणे यथावस्थितोऽर्थो गृह्यते यया सा लोकद्वयाविरुद्धैकान्तिकफलवती बुद्धिरौत्पत्तिकी नटपुत्ररोहकादीनामिव । विनयो गुरुशुश्रूषा स कारणमस्यास्तत्प्रधाना वा वैनयिकी, किञ्च कार्यभरनिस्तरणसमर्था धर्मार्थकामशास्त्राणां गृहीतसूत्रार्थसारा लोकद्वयफलवती चेयम्, नैमित्तिकसिद्धपुत्रशिष्यादीनामिव । अनाचार्यक कर्म साचार्यक शिल्प कादाचित्क वा कर्म नित्यव्यापारस्तु शिल्पम्, कर्मणो जाता कर्मजा, अपि च कर्माभिनिवेशोपलब्धकर्मपरमार्था कर्माभ्यासविचाराभ्या विस्तीर्णा प्रशसाफलवती च हैरण्यककर्षकादीनामिव । परिणामः सु [illegible] पूर्वापरार्थावलोकनादिजन्य आत्म-

धर्मः स प्रयोजनमस्यास्तत्प्रधाना वेति पारिणामिकी, अपि चानुमानकारणमात्रदृष्टान्तैः साध्यसाधिका वयोविपाके च पुष्टीभूताऽभ्युदयमोक्षफला च, अभयकुमारादीनामिव ॥ १४० ॥

नारकत्वादिसाधनकर्माण्याह—

**महारम्भमहापरिग्रहपञ्चेन्द्रियवधकुणिमाहारैर्नैरयिकं कर्म प्रकरोति, मायित्वनिकृतिमत्त्वालीकवचनकूटतुलाकूटमानैस्तैर्यग्योनिकं प्रकृतिभद्रकता-प्रकृतिविनीततासानुक्रोशताऽमत्सरिकताभिर्मानुषं सरागसंयमसंयमासंयमबालतपःकर्माकामनिर्जराभिर्दैविकम् ॥ १४१ ॥**

महारम्भेति, नैरयिकं कर्म नैरयिकत्वायायुष्कादि कर्म, महान्–इच्छापरिमाणेनाकृतमर्यादतया बृहन्नारम्भः पृथिव्याद्युपमर्दलक्षणो यस्य स महारम्भः, तस्य भावस्तत्त्वमेकं कारणम् । महान् परिग्रहो हिरण्यसुवर्णद्विपदचतुष्पदादिर्यस्य सः, तत्त्वमपरम् । पञ्चेन्द्रियाणां वधोऽपरो हेतुः । कुणिमं मांसं तदेवाहारः सोऽप्यन्यो मायित्वं मनःकुटिलता, निकृतिः कायचेष्टाद्यन्यथाकरणलक्षणा अभ्युपचारलक्षणा वा तद्वत्त्वम्, अलीकवचनमप्रियवचनमसत्यवचनं वा, कूटतुलाकूटमानेन यो व्यवहारः स कूटतुलाकूटमानं, एते तिर्यग्योनिकायुष्कादेः कारणम् । प्रकृत्या स्वभावेन भद्रकता–परानुपतापिता, प्रकृतिविनीतता,–अनुपदिष्टविनीतत्वम्, सानुक्रोशता–सदयता, मत्सरिकता–परगुणासहिष्णुता तत्प्रतिषेधोऽमत्सरिकता, एते मनुष्योत्पत्तिकारणकर्महेतवः । सरागसंयमः–सकषायचारित्रं वीतरागसंयमिनामायुषो बन्धाभावात् । संयमासंयमो देशसंयमः, बाला मिथ्यादृष्टयस्तेषां तपःक्रिया, अकामेन–निर्जरा प्रत्यनभिलाषेण निर्जरा–कर्मनिर्जरणहेतुर्बुभुक्षादिसहनमित्येतानि देवोत्पत्तिकारणानि ॥ १४१ ॥

संयमसम्बन्धादाह—

**सर्वतः प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहविरमणानि पञ्चमहाव्रतानि स्थूलतस्तान्यणुव्रतानि ॥ १४२ ॥**

सर्वत इति, पञ्चमहाव्रतानि, संख्यान्तरव्यवच्छेदाय पञ्चेति, प्रथमपश्चिमतीर्थयोः पञ्चानामेव भावात्, व्रतानि नियमाः, एषां महत्त्वञ्च सर्वजीवादिविषयत्वेन महाविषयत्वात्, यावज्जीवं त्रिविधं त्रिविधेनेति प्रत्याख्यानरूपत्वात्, देशविरत्यपेक्षया महतो गुणिनो व्रतरूपत्वाच्च, सर्वतः–निरवशेषात् त्रसस्थावरसूक्ष्मबादरभेदभिन्नात् कृतकारितानुमतिभेदाच्च, अथवा द्रव्यतः षड्जीवनिकायविषयात् क्षेत्रतः त्रिलोकसम्भवात् कालतोऽतीतादेः राज्यादिभवाद्वा भावतो रागद्वेषसमुत्थाच्च, न तु परिस्थूलादेर्देश एव । प्राणानामिन्द्रियोच्छ्वासायुरादीनामतिपातः–प्राणिनः सकाशाद्विभ्रंशः प्राणातिपातः प्राणिप्राणवियोजनमित्यर्थः, तस्माद्विरमणं सम्यग्ज्ञानश्रद्धानपूर्वकं निवर्त्तनं सर्वतः सद्भावप्रतिषेधासद्भावोद्भावनार्थान्तरोक्तिगर्हाभेदात् कृतादिभेदाच्च, यद्वा द्रव्यतः सर्वधर्मास्तिकायादिद्रव्यविषयात् क्षेत्रतः सर्वलोकालोकगोचरात् कालतोऽतीतादेः राज्यादिवर्त्तिनो वा भावतः कषायनोकषायादिप्रभवान्मृषा–

अलीक वदनं वादो मृषावादस्तस्माद्विरमणं सर्वतः कृतादिभेदात्, यद्वा द्रव्यतः सचेतनाचेतनद्रव्यविषयात् क्षेत्रतो ग्रामनगरारण्यादिसंभवात् कालतोऽतीतादेः रात्र्यादिसंभवाद्वा भावतो रागद्वेषसमुत्थात्, अदत्तं स्वामिनाऽवितीर्णं तस्यादानं तस्माद्विरमणं । सर्वस्मात् कृतकारितानुमतिभेदादथवा द्रव्यतो दिव्यमानुषतैरश्चभेदात् रूपरूपसहगतभेदाद्वा, तत्र रूपाणि निर्जीवानि प्रतिमारूपाण्युच्यन्ते, रूपसहगतानि तु सजीवानि, भूषणविकलानि वा रूपाणि भूषणसहितानि रूपसहगतानीति, क्षेत्रतस्त्रिलोकसंभवात् कालतो भावतश्च पूर्ववत् मैथुनाद्विरमणं । सर्वस्मात् पूर्ववत् परिग्रहाद्विरमणमिति । अणूनि च तानि व्रतान्यणुव्रतानि, अणुत्वञ्च महाव्रतापेक्षयाऽल्पविषयत्वादिति प्रतीतमेव, अथवा अनु महाव्रतकथनस्य पश्चात्तदप्रतिपत्तौ यानि व्रतानि कथ्यन्ते तान्यनुव्रतानि, यद्वा सर्वविरतापेक्षया अणोर्लघोर्गुणिनो व्रतान्यणुव्रतानि, स्थूला द्वीन्द्रियादयः सत्त्वाः, स्थूलत्वञ्चैषां सकललौकिकानां जीवत्वप्रसिद्धेः स्थूलविषयत्वात्, तस्मात् प्राणातिपाताद्विरमणम् । स्थूलः परिस्थूलवस्तुविषयोऽतिदुष्टविवक्षासमुद्भवस्तस्मान्मृषावादात् । परिस्थूलविषयं चौर्यारोपणहेतुत्वेन प्रसिद्धमतिदुष्टाध्यवसायपूर्वकं स्थूलं तस्माददत्तादानात् । स्वदारसन्तोषः स्वपरिणीतकलत्रादन्यत्रेच्छानिवृत्तिः । धनादिविषयाभिलाषनियमनं देशतः परिग्रहविरतिरिति ॥ १४२ ॥

दुर्गतिसुगतिसाधनान्याह—

शब्दरूपगन्धरसस्पर्शैरपरिज्ञातैर्जीवाः सज्यन्ते रज्यन्ते मूर्छन्ति गृध्यन्ति अध्युपपद्यन्ते विनिघातमापद्यन्ते परिज्ञाताश्च कल्याणाय ॥ १४३ ॥

शब्देति, शब्दादयो हि कामगुणा अभिलाषसम्पादकाः, स्वरूपतोऽनवगता अप्रत्याख्याता नरकादिभवप्राप्तये भवन्ति, एभिर्जीवा रागाद्याश्रयैः सह सम्बन्धं कुर्वन्ति, रागं यान्ति तद्दोषानवलोकनेन मोहं यान्ति प्राप्तस्यासन्तोषेणाप्राप्तस्यापरापरस्याकाङ्क्षां कुर्वन्ति तदर्जनायातिशयेन यतन्ते ततश्च संसारमापद्यन्ते, त एव यदा ज्ञपरिज्ञया परिज्ञाताः प्रत्याख्यानपरिज्ञया च परिहृतास्तदा ते प्राणिनां हिताय सुखाय कल्याणाय च भवन्ति ॥ १४३ ॥

शरीरं निरूपयति—

नारकादिवैमानिकान्तानां शरीराणि पञ्चवर्णरसान्यौदारिकादीनि च ॥ १४४ ॥

नारकादीति, चतुर्विंशतिदण्डके नारकादिवैमानिकान्तानां वैक्रियशरीराणां पञ्चवर्णत्वं तच्च निश्चयनयात्, व्यवहारतस्त्वेकवर्णप्राचुर्यात् कृष्णादिप्रतिनियतवर्णतैव । कृष्णनीललोहितहारिद्रशुक्लाः पञ्चैव वर्णा अपरेषां सांयोगिकत्वात्, एवं रसा अपि तिक्तकटुकषायाम्लमधुराः पञ्च । एवमौदारिकाहारकतैजसकार्मणशरीराण्यपि । कार्मणातिरिक्तानि सर्वाण्यपि पर्याप्तत्वेन स्थूलाकारधारीणि यदा भवन्ति तदा तान्यवयवभेदेन पञ्चवर्णरसवन्ति सुरभ्यसुरभिगन्धवन्त्यष्टस्पर्शानि च, अन्यथा तु न नियतवर्णादिव्यपदेश्यानि, अपर्याप्तत्वेनावयवविभागाभावादिति ॥ १४४ ॥

शरीरिविशेषगतान् धर्मविशेषानाह—

**आख्यानविभजनदर्शनतितिक्षणानुचरणेषु प्रथमपश्चिमजिनानां कृच्छ्रवृत्तिः ॥ १४५ ॥**

आख्यानेति, भरतैरवतेषु चतुर्विंशतेर्य आदिमाः पश्चिमाश्च जिनास्तेषामाख्यानादिक्रियाविशेषेषु विनेयानामृजुजडत्वेन वक्रजडत्वेन च कृच्छ्रवृत्तिर्भवति, तत्र विनेयानां महावचनाटोपप्रबोध्यत्वेन भगवतामायासोत्पत्तेराख्याने कृच्छ्रवृत्तिः । व्याख्यातेऽपि वस्तुतत्त्वस्य विभागेनावस्थापनं दुःशकं भवति, शिष्याणामुपपत्तिभिः प्रतीतावारोपयितुमुत्पन्नं परीषहादिकं तितिक्षयितुमनुष्ठापयितुञ्च दुःशकम्, तेषामृजुवक्रजडमतित्वात् । मध्यमजिनानान्तु सुगमं भवति, तद्विनेयानामृजुप्रज्ञत्वेनाल्पप्रयत्नेनैव बोधनीयत्वात्, विहितानुष्ठाने सुखप्रवर्त्तनीयत्वाच्च ॥ १४५ ॥

तथा—

**क्षान्तिमुक्तिमार्दवार्जवलाघवानि सत्यतपस्संयमत्यागब्रह्मचर्यवासाः उत्क्षिप्तनिक्षिप्तान्तप्रान्तरूक्षचरकत्वानि अज्ञाताग्लानकमौनचरकत्वसंसृष्टकल्पिकत्वतज्जातसंसृष्टकल्पिकत्वानि औपनिधिकशुद्धैषणिकसंख्यादत्तिकदृष्टलाभिकपृष्टलाभिकत्वानि आचाम्लिकनिर्विकृतिकपुरिमर्द्धिकपरिमितपिण्डपातिकभिन्नपिण्डपातिकत्वानि अरसविरसान्तप्रान्तरूक्षाहाराणि च श्रमणानां नित्यं कीर्त्तितानि ॥ १४६ ॥**

क्षान्तीति, क्षान्त्यादयः क्रोधलोभमानमायानिग्रहाः, लाघवमुपकरणतो गौरवत्यागो वा । सत्यं चतुर्विधमनलीकम्, तदुक्तम् 'अविसंवादनयोगः कायमनोवागजिह्मता चैव । सत्यं चतुर्विधं तच्च जिनवरमतेऽस्ति नान्यत्रे'ति । तपो द्वादशविधम्, संयमो हिंसादिनिवृत्तिः, त्यागः सविग्नैकसाम्भोगिकानां भक्तादिदानम्, ब्रह्मचर्ये मैथुनविरमणे वास इत्येष पूर्वोक्तैः सह दशविधः श्रमणधर्मः । अथ वृत्तिसंक्षेपाभिधानस्य बाह्यतपोविशेषस्य भेदा उच्यन्ते, उत्क्षिप्तं स्वप्रयोजनाय पाकभाजनादुद्धृतं तदर्थमभिग्रहविशेषाच्चरति तद्गवेषणाय गच्छतीत्युत्क्षिप्तचरकस्तस्य भाव उत्क्षिप्तचरकत्वमेवमग्रेऽपि, निक्षिप्तमनुद्धृतं चरतीति तथा, अन्ते भवमान्तं भुक्तावशेषं वल्लादि, प्रकृष्टमान्तं प्रान्तं तदेव पर्युषितम्, रूक्षं निःस्नेहमिति, तत्राद्यौ भावाभिग्रहावितरे द्रव्याभिग्रहाः । अज्ञातः—अनुपदर्शितस्वाजन्यर्द्धिमत्प्रव्राजिताविभावः सन् भिक्षार्थमटतीत्यज्ञातचरकः, अन्नग्लानकचरकः, अन्नग्लानको दोषान्नभुक्, एवंविधः सन् चरति, अन्नग्लायकचरकः, अन्यग्लायकचरको वेति क्वचिद् दृश्यते, अन्नं विना ग्लायकः समुत्पन्नवेदनादिकारणं एवेत्यर्थः, अन्यस्मै वा ग्लायकाय भोजनार्थं चरतीति तथा । मौनेन व्रतेन चरतीति मौनचरकः, संसृष्टेन खरण्टितेन हस्तभाजनादिना दीयमानं कल्पिकं कल्पवत् कल्पनीयमुचितमभिग्रहविशेषाद्भक्तादि यस्य स संसृष्टकल्पिकः, तज्जातेन—देयद्रव्यप्रकारेण यत्संसृष्टं हस्तादि तेन दीयमानं कल्पिकं यस्य स । उपनिधीयत इत्युपनिधिः प्रत्यासन्नं यद्यथा कथञ्चिदानीतं तेन चरति तद्ग्रहणाये

पनिधिकः। शुद्धा अनतिचारा एषणा शङ्कितादिदोषवर्जनरूपा तया चरतीति शुद्धैषणिकः। सङ्ख्यानाः परिमिता एव दत्तय सकृद्भक्तादिक्षेपलक्षणा ग्राह्या यस्य सः सङ्ख्यादत्तिक। दृष्टस्यैव ादेर्लाभस्तेन चरतीति तथा। पृष्टस्यैव साधो दीयते व इत्येवंविधेन लाभेन यश्चरति स पृष्टलाभिक.। पाल्लेन समयप्रसिद्धेन यश्चरति स तथा। घृतादिविकृतिभ्यो यो निर्गत स निर्विकृतिक। पुरिमार्द्ध ाहलक्षण प्रत्याख्यानविशेषो यस्य स तथा। परिमितो द्रव्यादिपरिमाणत पिण्डपातो भक्तादिलाभो ास्ति स। भिन्नस्यैव स्फोटितस्यैव पिण्डस्य सक्त्वादिसम्बन्धिनः पातो लाभो यस्यास्ति स'। ास हिंग्वादिभिरसंस्कृतमाहारयतीत्यरसो विगतरस विरस पुराणधान्यौदनादि रूक्ष तैलादिवर्जितम् ाभूतानि वस्तूनि भगवता सदा वर्णितानि श्लाघितानि कर्तव्यतयाऽनुमतानि च ॥ १४६ ॥

तथा—

क्रियास्थानप्रतिसेवना प्रतिसेव्याप्यनालोचन लब्धप्रायश्चित्तानारम्भणं प्रस्थाप्याप्यनिर्वेष्टार स्थितिप्रकल्प्यान्यप्रतिसेवनञ्च कुर्वाण साम्भोगिकं विसाम्भोगिक कुर्वन् निर्ग्रन्थो नाज्ञाबाह्य., कुलभेदिन गणभेदिन हिंसाप्रेक्षिण छिद्रप्रेक्षिणं पुन. पुन. प्रश्नप्रयोक्तारञ्च पाराञ्चिक कुर्वन्नपि ॥ १४७ ॥

क्रियास्थानेति, अशुभकर्मबन्धकमकृत्यविशेषलक्षण स्थान प्रतिसेवितार प्रतिसेव्य तद्गुरवेऽनिवेदयितार आलोच्य गुरूपदिष्टप्रायश्चित्तस्यानारम्भक आरभ्यापि न निष्ठाप्रापक स्थविरकल्पिकाना ामाचारे योग्यानि विशुद्धपिण्डशय्यादीन्यविशुद्धान्यानि प्रतिसेवितारञ्च साम्भोगिक-एकभोजनमण्डक्यादिक साधर्मिक विसाम्भोगिक-मण्डलीबाह्य विदधन्निर्ग्रन्थो न भगवदाज्ञामतिक्रामति, उचितत्वात्, तथा यो गच्छवासी सन् तस्यैव कुलस्य भेदायान्योऽन्यमधिकरणोत्पादनेनाभ्युत्थाता भवति, था गणे वसन् तस्यैव भेदाय भवति, एव हिंसा-वध साध्वादेर्गवेषयति, हिंसार्थमेवापभ्राजनार्थं वा मत्तवादीनि छिद्राणि प्रेक्षते तथा मुहुर्मुहुरसंयमस्यायतनभूतानि सावद्यानुष्ठानप्रश्नानि प्रयुङ्क्ते त ाधर्मिक पाराञ्चिक-दशमप्रायश्चित्तविशेषयं तमपहृतलिङ्गादिक कुर्वन् निर्ग्रन्थो भगवदाज्ञा नातिक्रामतीत्यर्थः ॥ १४७ ॥

तथा—

गणे आज्ञाधारणयो सम्यगप्रयोक्त्रो. यथारात्निकतया विनयस्य सम्यगप्रयोक्त्रोः श्रुतपर्यवजातानां यथावसरं सम्यगपाठयित्रोः ग्लानशैक्षवैयावृत्त्यानभ्युपगन्त्रोः अनापृच्छ्यचारिणोराचार्योपाध्याययोः पञ्च विग्रहस्थानानि ॥ १४८ ॥

गण इति, गणविषये हे साधो भवता विधेयमिदमित्येवंरूपाया आज्ञाया न विधेयमिदमित्येवंरूपाया धारणाया यो न सम्यगौचित्येन प्रयोक्ता भवति येन परस्पर साधव कलहायन्ते

असम्यक्क्रियोगाद्दुर्नियन्त्रितत्वाच्च तस्याचार्यस्योपाध्यायस्य वा गणे प्रथमं विग्रहस्थानम् । रत्नानि द्विधा द्रव्यतो भावतश्च, तत्र द्रव्यतः कर्केतनादीनि, भावतो ज्ञानादीनि, तत्र रत्नैर्ज्ञानादिभिर्व्यवहरतीति रात्निको बृहत्पर्याय, यो यो रात्निको यथारात्निक तद्भावस्तत्ता तया, यथारात्निकतया—यथा ज्येष्ठ विनयस्य वन्दनकादेर्न सम्यक् प्रयोजयिता तादृशस्य द्वितीयं स्थानम्, श्रुतस्य यानि पर्यवजातानि सूत्रार्थप्रकारास्तेषां यथावसरं काले काले यो न सम्यक् पाठयिता तस्य तृतीयम् । यथा त्रिवर्षपर्यायस्य आचारप्रकल्पनामाध्ययनम्, चतुर्वर्षस्य सूत्रकृदङ्गम् दशाकल्पव्यवहारा पञ्चवर्षस्य स्थानाङ्ग समवायोऽप्यष्टवर्षस्य दशवर्षस्य विवाह इत्यादिरूपोऽवसरः । ग्लानशैक्षवैयावृत्त्यं प्रति यो न सम्यक् स्वयमभ्युत्थाता तस्य चतुर्थम् । यो गणमनापृच्छ्य क्षेत्रान्तरसंक्रमादि करोति तस्य पञ्चमम् । एतद्वैपरीत्येन पञ्च तयोरविग्रहस्थानानि ॥ १४८ ॥

दुष्टाध्यवसायस्य प्राणिनस्तद्गतिस्थित्यादिप्रतिघातो भवतीति तन्निरूपयति—

## गतिस्थितिबन्धनभोगबलसम्बन्धिनः पञ्च प्रतिघाताः ॥ १४९ ॥

**गतीति,** देवगत्यादेः प्रकरणाच्छुभायाः प्रतिघातस्तत्प्राप्तियोग्यत्वे सति विकर्मकरणादप्राप्तिर्गतिप्रतिघात, प्रव्रज्यादिपरिपालनतः प्राप्तव्यशुभदेवगतेर्नरकप्राप्तौ कण्डरीकस्येव । स्थितेः शुभदेवगतिप्रायोग्यकर्मणि बद्धैव तेषां प्रतिघात स्थितिप्रतिघातः, भवति चाध्यवसायविशेषात् स्थितेः प्रतिघात । बन्धन नामकर्मण उत्तरप्रकृतिरूपमौदारिकादिभेदतः पञ्चविधं तस्य प्रशस्तस्य प्रागवत् प्रतिघातो बन्धनप्रतिघात, बन्धनग्रहणं तत्सहचरप्रशस्तशरीरतदङ्गोपाङ्गसंहननसंस्थानानामप्युपलक्षकम्, तेन तेषामपि प्रतिघातो ज्ञेयः । प्रशस्तगतिस्थितिबन्धनादिप्रतिघाताभोगानां प्रशस्तगत्याद्यविनाभूतानां प्रतिघातो भोगप्रतिघातः, भवति हि कारणाभावे कार्याभावः । प्रशस्तगत्यादेरभावादेव बलस्य उपलक्षणाद्वीर्यपुरुषकारपराक्रमाणां च प्रतिघातो भवति, बलं शारीरं, वीर्यं जीवप्रभवं, पुरुषकारोऽभिमानविशेषः पुरुषकर्तव्यं वा, पराक्रमो निष्पादितस्वविषयोऽभिमानविशेष एव, बलवीर्ययोर्व्यापारणं वा ॥ १४९ ॥

सरागस्य प्रव्रजितस्य परीषहादिसहनमाह—

## पुरुषस्यास्योदीर्णकर्मत्वं यथाविष्टत्वं स्वस्य तद्भववेदनीयकर्मण उदयमसहमानस्य पापकर्मसम्पत्तिं सहमानस्य निर्जराञ्च विभाव्य छद्मस्थः आक्रोशादि सहेत ॥ १५० ॥

**पुरुषस्येति,** छाद्यते येन तच्छद्म ज्ञानावरणादिघातिकर्मचतुष्टयम्, तत्र तिष्ठतीति छद्मस्थः सकषायः, स उदितान् परीषहोपसर्गान् कषायोदयनिरोधपूर्वकं सहेत तथाहि पुरुषोऽयमुदितप्रबलमिथ्यात्वादिमोहनीयकर्मा अत एवायमुन्मत्तसदृश, उदीर्णकर्मत्वादेवासौ मामाक्रोशत्युपहासं करोति निर्भर्त्सयति दुर्वचनैर्भाति रज्ज्वादिना हस्तादि छिनत्ति मारणस्थानं नयति, पात्रकम्बलपादप्रोञ्छनप्रभृतीन्याच्छिनत्ति, तथाऽयं स्याद् यक्षाविष्टोऽत एवाक्रोशादि विधत्ते, तथाऽयं परीषहोपसर्गकारी मिथ्यात्वादिकर्मवशवर्ती मम पुनरेतस्मिन्नेव जन्मन्यनुभवनीयस्य तथाविधकर्मण उदयो विद्यते

नैष मामाक्रोशति, तथा करोतु नामैष बालिशत्वात्, तथा मम पुनरसद्भावाच्च सर्वथा पापं कर्म असातादि सम्पद्यते, मम चेद् सहतो निर्जरा क्रियत इति विचिन्त्याधिसहेत, इह प्राय आक्रोशवधाभिधानपरीषहद्वयमुपसर्गविवक्षाया मानुष्यकृताक्षेपिकादिरूपं मन्तव्यम् ॥ १५० ॥

अथ छद्मस्थप्रसङ्गात् केवलिनं निरूपयति—

**ज्ञानदर्शनचारित्रतपोवीर्याण्यनुत्तराणि केवलिनः ॥ १५१ ॥**

**ज्ञानेति,** सुगमं अनुत्तरत्वञ्च यथाख्यं सर्वथाऽऽवरणक्षयात्, तत्र ज्ञानदर्शने, तदावरणक्षयात्, चारित्रतपसी मोहक्षयात्, तपसश्चारित्रभेदत्वात्, तपश्च केवलिनामनुत्तरं शैलेश्यवस्थायां शुक्लध्यानभेदस्वरूपम्, ध्यानस्याभ्यन्तरतपोभेदत्वात्, वीर्यं तु वीर्यान्तरायक्षयादिति ॥ १५१ ॥

निर्ग्रन्थानां निर्ग्रन्थीनाञ्चाकल्प्यानाह—

**भयदुर्भिक्षप्रवाहणप्लावनानार्याभिभवव्यतिरेकेण गङ्गायमुनासरय्वैरावतीमहीमहानदीर्मासान्तर्द्वित्रिवारानुत्तरीतुं निर्ग्रन्थाना न कल्पते ॥१५२॥**

**भयेति,** गङ्गादिपञ्चमहानदीर्गुरुनिम्नगा मासस्य मध्ये द्वौ वारौ त्रिवारान् वा साधूनामुपलक्षणात्साध्वीनाञ्चोत्तरीतुं बाहुजङ्घानावादिना लङ्घयितुं न कल्पते, आत्मसंयमोपघातसम्भवात्, शबलचारित्रभावात्। परन्तु राजप्रत्यनीकादेः सकाशादुपध्याद्यपहारविषये भये सति दुर्भिक्षे—भिक्षाभावे सति गङ्गादौ केनचित् प्रत्यनीकेन प्रक्षिप्ते सति तेन प्लाव्यमाने सत्यनार्यैर्म्लेच्छादिभिर्जीवितचारित्रापहारिभिरभिभूते सति च तत्तरणेऽपि न दोषः ॥ १५२ ॥

तथा—

**भयदुर्भिक्षनिष्काशनप्रवाहागमनानार्यपरिभवव्यतिरेकेण ग्रामान्तरविहरणं प्रथमप्रावृषि न कल्पते, वर्षावासं पर्युषितानां ग्रामान्तरविहरणञ्च, कल्पते च ज्ञानादित्रयार्थं विष्वग्भवनेन प्रेषणेन च ॥ १५३ ॥**

**भयेति,** आषाढश्रावणौ प्रावृट् आषाढस्तु प्रथमप्रावृट्, ऋतूनां वा प्रथमत्वात् प्रथमप्रावृट् अथवा चतुर्मासप्रमाणो वर्षाकालः प्रावृडिति विवक्षित, अत्र सप्ततिदिनप्रमाणे प्रावृषो द्वितीये भागे गन्तुं तावन्न कल्पते एव, प्रथमभागेऽपि पञ्चाशद्दिनप्रमाणे विंशतिदिनप्रमाणे वा न कल्पते जीवव्याकुलभूतत्वात्, उक्तञ्च 'अत्र चानभिगृहीतं विंशतिरात्रिं सविंशतिं मासं। तेन परमभिगृहीतं गृहिज्ञातं कार्त्तिकं यावत्' ॥ इति, अत्रानभिगृहीत—अनिश्चितमशिवादिभिर्निर्गमभावात्। यत्र संवत्सरेऽधिकमासो भवति तत्राषाढ्या विंशतिर्दिनानि यावदनभिग्रहिकः आवासोऽन्यत्र सविंशतिरात्रं मास—पञ्चाशत् दिनानीति। तत्र प्रावृष्येकस्माद्ग्रामाद्ग्रामान्तरं विहर्तुं न कल्पत इत्युत्सर्गः, भयादिकारणे त्वपवादः, उक्तञ्च 'आबाहे दुर्भिक्खे भये महति दकौघे। परिभवनं ताडनं वा यदा परः करिष्यति' इति। **वर्षावासमिति,** वर्षास्वावासोऽवस्थानं स च जघन्यत आ कार्त्तिक्या दिनसप्ततिप्रमाणो मध्यवृत्त्या चतुर्मासप्रमाणः उत्कृष्टतः षण्मासमानः, तत्र पर्युषितानां—सामस्त्येनोषितानां पर्युषणाकल्पेन नियमवत्

वस्तुमारब्धाना ग्रामान्तरविहरण न कल्पते, पर्युषणाकल्पश्च न्यूनोदरताकरण विकृतिनवकपरित्यागः पीठफलकादिसंस्तारकादानमुच्चारादिमात्रकसग्रहण लोचकरण शैक्षाप्रव्राजन प्राग्गृहीताना भस्मडगलका-दीना परित्यजनमितरेषा ग्रहण द्विगुणवर्षोपग्रहकरणधरणमभिनवोपकरणाग्रहण सक्रोशयोजनात् परतो गमनवर्जनमित्यादिक । कल्पते चेति, ज्ञानार्थतया ग्रामान्तरविहरण कल्पते, तत्रापूर्व श्रुतस्क-न्धोऽन्यस्याचार्यादेरस्ति स च भक्त प्रत्याख्यातुकाम , ततो यद्यसौ तत्सकाशान्न गृह्यते ततोऽसौ व्यव-च्छिद्यते, अतस्तद्ग्रहणार्थं ग्रामान्तरगमन कल्पत इत्यर्थ । तथा दर्शनार्थतया—दर्शनप्रभावकशास्त्रार्थि-त्वेन, चारित्रार्थतया [illegible] तस्य क्षेत्रस्यानेषणाद्यादिदोषदुष्टतया तद्रक्षणार्थम्, आचार्यस्योपाध्यायस्य वा विष्वग्भावो मरण तेन कारणेन, तत्र गच्छेऽन्यस्याचार्यादेरभावाद्गणान्तराश्रयणार्थम् । प्रेषणे-न—आचार्योपाध्यायाना पर्यायक्षेत्रस्य बहिस्ताद्वर्तमानाना वैयावृत्त्यकरणायाचार्यादिना प्रेषितस्य गमन कल्पत इत्यर्थ ॥ १५३ ॥

अकल्प्यानामाचरणे कर्मबन्धसम्भवात्कर्मद्वारतन्निरोधद्वाराण्याचष्टे—

मिथ्यात्वाविरतिप्रमादकषाययोगा आश्रवद्वाराणि, सम्यक्त्वविर-त्यप्रमादाकषायित्वायोगित्वानि सवरद्वाराणि, उपध्युपाश्रयकषाययोगभक्त-पानभेदा परिज्ञा ॥ १५४ ॥

मिथ्यात्वेति, स्पष्टम्, आश्रवणमाश्रव , जीवतडागे कर्मजलस्य सङ्कलनम्, कर्मनिबन्धन-मित्यर्थः, तस्य द्वाराणीव द्वाराणि—उपाया आश्रवद्वाराणि । सवरण सवरः, जीवतडागे कर्मजलस्य निरोधन तस्य द्वाराणि । कर्मणो निर्जरोपायभूता परिज्ञामाह—उपधीति, परिज्ञा वस्तुस्वरूपस्य ज्ञान तत्पूर्वक प्रत्याख्यानञ्च, एषा द्रव्यतो भावतश्च द्विधा, द्रव्यतोऽनुपयुक्तस्य, भावतस्तूपयुक्तस्य । तत्रोपधि॰ रजोहरणादि , तस्यातिरिक्तस्याशुद्धस्य सर्वस्य वा परिज्ञा उपधिपरिज्ञा, एवमग्रेऽपि ॥१५४॥

परिज्ञा च व्यवहारवता भवतीति तन्निरूपयति—

आगमश्रुताज्ञाधारणाजितानि व्यवहाराः ॥ १५५ ॥

आगमेति, व्यवहारो मुमुक्षुप्रवृत्तिनिवृत्तिरूपः, तन्निबन्धनत्वाज्ज्ञानविशेषोऽपि, आगमो येन पदार्थाना परिच्छेदः, स च केवलमन पर्यवावधिपूर्वचतुर्दशकदशकनवकरूपः । श्रुत—आचार-प्रकल्पादिश्रुतम्, नवादिपूर्वाणा श्रुतत्वेऽप्यतीन्द्रियार्थज्ञानहेतुत्वेन सातिशयत्वादागमव्यपदेशः केवल-वत् । यदगीतार्थस्य पुरतो गूढार्थपदैर्देशान्तरस्थगीतार्थनिवेदनायातिचारालोचनमितरस्यापि तथैव शुद्धि-दान साऽऽज्ञा । गीतार्थसविग्नेन द्रव्याद्यपेक्षया यत्रापराधे यथा या विशुद्धिः कृता तामवधार्य यदन्यस्त-त्रैव तथैव तामेव प्रयुङ्क्ते सा धारणा, वैयावृत्त्यकरादेर्वा गच्छोपग्रहकारिणोऽशेषानुचितस्योचितप्राय-श्चित्तपदाना प्रदर्शिताना धरण धारणा । द्रव्यक्षेत्रकालभावपुरुषप्रतिषेवानुवृत्त्या सहननधृत्यादिपरि-हाणिमपेक्ष्य यत्प्रायश्चित्तदान यो वा यत्र गच्छे सूत्रातिरिक्त कारणत प्रायश्चित्तव्यवहारः प्रवर्तितो बहुभिरन्यैश्चानुवर्तितस्तज्जितमिति ॥ १५५ ॥

सयतावधिकारादाह—

उद्गमोत्पादनैषणापरिकर्मपरिहरणभेद उपघात, तथा विशुद्धि, अर्हता तद्धर्मस्याचार्योपाध्याययो सघस्य विपक्वतपोब्रह्मचर्याणामवर्णवादिन कर्मणो बन्धका वर्णवादिनश्च शुभस्य ॥ १५६ ॥

उद्गमेति, उपघातोऽशुद्धता, तत्रोद्गमोपघात उद्गमदोषैराधाकर्मादिभि षोडशप्रकारैर्भक्तपानोपकरणालयानामशुद्धता, उत्पादनया—उत्पादनादोषै षोडशभिर्धात्र्यादिभिरशुद्धता, एषणया—तद्दोषैः शङ्कितादिभिरशुद्धता परिकर्म—वस्त्रपात्रादे छेदनसीवनादि तेनाशुद्धता, तद्यथा 'तिसृणामुपरि थिग्गलिकाना वस्त्रे य थिग्गलिका तु ससीव्येत् । पञ्चविधानामेकतरस्मिन् स प्राप्नोत्याज्ञादीनि ॥' इत्यादि, परिहरणा—आसेवा उपध्यादेस्तयाऽशुद्धता, यथा—एकाकिना हिण्डकसाधुना यदासेवितमुपकरण तदुपहत भवतीति समयप्रसिद्धिरेव वसत्यादेरपि चिन्त्यम् । एव विशुद्धयोऽप्युद्गमादिभिर्भक्तादीना कल्प्यतारूपा विज्ञेया । उपघातविशुद्धिसूत्रनञ्च जीवा निर्धर्मधार्मिकत्वाभ्या बोधेरलाभलाभस्थानेषु प्रवर्तन्त इति कर्मबन्धनस्थानान्याह अर्हतामिति, अर्हतामवर्णमश्लाघा वदन्तीति अवर्णवादिन । यथा 'नास्त्यर्हन् जानानो वा कथ भोगान् भुनक्ति । प्राभृतिका वोपजीवतीत्यादि तु जिनानामवर्णे ' इत्यादि । उत्तरमत्र न च ते नाभूवन्, तत्प्रणीतप्रवचनोपलब्धे , नापि भोगानुभवनादिर्दोष , अवश्यवेद्यसातस्य तीर्थकरनामादिकर्मणश्च निर्जरणोपायत्वात्तस्य । तथा वीतरागत्वेन समवसरणादिषु प्रतिबन्धाभावादिति । तत्प्रज्ञप्तस्य धर्मस्य श्रुतचारित्ररूपस्यावर्णवादी यथा प्राकृतभाषानिबद्धमेतत्तथा कि चारित्रेण दानमेव श्रेय इत्यादि, उत्तरञ्चात्र प्राकृतभाषात्व श्रुतस्य न दोषो बालादीना सुखाध्येयत्वेनोपकारित्वात्, तथा चारित्रमेव श्रेय निर्वाणस्यानन्तरहेतुत्वादिति । आचार्योपाध्यायानामवर्ण वदन्, यथा बालोऽयमित्यादि, उत्तरञ्च न च बालत्वादिर्दोष , बुद्ध्यादिभिर्वृद्धत्वादिति । तथा सघस्य श्रमणादिचतुर्वर्णस्यावर्ण वदन्, यथा—कोऽय सघो य समवायबलेन पशुसघ इवामार्गमपि मार्गीकरोतीति प्रतिविधानञ्च न चैतत्साधु, तस्य ज्ञानादिगुणसमुदायात्मकत्वात्तेन च मार्गस्यैव मार्गीकरणादिति । तथा विपक्व सुपरिनिष्ठित प्रकर्षपर्यन्तमुपगतमित्यर्थ , तपश्च ब्रह्मचर्यञ्च भवान्तरे येषाम्, विपक्व वोदयागत तपोब्रह्मचर्य तद्धेतुक देवायुष्कादिकर्म येषा ते तथा, तेषामवर्ण वदन् यथा—न सन्त्येव देवा , कदाचनाप्यनुपलभ्यमानत्वात्, कि वा तैर्विटैरिव कामासक्तमनोभिरविरतैर्निर्निमेषैरचेष्टैश्च म्रियमाणैरिव प्रवचनकार्यानुपयोगिभिरित्यादि, इहोत्तरन्तु सन्ति देवास्तत्कृतानुग्रहोपघातादिदर्शनात्, कामासक्तता च मोहसातकर्मोदयादित्यादि । तद्विपर्ययेणाह—वर्णवादिनश्चेति, तत्रार्हता वर्णवादो यथा—'जितरागद्वेषमोहा सर्वज्ञास्त्रिदशनाथकृतपूजा । अत्यन्तसत्यवचना. शिवगतिगामिनो जयन्ति जिनाः ॥' इति तत्प्रणीतधर्मवर्णवादो यथा 'वस्तुप्रकाशनसूर्योऽतिशयरत्नाना सागरो जयति । सर्वजगज्जीवबन्धुरबन्धुर्द्विविधोऽपि जिनधर्म ॥' इति, आचार्यादेर्वर्णवादो यथा 'तेभ्यो नमस्तेभ्यो नमो भावेन पुनरपि तेभ्य एव नमः । अनुपकृतपरहितरता ये ज्ञान ददति भव्येभ्यः ॥' इति, सघवर्णवादो यथा—'एतस्मिन् पूजिते नास्ति तदयन्न पूजित भवति । भुवनेऽपि पूजनीयो न

गुणी संघतो यदन्यः ॥' इति, देववर्णवादो यथा 'देवानामहो शील विषयविषमोहिता अपि जिनभवने । अप्सरोभिरपि सम हास्यादि ये न कुर्वन्ति ॥' इति ॥ १५६ ॥

येष्वतिशयेषु वर्त्तमान आचार्यो धर्मं नातिक्रामति तमाह—

**पादौ निगृह्य वसतेरन्तः प्रस्फोटनप्रमार्जने कारयन्नुच्चारप्रश्रवणयोः परिष्ठापनविशोधने कुर्वन्निच्छायां वैयावृत्त्यं कुर्वन्नेकरात्र द्विरात्र वोपाश्रये एकाकी वसन् बहिर्वैकाक्येकरात्र द्विरात्र वा वसन्नाचार्योपाध्यायो नातिक्रामति धर्मम् ॥ १५७ ॥**

पादाविति, आचार्यश्चासावुपाध्यायश्चाचार्योपाध्याय , येषाञ्चिदर्थदायकत्वात् परेषा सूत्रदायकत्वाच । आचार्योपाध्यायाविति वा, एते पञ्च साधुसमुदाये वर्त्तमानस्य वर्त्तमानयोर्वाऽतिशयाः—तत्र प्रथम , कुलादिकार्यार्थं निर्गतः प्रत्यागतश्चाचार्यः वसतेर्बहिरेव पादौ प्रस्फोटयति, अथ तत्र सागारिको यदि भवेत्तदा वसतेरन्तर्मध्ये पादौ निगृह्य—पादधूलेरुड्डूयमानाया यथाऽन्ये धूल्या न भ्रियन्ते तथा निग्रह वचनेन कारयित्वा प्रस्फोटन—आभिग्रहिकेनान्येन वा साधुना स्वकीयरजोहरणेनोर्णिकापादप्रोञ्छनेन वा प्रस्फोटन कारयन् प्रमार्जन शनैर्लूषण वा कारयन् धर्मं नातिक्रामति । प्रस्फोटनञ्च प्रमार्जनविशेष , तत्र चक्षुर्व्यापारलक्षणप्रत्युपेक्षणपूर्वकगतः सप्त भङ्गा भवन्ति, तद्यथा—न प्रत्युपेक्षते न प्रमार्ष्टि चेत्येक , न प्रत्युपेक्षते प्रमार्ष्टीति द्वितीय , प्रत्युपेक्षते न प्रमार्ष्टीति तृतीय , प्रत्युपेक्षते प्रमार्ष्टि चेति चतुर्थः, चतुर्थे भङ्गे भङ्गाश्चत्वारस्ते यथा—यत्तत्प्रत्युपेक्ष्यते प्रमार्ज्यते च तद्दुष्प्रत्युपेक्षित दुष्प्रमार्जित, दुष्प्रत्युपेक्षित सुप्रमार्जित वा, सुप्रत्युपेक्षित दुष्प्रमार्जित वा, सुप्रत्युपेक्षित सुप्रमार्जित वा करोतीति, इह च सप्तम शुद्धः शेषेष्वसमाचारीति । यदि तु सागारिकश्चलस्तस्सप्ततालमात्र सप्तपादावभ्रमणमात्र वा काल बहिरेव स्थित्वा तस्मिन् गते पादौ प्रस्फोटयेत्ततो वसतौ प्रविशेत् । वसतेरन्तःप्रविष्टस्य चाय विधिर्विपुलाया वसतावपरिभोगस्थाने सङ्कटायाञ्चात्मसंस्तारकावकाशे उपविष्टस्य पादौ प्रमार्जनीयौ, अन्यस्यापि गणावच्छेदकादेरयमेव विधिः केवलमन्यो बहिश्चिरतर तिष्ठतीति । एतावानेव चायमतिशयो यदसावाचार्यो न चिरं बहिरास्ते, अन्यथा 'तृषोष्णभावितस्य प्रतीच्छको मूर्च्छादिकाः । प्रचुरद्रवपाने ग्लानत्व सूत्रार्थविराधना चैवे'ति ॥ दोषप्रसङ्गः । इतरेषा तु साधूना न ते दोषा , जितश्रमत्वात्, इत्येकोऽतिशयः । उपाश्रयस्यान्तः पुरीष मूत्र च परिष्ठापयन् पादादिलग्नञ्च विशोधयन्न धर्ममतिक्रामतीति द्वितीयोऽतिशयः, उत्सर्गतो ह्याचार्यो न विचारभूमिं गच्छति दोषसम्भवात्, तथाहि श्रुतवाग्यमित्यादिगुणतः पूर्वं वीथिषु वणिजो बहुमानादभ्युत्थानादि कृतवन्तस्ततो विचारभूमौ सकृद्द्विर्वा आचार्यस्य गमने आलस्यात्तन्न कुर्वन्ति पराङ्मुखाश्च भवन्ति, एवञ्चेतरे दृष्ट्वा शङ्कन्तेऽयमिदानीं पतितो वणिजानामभ्युत्थानाद्यकरणादित्येव मिथ्यात्वगमनादयो दोषाः स्युरिति । तथा वैयावृत्त्यकरणे यदीच्छा भवेत्तदा भक्तपानगवेषणग्रहणतः साधुभ्यो दानलक्षण वैयावृत्त्य कुर्यात्, अथ तदकरणे इच्छा चेन्न कुर्यात्, भावार्थश्चायमाचार्यस्य भिक्षाभ्रमण न कल्पते, तत्र दोषास्त्वमी—'भारेण वेदना वा हिंडमाने उच्चनीचश्वासो वा । आदाने पानकच्छर्दनाद्याः

ग्लानत्वे पौरुषीभङ्ग' इति। एते च सामान्यसाधोरपि प्रायः समानास्तथापि गच्छस्य तीर्थस्य वा महोपकारित्वेन रक्षणीयत्वेनाचार्यस्यायमतिशय उक्त। तथाऽन्तरुपाश्रये एकरात्र द्विरात्र वा विद्यादिसाधनार्थमेकाक्येकान्ते वसन्नातिक्रामति तत्र तस्य दोषासम्भवात्, अन्यस्य तु तद्भावादिति चतुर्थः, एवं पञ्चमोऽपि, भावार्थश्चाय--अन्तरुपाश्रयस्य वक्षारत्वे विष्वग्वसति, बहिर्वोपाश्रयस्य शून्यगृहादिषु वसति यदि तदाऽसामाचारी। दोषाश्चैते--पुवेदोदयेन जनरहिते हस्तकर्मादिकरणेन संयमभेदो भवति, मर्यादा मया लङ्घितेति निर्वेदेन वेहानसादिमरणञ्च प्रतिपद्यत इति ॥ १५७ ॥

तस्यैव गणान्निर्गमनकारणान्याह--

**गणे आज्ञाया धारणाया वा सम्यगप्रयोक्ता यथाज्येष्ठ कृतिकर्मणो विनयस्य वा सम्यगप्रयोक्ता यथावसर श्रुतपर्यायाणां सम्यगननुप्रवाचयिता स्वपरगणसम्बन्धिनिर्ग्रन्थ्या बहिर्लेश्य., सुहृदादिकृतगणापक्रमणश्चाचार्योपाध्यायो गणादपक्रामेत् ॥ १५८ ॥**

**गण इति,** आचार्योपाध्यायस्याचार्योपाध्याययोर्वा गच्छान्निर्गम कारणैरेभिर्भवेत्, स हि गच्छविषये योगेषु प्रवर्त्तनलक्षणामाज्ञामविधेयेभ्यो निवर्त्तनलक्षणा धारणा यथोचित्य यथा न प्रयोजयति, इदमुक्त भवति दुर्विनीतत्वाद्गणस्य ते प्रयोक्तुमशक्नुवन् गणादपक्रामति कालिकाचार्यवदित्येकम्। तथा गणविषये यथाज्येष्ठ कृतिकर्म तथा विनय नैव सम्यक्प्रयोक्ता भवति, आचार्यसम्पदा साभिमानत्वात्, यत आचार्येणापि प्रतिक्रमणक्षामणादिषु उचितानामुचितविनयः कर्त्तव्य एवेति द्वितीयम्। तथाऽसौ यान् श्रुतपर्यायप्रकारानुद्देशकाध्ययनादीन् धारयति हृद्यविस्मरणतस्तान् यथावसरे गण सम्यक् पाठयिता न भवति, तस्याविनीतत्वात् सुखलम्पटत्वान्मन्दप्रज्ञत्वाद्वाचार्यस्येति गणादपक्रामतीति तृतीयम्। तथाऽसौ गणे वर्त्तमान स्वगणसम्बन्धिन्या परगणसम्बन्धिन्या वा निर्ग्रन्थ्या तथाविधाशुभकर्मवशवर्त्तितया स कलकल्याणाश्रयसंयमसौधमध्याद्बहिः लेश्या-अन्तःकरण यस्यासौ बहिर्लेश्य आसक्तो भवतीत्यर्थः स गणादपक्रामति इति चतुर्थम्। सुहृत्स्वजनवर्गः तस्याचार्यादेः कुतोऽपि कारणाद्गणादपक्रामेत् अतस्तस्य समहायार्थं गणादपक्रामेदिति पञ्चमम् ॥ १५८ ॥

जीवाजीवाश्रयेणाह--

**द्रव्यत. क्षेत्रत. कालतो भावतो गुणतश्च धर्मास्तिकायादय. ॥१५९॥**

**द्रव्यत इति,** धर्माधर्माकाशजीवपुद्गलाः पञ्चास्तिकायाः, तत्र धर्मास्तिकायो द्रव्यादितः पञ्चधा, द्रव्यतामधिकृत्यायमेक, क्षेत्रमाश्रित्य लोकप्रमाण, कालापेक्षया ध्रुव, यत कदापि नासीदिति न, न भवतीति न, न भविष्यतीति न, किन्तु अभूद्भवति भविष्यति च। भावापेक्षया वर्णगन्धरसस्पर्शशून्य, गुणापेक्षया च गतिपरिणामिना जीवपुद्गलाना सहकारितया गमन उपकारकत्वम्। एवमधर्मास्तिकायोऽपि, परन्तु गुणतः स्थितिपरिणामिना जीवपुद्गलाना स्थितावुपकारकर्तृत्वम्। आकाशास्तिकायः क्षेत्रतो लोकालोकप्रमाणः, गुणतोऽवगाहनागुणः, शेष पूर्ववत्। जीवास्तिकायो द्रव्यतोऽ-

न्तः जीवास्ते प्रत्येकं द्रव्यत्वात्, क्षेत्रतो लोकप्रमाणः, कालतो नित्यः, भावतोऽमूर्तश्चेतनावान्, गुणतः साकारानाकारभेदोपयोगगुणः, पुद्गलास्तिकायोऽपि द्रव्यतोऽनन्तानि द्रव्याणि क्षेत्रतो लोकप्रमाणः, कालतो नित्यो भावतो वर्णगन्धरसस्पर्शवान् गुणतश्चौदारिकशरीरादितया ग्राह्यत्वात्, वर्णादिमत्तयेन्द्रियग्राह्यत्वाद्वा ग्रहणरूपगुणवानिति ॥ १५९ ॥

अथ जीवाश्रयेणाह—

## पुलाकबकुशकुशीलनिर्ग्रन्थस्नातका निर्ग्रन्था. ॥१६०॥

**पुलाकेति,** ग्रन्थाद्बाह्याभ्यन्तरबाह्यभेदान्मिथ्यात्वादेर्धनादेश्च निर्गता निर्ग्रन्थाः । तत्र पुलाकः स यस्तपःश्रुतहेतुकायाः सङ्घादिप्रयोजने चक्रवर्त्यादेरपि चूर्णनसमर्थाया लब्धेरुपजीवनेन ज्ञानाद्यतिचारासेवनेन वा संयमसाररहितः, ज्ञानदर्शनचारित्रलिङ्गयथासूक्ष्मभेदभिन्नः । अयञ्च भेद आसेवापुलाकस्य, न तु लब्धिपुलाकस्य, तस्यैकविधत्वात्, बकुशः शरीरोपकरणविभूषानुवर्त्तितया शुद्ध्यशुद्धिव्यतिकीर्णचरणः, अयं शरीरोपकरणानुवर्त्तितया द्विविधः, तत्र शरीरेऽनागुप्तव्यतिरेकेण करचरणवदनप्रक्षालनमक्षिकर्णनासिकाद्यवयवेभ्यो विदूषिकामलाद्यपनयनं दन्तपावनलक्षणं केशसंस्कारञ्च देहविभूषार्थमाचरन्तः शरीरबकुशाः । अकाल एव प्रक्षालितचोलपट्टकान्तरकल्पादिचोक्षवासःप्रिया पात्रदण्डाद्यपि तैलमात्रयोज्ज्वलीकृत्य विभूषार्थमनुवर्त्तमाना बिभ्रत्युपकरणबकुशाः, उभयेपि ऋद्धियशस्कामाः सातगौरवमाश्रिता नातीवक्रियास्वभ्युद्यता अविविक्तपरिवारा बहुच्छेदशबलयुक्ताश्च उत्तरगुणप्रतिषेवया सञ्ज्वलनकषायोदयेन वा दूषितशीलाः कुशीलाः, प्रतिसेवनकुशीलकषायकुशीलभेदेन द्विविधाः, नैर्ग्रन्थ्यं प्रति प्रस्थिता अनियतेन्द्रियाः कथञ्चित्किञ्चिदेवोत्तरगुणेषु पिण्डविशुद्धिसमितिभावनातपःप्रतिमाभिग्रहादिषु विराधयन्तः सर्वज्ञाज्ञोल्लङ्घनमाचरन्ति ते प्रतिसेवनाकुशीलाः । येषान्तु संयतानामपि सतां कथञ्चित्सञ्ज्वलनकषाया उदीर्यन्ते ते कषायकुशीलाः । मोहनीयाख्यग्रन्थनिर्गतो निर्ग्रन्थः क्षीणकषाय उपशान्तमोहो वा । क्षालितसकलघातिकर्ममलपटलत्वात् स्नात इव स्नातः स एव स्नातकः सयोगोऽयोगो वा केवलीति ॥ १६० ॥

उपधिविशेषाश्रयेणाह—

## जाङ्गमिकभाङ्गिकसानकपोतकत्वङ्मयानि वस्त्राणि साधूनां योग्यानि और्णिकौष्ट्रिकसानकवल्वजमौञ्जानि रजोहरणानि च ॥ १६१ ॥

**जाङ्गमिकेति,** जङ्गमास्त्रसास्तदवयवनिष्पन्नं कम्बलादिजाङ्गमिकम्, भङ्गा—अतसी तन्मयं भाङ्गिकम्, सनसूत्रमयं सानकम्, कार्पासिकं पोतकम्, वृक्षत्वङ्मयञ्च वस्त्रं साधूनां साध्वीनाञ्च धारयितुमासेवितुं वा युज्यते, उत्सर्गतस्त्वमहामूल्ये कार्पासिकौर्णिके एव ग्राह्ये, महामूल्यता च पाटलीपुत्रीयरूपकाष्टादशकादारभ्य रूपकलक्षं यावदिति । रजो ह्रियते—अपनीयते येन तद्रजोहरणम्, तदप्यविलोममयमुष्ट्रलोममयं सनसूत्रमयं वल्वजस्तृणविशेषस्तस्य कुट्टितत्वङ्मयं मुञ्जः शरपर्णी तन्मयं योग्यं भवति, औत्सर्गिकं रजोहरणं पक्ष्मनिषद्याद्वययुक्तमापवादिकमनावृतदण्डम्, निर्व्याघातिकमौर्णिकदशाकं व्याघातिकन्त्वितरदिति ॥ १६१ ॥

धार्मिकाणामालम्बनस्थानान्याह—

**षट्कायगणराजगृहपतिशरीराणि निश्रास्थानानि ॥ १६२ ॥**

**षट्कायेति,** श्रुतचारित्रधर्मचारिण उपग्रहहेतव षट्कायादय, षट्काया पृथिव्यादयस्तेषा संयमोपकारित्वमागमप्रसिद्धम्, गच्छस्योपग्राहित्व तत्र वसता निर्जराविनयादिसम्भवात्। नरपतेर्धर्मसहायकत्व दुष्टेभ्यः साधुरक्षणात्। गृहपतेर्निश्रास्थानत्व स्थानदानेन संयमोपकारित्वात्, शरीरस्य धर्मोपग्राहित्व स्पष्टमेव तदरक्षणे धर्महाने ॥ १६२ ॥

शौचान्याह—

**पृथिव्यप्तेजोमन्त्रब्रह्मसम्बन्धीनि शौचानि ॥ १६३ ॥**

**पृथिवीति,** शौच शुद्धिर्द्रव्यतो भावतश्च, तत्र द्रव्यशौच पृथिव्यादिचतुष्टयसम्बन्धि, भावशौच पञ्चमम्, तत्र पृथिव्या-मृत्तिकया शौच शरीरादिभ्यो घर्षणलेपनादिना जुगुप्सितमलगन्धयोरपनयनम्। इह च 'एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश। उभयो सप्त विज्ञेया मृदः शुद्धौ मनीषिभिः॥ एतच्छौच गृहस्थाना द्विगुण ब्रह्मचारिणाम्। त्रिगुण वानप्रस्थाना यतीनाञ्च चतुर्गुणम्॥ इति परोक्त नाभिमतम्, गन्धाद्युपघातमात्रस्य शौचत्वेन विवक्षितत्वात्, तस्यैव युक्तियुक्तत्वाच्च। अद्भि प्रक्षालनमप्शौचम्। अग्निना तद्विकारेण भस्मना वा शौच तेजश्शौचम् शुचिविद्यया मन्त्रशौचम्। ब्रह्मचर्यादिकुशलानुष्ठान ब्रह्मशौचम्, अनेन च सत्यादिशौच चतुर्विध संगृहीतम् ॥ १६३ ॥

पुरुषभेदानेवाह—

**ह्रीह्रीमनश्चलस्थिरोदयनसत्त्वभेदाः पुरुषाः, अनुप्रतिस्रोतान्तमध्यसर्वचारिणो भिक्षाका, अतिथिकृपणब्राह्मणश्वानश्रमणाश्रया वनीपकाः ॥ १६४ ॥**

**ह्रीति,** लज्जया सत्त्वोऽविचलत्व साधो परीषहेषु परस्य सङ्ग्रामादौ यस्यासौ ह्रीसत्त्वः। ह्रिया मनस्येव सत्त्व यस्य न देहे, शीतादिषु कम्पादिविकारभावात् स ह्रीमन सत्त्व, चल भङ्गुर सत्त्व यस्य स चलसत्त्व, एव स्थिरसत्त्व, उदयन—उदयगामि प्रवर्धमान सत्त्व यस्यासावुदयनसत्त्वः। सत्त्वपुरुषोऽत्र भिक्षुरेवेति तदाश्रयेणाह—**अन्विति,** अनुस्रोतचारी प्रतिश्रयादारभ्य भिक्षाचारी, प्रतिस्रोतचारी,—दूरादारभ्य प्रतिश्रयाभिमुखचारी, अन्तचारी, पार्श्वचारी, एव मध्यचारी सर्वचारी च। भिक्षाकाधिकारात्तद्विशेषमाह—**अतिथीति,** परेषामात्मदु खत्वदर्शनेनानुकूलभाषणाद्यो यल्लभ्यते द्रव्य सा वनी, ता पिबत्यास्वादयति पातीति वा वनीप स एव वनीपक—याचक, अत्र तु यो यस्यातिथ्यादेर्भक्तो भवति त तत्प्रशसनेन यो दानाभिमुख करोति स वनीपक इति। भोजनकालोपस्थायी प्राघूणकोऽतिथिस्तद्दानप्रशसनेन तद्भक्तायो लिप्सति सोऽतिथिमाश्रित्य वनीपकोऽतिथिवनीपकः, एवमन्येऽपि॥ १६४॥

अथ कालाश्रयेणाह—

**नक्षत्रयुगप्रमाणलक्षणशनैश्चरसंवत्सरा पञ्च ॥ १६५ ॥**

**नक्षत्रेति,** चन्द्रस्य नक्षत्रमण्डलभोगकालो नक्षत्रमासः, स च सप्तविंशतिर्दिनानि, एकविंशतिः सप्तषष्टिभागा दिवसस्येति २७ २१/६७ । एवंविधद्वादशमासो नक्षत्रसंवत्सरः, स च त्रीणि शतान्यष्टौ सप्तविंशत्युत्तराणि, एकपञ्चाशच्च सप्तषष्टिभागा यथा ३२७ ५१/६७ । एकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्विषष्टिभागा दिवसस्येत्येवंप्रमाणः कृष्णप्रतिपदारब्धः पूर्णमासीनिष्ठितश्चान्द्रमासः, तद्यथा–२९ ३२/६२, तेन मासेन द्वादशमासपरिमाणश्चन्द्रसंवत्सरः, तस्य च प्रमाणमिदम्, त्रीणि शतान्यष्टौ चतुः पञ्चाशदुत्तराणि द्वादश च द्विषष्टिभागा यथा ३५४ १२/६२, एवम्भूतौ चन्द्रसंवत्सरावनुक्रमेण द्वौ ततोऽभिवर्द्धितसंवत्सरस्ततश्चन्द्रसंवत्सरः ततोऽभिवर्द्धितसंवत्सर इति पञ्चभिरेभिः संवत्सरैरेकं युगं भवति, तत्राभिवर्द्धिताख्ये संवत्सरेऽधिकमासः पतति, एकत्रिंशद्दिनान्येकविंशत्युत्तरशतं चतुर्विंशत्युत्तरशतभागानामभिवर्द्धितमासः यथा–३१ १२१/१२४, एवंविधेन मासेन द्वादशमासप्रमाणोऽभिवर्द्धितसंवत्सरः स च प्रमाणेन त्रीणि शतान्यष्टौ त्र्यशीत्यधिकानि चतुश्चत्वारिंशच्च द्विषष्टिभागाः यथा–३८३ ४४/६२ इति । प्रमाणं परिमाणं दिवसादीनां तेनोपलक्षितो नक्षत्रसंवत्सरश्चन्द्रसंवत्सरः ऋतुसंवत्सरः आदित्यसंवत्सरोऽभिवर्द्धितसंवत्सरश्च प्रमाणसंवत्सरः, तत्र नक्षत्रसंवत्सरः पूर्वोक्तलक्षण एव केवलं तत्र नक्षत्रमण्डलस्य चन्द्रभोगमात्रं विवक्षितमिह तु दिनदिनभागादिप्रमाणमिति । तथा चन्द्राभिवर्धितावप्युक्तलक्षणावेव किन्तु तत्र युगावयवतामात्रमिह तु प्रमाणमिति विशेषः । त्रिंशदहोरात्रप्रमाणैर्द्वादशभिर्ऋतुमासैः सावनमासकर्ममासपर्यायैर्निष्पन्नः षष्ट्यधिकाहोरात्रशतमानो यथा ३६० । आदित्यसंवत्सरः स च त्रिंशद्दिनान्यर्द्धञ्च यथा ३० १/२ एवंविधमासद्वादशकनिष्पन्नः षट्षष्ट्यधिकाहोरात्रशतमानो यथा ३६६ । अयमेवानन्तरोक्तो नक्षत्रादिसंवत्सरो लक्षणप्रधानतया लक्षणसंवत्सर इति । यावता कालेन शनैश्चरो नक्षत्रमेकमथवा द्वादशापि राशीन् भुङ्क्ते स शनैश्चरसंवत्सर इति ॥ १६५ ॥

कालात्यये शरीरिणा शरीरान्निर्गमात् तन्मार्गमाह—

**पादोरूरःशिरस्सर्वाङ्गैर्जीवस्य निर्गमनं क्रमेण नरकतिर्यङ्मनुष्यदेवसिद्धिगतिगमनसूचकम् ॥ १६६ ॥**

**पादेति,** मरणकाले शरीरिणः शरीरान्निर्गमो निर्याणं तच्च पादादिद्वारेण भवति, तथा च करणभूताभ्यां पादाभ्यां यदा जीवः शरीरान्निर्योति तदा स निरयगामी भवति, एवमन्यत्रापि ॥१६६॥

अथ ज्ञानावरणक्षपणोपायमाह—

**वाचनापृच्छनापरिवर्तनाऽनुप्रेक्षाधर्मकथारूपः स्वाध्यायः सङ्ग्रहोपग्रहणनिर्जरणश्रुतस्फुटताऽव्यवच्छित्तिनयार्थं श्रुतस्य वाचना ॥ १६७ ॥**

**वाचनेति,** वचि शिष्यस्य प्रति गुरोः प्रयोजकभावो वाचना–पाठनम् । गृहीतवाचनेनापि संशयाद्युत्पत्तौ पुनः प्रष्टव्यमिति पूर्वाधीतस्य सूत्रादेः शङ्कितादौ प्रश्नः प्रच्छना । प्रच्छनाविशोधितस्य सूत्रस्य मा भूद्विस्मरणमिति परिवर्त्तना सूत्रस्य गणनमित्यर्थः, सूत्रवदर्थेऽपि सम्भवति विस्मरणमतः सोऽपि परिभावनीय इत्यनुप्रेक्षणमनुप्रेक्षा, चिन्तनेत्यर्थः । एवमभ्यस्तश्रुतेन धर्मकथाविधेयेति श्रुतरूपस्य धर्मस्य व्याख्या धर्मकथेति । श्रुतं सूत्रमात्रं वा सङ्ग्राह्यः शिष्याणां श्रुतोपादानं तदर्थमेषा

श्रुतसङ्ग्रहो भवतिति प्रयोजनेन श्रुत वाचनीय शिक्षणीयश्च, एवमेते भक्तपानग्लानाद्युत्पादनसमर्थतयोपष्टम्भिता भवन्तित्युपग्रहार्थमेव मे कर्मणा निर्जरण भवतिति निर्जरार्थमेव वाचयतो मे मन्यो जातविशेषः स्फुटतया भविष्यतीति श्रुतस्फुटतार्थं श्रुतस्याव्यवच्छित्त्या कालान्तरज्ञापनार्थञ्च वाचयेत् ॥१६७॥

गण धारयितु योग्य गुणिनमाह—

**श्रद्धासत्यमेधावहुश्रुतशक्त्यल्पाधिकरणवन्तो गणधारकाः स्युः ॥१६८॥**

**श्रद्धेति,** गच्छ मर्यादया धारयितु पालयितु वा योग्य श्रद्धावान्, अश्रद्धावतो हि स्वयममर्यादावर्त्तितया परेषा मर्यादास्थापनायामसमर्थत्वाद्गणधरार्हता न स्यात्। सत्त्वो जीवेभ्यो हित सत्य तद्वान्, प्रतिज्ञातशूरो वा, एवम्भूतो हि पुरुषो गणपालक आदेयश्च स्यादिति। मेधावान् श्रुतग्रहणशक्तिमान्, एव भूतो हि श्रुतमन्यतो झगिति गृहीत्वा शिष्याध्यापने समर्थो भवतीति। बहुश्रुतवान् यस्य सूत्रार्थरूप श्रुत प्रभूत स, अ यथा हि गणानुपकारी स्यात्। शक्तिमान् शरीरमन्त्रतन्त्रपरिवारादिसामर्थ्ययुक्त, स हि विविधास्वापत्सु गणस्यात्मनश्च निस्तारको भवति। अल्पाधिकरणवानल्पमविद्यमानमधिकरण स्वपरपक्षविषयो विग्रहस्तद्वान् स ह्यनुवर्त्तकतया गणस्याहानिकारको भवतीति ॥१६८॥

जीवाना दुर्लभ्यपर्यायविशेषानाह—

**मानुषार्यक्षेत्रसुकुलजन्मार्हद्धर्मश्रवणश्रुतश्रद्धानसम्यक्त्वस्पर्शनानि न सुलभानि ॥ १६९ ॥**

**मानुषेति,** मनुष्यसम्बन्धिजन्म सर्वजीवाना न सुलभ न सुप्राप कृच्छ्रलभ्यमित्यर्थः, न पुनरलभ्य केषाञ्चिज्जीवाना तल्लाभोपलम्भात्। उक्तञ्च 'ननु पुनरिदमतिदुर्लभमगाधसंसारजलधिविभ्रष्टम्। मानुष्य खद्योतकतडिल्लताविलसितप्रतिमम् ॥' इति। तथाऽऽर्यक्षेत्रेऽर्धषड्विंशतिजनपदरूपे जनन न सुलभम्, उक्तञ्च 'सत्यपि च मानुषत्वे दुर्लभतरमार्यभूमिसम्भवनम्। यस्मिन् धर्माचारप्रवणत्व प्राप्नुयात् प्राणी ॥' इति, एवमिक्ष्वाक्वादिके सुकुले प्रभवो न सुलभ, उक्तञ्च 'आर्यक्षेत्रोत्पत्तौ सत्यामपि सत्कुल न सुलभ स्यात्। सचरणगुणमणीना पात्र प्राणी भवति यत्र ॥' इति, तथा केवलिप्रज्ञप्तस्य धर्मस्य श्रवणत्व दुर्लभम् यतोऽभिहित 'सुलभा सुरलोकश्री रत्नाकरमेखला मही सुलभा। निर्वृतिसुखजननिरुचिर्जिनवचनश्रुतिर्जगति दुर्लभा ॥' इति, श्रुतस्य श्रद्धानमपि दुर्लभम्, उक्तञ्च 'कदाचिच्छ्रवण लब्ध्वा श्रद्धा परमदुर्लभा। श्रुत्वा न्यायोपपन्न मार्ग बहवः परिभ्रश्यन्ति ॥' इति, सामान्येन श्रद्धितस्योपपत्तिभिः प्रतीतस्य सम्यक् कायेन स्पर्शन दुर्लभम् यदाह 'धर्ममपि तु श्रद्दधता दुर्लभा कायेन स्पर्शना। इह कामगुणेषु मूर्च्छिताना समय गौतम ! मा प्रमादी' इति। एतेषा दुर्लभत्वञ्च प्रमादादिप्रसक्तप्राणिनामेव, न सर्वेषाम् ॥ १६९ ॥

मनुष्यभेदानाह—

**त्रिविधा सम्मूर्च्छनजास्त्रिविधा गर्भव्युत्क्रान्तिकाश्च मनुष्याः, अर्हच्चक्रवर्त्तिबलदेववासुदेवचारणविद्याधरा ऋद्धिमन्तः ॥ १७० ॥**

**त्रिविधा इति,** मनुष्या द्विविधाः सम्मूर्च्छनजा गर्भव्युत्क्रान्तिकाश्च, तत्र सम्मूर्च्छनजा कर्मभूमिजा अकर्मभूमिजा अन्तरद्वीपगाश्च तथैव गर्भव्युत्क्रान्तिकाश्च स्पष्टं शेषम् ॥ १७० ॥

संहननसंस्थाने आह—

**वज्रर्षभनाराचर्षभनाराचनाराचार्द्धनाराचकीलिकासेवार्त्तानि संहननानि, समचतुरस्रन्यग्रोधपरिमण्डलसादिकुब्जवामनहुण्डानि संस्थानानि ॥१७१॥**

**वज्रेति,** संहननमस्थिसञ्चयः, शक्तिविशेष इत्यन्ये, तत्र वज्रः—कीलिका ऋषभः परिवेष्टनपट्टः, नाराचः—उभयतो मर्कटबन्धः, यत्र द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदिकीलिकाकारं वज्रनामकमस्थि भवति तद्वज्रर्षभनाराचम्। यत्र तु कीलिका नास्ति तदृषभनाराचम्। यत्र तूभयोर्मर्कटबन्ध एव तन्नाराचम्, यत्र त्वेकतो मर्कटबन्धो द्वितीयपार्श्वे कीलिका तदर्धनाराचम्, कीलिकाविद्धास्थिद्वयसञ्चितं कीलिकम्। अस्थिद्वयपर्यन्तस्पर्शनलक्षणां सेवामार्त्तं सेवामागतमिति सेवार्त्तम्। शक्तिपक्षे त्वेवंविधदार्वादेरिव दृढत्वं संहननम्। संस्थानमवयवरचनात्मिका शरीराकृतिः, तत्र समाः—शरीरलक्षणोक्तप्रमाणाविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत् समचतुरस्रम्। आश्रयस्त्विह चतुर्दिग्विभागोपलक्षिताः शरीरावयवास्ततश्च सर्वेऽप्यवयवाः शरीरलक्षणोक्तप्रमाणाव्यभिचारिणो यस्य न तु न्यूनाधिकप्रमाणास्तच्चतुरस्रं समचतुरस्रम्। न्यग्रोधवत्परिमण्डलं न्यग्रोधपरिमण्डलम्, यथा न्यग्रोध उपरिसम्पूर्णावयवोऽधस्तनभागे तु न तथेदमपि नाभेरुपरि विस्तरबहुलं शरीरलक्षणभाक्, अधस्तु हीनाधिकप्रमाणमिति। सादि, आदिरिहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते तेन शरीरलक्षणभाजा सह वर्त्तते यत्तत् सादि, ननमेव हि शरीरमविशिष्टेनादिना सह वर्त्तत इति विशेषणान्यथानुपपत्तेरिह विशिष्टता लभ्यते, अत सादि—उत्सेधबहुलं परिपूर्णोत्सेधमित्यर्थः। यत्र पाणिपादशिरोग्रीवं लक्षणाव्यभिचारि शेषं लक्षणयुक्तं तत्कुब्जम्। तद्विपरीतं वामनम्, हुण्डं त्वेकोऽप्यवयवो यत्र प्रमाणयुतो न भवति तदिति ॥ १७१ ॥

अशुभानुबन्धानाह—

**पर्यायपरिवारश्रुततपोलाभपूजासत्कारा अनात्मवतोऽहिताय, आत्मवतश्च हिताय ॥ १७२ ॥**

**पर्यायेति,** अकषायो ह्यात्माऽऽत्मा भवति, स्वस्वरूपावस्थितत्वात्, यस्तद्वान् भवति सोऽनात्मवान् सकषाय इत्यर्थस्तस्य पर्यायो जन्मकालः प्रव्रज्याकालो वा स यदि महान् तदा मानकारणं भवति, अत एव तस्यैहिकामुष्मिकापायजनकत्वम्, गृहस्थापेक्षया चाल्पोऽपि प्रव्रज्यापर्यायो मानहेतुरेव, तत्र जन्मपर्यायो महानहिताय, यथा बाहुबलिनः, एवमन्येऽपि वाच्या। परिवारः शिष्यादिः, श्रुतं पूर्वगतादि, उक्तञ्च 'यथा यथा बहुश्रुतः सम्मतश्च शिष्यगणसंपरिवृतश्च। अविनिश्चितश्च समये तथा तथा सिद्धान्तप्रत्यनीकः ॥' इति, तपोऽनशनादि, लाभोऽन्नादीनाम्, पूजा स्तवादिरूपा तत्पूर्वकस्सत्कारः—वस्त्राभ्यर्चनं पूजायां वा आदरः, एते अशुभानुबन्धाय भवन्ति। यस्त्वात्मवान्—स्वस्वरूपावस्थितस्तस्यैते हितायैव भवन्ति कषायशून्यत्वादिति ॥ १७२ ॥

सत्कर्मणा दिक्ष्वेव गत्यादय इत्याह—

**पूर्वपश्चिमदक्षिणोत्तरोर्ध्वाधोदिग्भिर्जीवानां गत्यादिः प्रवर्त्तते ॥ १७३ ॥**

**पूर्वेति,** षट्स्थानकानुरोधेन विदिशोऽविवक्षिता, आभिः षड्भिर्दिग्भिः जीवानां गतिः—उत्पत्तिस्थानगमनं प्रवर्त्तते, तेषामनुश्रेणिगमनात्, एवमागतिव्युत्क्रान्त्याहारवृद्धिनिवृद्धिविकुरणागतिपर्यायसमुद्घातकालसंयोगदर्शनाभिगमज्ञानाभिगमजीवाभिगमाजीवाभिगमा वाच्याः किन्तु गत्यागती प्रज्ञापकस्थानापेक्षिण्यौ प्रसिद्धे एव, व्युत्क्रान्तिः—उत्पत्तिस्थानप्राप्तस्योत्पादः, सापि ऋजुगतौ षट्स्वेव दिक्षु, आहारः प्रतीतः, सोऽपि षट्स्वेव दिक्षु, एतद्व्यवस्थितप्रदेशावगाढपुद्गलानामेव जीवेन स्पर्शनात्, स्पृष्टानामेव चाहरणात्, तथा शरीरस्य वृद्धिः, निवृद्धिर्हानिः, तस्यैव विकुर्वणा—वैक्रियकरणं गतिपर्यायो गमनमात्रं न परलोकगमनरूपं, तस्य गत्यागतिग्रहणेनोक्तत्वात्, समुद्घातो वेदनादिकः सप्तविधः, कालसंयोगः—समयक्षेत्रमध्ये आदित्यादिप्रकाशसम्बन्धलक्षणः, दर्शनं सामान्यग्राही बोधः, तदिह गुणप्रत्ययावध्यादिप्रत्यक्षरूपं तेनाभिगमो वस्तुनः परिच्छेदस्तत्प्राप्तिर्वा दर्शनाभिगमः, एवं ज्ञानाभिगमोऽपि, जीवाभिगमः—नरजाभिगमो गुणप्रत्ययावध्यादिप्रत्यक्षतः, अजीवाभिगमः—तथैव पुद्गलास्तिकायाद्यधिगम इति पञ्चेन्द्रियतिर्यग्योनिकानां मानुष्याणाममी गत्यादयः सामस्त्येन ज्ञेयाः ॥ १७३ ॥

अथ संयतमनुष्याणामाहारग्रहणकारणान्याह—

**वेदनावैयावृत्त्येर्यासंयमप्राणपालनधर्मचिन्तार्थं निर्ग्रन्थस्याहारं गृह्णतो न दोषाय, आतङ्कोपसर्गतितिक्षाप्राणिदयातपःशरीरव्यवच्छेदार्थञ्च त्यजतः ॥ १७४ ॥**

**वेदनेति,** एभिर्निमित्तैरशनादिकमभ्यवहरन्निर्ग्रन्थो नाज्ञामतिक्रामति पुष्टकारणत्वात्, अन्यथा त्वतिक्रामत्येव, रागादिभावात्, क्षुद्वेदनोपशमनार्थमाचार्यादिवैयावृत्त्यकरणार्थमीर्याविशुद्ध्यर्थं प्रेक्षोत्प्रेक्षाप्रमार्जनादिसंयमार्थं प्राणसंधारणार्थं गुणनानुप्रेक्षणार्थञ्च भुञ्जीत । आहारपरित्यजननिदानमाह आतङ्केति, आतङ्के—ज्वरादौ, उपसर्गे—राजस्वजनादिजनिते प्रतिकूलानुकूलस्वभावे, तितिक्षाया—मैथुनव्रतसंरक्षणस्याधिसहने, आहारत्यागिनो हि ब्रह्मचर्यं सुरक्षितं भवतीति । प्राणिदयाया—सम्पातिमत्रसादिसंरक्षणे, तपसि—चतुर्थादिषण्मासान्तस्वरूपे, शरीरव्यवच्छेदार्थे—देहत्यागायाहारं परित्यजन्नातिक्रामत्याज्ञामिति ॥ १७४ ॥

प्रमादा हि मद्यनिद्राविषयकषायद्यूतप्रतिलेखनाप्रमादरूपाः श्रमणादेः सदुपयोगाभावहेतव इति ते निरूपयितव्यास्तत्र मद्यादीनां स्पष्टतया प्रत्युपेक्षाप्रमादं षष्ठं निरूपयति—

**आरभटा सम्मर्द्दा मोसली प्रस्फोटना विक्षिप्ता वेदिका च प्रमादप्रत्युपेक्षा, अप्रमादप्रत्युपेक्षणा तु अनर्त्तिता, अवलिता, अननुबन्धिनी, अमोसली, षट्प्रस्फोटकनवखोटकाः प्राणिप्राणविशोधना च ॥ १७५ ॥**

**आरभटेति,** प्रत्युपेक्षणं प्रत्युपेक्षा, सा च द्रव्यक्षेत्रकालभावभेदाच्चतुर्धा, तत्र द्रव्यप्रत्युपेक्षणा वस्त्रपात्राद्युपकरणानामशनपानाद्याहाराणाञ्च चक्षुनिरीक्षणरूपा, क्षेत्रप्रत्युपेक्षणा कायोत्सर्गनिषदनशयनस्थानानां स्थण्डिलानां मार्गस्य विहारक्षेत्रस्य च निरूपणा, कालप्रत्युपेक्षणा उचितानुष्ठानकरणार्थं कालविशेषस्य पर्यालोचना, भावप्रत्युपेक्षा धर्मजागरिकादिरूपा, तत्र प्रत्युपेक्षायां प्रमादः शैथिल्यमाज्ञातिक्रमो वा प्रत्युपेक्षाप्रमादः, अनेन च प्रमार्जनाभिक्षाचर्याविधिविच्छाकारमिथ्याकारादिषु च दशविधसामाचारीरूपव्यापारेषु च प्रमादोऽसावुपलक्षितः, तस्यापि सामाचारीगतत्वेनैतत्प्रमादलक्षणाव्यभिचारित्वात् । आरभटा-वितथकरणरूपा, अथवा त्वरितं सर्वमारभमाणस्य, अथवाऽर्धप्रत्युपेक्षित एवैकत्र यदन्यान्यवस्त्रग्रहणं साऽऽरभटा, सा च वर्जनीया सदोपत्वादेव सर्वत्र । यत्र वस्त्रस्य मध्यप्रदेशे संवलिताः कोणा भवन्ति यत्र वा प्रत्युपेक्षणीयोपधिवेण्टिकायामेवोपविश्य प्रत्युपेक्षते सा संमर्दा । मोसली प्रत्युपेक्ष्यमाणवस्त्रभागेन तिर्यगूर्ध्वमधो वा घट्टनरूपा । प्रस्फोटना प्रकर्षेण धूननं रेणुगुण्ठितस्येव वस्त्रस्येति, विक्षिप्ता-वस्त्रं प्रत्युपेक्ष्य ततोऽन्यत्र यवनिकादौ यत्प्रक्षिपति वस्त्राञ्चलादीनां वा यदूर्ध्वक्षेपणं सा । वेदिका पञ्चप्रकारा तत्रोर्ध्ववेदिका यत्र जानुनोरुपरि हस्तौ कृत्वा प्रत्युपेक्षते, अधोवेदिका जान्वोरधो हस्तौ निवेश्य, तिर्यग्वेदिका जान्वोः पार्श्वतो हस्तौ नीत्वा, द्विधा वेदिका बाह्वोरन्तरे द्वे अपि जानुनी कृत्वा, एकतो वेदिका एकं जानु बाह्वोरन्तरे कृत्वा, इति । उक्तविपरीतप्रत्युपेक्षण**माहाप्रमादेति,** वस्त्रमात्मा वा न नर्त्तितः-न नृत्यवदिव कृतं यत्र तदनर्त्तितम्, तत्र वस्त्रं नर्त्तयति आत्मानञ्च, वस्त्रं न नर्त्तयत्यात्मानन्तु नर्त्तयति, वस्त्रं नर्त्तयति नात्मानम्, न वस्त्रं नर्त्तयति न वाऽऽत्मानमिति चत्वारो भङ्गाः । वस्त्रं शरीरं वा न चलितं कृतं यत्र तदचलितमत्रापि चत्वारो भङ्गाः । न विद्यतेऽनुबन्धः सातत्यप्रस्फोटकादीनां यत्रासावननुबन्धिनी । न विद्यते उक्तलक्षणा मोसली यत्रासावमोसली । वस्त्रे प्रसारिते सति चक्षुषा निरूप्य तदर्वाग्भागं तत्परावर्त्य निरूप्य च त्रयः प्रस्फोटकाः कर्त्तव्याः, तथा तत्परावृत्त्य चक्षुषा निरूप्य च पुनरपरे त्रयः प्रस्फोटका एवमेते षट्, तथा नवखोटकाः ते च त्रयस्त्रयः प्रमार्जनानां क्रमेण त्रयेण त्रयेणान्तरिताः कार्या इति पदद्वयेनापि पञ्चमी अप्रमादप्रत्युपेक्षणा, तयोः सदृशत्वात् । तथा पाणे-हस्तस्योपरि प्राणानां-प्राणिनां कुन्थ्वादीनां विशोधना-प्रमार्जना प्रत्युपेक्ष्यमाणवस्त्रेणैव नवैव वाराः कार्या इति ॥ १७५ ॥

तप आश्रयेणाह—

**अनशनावमोदरिकाभिक्षाचर्यारसपरित्यागकायक्लेशप्रतिसंलीनतारूपं बाह्यं तपः प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायध्यानव्युत्सर्गलक्षणमाभ्यन्तरम् ॥ १७६ ॥**

**अनशनेति,** आहारत्यागोऽनशनम्, इत्वरं यावत्कथिकञ्च, इत्वरं चतुर्थादि षण्मासान्तमिदं तीर्थमाश्रित्य । यावत्कथिकं त्वाजन्मभावि त्रिधा-पादपोपगमनेङ्गितमरणभक्तपरिज्ञाभेदात् । ऊनोदरकरणमवमोदरिका सा च द्रव्यत उपकरणभक्तपानविषया, भावतः क्रोधादित्यागः । भिक्षाचरणं भिक्षाचर्या सैव तपो निर्जराङ्गत्वादनशनवत्, विचित्राभिग्रहयुक्तत्वेन वृत्तिसंक्षेपरूपा वा सा, भिक्षा-

चर्यागा द्रव्यादिविषयतया चतुर्विधा अभिग्रहा, अलेपकार्यावेव द्रव्यं ग्रहीष्य इति द्रव्यतः, परग्रामगृहपञ्चकादिलब्धं द्रव्यं ग्रहीष्य इति क्षेत्रत, पूर्वाह्णादाविति कालतः, गानादिप्रवृत्ताल्लप्स्यमिति भावत । क्षीरादीना परित्यागो रसपरित्याग । शरीरक्लेशन कायक्लेश स च वीरासनादिरनेकधा । गुप्तता प्रतिसलीनता, सा चेन्द्रियकषाययोगविषया विविक्तशयनासनता वा बाह्य तप, आसेव्यमानस्यास्य लौकिकैरपि तपस्तया ज्ञायमानत्वात्, प्रायो बहिश्शरीरस्य तापकत्वाद्वा । आभ्यन्तरत्वञ्च तपसो लौकिकैरनभिलक्ष्यत्वात् तत्त्वान्तरीयैश्च परमार्थतोऽनासेव्यमानत्वात् मोक्षप्राप्त्यन्तरङ्गत्वाच्च, प्रायश्चित्तमालोचनादि, विनयो ज्ञानादिभेदः, वैयावृत्त्यं धर्मसाधनार्थमन्नादिदानम्, स्वाध्यायो वाचनादिः, ध्यानमेकाग्रता–चित्तनिरोध, व्युत्सर्ग परित्यागः, स च द्रव्यतो गणशरीरोपध्याहारविषयः, भावतः क्रोधादिविषय ॥ १७६ ॥

सद्ध्यानामनपायत साधुना भिक्षाचर्या कार्येति पोढा ता दर्शयति—

## पेटार्धपेटा गोमूत्रिका पतङ्गवीथिका शङ्खवृत्ता गत्वाप्रत्यागता च गोचरचर्या ॥ १७७ ॥

पेटेति, गोश्चरो गोचरस्तद्वच्चर्या गोचरचर्या, यथा गोरुच्चनीचतृणेष्वविशेषेण चरणं प्रवर्तते तथा यत्साधोरुत्कृष्टमध्यमनीचमध्यमकुलेषु धर्मसाधनदेहपरिपालनाय भिक्षार्थं चरणं सा गोचरचर्या, इयमेकस्वरूपाऽप्यभिग्रहविशेषात् षोढा, तत्र प्रथमा पेटा–वंशदलमय वस्त्रादिस्थानं जनप्रतीतम्, सा च चतुरस्रा भवति, ततश्च साधुभिरभिग्रहविशेषाद्यस्यां चर्यायां ग्रामादिक्षेत्रं पेटावच्चतुरस्रं विभजन् विहरति सा पेटेत्युच्यते, एवमर्द्धपेटापि । गोमूत्रं गोमूत्रिका तद्वद्या सा, इयं हि परस्पराभिमुखगृहपङ्क्त्योरेकस्या गत्वा पुनरितरस्या पुनस्तस्यामेवेत्येव क्रमेण भावनीया । पतङ्गस्य शलभस्य वीथिकामार्गस्तद्वद्या सा, पतङ्गगतिर्ह्यनियतक्रमा भवति, एवं याऽनाश्रितक्रमा सा तथा । शङ्खवत्–शम्बूकवद्वृत्ता सा शङ्खवृत्ता, द्विविधा सा, यस्यां क्षेत्रबहिर्भागात् शङ्खवृत्तत्वगत्याऽटन् क्षेत्रमध्यभागमायाति साऽभ्यन्तरशङ्खा, यस्यां तु मध्यभागाद्बहिर्याति सा बहिः शङ्खा । उपाश्रयान्निर्गत एकस्यां गृहपङ्क्तौ भिक्षमाणः क्षेत्रपर्यन्तं गत्वा प्रत्यागच्छन् पुनर्द्वितीयायां गृहपङ्क्तौ यस्यां भिक्षते सा गत्वाप्रत्यागतेति ॥ १७७ ॥

साधोर्यानि वचनानि वक्तुं न कल्पन्ते तान्याह—

## अलीकहीलितखिंसितपरुषागारस्थितव्युपशमितोदीरणवचनानि निर्ग्रन्थस्याकल्प्यानि ॥ १७८ ॥

अलीकेति, प्रचलायसे किं दिवेत्यादिप्रश्ने न प्रचलाये इत्यादि अलीकवचनम्, सासूयं वचनं हीलितवचनम् यथा गणिन्! वाचक! ज्येष्ठार्येत्यादि । खिंसितं जन्मकर्माद्युद्घट्टनता, परुषं यथा कौशिक इत्यादि यथा दुष्ट शैक्षेत्यादि । गृहिणा वचनमगारस्थितवचनं यथा पुत्र, मामक, भागिनेयेत्यादि । व्युपशमितस्य–उपशमितस्य पुनरुदीरणमिति ॥ १७८ ॥

अवचनेषु प्रायश्चित्तप्रस्तारो भवतीति तानाह—

**प्राणातिपातमृषावादादत्तादानाविरत्यपुरुषदासवादिना कल्पप्रस्ताराः ॥ १७९ ॥**

**प्राणातिपातेति,** प्राणातिपातस्य वदनशील, प्राणातिपातस्य वाच वदति साधौ प्रायश्चित्तस्य प्रस्तारो भवतीत्येक। यथाऽन्यजनविनाशितदर्दुरे न्यस्तपाद भिक्षुमुपलभ्य क्षुल्लक आह—साधो! दर्दुरो भवता मारित इति, भिक्षुराह—नैवम्, क्षुल्लक आह—द्वितीयमपि व्रत ते नास्ति, ततः क्षुल्लको भिक्षाचर्यातो निवृत्त्याचार्यसमीपमागच्छतीत्येक प्रायश्चित्तस्थानम्, ततः साधयति यथा तेन दर्दुरो मारित इति प्रायश्चित्तान्तरम्, ततोऽभ्यारयावत्साधुराचार्येणोक्त—यथा दर्दुरो भवता मारित, असावाह—नैवमिह क्षुल्लकस्य प्रायश्चित्तान्तरम्, पुन क्षुल्लक आह—पुनरप्यपलपसीति, भिक्षुराह—गृहस्था पृच्छयन्तामिति, वृषभा गत्वा पृच्छन्तीति प्रायश्चित्तान्तरमित्येव योऽभ्यारयाति तस्य मृषावाददोष एव, यस्तु सत्यभारित्त निन्हुते तस्य दोषद्वयमिति। मृषावादस्य वदनशील, मृषावाद वदति साधौ प्रायश्चित्त प्रस्तारो भवतीत्यर्थ, तथा हि—कश्चित् सखण्डयामरालत्वात् प्रतिषिद्धौ साधू अन्यत्र गतौ, ततो मुहूर्तान्तरे रत्नाधिकेनोक्तम्—व्रजाम सखण्ड्यामिदानीं भोजनकालो यतस्तत्रेति, लघुर्भणति प्रतिषिद्धोऽह न पुनर्व्रजामि, ततोऽसौ निवृत्त्याचार्यायेदमालोचयति यथा—अय दीनकरुणवचनैर्याचते, प्रतिषिद्धोऽपि च प्रविशत्येषणा प्रेरयतीत्यादि, ततो रत्नाधिकमाचार्यो भणति—साधो! भवानेव करोति? स आह—नैवमित्यादि, पूर्ववत् प्रस्तार। एवमदत्तादानस्य वाद वदति, अत्र भावना—एकत्र गेहे भिक्षा लब्धा सा अवमेन गृहीता यावदसौ भाजन समार्ष्टि तावद्रत्नाधिकेन सखण्डया मोदका लब्धास्तानवमो दृष्ट्वा निवृत्त्याचार्यस्यालोचयति—यथाऽनेनादत्ता मोदका गृहीता इत्यादि, प्रस्तार प्राग्वदिति। एवमविरतिरब्रह्म तद्वाद वार्त्तां वा, अथवा न विद्यते विरतिर्यस्यास्साऽविरति स्त्री, तद्वाद तदासेवाभणनरूपो वा वार्त्ता वदति, तथाहि—अवमो भावयति एष रत्नाधिकतया मा स्खलितादिषु प्रेरयति, ततो रोषादभ्यारयाति स 'ज्येष्ठार्येणाकार्यं सद्य आर्यागृहे कृतमद्य। उपजीवितश्च भदन्त! मयाऽपि सदृष्टकल्पोऽत्र' ॥ इति, प्रस्तारभावना प्राग्वत्। अपुरुषो—नपुसक इत्येव वाद वार्त्तां वा वदति, भावनात्र—आचार्यं प्रत्याह—अय साधुर्नपुसक इति, आचार्य आह—कथ जानासि? स आह—एतन्निजकैरहमुक्तः—किं भवता कल्पते प्रव्राजयितु नपुसकमिति, ममापि किञ्चित्तल्लिङ्गदर्शनाच्छङ्का अस्तीति, प्रस्तारः प्राग्वत्। तथा दासवाद वदति, भावना—कश्चिदाह—दासोऽयम्, आचार्य आह—कथम्? स आह—देहाकाराः कथयन्ति दासत्वमस्येति, प्रस्तार प्राग्वत्, एव षड्विधान् प्रस्तारान् मासगुर्वादिपाराञ्चिकान्तानभ्युपगमत आत्मनि प्रस्तुतान् विधायाभ्याख्यानदायकसाधुरभ्याख्येयार्थस्यासद्भूततयाऽभ्याख्यातासमर्थन कर्तुमशक्नुवन् स्वयमपि प्राणातिपातादिकर्तुरेव स्थान प्राप्तः प्राणातिपातादिकारीव दण्डनीयः स्यादिति ॥ १७९ ॥

अथायुर्बन्धप्रकारानाह—

**जातिगतिस्थित्यवगाहनाप्रदेशानुभावनामनिधत्तायुष्यायुर्बन्धाः ॥ १८० ॥**

**जातीति,** जातिरेकेन्द्रियजात्यादि पञ्चधा स एव नामकर्मण उत्तरप्रकृतिविशेषोजीवपरिणामो वा, जातिनाम्ना सह निधत्त–निषिक्त यदायुस्तज्जातिनामनिधत्तायु, निषेकश्च कर्मपुद्गलाना प्रतिसमयमनुभवनरचना। एव गतिर्नारकादिका चतुर्धा शेष पूर्ववत्, तथा स्थिति यत्स्थातव्य केनचिद्विवक्षितेन भावेन जीवेनायु कर्मणा वा, सैव नाम परिणामो धर्मः स्थितिनाम, तेन विशिष्ट निधत्त यदायुर्दलिकरूप तत्स्थितिनामनिधत्तायु । अथवा जातिनामगतिनामावगाहनानामभिर्जातिगत्यवगाहनाना प्रकृतिमात्र विवक्षितम्, स्थितिप्रदेशानुभागनामभिस्तासामेव स्थित्यादयो विवक्षिता, ते च जात्यादिनामसम्बन्धित्वान्नामकर्मरूपा एवेति नामशब्द सर्वत्र कर्मार्थो घटत इति, स्थितिरूप नामकर्म स्थितिनाम, तेन सह निधत्त यदायुस्तत् स्थितिनामनिधत्तायुरिति। तथा अवगाहते यस्या जीव सोऽवगाहना शरीरमौदारिकादि, तस्या नाम–औदारिकादिशरीरनामकर्मत्यवगाहनानाम, तेन सह यन्निधत्तमायुस्तदवगाहनानामनिधत्तायुरिति । तथा प्रदेशाना–आयु कर्मद्रव्याणा नाम तथाविधा परिणति, तेन सह यन्निधत्तमायुस्तत्प्रदेशनामनिधत्तायु । तथाऽनुभाग आयुर्द्रव्याणामेव विपाक स एव नाम परिणामस्तेन सह निधत्त यदायुस्तदनुभागनामनिधत्तायुरिति । अथ किमर्थं जात्यादिनामकर्मणाऽऽयुर्विशिष्यते, उच्यते, आयुषोऽस्य प्राधान्योपदर्शनार्थम्, यस्मान्नारकाद्यायुरुदये सति जात्यादिनामकर्मणामुदयो भवति नारकादिभवोपग्राहकत्वादायुरेव, एतदुक्तम्भवति नारकायु संवेदनप्रथमसमय एव नारक इत्युच्यते तत्सहचारिणाञ्च पञ्चेन्द्रियजात्यादिनामकर्मणामप्युदय इति। इह चायुर्बन्धस्य षड्विधत्वे उपक्षिप्ते यदायुष षड्विधत्वमुक्त तदायुषो बन्धाव्यतिरेकाद्बद्धस्यैव चायुर्व्यपदेशविषयत्वादिति, षड्विधोऽयमायुर्बन्धो नेरयिकादिवैमानिकान्तानाम्। नेरयिका नियमेन षण्मासावशिष्टायुष्का परभविकायुर्बध्नन्ति, एवमसुरकुमारादिस्तनितकुमारा ता । तथा 'नैरयिकसुरा असख्येयायुषस्तिर्यग्मनुष्या शेषके तु षण्मासे । एव विकला निरुपक्रमायुषस्तिर्यग्मनुष्या आयुष्कस्तृतीयभागे ॥ अवशेषा सोपक्रमास्तृतीयनवमसप्तविंशतितमे भागे। परभवायुर्बध्नन्ति निजभवे सर्वे जीवा ॥ इति ॥ १८० ॥

अथ गणापक्रमकारणानि सप्त प्राह—

**सर्वेषा केषाञ्चिद्वा धर्माणामभिरुचिविचिकित्सादानेभ्य एकाकिविहारप्रतिमामुपसम्पद्य विहाराय च गणापक्रम प्रज्ञप्तः ॥ १८१ ॥**

**सर्वेषामिति,** प्रयोजनभेदेन गणान्निर्गमस्तीर्थकरादिभि प्रज्ञप्तः, तद्यथा–सर्वेषा धर्माणा निर्जराहेतुभूताना श्रुतभेदाना सूत्रार्थोभयविषयाणामपूर्वग्रहणविस्मृतसन्धानपूर्वाधीतपरावर्त्तनरूपाणा क्षपणवैयावृत्त्यरूपाणा चारित्रभेदानाञ्चाभिरुचिश्चिकीर्षा तत्प्रयोजनेनेत्यर्थ स्वगणे बहुश्रुतादिसामग्र्यभावेन स्वगण एतेषामसम्पत्तेः परगणे सम्पत्तेश्च गुरूनापृच्छ्य गच्छान्निर्गच्छेत् । तथा केषाञ्चिदेव श्रुतधर्माणा चारित्रधर्माणा वा चिकीर्षया न तु सर्वेषामिति द्वितीयम्। एव सर्वधर्मविषयसंशयापनोदनाय स्वगणादपक्रमणमिति तृतीयम्, केषाञ्चिद्धर्मविषयसंशयव्यपोहायेति चतुर्थम्, अन्येभ्य सर्वेषा धर्माणा दानाय स्वगणे पात्राभावादिति पञ्चमम्, केषाञ्चिद्धर्माणा दानायेति षष्ठम्, तथैकाकिनो गच्छनिर्गतस्य जिनकल्पिकादितया यो विहारो–विचरण तस्य या प्रतिमा–प्रतिज्ञा तामङ्गीकृत्य विहर्तु-

मिति समस्तम् । इह सर्वत्र सगुरुपूर्वं विसर्जितेनापक्रमितव्यम्, उक्तकारणाभावात् पश्चादिच्छन् परतोऽविसर्जितोऽपि गच्छेन्निष्कारणन्तु नापक्रमणं न विधेयमिति ॥ १८१ ॥

अथ योन्याश्रयेण जीवानाह—

**अण्डजपोतजजरायुजरसजसंस्वेदजसंमूर्च्छिमोद्भिज्जा जीवाः ॥ १८२ ॥**

अण्डजेति, योनिभेदात्सप्तधा जीवाः, तत्राऽण्डजाः पक्षिमत्स्यसर्पादयः पोत-वस्त्रवद् जाताः, पोता इव वा शोधिताः जाताः अजरायुवेष्टिता इत्यर्थः हस्तिवल्गुलीप्रभृतयः, जरायुजा मनुष्यगवादयः, रसे-दीमनस्कादिकार्ये जाता रसजा डोलिकादयः संस्वेदजा यूकादयः, सम्मूर्च्छिमाः कृम्यादयः, उद्भिज्जा भूमिभेदाज्जाताः खञ्जनकादयः । एषां प्रत्येकं गत्यागती सप्तस्वेव भवतः ॥१८२॥

छद्मजीवसाधारणत्वाद्भयस्य तन्निरूपयति—

**इहपरलोकादानाकस्माद्वेदनामरणाश्लोका भयस्थानानि ॥ १८३ ॥**

इहेति, भयं मोहनीयप्रकृतिसमुत्थ आत्मपरिणामः तस्य स्थानान्याश्रयाः, यथा मनुष्यादिकस्य सजातीयादन्यस्मान्मनुष्यादेरेव सकाशाद्भयं तदिहलोकभयम्, इहाधिकृतभीतिमतो जातौ लोकः इहलोकस्तस्माद्भयमिति व्युत्पत्तिः । तथा परस्माद्विजातीयात्तिर्यग्देवादेः सकाशान्मनुष्यादीनां यद्भयं तत्परलोकभयम्, आदानं धनं तस्य चौरादिभ्यो यद्भयं तदादानभयम्, अकस्मादेव बाह्यनिमित्तानपेक्षं गृहादिष्वेव स्थितस्य रात्र्यादौ भयमकस्माद्भयम् वेदना-पीडा तद्भयं वेदनाभयम्, मरणभयं प्रतीतम्, अश्लोकभयं अकीर्तिभयम्, एवं हि क्रियमाणे महदयशो भविष्यतीति तद्भयान्न प्रवर्तत इति ॥ १८३ ॥

छद्मस्थज्ञानोपायानाह—

**प्राणानामतिपातयिता मृषावादिताऽदत्तगृहीता शब्दादीनामास्वादयिता पूजाद्यनुमोदयिता सावद्यप्रतिसेविताऽन्यथाकारी च छद्मस्थः ॥१८४॥**

प्राणानामिति, यतोऽयं प्राणातिपातकर्ताऽसौ छद्मस्थ इत्येव तज्ज्ञानहेतुभूतैः स्थानैः छद्मस्थं जानीयात्, यतः यतोऽयं छद्मस्थः प्राणातिपातनादिति । केवली हि क्षीणचारित्रावरणत्वान्निरतिचारसंयमत्वादप्रतिसेवित्वात् कदाचिदपि प्राणानामतिपातयिता भवतीति, सर्वत्रैव भावना कार्या । तथा मृषावादित्वादत्तग्रहणाच्छब्दस्पर्शरसरूपगन्धानामास्वादनात् परेण स्वस्य क्रियमाणस्य पूजासत्कारादेरनुमोदनात् सावद्यमाधाकर्मादिकं सपापमिदं प्रज्ञाप्य स्वयं तस्यैव प्रतिसेवनादन्यथाऽभिधायान्यथाकरणाच्च छद्मस्थो गम्यत इति । एतान्येव विपर्यस्तानि केवलिगमकानि भवन्तीति ॥१८४॥

केवलिनः प्रायो गोत्रविशेषवन्त एव भवन्तीति मूलगोत्रविभागमाह—

**काश्यपगौतमवत्सकुत्सकौशिकमण्डववाशिष्ठा मूलगोत्राणि ॥ १८५ ॥**

काश्यपेति, तथाविधैकैकपुरुषप्रभवा मनुष्यसन्ताना गोत्राणि, उत्तरगोत्रापेक्षयाऽऽदिभूतानि गोत्राणि मूलगोत्राणि तानि सप्त, यथा काशे भवः काशः रसः स पीतवानिति काश्यपः, तदपत्यानि काश्यपाः, मुनिसुव्रतनेमिवर्जा जिनाश्चक्रवर्त्यादयश्च क्षत्रिया सप्तमगणधरादयो द्विजा जम्बूस्वाम्या-

दयो गृहपतयश्च । गोत्रगोत्रवतोरभेदेनैव निर्देशोऽन्यथा काश्यपं गोत्रमिति वक्तव्यं स्यात् । गोतमस्यापत्यानि गौतमाः क्षत्रियादयो यथा मुनिसुव्रतनेमी जिनौ नारायणपद्मवर्जवासुदेवबलदेवा इन्द्रभूत्यादिगणनाथत्रयं वैरस्वामी च । वत्सस्यापत्यानि वत्साः शय्यम्भवादयः, कुत्सा शिवभूत्यादयः, कौशिका षडुलूकादयः, मण्डोरपत्यानि मण्डवाः । वशिष्ठस्यापत्यानि वाशिष्ठाः षष्ठगणधरार्यसुहस्त्यादयः । एवं काश्यपादीनामवान्तराणि सप्त सप्त गोत्राणि भवन्ति ॥ १८५ ॥

अथ गोत्रविभागो नयविशेषमतादवतीति नयानाह—

**नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूता नयाः ॥ १८६ ॥**

**नैगमेति,** एते मूलनयाः सप्त, उत्तरनयास्तु सप्तशतानि भवन्ति । तथाच सङ्ग्रहश्लोकाः 'शुद्धं द्रव्यं समाश्रित्य सङ्ग्रहस्तदशुद्धितः । नैगमव्यवहारौ स्तः शेषाः पर्यायमाश्रिताः ॥ अन्यदेव हि सामान्यमभिन्नज्ञानकारणम् । विशेषोऽप्यन्य एवेति मन्यते नैगमो नयः ॥ सद्रूपतानतिक्रान्तस्वस्वभावमिदं जगत् । सत्तारूपतया सर्वं सङ्गृह्णन् सङ्ग्रहो मतः ॥ व्यवहारस्तु तामेव प्रतिवस्तु व्यवस्थिताम् । तथैव दृश्यमानत्वाद्व्यवहारयति देहिनः ॥ तत्रर्जुसूत्रनीतिः स्यात् शुद्धपर्यायसंश्रिता । नश्वरस्यैव भावस्य भावात्स्थितिवियोगतः ॥ अतीतानागताकारकालसंस्पर्शवर्जितम् । वर्त्तमानतया सर्वमृजुसूत्रेण सूत्र्यते ॥ विरोधिलिङ्गसंख्यादिभेदाद्भिन्नस्वभावताम् । तस्यैव मन्यमानोऽयं शब्दः प्रत्यवतिष्ठते ॥ तथाविधस्य तस्यापि वस्तुनः क्षणवृत्तिनः । ब्रूते समभिरूढस्तु संज्ञाभेदेन भिन्नताम् ॥ एकस्यापि ध्वनेर्वाच्यं सदा तन्नोपपद्यते । क्रियाभेदेन भिन्नत्वादेवम्भूतोऽभिमन्यते ॥" इति ॥ १८६ ॥

अण्डजादिजीवाः संसारिणस्तेषां संसरणमायुर्भेदे भवतीति तद्दर्शयति—

**अध्यवसायनिमित्ताहारवेदनापराघातस्पर्शश्वासोच्छ्वासा आयुरुपक्रमाः ॥ १८७ ॥**

**अध्यवसायेति,** आयुषो जीवितव्यस्य उपक्रमाः स च सप्तविधनिमित्तप्रापितत्वात्सप्तविधः, तत्राध्यवसायः—रागस्नेहभयात्मकोऽध्यवसायः, निमित्तं—दण्डकशाशस्त्रादीनि, तत्र सत्यायुर्भिद्यते, तथा—भोजनेऽधिके सति, तथा वेदना—नयनादिपीडा, पराघातो गर्भपातादिसमुत्थः, तथा स्पर्शः तथा विषभुजङ्गादिसम्बन्धी, उच्छ्वासनिःश्वासौ निरुद्धावाश्रित्यायुषो भेदः, अयञ्चायुर्भेदः सोपक्रमायुषामेव, नेतरेषाम्, न च तथासति कृतनाशोऽकृताभ्यागमश्च स्यात्, सवत्सरशतमुपनिबद्धस्यायुषोऽपान्तराल एव हि व्यपगमात् कृतनाशः, येन च कर्मणा तद्भिद्यते तस्याकृतस्यैवाभ्यागमः, एवञ्च मोक्षानाश्वासः व्रतचारित्राप्रवृत्त्यादयो दोषाः स्युरिति वाच्यम्, यथाहि वर्षशतभोग्यभक्तमप्यग्निकव्याधितस्याल्पेनापि कालेनोपभुञ्जानस्य न कृतनाशो नाप्यकृताभ्यागमस्तद्वदिहापीति ॥ १८७ ॥

अथ दर्शनभेदानाह—

**सम्यङ्मिथ्यासम्यङ्मिथ्यादर्शनचक्षुरचक्षुरवधिकेवलदर्शनभेदं दर्शनम् ॥ १८८ ॥**

**सम्यगिति,** सम्यग्दर्शन–सम्यक्त्व मिथ्यादर्शन–मिथ्यात्व सम्यग्मिथ्यादर्शन मिश्र, एतत् त्रिविधमपि दर्शनमोहनीयभेदाना क्षयक्षयोपशमोपशमोदयेभ्यो जायते तथाविधरुचिस्वभावञ्च, चक्षुर्दर्शनादि तु दर्शनावरणीयभेदचतुष्टयस्य यथासम्भव क्षयोपशमक्षयाभ्या जायते सामान्यग्रहणस्वभावञ्च, तदेव श्रद्धानसामान्यग्रहणयोर्दर्शनशब्दवाच्यत्वाद्दर्शन सप्तधोक्तमिति ॥ १८८ ॥

अथ विनयभेदानाह—

## ज्ञानदर्शनचारित्रमनोवाक्कायलोकोपचाराश्रयो विनयः ॥ १८९ ॥

**ज्ञानेति,** विनीयतेऽष्टप्रकार कर्मानेनेति विनय., ज्ञानमाभिनिबोधिकादि पञ्चधा तदेव विनयः, तस्य वा विनयो भक्त्यादिकरण ज्ञानविनय , 'भत्ती तह बहुमाणो तद्दिट्ठत्थाण सम्म भावणया । विहि गहणब्भासोऽविय एसो विणओ जिणाभिहिओ ॥' इति । दर्शन सम्यक्त्व तदेव तस्य वा विनयः दर्शनगुणाधिकाना शुश्रूषणाऽनाशातनारूपो दर्शनविनय , 'सुस्सूसणा अणासायणा य विणओ उ दसणे दुविहो । दसणगुणाहिएसु कज्जइ सुस्सूसणाविणओ ॥ सक्कारब्भुट्ठाणे सम्माणा सणअभिग्गहो तह य । आणसमणुप्पयाण कीकम्म अजलिगहो य ॥ इतस्सऽणुगच्छणया ठियस्स तह पज्जुवासणा भणिया । गच्छताणुवयण एसो सुस्सूसणाविणओ ॥' इति, अनुचितक्रियाविनिवृत्तिरनाशातनाविनय , अय पञ्चदशविध 'तित्थगर धम्म आयरिय वायगे थेर कुलगणे सघे । सभोगिय किरियाए मइनाणाईण य तहेव' इति । चारित्रमेव विनयश्चारित्रस्य वा श्रद्धानादिरूपो विनयश्चारित्रविनय 'सामाइयादिचरणस्स सद्दहणया तहेय काएण । संफासण परूवण मह पुरओ भवसत्ताण ॥ इति । मनोवाक्कायविनयास्तु मन प्रभृतीना विनयार्हेषु कुशलप्रवृत्त्यादिः । 'मणवइकाइयविणओ आयरियाईण सव्वकालपि । अकुसलाण निरोहो कुसलाणमुईरण तहय ॥' इति, लोकानामुपचारो व्यवहारः तेन स एव वा विनयो लोकोपचारविनयो लोकोपचारश्च श्रुतार्थिनाऽऽचार्यादिसमीपे आसितव्य पराभिप्रायानुवर्त्तिना श्रुत भाषितोऽहमनेनेति तस्य विनये वर्त्तन भक्तादिनोपचारे कृते प्रसन्ना गुरवः प्रत्युपकरण सूत्रादिदानतः करिष्यन्तीति भक्तादिदाने प्रयतितव्य दुःखार्त्तस्यौषधादिगवेषणमवसरज्ञता सर्वेष्वर्थेष्वानुकूल्यमिति ॥ १८९ ॥

विनयात् कर्मघातो भवति स च समुद्धाते विशिष्टतर इति तत्प्ररूपयति—

## वेदनाकषायमारणान्तिकवैक्रियिकतैजसाहारककेवलिभेदः समुद्धातः ॥ १९० ॥

**वेदनेति,** हनन घात , समित्येकीभावे, उदिति प्राबल्ये, एकीभावेन प्राबल्येन च घातः—निर्जरा समुद्धात , आत्मनो [illegible] यदा ह्यात्मा वेद[illegible] नुभवज्ञानपरिणतो भवति तदा नान्यज्ञानपरिणत इति, प्र[illegible] ? यस्मात्[illegible] दिसमुद्धातपरिणतो बहून् वेदनीयादिकर्मप्रदेशान् [illegible] प्रक्षिप्यानुभूय निर्जरयति, आत्मप्रदेशै सह सश्लि[illegible] भवति यथा—असद्वेद्यकर्माश्रयो वेदनासमुद्धातः,

अन्तर्मुहूर्तशेषायुष्ककर्माश्रयो मारणान्तिकसमुद्घातः, वैकुर्विकतैजसाहारकसमुद्घाताः शरीरनामकर्माश्रयाः, केवलिसमुद्घातस्तु सदसद्वेद्यशुभाशुभनामोच्चनीचैर्गोत्रकर्माश्रयः, तत्र वेदनासमुद्घातसमुद्धत आत्मा वेदनीयकर्मपुद्गलशाटं करोति, कषायसमुद्घातसमुद्धतः कषायपुद्गलशाटं मारणान्तिकसमुद्घातसमुद्धत आयुष्कर्मपुद्गलघातं वैकुर्विकसमुद्घातसमुद्धतस्तु जीवप्रदेशान् शरीराद्बहिर्निष्काश्य शरीरविष्कम्भबाहल्यमात्रमायामतश्च सङ्ख्येयानि योजनानि दण्डं निसृजति निसृज्य च यथास्थूलान् वैक्रियशरीरनामकर्मपुद्गलान् प्राग्बद्धान् शातयति, एवं तैजसाहारकसमुद्घातावपि । केवलिसमुद्घातेन समुद्धतः केवली वेदनीयादिकर्मपुद्गलान् शातयतीति । इहान्त्योऽष्टसामयिकः शेषास्त्वसङ्ख्यातसामयिकाः । मनुष्याणामेव सप्त समुद्घाता भवन्ति ॥ १९० ॥

समुद्घातादीन् भगवदुक्तानन्यथा प्ररूपयन् प्रवचनबाह्यो भवतीति निह्नवानाह—

**बहुरतजीवप्रादेशिकाव्यक्तिकसामुच्छेदिकद्वैक्रियत्रैराशिकाबद्धिकाः प्रवचननिह्नवाः ॥ १९१ ॥**

**बहुरतेति,** प्रवचनमागममन्यथा प्ररूपयन्तीति प्रवचननिह्नवाः, यथा—बहुरता —बहुषु समयेषु रताः दीर्घकालेन द्रव्यमुत्पद्यत इति प्ररूपिणः, एकेन समयेन क्रियाध्यासितरूपेण वस्तुनोऽनुत्पत्तेः प्रभूतसमयेन चोत्पत्तेरिति । जीवप्रादेशिका जीवः प्रदेश एव येषान्ते जीवप्रदेशिकाश्चरमप्रदेशजीवप्ररूपिणः । अव्यक्तमस्फुटं वस्त्वभ्युपगमतो विद्यते येषान्तेऽव्यक्तिकाः संयताद्यवगमे संदिग्धबुद्धयः । समुच्छेदः प्रसूत्यनन्तरं निरन्वयविनाशस्तं वदन्ति इति सामुच्छेदिकाः, क्षणक्षयिकभावप्ररूपकाः । द्वे क्रिये समुदिते वेदितुं येषां ते द्वैक्रियाः, कालाभेदेन क्रियाद्वयानुभवप्ररूपिणः । जीवाजीवनोजीवभेदात्त्रयो राशयः समाहृतास्त्रिराशि तत्प्रयोजनं येषां ते त्रैराशिकाः राशित्रयस्थापकाः । स्पृष्टं जीवेन कर्म न स्कन्धबन्धनबद्धं तदेषामस्तीत्यबद्धिकाः स्पृष्टकर्मविपाकप्ररूपकाः इति ॥ १९१ ॥

अथैकाकिविहारप्रतिमायोग्यमष्टस्थानाश्रयेणाह—

**श्रद्धासत्यमेधाबहुश्रुतशक्तिनिष्कलहधृतिवीर्यसम्पन्न एकाकिविहारप्रतिमायोग्यः ॥ १९२ ॥**

**श्रद्धेति,** एकाकिनो विहारो ग्रामादिचर्या स एव प्रतिमाऽभिग्रह एकाकिविहारप्रतिमा जिनकल्पप्रतिमा मासिक्यादिका वा भिक्षुप्रतिमा तदाश्रयेण ग्रामादिषु चरितुं योग्य इत्यर्थः । श्रद्धा-तत्त्वेषु श्रद्धानमास्तिक्यमित्यर्थः, अनुष्ठानेषु वा निजोऽभिलाषस्तद्वत् सकलनाकिनायकैरप्यचलनीयसम्यक्त्वचारित्रमित्यर्थः । सत्य-सत्यवादित्वं प्रतिज्ञाशूरत्वात् सद्भ्यो हितत्वाद्वा सत्यम्, मेधा-श्रुतग्रहणशक्तिः, बहुश्रुत-प्रचुर आगमः सूत्रतोऽर्थतश्च, तत्रोत्कृष्टतोऽसम्पूर्णदशपूर्वधरः जघन्यतो नवमस्य तृतीयवस्तु, शक्तिः पञ्चविधा तुलना 'तपसा सत्त्वेन सूत्रेणैकत्वेन बलेन च । तुलना पञ्चधा उक्ता जिनकल्पं प्रतिपद्यमानस्य' इति । निष्कलहमल्पाधिकरणम्, धृतिश्चित्तस्वास्थ्यमरतिरत्यनुलोमप्रतिलोमोपसर्गसहत्वं, वीर्यमुत्साहातिरेकः, एवंविधगुणविशिष्टोऽनगारः सर्वप्राणिनां रक्षणक्षमो भवति स त्वेकाकियोग्यः ॥ १९२ ॥

उपर्युक्तगुणाभावे माया भवति तद्भावादनालोचना भवेदित्यत आह—

**कृतवत्ताकुर्वत्ताकरिष्यत्ताऽकीर्त्यवर्णापनयकीर्त्तियशःपरिहाणिभ्योऽतिचारं कृत्वाऽनालोचयति मायी ॥ १९३ ॥**

**कृतवत्तेति,** अहमपराधं कृतवान् कृत्वा च कथं तस्य निन्दादि युज्यते तथा साम्प्रतमपि तमतिचारं करोमीति कीदृश्यनिवृत्तस्यालोचनादिक्रिया ? तथा करिष्याम्यहमिति न युक्तमालोचनादि, तथाऽकीर्त्तिः—एकदिग्गामिन्यप्रसिद्धिः, अवर्णोऽयशः—सर्वदिग्गामिन्यप्रसिद्धिरेतद्द्वयमविद्यमानं मे भविष्यत्यालोचनादौ कृते, तथाऽपनयः पूजासत्कारादेः स्यात् तथा कीर्त्तेः यशसश्च विद्यमानस्य हानिः स्यादित्यतिचारं विधायाऽपि मायावान् नालोचयति—न गुरवे निवेदयति, न मिथ्यादुष्कृतं ददाति नात्मानं गर्हते नातिचारान्निवर्त्तते न चातिचारकलङ्कस्य धावनं शुभभावजलेनापुनःकरणेनाभ्युत्थानं करोति न वा योग्यं प्रायश्चित्तं प्रतिपद्यते । यस्त्वासेवावसर एव मायी नालोचनावसरे स त्वपराधं विधाय जन्मैव गर्हितं सातिचारत्वेन निन्दितत्वात्, देवजन्मापि मम गर्हितं किल्बिषिकादिरूपत्वात्, मनुष्यजन्मापि गर्हितं जात्यैश्वर्यरूपादिरहितत्वात्, न वा य एकमपि बहूनि वा कृत्वा नालोचयति तस्य ज्ञानादिमोक्षमार्गाराधना, यस्त्वालोचनादि विधत्ते तस्यैवाऽऽराधना फलवती, तथाऽऽचार्योपाध्यायस्य मेऽतिशेषं ज्ञानदर्शनं समुत्पद्येत स च मामालोचयेदिति भीत्या विभाव्यालोचनादि करोत्येवेति ॥ १९३ ॥

आचार्यादिसमक्षमालोचना कार्येति तत्समृद्धिमाह—

**आचारश्रुतशरीरवचनवाचनामतिप्रयोगसङ्ग्रहपरिज्ञाविषया गणिसम्पत् ॥ १९४ ॥**

**आचारेति,** समुदायो गुणानां साधूनां वा भूयानतिशयवान् गणः, सोऽस्यास्तीति गणी आचार्यस्तस्य सम्पत्, समृद्धिर्भावरूपा गणिसम्पत्, तत्राचरणमाचारोऽनुष्ठानं स एव सम्पद्विभूतिः, तस्य वा सम्पत् सम्पत्तिः प्राप्तिः आचारसम्पत् सा च चतुर्धा—यथा संयमध्रुवयोगयुक्तता, चरणे नित्यं समाध्युपयुक्ततेत्यर्थः, असम्प्रग्रहः—आत्मनो जात्याद्युत्सेकरूपग्रहवर्जनम्, अनियतवृत्तिः—अनियतविहारः, वृद्धशीलता—वपुर्मनसो निर्विकारता, एवं श्रुतसम्पदपि चतुर्धा यथा—बहुश्रुतता—युगप्रधानागमता, परिचितसूत्रता, विचित्रसूत्रता स्वसमयादिभेदात्, घोषविशुद्धिकरता घोषोदात्तादिविज्ञानादिति शरीरसम्पच्चतुर्धा यथा आरोहपरिणाहयुक्तता—उचितदैर्घ्यविस्तारतेत्यर्थः, अनपत्रपता-अलज्जनीयाङ्गतेत्यर्थः, परिपूर्णेन्द्रियता, स्थिरसंहननता चेति । वचनसम्पच्चतुर्धा यथा-आदेयवचनता मधुरवचनता, अनिश्रितवचनता-मध्यस्थवचनतेत्यर्थः, असन्दिग्धवचनता चेति । वाचनासम्पच्चतुर्धा यथा—विदित्वोद्देशनं, विदित्वा समुद्देशनं पारिणामिकादिकं शिष्यं ज्ञात्वेत्यर्थः । परिनिर्वाप्य वाचना-पूर्वदत्तालापकानधिगमय्य शिष्यं पुनः सूत्रदानमित्यर्थः । अर्थनिर्यापणा-अर्थस्य पूर्वापरसाङ्गत्येन गमनिकेत्यर्थः । मतिसम्पच्चतुर्धा, अवग्रहेहापायधारणाभेदात्, प्रयोगसम्पच्चतुर्धा इह प्रयोगो वादविषयः, तत्रात्मपरि-

ज्ञान यादादिसामर्थ्यविषये, पुरुषपरिज्ञान किंनयोऽयं याथात्विरिति, क्षेत्रपरिज्ञानम्, वस्तुपरिज्ञान यस्त्विह वादकाले राजामात्यादि। सङ्ग्रहपरिज्ञा सङ्ग्रह स्वीकरण तत्र परिज्ञा–ज्ञान सापि चतुर्विधा तद्यथा–बालादियोग्यक्षेत्रविषया, पीठफलकादिविषया यथासमय स्वाध्यायभिक्षादिविषया, यथोचितविनयविषया चेति ॥ १९४ ॥

पुनरपि तस्यैव स्वरूपमालोचनयोग्य तथाऽऽलोचकसाधुस्वरूपमाह—

## आचाराधारव्यवहारज्ञाऽपव्रीडकप्रकार्यपरिश्राविनिर्यापकापायदर्शिनोऽनगारा आलोचनादानयोग्या, जातिकुलविनयज्ञानदर्शनचारित्रसम्पन्नक्षान्तदान्ता अनगारा दोषालोचनार्हा॰ ॥ १९५ ॥

आचारेति, ज्ञानासेवनाभ्यां ज्ञानादिपञ्चविधाचारवानालोचकेनालोच्यमानानामतीचाराणामवधारणावान्, आगमश्रुताज्ञाधारणाजीतलक्षणाना पञ्चाना व्यवहाराणा वेत्ता, यो लज्जया सम्यगनालोचयन्त सर्वं यथा सम्यगालोचयति तथा विधाताऽपव्रीडक, प्रकारी–आलोचिते सति य शुद्धि प्रकर्षेण कारयति स॰, अपरिश्रावी य आलोचकदोषानुपश्रुत्य यस्मै न प्रतिपादयति स, निर्यापक—यस्तथा करोति यथा गुर्वपि प्रायश्चित्त शिष्यो निर्वाहयति स, शिष्यचित्तभङ्गानिर्वाहादीन् दुर्भिक्षदौर्बल्यादिकृतानपायान् पश्यतीत्येव शीलोऽपायदर्शी, सम्यगनालोचनाया दुर्लभबोधिकत्वादीनपायान् शिष्यस्य दर्शयतीति वेति। जातिकुले मातापितृपक्षौ, तत्सम्पन्न प्रायोऽकृत्य न करोति, कृत्वापि पश्चात्तापादालोचयतीति तथाविध, विनयसम्पन्न सुखेनैवालोचयति, ज्ञानसम्पन्नो दोषविपाक प्रायश्चित्त वाऽवगच्छति, दर्शनसम्पन्न शुद्धोऽहमित्येव श्रद्धत्ते चारित्रसम्पन्नो भूयस्तमपराध न करोति सम्यगालोचयति प्रायश्चित्तञ्च निर्वाहयति क्षान्त परुष भणितोऽप्याचार्यैर्न कुप्यति दान्त प्रायश्चित्त दत्त वोढु समर्थो भवतीति ॥ १९५ ॥

आलोचना च मदाभावे स्याच्च श्रुतमदोऽन्तर्गत स च प्रायो वादिना भवतीति वादिविशेषानाह—

## एकत्वानेकत्वमितनिर्मितत्वसुखसमुच्छेदनित्यत्वपरलोकाभाववादिनोऽक्रियावादिनः ॥ १९६ ॥

एकत्वेति, सकलपदार्थसार्थव्यापिन्यस्तीत्येवरूपा क्रिया, सैव कुत्सिता अयथावस्तुविषयत्वादक्रिया वा यदन्तीत्येवशीला अक्रियावादिनः, यथावस्थित हि वस्त्वनेकान्तात्मक तन्नास्त्येकान्तात्मकमेव चास्तीति प्रतिपत्तिमन्त इत्यर्थ, एववादितायैते परलोकसाधकक्रियामपि परमार्थतो न वदन्ति, तन्मतवस्तुसत्त्वे हि परलोकसाधकक्रियाया अयोगादक्रियावादिन एव ते। तत्र एक एवात्मादिरयमित्येवमदतीत्येकत्ववादी, उक्तञ्च तन्मतानुसारिभिः ‘एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥’ इति, अपरस्त्वात्मैवास्ति नान्यदिति प्रतिपन्न, तदुक्त ‘पुरुष एवेद सर्वं यद्भूत यच्च भाव्य’मित्यादि, तथा ‘नित्यज्ञानविवर्तोऽय क्षितितेजोजलादिकः। आत्मा तदात्मकश्चेति सङ्गिरन्ते परे पुन.॥’ इति, शब्दाद्वैतवादी तु सर्वं शब्दात्मकमिदमित्येकत्व प्रतिपन्न, उक्तञ्च

नादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरं । विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥' इति, अथवा सामान्यवादी सर्वमेवैकं प्रतिपद्यते सामान्यस्यैकत्वादित्येवमनेकधैकत्ववादी, अक्रियावादिता चैषां द्वन्यस्याभावप्रतिपादनात्, तत्तद्वादानां युक्त्यनुपपन्नानामभ्युपगमाच्च, एवमग्रेऽपि । तथा सत्यपि यश्चिद्वेकत्वे भावानां सर्वथाऽनेकत्वं वदतीत्यनेकत्ववादी, यथा परस्परविलक्षणा एव भावा, तथैव प्रतीयमाणत्वात्, यथा रूपं रूपतयेति, अभेदे तु भावानां जीवाजीवबद्धमुक्तसुखितदुःखितादीनामेक- त्वप्रसङ्गाद्दीक्षादिवैयर्थ्यमिति । किञ्च सामान्यमङ्गीकृत्यैकत्वं विवक्षितं परैः, सामान्यञ्च भेदेभ्यो भिन्नाभिन्नतया विचार्यमाणं न घटते, एवमवयवेभ्योऽवयवी धर्मेभ्यश्च धर्मीत्येवमनेकत्ववादी, अस्या- प्यक्रियावादित्वं सामान्यादिरूपतयैकत्वे सत्यपि भावानां सामान्यादिनिषेधेन तन्निषेधनादिति, न च सामान्यं सर्वथा नास्ति, अभिन्नज्ञानाभिधानाभावप्रसङ्गात्, सर्वथा वैलक्षण्ये चैकपरमाणुमन्तरेण सर्वेषामपरमाणुत्वप्रसङ्गात् तथाऽवयविनं धर्मिणञ्च विना न प्रतिनियतावयवधर्मव्यवस्था स्यात्, भेदा- भेदविकल्पदूषणञ्च कथञ्चिद्वादाभ्युपगमेन निरवकाशमिति । जीवानामनन्तानन्तत्वेऽपि परिमितान् यो वदति स मितवादी, 'उत्सन्नभव्यक भविष्यति भुवनमि'त्यभ्युपगमात् । अङ्गुष्ठपर्वमात्रं श्यामाक- तन्दुलमात्रं वा मितं वदति न त्वपरिमितमसङ्ख्येयप्रदेशात्मकतया, अङ्गुलासङ्ख्येयभागादारभ्य यावल्लोक- मापूरयतीत्येवमनियतप्रमाणतया वा, अथवा मितं सप्तद्वीपसमुद्रात्मकतया लोकं वदत्यन्यथाभूतम- पीति मितवादीति, तस्याप्यक्रियावादित्वं वस्तुतत्त्वनिषेधनादेवेति । निर्मितमीश्वरब्रह्मपुरुषादिना इदं लोकं वदतीति निर्मितवादी, प्रमाणयति च–बुद्धिमत्कारणकृतं भुवनं संस्थानवत्त्वात्, घटादिवदित्यादि, अक्रियावादित्वं चास्य 'न कदाचिदनीदृशं जगदि'ति वचनादकृत्रिमभुवनस्याकृत्रिमतानिषेधात्, नचेश्व- रादिकर्तृकत्वं जगतोऽस्ति, कुलालादिकारकवैयर्थ्यप्रसङ्गात्, कुलालादिवदीश्वरादेर्बुद्धिमत्कारणान्तरानी- श्वरत्वप्रसङ्गात्, ईश्वरस्याशरीरतया कारणत्वासम्भवात् सशरीरत्वे तच्छरीरस्यापि सशरीरकर्त्रन्तरेणा- सम्भवात्तथाविधस्य कल्पनेऽनवस्थाप्रसङ्गाच्च । तथा सुखस्यैव वादी, सुखमेव ह्यनुशीलनीयं सुखार्थिना न तु दुःखरूपं तपोनियमब्रह्मचर्यादि, कारणानुरूपत्वात् कार्यस्य, न हि शुक्लैः तन्तुभिरारब्धो रक्तः पटो भवति, अपि तु शुक्ल एव, तथा सुखासेवनात्सुखमेवेति, अक्रियावादिता चास्य संयमतपसोः पारमा- र्थिकप्रशमसुखरूपयोर्दुःखत्वेनाभ्युपगमात्, कारणानुरूपकार्याभ्युपगमस्य च विषयसुखादनतुरूपस्य निर्वाणस्याभ्युपगमेन बाधितत्वादिति । समुच्छेदवादी-उत्पत्त्यनन्तरमेव निरन्वयविनाशितावादी क्षणि- कवादीत्यर्थः नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाकारित्वासम्भवेनार्थक्रियाकारित्वलक्षणसत्त्वस्य तत्रा- सम्भवादिति, अक्रियावादित्वञ्चास्य क्षणिकत्वाभ्युपगमे परलोकाभावप्रसङ्गात् फलार्थिनाञ्च क्रियास्व- प्रवृत्तेः, सकलक्रियासु प्रवर्त्तकस्यासङ्ख्येयसमयसमन्यनेकवर्णोल्लेखवतो विकल्पस्य प्रतिसमयक्षयित्वे एका- भिसन्धिमत्त्वाभावात् सकलव्यवहारोच्छेदाच्च । एवं नित्यत्ववादी–नित्यो हि लोकः, आविर्भावतिरो- भावमात्रत्वादुत्पादविनाशयोः, असतोऽनुत्पादाच्छशविषाणस्येव, सतश्चाविनाशाद्धटवत्, न हि सर्वथा घटो विनष्टः, कपालाद्यवस्थाभिस्तस्य परिणतत्वात्, तासाञ्चापारमार्थिकत्वान्मृत्सामान्यस्यैव पारमा- र्थिकत्वात्तस्य चाविनष्टत्वादिति, अक्रियावादिता चास्यैकान्तनित्यस्य स्थिरैकरूपतया सकलक्रियाविलो- पाभ्युपगमादिति । एवं परलोकाभाववादी तु न विद्यते मोक्षो जन्मान्तरं वा, आत्मा हि नास्ति

प्रत्यक्षादिप्रमाणाविषयत्वात्तदभावाच्च न पुण्यपापलक्षणं कर्म तदभावान्न परलोको मोक्षो वेति, अक्रियावादिता चास्य प्रत्यक्षाद्यप्रवृत्त्याऽस्मादीनां निराकर्तुमशक्यत्वात्, सत्यपि वस्तुनि प्रमाणाप्रवृत्तिदर्शनात्, आगमविशेषसिद्धत्वाच्च, नापि चैतन्यमुपलभ्यमानं भूतधर्मो भवितुमर्हति, विवक्षितभूताभावेऽपि जातिस्मरणादिदर्शनादिति, मतानामेषामष्टानां विस्तरतो निरूपणं प्रतिविधानञ्च तत्त्वन्यायविभाकरमस्मत्कृततत्त्वसोपानादौ द्रष्टव्यम् ॥ १९६ ॥

एते वादिनः शास्त्रपरिकर्मितमतयो भवन्ति, शास्त्रं च वचनविभक्तियोगेनार्थप्रतिपादकमिति वचनविभक्तीराह—

## प्रथमाद्योऽष्टौ वचनविभक्तयः ॥ १९७ ॥

**प्रथमाद्य** इति, एकत्वद्वित्वबहुत्वलक्षणोऽर्थ उच्यते यैस्तानि वचनानि, विभज्यते कर्तृत्वकर्मत्वादिलक्षणोऽर्थो यया सा विभक्तिः, वचनात्मिका विभक्तिर्वचनविभक्तिः सु औ जसित्यादि, कर्मादिकारकशक्तिभिरधिकस्य लिङ्गार्थमात्रस्य यत्र प्रतिपादनं तत्र प्रथमा भवति, यथा स वा अयं वाऽऽस्ते अहं वा आसे इत्यादि । कर्तुः क्रियया व्याप्तुमिष्यमाणं कर्म तत्र द्वितीया यथा भण इमं श्लोकं घटं ददाति ग्रामं यातीत्यादि । क्रियां प्रति साधकतमं करणं, तत्र तृतीया यथा—दानेन लभते धनमित्यादि । यस्मै सत्कृत्य प्रदाप्यते यस्मै वा सम्प्रदीयते स सम्प्रदानं, तत्र चतुर्थी यथा—भिक्षवे भिक्षां दापयति ददाति चेत्यादि । सम्प्रदानस्योपलक्षणत्वान्नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च चतुर्थी नमः शास्त्राय इत्यादि । अपादीयते अपायतो—विश्लेषत आ—मर्यादया दीयते खण्ड्यते आदीयते—गृह्यते वा यस्मात्तदपादानं अवधिमात्रमित्यर्थः, तत्र पञ्चमी यथा—अपनय गृहाद्धान्यं कुशूलाद्गृहाणेति । स्वस्वामिसम्बन्धे षष्ठी भवति, यथा वस्त्राय भृत्य इत्यादि । सन्निधीयते क्रियाऽस्मिन्निति सन्निधानमाधारस्तत्र सप्तमी विषयोपलक्षणत्वाच्चास्य काले भावे च क्रियाविशेषणेऽपि, तत्र सन्निधाने यथा वट्टकमिह पात्रे, वसन्तच्छदनमिह शरदि पुष्यति, अत्र पुष्यनक्रिया शरदा विशेषिता, तत्कुटुम्बकमिह गवि दुह्यमानायां गतम्, अत्र गमनक्रिया गोदोहनभावेन विशेषितेति । आमन्त्रणे प्रथमा, इयं विभक्तिरामन्त्रणलक्षणार्थस्य कर्मकरणादियलिङ्गार्थमात्रातिरिक्तस्य प्रतिपादकत्वेनाष्टमी विभक्तिरुक्ता यथा हे युवन्नित्यादि ॥ १९७ ॥

विशिष्टवचनरचनायाः शास्त्रत्वात्तद्विशेषायुर्वेदविभागमाह—

## कुमारभृत्यदेहचिकित्साशालाक्यशल्यहत्याजाङ्गुलिभूतविद्याक्षारतन्त्ररसायनतन्त्रभेदा आयुर्वेदाः ॥ १९८ ॥

**कुमारभृत्येति,** आयुर्जीवितं तद्विदन्ति रक्षितुमनुभवन्ति चोपक्रमरक्षणे विदन्ति वा लभन्ते यथाकालं तेन तस्मात्तस्मिन् वेत्यायुर्वेदश्चिकित्साशास्त्रं तदष्टविधम्, यथा कुमारभृत्य—बालकानां पोषणे योग्यं तद्धि तन्त्रं कुमारभरणक्षीरदोषसंशोधनाय दुष्टस्तन्यनिमित्तानां व्याधीनामुपशमनार्थञ्च भवति । देहचिकित्सा ज्वरादिरोगग्रस्तस्य देहस्य चिकित्साप्रतिपादकं तन्त्रम्, तद्धि मध्याङ्गसमाश्रितानां ज्वरातीसाररक्तशोफोन्मादप्रमेहकुष्ठादीनां शमनार्थमिति । शलाकाया कर्म शालाक्यं तत्प्रतिपादकं तन्त्रमेतद्धि ऊर्ध्वजत्रुगतानां रोगाणां श्रवणवदननयनघ्राणादिसंश्रितानामुपशमनार्थमिति । शल्यस्योद्धार

शल्यहत्या, तत्प्रतिपादक तन्त्रमपि तथा, तत्तृणकाष्ठपाषाणपांसुलोहलोष्टास्थिनखप्रायाङ्गान्तर्गतशल्योद्धरणार्थम्। जाङ्गुलीति विषविघाततन्त्रम्, तद्धि सर्पकीटलूतादष्टविषनाशनार्थं विविधविषसंयोगोपशमनार्थञ्च। भूतादीनां निग्रहार्थं विद्या भूतविद्या सा हि देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिकरणादिग्रहोपशमनार्था, क्षरणं क्षारः शुक्रस्य, तद्विषयं तन्त्रं क्षारतन्त्रमिदं हि सुश्रुतादिषु वाजीकरणतन्त्रमुच्यते, अवाजिनो वाजीकरणं रेतोवृद्ध्याऽश्वस्येव करणमित्यनयोः शब्दार्थः सम एवेति, तत्तन्त्रं ह्यल्पक्षीणविशुष्करेतसामाप्यायनप्रसादोपजननिमित्तमिति। रसोऽमृतरसस्तस्य प्राप्तिः रसायनम्, तद्धि वयःस्थापनमायुर्मेधाकरणं रोगापहरणसमर्थञ्च तत्प्रतिपादकं शास्त्रं रसायनतन्त्रमिति ॥ १९८ ॥

आयुर्वेदस्तु सर्वजीवोपयोगीति जीवाश्रयेणाह—

**प्रथमाप्रथमसमयभेदान्नैरयिकादयो जीवाः सांसारिकाः। जीवास्तु नैरयिकाः स्त्रीपुंसतिर्यग्योनिकमनुष्यदेवाः सिद्धाश्च, मतिश्रुतावधिमनःपर्यवकेवलज्ञानिनो मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानवन्तश्च वा ॥ १९९ ॥**

प्रथमेति, स्पष्टम्, प्रथमसमयनैरयिकाः नरकायुःप्रथमसमयोदये, इतरे त्वितरस्मिन्नेव तिर्यग्मनुष्यदेवा अपि, नैरयिकानामेकवेदवत्त्वादेकभेदः शेषसंसारिणां वेदद्वयवत्त्वाद्विरूपत्वं सिद्धास्त्वेक एव यद्यपि मनुष्याणां तृतीयवेदसत्त्वेऽपि नारकान्तर्गतनपुंसकवेदसमाविष्टत्वान्न पृथग्गृहीतोऽल्पत्वेनाविवक्षितत्वाद्वा ॥ १९९ ॥

ज्ञानिनां प्रक्रमात्संयमिन आह—

**प्रथमाप्रथमसमयाभ्यां सूक्ष्मसम्परायसरागबादरसंपरायोपशान्तकषायवीतरागक्षीणकषायवीतरागसंयमभेदाः संयमिनः ॥ २०० ॥**

प्रथमेति, संयमश्चारित्रं सरागवीतरागभेदाद्विप्रकारम्, सरागो द्विधा सूक्ष्मबादरकषायभेदात्, पुनस्तौ प्रथमाप्रथमसमयभेदाद्द्विधा, एवं चतुर्धा सरागसंयमः, तत्र प्रथमः समयः प्राप्तो यस्य स प्रथमसमयः सूक्ष्मः किट्टीकृतः सम्परायः कषायः सञ्ज्वलनलोभलक्षणो वेद्यमानो यस्मिन् स, तथा सह रागेण—अभिष्वङ्गलक्षणेन यः स सरागः, स एव संयमः, तथा च कर्मधारये प्रथमसमयसूक्ष्मसम्परायसरागसंयम इत्येकः, द्वितीयोऽप्रथमसमयविशेषित इति। बादरा अकिट्टीकृताः सम्परायाः सञ्ज्वलनक्रोधादयो यस्मिन् स बादरसम्पराय इति। वीतरागसंयमस्तु श्रेणिद्वयाश्रयणाद्द्विविधः, प्रथमाप्रथमसमयभेदेनैकैको द्विविध इति चतुर्विधः, सामस्त्येन चाष्टधेति ॥ २०० ॥

संयमसिद्धिश्च शुभानुष्ठानेष्वप्रमादित्वाद्भवतीत्यप्रमादस्थानान्याह—

**अश्रुतधर्मश्रवणाय श्रुतधर्मपरिपाकाय संयमेनपापकर्मविशोधनाय प्राक्कर्मणां तपसा निर्जरायै परिजनसङ्ग्रहाय शैक्षस्याचारगोचरग्रहणतायै ग्लानस्य वैयावृत्यकरणायाधिकरणस्योपशमनाय च पराक्रमो विधेयः ॥२०१॥**

**अश्रुतेति,** अनाकर्णितानां श्रुतधर्माणां सम्यक् श्रवणायाभ्युत्थातव्यं न प्रमादः कार्यः, श्रुतानामविच्युतिस्मृतिवासनाविषयीकरणाय पापानां कर्मणां संयमेन विशुद्धिकरणाय, प्राचीनानाञ्च कर्मणां तपसा विशोधनाय, अनाश्रितस्य शिष्यवर्गस्य संग्रहणायाभिनवप्रव्रजितस्याचारे ज्ञानादिविषये गोचरश्च भिक्षाचर्यां वो ग्राहयितुं ग्लानस्याग्लानभावेन वैयावृत्त्यकरणायाधिकरणस्य विरोधस्योपशमनाय चाभ्युत्थेयम् ॥ २०१ ॥

एवगुणविशेषविशिष्टोऽप्रमादी कश्चित्केवलीभूत्वा वेदनीयादिकर्मस्थितीनामायुष्कस्थित्या समीकरणाय केवलिसमुद्घातं करोतीति तमाह—

**दण्डकपाटमन्थानलोकपूरणकरणलोकपूरणमन्थानकपाटदण्डोपसंहरणान्यष्टसामयिकानि केवलिसमुद्घातः ॥ २०२ ॥**

**दण्डेति,** समुद्घातं आरभमाणः प्रथममेवान्तर्मौहूर्तिकमुदीरणावलिकायां कर्मप्रक्षेपव्यापाररूपमावर्जीकरणं प्रथममेवाभ्येति ततः समुद्घातं गच्छति तत्र च प्रथमसमये स्वदेहविष्कम्भमूर्ध्वमधश्चाऽऽयतमुभयतोऽपि लोकान्तगामिनं जीवप्रदेशसङ्घातं दण्डमिव दण्डं केवली ज्ञानाभोगतः करोति, द्वितीये तु तमेव दण्डं पूर्वापरदिग्द्वयप्रसारणात् पार्श्वतो लोकान्तगामि कपाटमिव कपाटं करोति, तृतीये तदेव दक्षिणोत्तरदिग्द्वये प्रसारणान्मन्थानं लोकान्तप्रापिणं करोति, एवं च लोकस्य प्रायो बहु पूरितं भवति, मन्थान्तराण्यपूरितानि भवन्ति, अनुश्रेणिगमनाज्जीवप्रदेशानामिति, चतुर्थे तु समये मन्थान्तराण्यपि सकललोकनिष्कुटैः सह पूरयति, ततश्च सकलो लोकः पूरितो भवति, तदनन्तरमेव पञ्चमे समये यथोक्तप्रतिलोमं मन्थान्तराणि संहरति-जीवप्रदेशान् सकर्मकान् सङ्कोचयति, षष्ठे मन्थानमुपसंहरति, घनतरसङ्कोचात् सप्तमे कपाटमुपसंहरति दण्डात्मनि सङ्कोचात्, अष्टमे दण्डमुपसंहृत्य शरीरस्थ एव भवति तत्र च "औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्टः । मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु ॥ कार्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये च । समयत्रये च तस्मिन् भवत्यनाहारको नियमात् ॥" इति, वाङ्मनसोस्त्वप्रयोग एव, प्रयोजनाभावादिति, इत्येवमष्टसामयिकः केवलिसमुद्घातो न शेष इति ॥ २०२ ॥

केवली च ब्रह्मचारिविशेष एवेति ब्रह्मचर्यप्रतिपादकतयाध्ययनान्याचारप्रथमश्रुतस्कन्धरूपाण्याचष्टे—

**शस्त्रपरिज्ञालोकविजयशीतोष्णीयसम्यक्त्वलोकसारधूतविमोहोपधानश्रुतमहापरिज्ञा नव ब्रह्मचर्याणि ॥ २०३ ॥**

**शस्त्रपरिज्ञेति,** शस्त्रं द्रव्यभावभेदादनेकविधम्, जीवविघातनिमित्तम्, तस्य परिज्ञा—ज्ञानपूर्वकं प्रत्याख्यानं यत्र वर्ण्यते सा शस्त्रपरिज्ञा, रागद्वेषलक्षणस्य भावलोकस्य विजयो निराकरणं यत्र स लोकविजयः, अनुकूलान् परीषहान् शीतान् प्रतिकूलांश्चोष्णानाश्रित्य यत्कृतं तच्छीतोष्णीयम्, सम्यक्त्वमचलं विधेयं न तापसादीनां कष्टतपःसेविनामष्टगुणैश्वर्यमुद्वीक्ष्य दृष्टिमोहः कार्य इति प्रतिपा-

दनपरं सम्यक्त्वम्, अज्ञानाद्यसारत्यागेन लोकसाररत्नत्रयोद्युक्तेन भाव्यमित्येवमर्थं लोकसारः, धूत सङ्गाना त्यजन तत्प्रतिपादकं धूतम्, मोहसमुत्थेषु परीषहोपसर्गेषु प्रादुर्भूतेषु विमोहो भवेत्तान् सम्यक् सहेतेति यत्राभिधीयते स विमोहः, महावीरसेवितस्योपधानस्य तपसः प्रतिपादकं ध्रुवमुपधानश्रुतमिति, महती परिज्ञा—अन्तक्रियालक्षणा सम्यग्विधेयेति प्रतिपादनपरं महापरिज्ञेति नव ब्रह्मचर्याणि, ब्रह्म कुशलानुष्ठान तच्च तच्चर्यमासेव्यञ्च ब्रह्मचर्यं—संयमं, तत्प्रतिपादकाध्ययनानि आचारप्रथमश्रुतस्कन्धप्रतिबद्धानि ब्रह्मचर्याणीति ॥ २०३ ॥

ब्रह्मचर्यशब्देन मैथुनविरतिरप्यभिधीयत इति तद्गुप्तीराह—

**विविक्तस्थानसेवनस्त्रीकथापरिवर्जनस्त्रीनिषद्यानासेवनमनोहरेन्द्रियाचिन्तनप्रणीतरसाभोजनातिमात्राहारवर्जनपूर्वक्रीडितास्मरणशब्दाद्यननुपातित्वसातसुखाप्रतिबद्धत्वानि तद्गुप्तयः ॥ २०४ ॥**

विविक्तेति, स्त्रीपशुपण्डकेभ्यः पृथग्वर्तिना शयनासनादिस्थानानामासेवको भवति ब्रह्मचारी, अन्यथा तद्बाधासम्भवात्, तस्माद्देवीनार्यादिसमाकीर्णस्थानासेवनं मनोविकारसम्भवान्न कार्यमित्येकं स्थानम् । स्त्रीकथापरिवर्जनम्, केवलानां स्त्रीणां धर्मदेशनादिलक्षणवाक्यप्रबन्धरूपा जातिकुलादिविषया वा कथा यो न कथयति स ब्रह्मचारीति द्वितीयम् । स्त्रीनिषद्यानासेवनम्—येषु स्थानेषु स्त्रियस्तिष्ठन्ति तत्रैकासने नोपविशेत्, उत्थितास्वपि तासु मुहूर्तं यावन्नोपविशेदिति तृतीयम । मनोहरेन्द्रियाचिन्तनम्—स्त्रीणां नयननासिकादीनि दृष्टमात्रतोऽनुचिन्तनादपि वा मनोहराणि नातिशयेन चिन्तयिता भवेत् किमहो लावण्यं तन्नयनयोरित्येवमिति चतुर्थम् । प्रणीतरसाभोजनम्—न गलत्स्नेहबिन्दुभोक्ता स्यादिति पञ्चमम् । अतिमात्राहारवर्जनम्—पानभोजनस्य रूक्षस्यापि 'अर्धमशनस्य सव्यञ्जनस्य कुर्याद्द्रव्यस्य द्वौ भागौ । वायुप्रविचारणार्थं षष्ठं भागमून कुर्या'दिति प्रमाणातिक्रमेण नाहारको भवेत् सायंप्रातयोरुत्सर्गतो यतीनामयोग्यत्व विज्ञेयमिति षष्ठम् । पूर्वक्रीडितास्मरणम्—गृहस्थावस्थायां कृतस्य स्त्रीसम्भोगाद्यनुभवस्य द्यूतादिरमणस्य च न स्मर्ता भवेदिति सप्तमम् । शब्दाद्यननुपातित्वम्—मन्मनभाषितादिकमभिव्यञ्जकहेतु रूपानुपातिनं श्लोकानुपातिनं वा न पठेदित्यष्टमम् । सातसुखाप्रतिबद्धत्वम्—साताख्यपुण्यप्रकृतेः सकाशात्परसौख्यं गन्धरसस्पर्शलक्षणं विषयसम्पाद्यं तत्परो न भवेत्, उपशमसौख्यप्रतिबन्धकत्वस्यात्र निषेध इति नवममित्येवं नव ब्रह्मचर्यस्य मैथुनव्रतस्य गुप्तयो रक्षाप्रकाराः ॥ २०४ ॥

सम्यग्जीवादिपदार्थविज्ञाने ब्रह्मचर्यस्य निष्पत्तेः पदार्थविभागमाह—

**जीवाजीवपुण्यपापाश्रवसंवरनिर्जराबन्धमोक्षा नव सत्पदार्थाः ॥ २०५ ॥**

जीवेति, सद्भूताः पदार्थाः सत्पदार्थाः पारमार्थिकवस्तूनीत्यर्थः, सुखज्ञानोपयोगलक्षणो जीवः, ज्ञानदर्शनसुखादिपर्यायाणामाश्रयः, तेन सिद्धानामपि सङ्ग्रहः, न तु दशविधप्राणधारी सिद्धे तदभावात्, तद्विपरीतोऽजीवो रूप्यरूपिस्वरूपः, पुद्गला रूपवन्तोऽजीवा, धर्मादयोऽरूपिणोऽजीवाः । पुण्यं शुभप्रकृतिरूपं कर्म, पापं तद्विपरीतम्, आश्रूयते गृह्यते कर्मानेनेत्याश्रवः शुभाशुभकर्मादानहेतुः । संवरो गुप्त्यादिभिराश्रवनिरोधः, विपाकात्तपसा वा कर्मणां देशतः क्षपणा निर्जरा, आश्रवगृहीतस्य कर्मण

आत्मना संयोगो बन्धः, कृत्स्नकर्मक्षयादात्मनः स्वात्मन्यवस्थानं मोक्षः । ननु जीवाजीवव्यतिरिक्ताः पुण्यादयो न सन्ति, तथाऽनुपलभ्यमानत्वात्, तथा हि पुण्यपापे कर्मणी बन्धोऽपि तदात्मक एव, कर्म च पुद्गलपरिणामत्वादजीव एव, आश्रवस्तु मिथ्यादर्शनादिरूपः परिणामो जीवस्य, स चात्मानं पुद्गलांश्च विरहय्य कोऽन्यः ?, संवरोऽप्याश्रवनिरोधो देशसर्वभेद आत्मनः परिणामो निवृत्तिरूपो निर्जरा तु कर्मपरिशाटो जीवः कर्मणा यत्पार्थक्यमापादयति स्वशक्त्या, मोक्षोऽप्यात्मा समस्तकर्मविरहित , तस्माजीवाजीवौ तत्त्वपदार्थाविति, सत्यमेतत्, किन्तु यावेव जीवाजीवपदार्थौ सामान्येनोक्तौ तावेवेह विशेषतो नवधोक्तौ, सामान्यविशेषात्मकत्वाद्वस्तुनः, तथेह मोक्षमार्गे शिष्यः प्रवर्तनीयो न सङ्ग्रहाभिधानमात्रमेव कर्तव्यम्, न यदैवमाख्यायते आश्रवो बन्धो बन्धद्वारायाते च पुण्यपापे मुख्यानि तत्त्वानि संसारकारणानि, संवरनिर्जरे च मोक्षस्य तदा संसारकारणत्यागेनेतरत्र प्रवर्तते नान्यथेत्यत एषोपन्यासः, मुख्यसाध्यख्यापनार्थश्च मोक्षस्येति ॥ २०५ ॥

अथ जीवस्य बाह्याभ्यन्तररोगोत्पत्तिकारणविशेषानाह—

**अत्यासनाहितासनातिनिद्रातिजागरणोच्चारनिरोधप्रस्रवणनिरोधाध्वगमनभोजनप्रतिकूलतेन्द्रियार्थविकोपनैः रोगोत्पत्तिः, निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानर्द्धिचक्षुरचक्षुरवधिकेवलदर्शनावरणानि दर्शनावरणीयं कर्म ॥ २०६ ॥**

**अत्यासनेति,** सततोपवेशनमत्यासनम्, अननुकूलासनं ढेकुपाषाणादिकमहितासनम्, प्रकृत्यननुकूलभोजनं भोजनप्रतिकूलता, इन्द्रियार्थानां शब्दादिविषयाणां विपाक इन्द्रियार्थविकोपनम्, स्पष्टमन्यत् । रोगोत्पत्तिः शारीररोगोत्पत्तिरित्यर्थः । आन्तररोगकारणभूतकर्मविशेषभेदानाह—निद्रेति, सुखप्रबोधा स्वापावस्था निद्रा नखच्छोटिकामात्रेणापि यत्र प्रबोधो भवति, तद्विपाकवेद्या कर्मप्रकृतिरपि निद्रा, कार्येण व्यपदेशात् । दुःखप्रबोधा स्वापावस्था निद्रातिशायित्वान्निद्रानिद्रा, तस्या ह्यत्यर्थमस्फुटतरीभूतचैतन्यत्वात् तेन बहुभिर्घोलनादिभिः प्रबोधो भवत्यतः सुखप्रबोधनिद्रापेक्षयाऽस्या अतिशायिनीत्वम्, तद्विपाकवेद्या कर्मप्रकृतिरपि तथा, यस्यां स्वापावस्थायामुपविष्ट ऊर्ध्वस्थितो वा प्रचलति सा प्रचला, सा ह्युपविष्टस्योर्ध्वस्थितस्य वा घूर्णमानस्य स्वप्तुर्भवति, तथाविधविपाकवेद्या कर्मप्रकृतिरपि प्रचला । प्रचलाप्रचला हि चङ्क्रमणादि कुर्वतः स्वप्तुर्भवति, अतः स्थानस्थितस्वप्तृभवां प्रचलामपेक्ष्यातिशायिनी, तद्विपाकगम्या कर्मप्रकृतिरपि तथा । यस्यां जाग्रदवस्थाऽध्यवसितार्थसाधनविषया बहुभिकाङ्क्षा भवति सा स्त्यानर्द्धिः, तस्यां हि सत्यां जाग्रदवस्थाध्यवसितमर्थमुत्थाय साधयति, तद्भावे हि खलु केशवार्धबलसदृशी शक्तिर्भवति, तदेवं निद्रापञ्चकं दर्शनावरणक्षयोपशमात्समुपलब्धानां दर्शनलब्धीनामावारकम्, दर्शनलब्धीनां मूलत एव लाभस्यावारकं च चतुर्दर्शनावरणम्, चक्षुषा सामान्यग्राही बोधश्चक्षुर्दर्शनं तस्यावरणं चक्षुर्दर्शनावरणम्, तदन्येन्द्रियचतुष्टयेन मनसा वा यद्दर्शनं तदचक्षुर्दर्शनं तदावरणमचक्षुर्दर्शनावरणम्, करणनिरपेक्षरूपिद्रव्यविषयं दर्शनमवधिदर्शनं तदावरणम्, सकलवस्तुदर्शनं केवलदर्शनं तदावरणमित्येवं नवविधं दर्शनावरणम् ॥ २०६ ॥

उपर्युक्तकर्मणा विकृतिभोगाधिक्यात्प्रायाद्विकृतीराह—

**क्षीरदधिनवनीतसर्पिस्तैलगुडमधुमद्यमांसानि नवस्रोतःपरिस्रवलक्षणशरीरस्योपचयहेतवो विकृतयः ॥ २०७ ॥**

**क्षीरेति,** क्षीरं पञ्चधा अजैडकागोमहिष्युष्ट्रीभेदात्, दधिनवनीतघृतानि चतुर्धैव, उष्ट्रीणां तदभावात् तैलं चतुर्धा तिलातसीकुसुम्भसर्षपभेदात्, गुडो द्विधा द्रवपिण्डभेदात्, मधु त्रिधा माक्षिककौन्तिकभ्रामरभेदात्, मद्यं द्विधा काष्ठपिष्टभेदात्, मांसं त्रिधा जलस्थलाकाशचरभेदादिति, एतानि नव पुरुषापेक्षया नवभिः स्रोतोभिश्छिद्रैः कर्णनयननासिकास्योपस्थपायुस्वरूपैः परिस्रवति-मलं क्षरतीति नवस्रोतःपरिस्रवलक्षणं शरीरमौदारिकमेव, तस्योपचयहेतवो विकृतयो, विकारकारित्वादिति ॥ २०७ ॥

एवंविधशरीरेण कदाचित् पुण्यमप्युपादीयत इति तद्भेदानाह—

**अन्नपानवस्त्रगृहसंस्तारकमनोवचःकायनमस्कारपुण्यानि पुण्यभेदाः ॥२०८॥**

**अन्नेति,** पात्रायान्नदानाद्यत्तीर्थंकरनामादिपुण्यप्रकृतिबन्धस्तदन्नपुण्यमेव सर्वत्र, मनसा गुणिषु तोषाद्वचसा प्रशंसनात्, कायेन पर्युपासनान्नमस्काराच्च यत्पुण्यं तन्मनःपुण्यादीनि, उक्तञ्च 'अन्नं पानञ्च वस्त्रञ्च, आलयः शयनासनम् । शुश्रूषा वन्दनं तुष्टिः पुण्यं नवविधं स्मृत' मिति ॥ २०८ ॥

पुण्यविपर्ययरूपस्य पापस्य कारणभूतानि श्रुतान्याह—

**उत्पातनिमित्तमन्त्रमातङ्गायुर्वेदकलावास्तुज्ञानमिथ्याप्रवचनानि पापश्रुतानि ॥ २०९ ॥**

**उत्पातेति,** उत्पातः—प्रकृतिविकाररूपः सहजरुधिरवृष्ट्यादिः तत्प्रतिपादनपरं शास्त्रमपि तथा राष्ट्रोत्पातादि, निमित्तं—अतीतादिपरिज्ञानोपायं शास्त्रं कूटपर्वतादि, मन्त्रो मन्त्रशास्त्रं जीवोद्धरणगारुडादि, मातङ्गविद्या—यदुपदेशादतीतादि कथयन्ति डोम्ब्यो वधिरा इति लोकप्रतीता, आयुर्वेदश्चिकित्साशास्त्रम्, कला—लेखाद्याः गणितप्रधानाः शकुनरुतपर्यवसाना द्वासप्ततिस्तच्छास्त्राण्यपि तथा, वास्तुविद्या—भवनप्रासादनगरादिलक्षणशास्त्रं, अज्ञानं—लौकिकश्रुतं भारतकाव्यनाटकादि, मिथ्याप्रवचनं शाक्यादितीर्थिकशासनमिति, एतच्च सर्वमपि श्रुतं पापोपादानहेतुः सयतेन पुष्टालम्बनेन त्वासेव्यमानमपापश्रुतमेवेति ॥ २०९ ॥

एतच्छ्रुतावलम्बिनो निपुणा भवन्तीति निपुणपुरुषाभिधानायाह—

**सङ्ख्याननिमित्तकायिकपुराणप्रकृतिदक्षपरपण्डितवादिभूतिकर्मचिकित्सका नैपुणिकाः ॥ २१० ॥**

**सङ्ख्यानेति,** सङ्ख्यानं—गणितं तद्योगात्पुरुषोऽपि तथा, गणितविषये निपुण इत्यर्थः, एवमग्रेऽपि, निमित्तं—चूडामणिप्रभृति, कायिकं—शारीरिकमिडापिङ्गलादिप्राणतत्त्वमित्यर्थः, पुराणो वृद्धः स च चिरजीवित्वाद्दृष्टबहुविधव्यतिकरत्वान्नैपुणिकः, शास्त्रविशेषो वा पुराणं तज्ज्ञो निपुणश्चायो'

भवति, प्रकृत्यैव दक्षः सर्वप्रयोजनानामकालहीनतया कर्त्तेति, परपण्डितो बहुशास्त्रज्ञो यस्य मित्रादिः पण्डितः स वा, अथ हि वैयक्ष्णकवनिपुणससर्गान्निपुणो भवति, वादी--वादलब्धिसम्पन्नो यः परेण न जीयते, मन्त्रवादी वा धातुवादी वा, ज्वरादिरक्षानिमित्त भूतिदान भूतिकर्म तत्र निपुणः, चिकित्सकः, चिकित्साया निपुणः, एते निपुण सूक्ष्म ज्ञान तेन चरन्तीति नैपुणिकाः ॥ २१० ॥

सत्यायुषि नैपुण्य भवतीति तत्परिणामानाह--

## गतितद्बन्धनस्थितितद्बन्धनोर्ध्वाधस्तिर्यग्दीर्घह्रस्वगमनपरिणामा आयुषः परिणामाः ॥ २११ ॥

**गतीति,** गतिर्देवादिका वा नियता येन स्वभावेनायुर्जीव प्रापयति स आयुषो गतिपरिणाम, येनायुःस्वभावेन प्रतिनियतगतिकर्मबन्धो भवति यथा नरकायु स्वभावेन मनुष्यतिर्यग्गतिनामकर्मणी बध्नाति न देवनरकगतिनामकर्मणीति स गतिबन्धनपरिणामः, आयुषो या अन्तर्मुहूर्तादि त्रयस्त्रिंशत्सागरोपमान्ता स्थितिर्भवति स स्थितिपरिणाम, येन पूर्वभवायुःपरिणामेन परभवायुषो नियता स्थितिं बध्नाति स स्थितिबन्धनपरिणामः, यथा तिर्यगायुःपरिणामेन देवायुष उत्कृष्टतोऽप्यष्टादशसागरोपमाणीति, येनायुःस्वभावेन जीवस्योर्ध्वदिशि गमनशक्तिलक्षणः परिणामो भवति स ऊर्ध्वगमनपरिणामः, एवमधोगमनपरिणामतिर्यग्गमनपरिणामौ भाव्यौ, यत आयु स्वभावाज्जीवस्य दीर्घ--दीर्घगमनतया लोकान्ताल्लोकान्त यावद्गमनशक्तिर्भवति स दीर्घगमनपरिणामः। यस्माच्च ह्रस्व गमन स ह्रस्वगमनपरिणामः, इत्येते कर्मप्रकृतिविशेषस्यायुषः परिणाम--स्वभावः शक्तिर्धर्म इति ॥ २११ ॥

यावन्नोकषायमायुषःपरिणामा भवन्तीति तानाह--

## स्त्रीपुरुषनपुंसकवेदहास्यरत्यरतिभयशोकजुगुप्सा नव नोकषायाः ॥ २१२ ॥

**स्त्रीति,** कषायैः क्रोधादिभिः सहचरा नोकषायाः, केवलाना नैषा प्राधान्य किन्तु यैरनन्तानुबन्ध्यादिभिः सहोदयं यान्ति तद्विपाकसदृशमेव विपाकमादर्शयन्तीति नोकषायवेदनीयभेदा इत्यर्थः, यदुदयेन स्त्रियाः पुरुषाभिलाषः पित्तोदयेन मधुराभिलाषवत् स फुम्फकाग्निसमानः स्त्रीवेदः, यदुदयेन पुंसः स्त्रियामभिलाषः श्लेष्मोदयादम्लाभिलाषवत् स तृणाग्निज्वालासमानः पुंवेदः, यदुदयेन नपुंसकस्य स्त्रीपुंसयोरुभयोरभिलाषः पित्तश्लेष्मणोरुदये मज्जिताभिलाषवत् स महानगरदाहाग्निसमानो नपुंसकवेदः। यदुदयेन सनिमित्तमनिमित्त वा हसति तत्कर्म हास्यम्। यदुदयेन सचित्ताचित्तेषु बाह्यद्रव्येषु जीवस्य रतिरुत्पद्यते तद्रतिकर्म, यदुदयेन तेष्वेवारतिरुत्पद्यते तदरतिकर्म, यदुदयेन भयवर्जितस्यापि जीवस्येहलोकादिसप्तप्रकार भयमुत्पद्यते तद्भयकर्म, यदुदयेन शोकरहितस्यापि जीवस्याक्रन्दनादिः शोको जायते तच्छोककर्मेति, यदुदयेन च विष्ठादिबीभत्सपदार्थेभ्यो जुगुप्सते तज्जुगुप्साकर्मेति ॥ २१२ ॥

नोकषायवतो लोके पुनःपुनरुत्पादावश्यम्भावात् सदा लोकस्थितिरित्याह--

## तत्रैव पुनर्जननं सतत कर्मणो मोहनीयस्य वा बन्धन जीवाजीवावैपरीत्यं त्रसस्थावराव्यवच्छेदो लोकालोकावैपरीत्य तयोरन्योऽन्यानुप्र-

**वेशो जीवलोकसमनैयत्यं जीवादिगतिपर्यायलोकसमनियतत्वं लोकान्तेषु पुद्गलानां रूक्षतया परिणमनञ्चेति दशधा लोकस्थितिः ॥ २१३ ॥**

**तत्रैवेति,** यज्जीवाना मृत्वा तत्रैव लोकदेशे गतौ योनौ कुले वा सान्तरं निरन्तरं वौचित्येन पुनः पुनः प्रत्युत्पादः सैका लोकस्थितिः, प्रवाहतोऽनाद्यपर्यवसितं कालं यावन्निरन्तरं जीवैर्ज्ञानावरणादिपापकर्मबन्धनस्य क्रियमाणत्वादिति द्वितीया लोकस्थितिः, एवमेव सदा मोहनीयकर्मणो बन्धः तृतीया लोकस्थितिः, मोहनीयस्य प्रधानत्वात्पृथगुद्देशेन निर्देशः । कदापि जीवानामजीवतयाऽजीवानाञ्च जीवत्वेनाभवनमिति चतुर्थी, कालत्रये कदापि त्रसानां स्थावराणां वा व्यवच्छेदाभाव इति पञ्चमी, लोकस्यालोकत्वेनालोकस्य च लोकत्वेन कदाप्यभवनमिति षष्ठी, लोकालोकयोः परस्परमनुप्रवेशाभाव इति सप्तमी, यावति क्षेत्रे लोकव्यपदेशस्तावति क्षेत्रे जीवाः, यावति च क्षेत्रे जीवास्तावति लोक इत्यष्टमी, यावति जीवानां पुद्गलानाञ्च गतिपर्यायस्तावति लोकः, यावति च लोकस्तावति तेषां गतिपर्याय इति नवमी, लोकान्तेषु स्वभावादेव पुद्गलानां रूक्षतया परिणमनाद्धर्मास्तिकायाभावाच्च न शक्नुवन्ति लोकान्ताद्बहिर्गन्तुमिति दशमी लोकस्थितिरिति ॥ २१३ ॥

विशिष्टप्रकृतिसृष्टाः शब्दपुद्गला लोकान्त एव गच्छन्तीति प्रस्तावाच्छब्दादिविषयाश्रयेणाह—

**देशसर्वापेक्षा शब्दादय इन्द्रियार्था दश ॥ २१४ ॥**

**देशेति,** कालभेदेन कश्चिद्विवक्षितशब्दसमूहापेक्षया देशतः कांश्चिच्छब्दानशृणोत् शृणोति श्रोष्यति च, सर्वतः सर्वान् कदाचिदिन्द्रियापेक्षया वा कश्चित् श्रोत्रेन्द्रियेण देशतः सम्भिन्नश्रोतोऽलब्धियुक्तावस्थायां सर्वैरिन्द्रियैः सर्वतः, अथवैककर्णेन देशतः, उभाभ्याञ्च सर्वत इति, सर्वत्रैवम् ॥ २१४ ॥

इन्द्रियार्थानां पौद्गलिकत्वात् पुद्गलस्वरूपविशेषमाह—

**अच्छिन्नतया पुद्गलचलनमाह्रियमाणपरिणम्यमानोच्छ्वस्यमाननिःश्वस्यमानवेद्यमाननिर्जीर्यमाणवैक्रियमाणपरिचार्यमाणयक्षाविष्टवातपरिगतेषु सत्सु ॥ २१५ ॥**

**अच्छिन्नतयेति,** यदा पुद्गल आह्रियमाणः—खाद्यमानः—आहारेऽभ्यवह्रियमाणो भवति तदाऽच्छिन्नः—अपृथग्भूतः शरीरे उत्पाट्यमानो विवक्षितस्कन्धे वा सम्बद्धःसन् स्थानान्तरं गच्छेत्, एवं परिणम्यमानः उदराग्निना खलरसभावेन, उच्छ्वासे क्रियमाणे सति, एवं निःश्वस्यमानः, वेद्यमानो निर्जीर्यमाणश्च कर्मपुद्गलः, वैक्रियमाणः—वैक्रियशरीरतया परिणम्यमानः, परिचार्यमाणः—मैथुनसंज्ञाया विषयीक्रियमाणः शुक्रपुद्गलादिः, यक्षाविष्टः—यक्षाद्याविष्टे सति पुरुषे यच्छरीरलक्षणः पुद्गलः, वातपरिगतः—देहगतवायुप्रेरितो वातपरिगते वा देहे सति बाह्यवातेन चोत्क्षिप्त इति ॥ २१५ ॥

इन्द्रियार्थानां मनोज्ञामनोज्ञरूपाणां शब्दादीनामपहारे उपनयने वा क्रोधाद्युत्पत्त्याऽसंयमभावप्राप्तेस्तदभावे च संयमभावप्राप्तेः संयमासंयमावाह—

पृथिव्यप्तेजोवायुवनस्पतिकायद्वित्रिचतुःपञ्चेन्द्रियाजीवकायविषयौ सयमासंयमौ ॥ २१६ ॥

पृथिवीति, सुगमं सूत्रम् । संयम्यते नियम्यते आत्मा पापव्यापारसम्भारादनेनेति संयमः, पृथिव्यादिविषयेभ्यः संघट्टपरितापनोपद्रवणेभ्य उपरमो वा, अजीवकायसंयमश्च पुस्तकादीनां ग्रहणपरिभोगोपरमः । एतद्विपर्ययरूपोऽसंयमः ॥ २१६ ॥

संयमश्च चारित्रभेद इति प्रव्रज्याभेदानाह—

छन्दरोषपरिद्युनस्वप्नप्रतिश्रुतस्मरणरोगानादरदेवसंज्ञप्तिवत्सानुबन्धैः प्रव्रज्या ॥ २१७ ॥

छन्देति, स्वकीयाभिप्रायविशेषः छन्दः तस्मात् प्रव्रज्या गृह्यते गोविन्दवाचकस्येव, सुन्दरीनन्दनस्येव वा, परकीयाद्वा भ्रातृरक्षभवदत्तस्येव । रोषात् शिवभूतेरिव, परिद्युना—दारिद्र्येण काष्ठहारकस्येव, स्वप्नात् पुष्पचूलाया इव, प्रतिश्रुतात्—प्रतिज्ञानात्—शालिभद्रभगिनीपतिधन्यकस्येव, स्मरणात् मल्लिनाथस्वामिजन्मान्तराणां प्रतिबुद्धादिराज्ञामिव, रोगात्—सनत्कुमारस्येव, अनादरात्—नन्दिषेणस्येव, देवप्रतिबोधनात्—मेतार्यादेरिव, वत्स—पुत्रतदनुबन्धात् वैरस्वामिमातुरिव ॥ २१७ ॥

प्रव्रज्याया जीवपरिणामविशेषत्वादन्यानपि तत्परिणामविशेषान् तद्विपरीतस्वरूपस्याजीवस्य च पर्यायविशेषानाह—

गतीन्द्रियकषायलेश्यायोगोपयोगज्ञानदर्शनचारित्रवेदपरिणामा जीवस्य, बन्धनगतिसंस्थानभेदवर्णरसगन्धस्पर्शागुरुलघुशब्दपरिणामा अजीवस्य ॥ २१८ ॥

गतीति, परिणमनं परिणामस्तद्भावगमनमित्यर्थः, यदाह 'परिणामो ह्यर्थान्तरगमनं न च सर्वथा व्यवस्थानम् । न च सर्वथा विनाशः परिणामस्तद्विदामिष्टः ॥' इति, द्रव्यार्थनयस्येति शेषः 'सत्पर्यायेण नाशः प्रादुर्भावोऽसता च पर्ययतः । द्रव्याणां परिणामः प्रोक्तः खलु पर्ययनयस्य ॥' इति, तत्र जीवस्य परिणामो जीवपरिणामः स च प्रायोगिकः, तत्र गतिरेव परिणामो गतिपरिणामः, एवं सर्वत्र, गतिश्चेह गतिनामकर्मोदयान्नारकादिव्यपदेशहेतुः, तत्परिणामश्चाभवक्षयादिति, स च नरकगत्यादिश्चतुर्विधः, गतिपरिणामे च सत्येवेन्द्रियपरिणामो भवति, स चेन्द्रियपरिणामः श्रोत्रादिभेदात् पञ्चधा, इन्द्रियपरिणतौ चेष्टानिष्टविषयसम्बन्धाद्रागपरिणतिरिति कषायपरिणामः स च क्रोधादिभेदाच्चतुर्विधः, कषायपरिणामे सति लेश्यापरिणतिर्न तु लेश्यापरिणतौ कषायपरिणतिः, येन क्षीणकषायस्यापि शुक्ललेश्यापरिणतिर्देशोनपूर्वकोटिं यावद्भवति, स च लेश्यापरिणामः कृष्णादिभेदात् षोढा, अयञ्च योगपरिणामे सति भवति यतो निरुद्धयोगस्य लेश्यापरिणामोऽपैति, स योगपरिणामो मनोवाक्कायभेदात्त्रिधा, संसारिणाञ्च योगपरिणतावुपयोगपरिणतिर्भवति स च साकारानाकारभेदाद्द्विधा, सति चोपयोगपरिणामे ज्ञानपरिणामो भवति स चाभिनिबोधिकादिभेदात् पञ्चधा, तथा मिथ्यादृष्टेर्ज्ञानमप्य

ज्ञानपरिणामो मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानलक्षणस्त्रिविधोऽपि विशेषग्रहणसाधर्म्यात् ज्ञानपरिणामग्रहणेन गृहीतो द्रष्टव्यः। ज्ञानाज्ञानपरिणामे च सति सम्यक्त्वादिपरिणतिरिति दर्शनपरिणामः, स च त्रिधा सम्यक्त्वमिथ्यात्वमिश्रभेदात्, सम्यक्त्वे सति चारित्रपरिणामः, स च सामायिकादिभेदात् पञ्चधा, स्त्र्यादिवेदपरिणामे चारित्रपरिणामो न तु चारित्रपरिणामे वेदपरिणतिर्यतोऽवेदकस्यापि यथाख्यातचारित्रपरिणतिर्दृष्टेति वेदपरिणाम उक्तः स च स्त्र्यादिभेदात्त्रिविध इति। अजीवानां परिणामाश्च—बन्धन-पुद्गलानां परस्परं सम्बन्धः संश्लेषरूपः, स एव परिणामः एवं सर्वत्र, तल्लक्षणञ्च 'समस्निग्धतया बन्धो न भवति समरूक्षतयापि न भवति। विमात्रस्निग्धरूक्षत्वेन बन्धस्तु स्कन्धानामि'ति, एतदुक्तं भवति समगुणस्निग्धेन परमाण्वादिना बन्धो न भवति, समगुणरूक्षेण, यदा विषमा मात्रा तदा भवति बन्धः, विषममात्रानिरूपणार्थमुच्यते 'स्निग्धस्य स्निग्धेन द्विकाधिकेन रूक्षस्य रूक्षेण द्विकाधिकेन। स्निग्धस्य रूक्षेणोपैति बन्धो जघन्यवर्जो विषमः समो वा ॥' इति, गतिपरिणामो द्विविधः स्पृशद्गतिपरिणाम इतरश्च, तत्राद्यो येन प्रयत्नविशेषात् क्षेत्रप्रदेशान् स्पृशन् गच्छति, येनास्पृशन्नेव तान् गच्छति, न चाय न सम्भाव्यते गतिमद्द्रव्याणां प्रयत्नभेदोपलब्धेः, तथाहि—अभ्रङ्कषहर्म्यतलगतविमुक्ताश्मपातकालभेद उपलभ्यते अनवरतगतिप्रवृत्तानाञ्च देशान्तरप्राप्तिकालभेदश्चेत्यतः सम्भाव्यतेऽस्पृशद्गतिपरिणामः, अथवा दीर्घह्रस्वभेदाद्द्विविधोऽयम्। संस्थानपरिणामः परिमण्डलवृत्तत्र्यस्रचतुरस्रायतभेदात् पञ्चविधः, भेदपरिणामः पञ्चधा, तत्र खण्डभेदः क्षिप्तमृत्पिण्डस्येव, प्रतरभेदोऽभ्रपटलस्येव, अनुतटभेदो वंशस्येव, चूर्णभेदश्चूर्णनम्, उत्करिकाभेदः समुत्कीर्यमाणप्रस्थकस्येवेति। वर्णपरिणामः पञ्चधा, गन्धपरिणामो द्विधा रसपरिणामः पञ्चधा, स्पर्शपरिणामोऽष्टधा, न गुरुकमधोगमनस्वभावं न लघुकमूर्ध्वगमनस्वभावं यद्द्रव्यं तदगुरुलघुकम्, अत्यन्तसूक्ष्मं भाषामनःकर्मद्रव्यादि स एव परिणामः, एतद्ग्रहणेनैतद्विपक्षोऽपि गृहीतो द्रष्टव्यः, तत्र विवक्षया गुरु विवक्षया च लघु यद्द्रव्यं तद्गुरुलघुकमौदारिकादिस्थूलतरम्। द्वयमुक्तस्वरूपं द्विविधं वस्तु निश्चयनयमतेन। व्यवहारतस्तु चतुर्धा, तत्र गुरुकमधोगमनस्वभावं वज्रादि, लघुकमूर्ध्वगमनस्वभावं धूमादि, गुरुलघुकं तिर्यग्गामिवायुज्योतिष्कविमानादि, अगुरुलघुकमाकाशादि। शब्दपरिणामः शुभाशुभभेदाद्द्विधेति ॥ २१८ ॥

अजीवपरिणामाधिकारादन्तरिक्षलक्षणाजीवपरिणामोपाधिकमस्वाध्यायिकं व्यपदिश्य पुद्गलपरिणामविशेषमाह—

**उल्कापातदिग्दाहगर्जितविद्युन्निर्घातमिश्रप्रभायक्षादीप्तधूमिकामहिकारजउद्घाता आन्तरिक्षकास्वाध्यायाः ॥ २१९ ॥**

उल्कापातेति, अन्तरिक्षे भव आन्तरिक्षकः, स्वाध्यायो वाचनादिः पञ्चविधो यस्मिन्नस्ति स स्वाध्यायिकस्तदभावोऽस्वाध्यायिकः, तत्र उल्का—आकाशजा तस्याः पात उल्कापातः, दिशो दिशि वा दाहो दिग्दाहः, इदमुक्तं भवति—एकतरदिग्विभागे महानगरप्रदीपनकमिव य उद्योतो भूमावप्रतिष्ठितो गगनतलवर्ती स दिग्दाह इति, गर्जितं—जीमूतध्वनिः, विद्युत्तडित्, निर्घातः साभ्रे निरभ्रे वा गगने व्यन्तरकृतो महागर्जितध्वनिः, मिश्रप्रभा—सन्ध्याप्रभा चन्द्रप्रभा च यदि युगपद्भवतस्तथाविधा,

यत्र चन्द्रप्रभाऽऽवृत्ता सन्ध्याऽपगच्छन्ती न ज्ञायते शुक्लपक्षप्रतिपदादिषु दिनेषु, सन्ध्याच्छेदे वाऽज्ञायमाने कालवेला न जानन्त्यतस्त्रीणि दिनानि प्रादोषिकं कालं न गृह्णन्ति ततः कालिकस्यास्वाध्यायः स्यात् । यक्षादीप्तमाकाशे भवति, एतेषु स्वाध्यायं कुर्वतां क्षुद्रदेवता छलनां करोति, धूमिका-महिकाभेदो वर्णतो धूमिका धूमाकारा धूम्रेत्यर्थः, महिका-प्रतीता, एतच्च द्वयमपि कार्त्तिकादिषु गर्भमासेषु भवति, तच्च पतनान्तरमेव सूक्ष्मत्वात्सर्वमप्यप्कायभावितं करोतीति, रजउद्घात-विस्रसापरिणामतः समन्ताद्रेणुपतनमिति ॥ २१९ ॥

पुनरप्यस्वाध्यायकालमाह—

**अस्थिमांसशोणिताशुचिश्मशानसमीपचन्द्रसूर्यग्रहणपतनराजविग्रहवसतिमध्यगशरीराणि औदारिकस्यास्वाध्यायाः ॥ २२० ॥**

अस्थीति, औदारिकस्य मनुष्यतिर्यक्शरीरस्य सम्बन्ध्यस्वाध्यायाः, अस्वाध्याये निमित्तभूतमौदारिकमिति भावः । तत्रास्थिमांसशोणितानि प्रतीतानि । तत्र पञ्चेन्द्रियतिरश्चामस्वाध्यायिकं द्रव्यतोऽस्थिमांसशोणितानि चर्म च, क्षेत्रतः षष्टिहस्ताभ्यन्तरे, कालतः सम्भवकालाद्यावत्तृतीया पौरुषी मार्जारादिभिर्मूषिकादिव्यापादनेऽहोरात्रञ्च, भावतः सूत्रं नन्द्यादिकं नाध्येतव्यमिति, मनुष्यसम्बन्ध्यप्येवमेव, नवरं क्षेत्रतो हस्तशतमध्ये कालतोऽहोरात्रं यावत्, आर्तवं दिनत्रयं, स्त्रीजन्मनि दिनाष्टकं पुरुषजन्मनि दिनसप्तकम्, अस्थीनि तु जीवविमोक्षदिनादारभ्य हस्तशताभ्यन्तरस्थितानि द्वादशवर्षाणि यावदस्वाध्यायिकं भवति, चिताग्निना दग्धान्युदकवाहेन वा व्यूढान्यस्वाध्यायिकं न भवति, भूमिनिखातान्यस्वाध्यायिकमिति । अशुचीन्यमेध्यानि मूत्रपुरीषाणि, तेषां समीपमस्वाध्यायिकं भवति । श्मशानसमीपं-शवस्थानसमीपम्, चन्द्रग्रहणं-चन्द्रविमानस्य राहुविमानतेजसोपरञ्जनमेवं सूर्यग्रहणमपि, इह कालमानञ्च-यदि चन्द्रः सूर्यो वा ग्रहणे सति सग्रहोऽन्यथा वा निमज्जति तदा ग्रहणकालं तद्रात्रिशेषं तदहोरात्रशेषञ्च ततः परमहोरात्रञ्च वर्जयन्ति । आचरितन्तु यदि तत्रैव रात्रौ दिने वा मुक्तः तदा चन्द्रग्रहणे तस्या एव रात्रेः शेषं परिहरन्ति, सूर्यग्रहणे तु तद्दिनशेषं परिहृत्यानन्तरं रात्रिमपि परिहरन्तीति । चन्द्रसूर्योपरागयोश्चौदारिकत्वं तद्विमानपृथिवीकायिकापेक्षयाऽवसेयमान्तरीक्षकत्वन्तु सदपि न विवक्षितम् । पतनं-मरणं राजामात्यसेनापतिग्रामभोगिकादीनाम्, तत्र यदा दण्डिकः कालगतो भवति राजा वाऽन्यो यावन्न भवति तदा सभयेऽनिर्भये स्वाध्यायं वर्जयन्तीति निर्भयश्रवणानन्तरमपि अहोरात्रं वर्जयन्तीति ग्राममहत्तरेऽधिकारनियुक्ते बहुस्वजने वा शय्यान्तरे वा पुरुषान्तरे वा सप्तगृहाभ्यन्तरमृतेऽहोरात्रं स्वाध्यायं वर्जयन्ति शनैर्वा पठन्ति, निर्दुःखा एते इति गर्हां लोको मा कार्षीदिति । राजविग्रहो-राज्ञां सङ्ग्रामः, उपलक्षणत्वात्सेनापतिग्रामभोगिकमहत्तरपुरुषस्त्रीमल्लयुद्धान्यस्वाध्यायिकम्, यत एते प्रायो व्यन्तरबहुलास्तेषु प्रमत्तं देवता छलयेन्निर्दुःखा एते इत्युड्डाहो वाऽप्रीतिकं वा भवेदित्यतो यद्विग्रहादिकं यच्चिरकालं यस्मिन् क्षेत्रे भवति तत्र विग्रहादिके तावत्कालं तत्र क्षेत्रे स्वाध्यायं परिहरन्ति । वसतिमध्यगशरीराणि-उपाश्रयस्य मध्ये वर्त्तमानमौदारिकं मनुष्यादि-

सत्क शरीर यदुद्भिन्न भवति तदा हस्तशताभ्यन्तरेऽस्वाध्यायिक भवति, अथानुद्भिन्न तथापि कुत्सितत्वादाचरितत्वाच्च हस्तशत वर्ज्यते, परिष्ठापिते तु तत्र तत्स्थान शुद्ध भवतीति ॥ २२० ॥

उपर्युक्तास्वाध्यायावर्जनेन सूक्ष्मजीवेष्ववतरतीति तद्भेदानाह—

**प्राणपनकबीजहरितपुष्पाण्डलयनस्नेहगणितभङ्गसूक्ष्माणि सूक्ष्माणि ॥२२१॥**

**प्राणेति,** प्राणसूक्ष्म–अनुद्धरितकुन्थु , पनकसूक्ष्म उल्लीप्रभृति, बीजसूक्ष्म व्रीह्यादीना नखिका, हरितसूक्ष्म–भूमिसमवर्णं तृणम्, पुष्पसूक्ष्म–वटादिपुष्पाणि, अण्डसूक्ष्म–कीटिकाद्यण्डकानि, लयनसूक्ष्म–कीटिकानगरादि, स्नेहसूक्ष्म–अवश्यायादि, गणितसूक्ष्म–गणित जीवादीना सङ्कलनादि तदेव सूक्ष्म सूक्ष्मबुद्धिगम्यत्वात्, श्रूयते च वज्रान्त गणितमिति । भङ्गसूक्ष्म–भङ्गा भङ्गकाः वस्तुविकल्पास्ते च द्विधा-तत्राद्यास्स्थानभगका यथा-द्रव्यतो नामैका हिंसा न भावत , अन्या भावतो न द्रव्यतः अपरा भावतो द्रव्यतश्च, इतरा च न भावतो नापि द्रव्यत इति । इतरे क्रमभगकास्तु-द्रव्यतो हिंसाभावतश्च, द्रव्यतोऽन्या न भावत , न द्रव्यतोऽन्या भावतः, अन्या च द्रव्यतो न भावत इति, तल्लक्षण सूक्ष्म भङ्गसूक्ष्मम्, सूक्ष्मता चास्य भजनीयपदबहुत्वे गहनभावेन सूक्ष्मबुद्धिगम्यत्वादिति ॥ २२१ ॥

भङ्गद्वयस्य व्याख्यानाधीनत्वादनुयोगप्रकारानाह—

**द्रव्यमातृकापदैकार्थिककरणार्पितानर्पितभाविताभावितबाह्याबाह्यशाश्वताशाश्वततथाज्ञानाऽतथाज्ञानविषयो द्रव्यानुयोग. ॥ २२२ ॥**

**द्रव्येति,** अनुयोजन सूत्रस्यार्थेन सम्बन्धनम्, अनुकूलो वा योगः-सूत्रस्याभिधेयार्थं प्रति व्यापारोऽनुयोगः व्याख्यानमिति भाव , स च चतुर्धा व्याख्येयभेदात्, तद्यथा-चरणकरणानुयोगो धर्मकथानुयोगो गणितानुयोगो द्रव्यानुयोगश्चेति, तत्र द्रव्यजीवादेरनुयोगो विचारो द्रव्यानुयोगः, स च दशधा, तत्र यज्जीवादेर्द्रव्यत्व विचार्यते स द्रव्यानुयोगः यथा द्रवति गच्छति तास्तान् पर्यायान्, द्रूयते वा तैस्तैः पर्यायैरिति द्रव्य गुणपर्यायवानित्यर्थः, तत्र सन्ति जीवे ज्ञानादय सहभावित्वलक्षणा गुणाः, न हि तद्वियुक्तो जीव कदाचनापि सम्भवति, जीवत्वहानेः, तथा पर्याया अपि मानुषत्वबाल्यादय कालकृतावस्थालक्षणास्तत्र सन्त्येवेति, अतोऽसौ गुणपर्यायवत्त्वात् द्रव्यमित्यादिद्रव्यानुयोगः । मातृकेव मातृका, प्रवचनपुरुषस्योत्पादव्ययध्रौव्यलक्षणा पदत्रयी तस्या अनुयोगो यथा उत्पादवज्जीवद्रव्य बाल्यादिपर्यायाणामनुक्षणमुत्पत्तिदर्शनात्, अनुत्पादे च वृद्धाद्यवस्थानामप्राप्तिप्रसङ्गादसमञ्जसापत्ते , तथा व्ययवज्जीवद्रव्य प्रतिक्षण बालाद्यवस्थाना व्ययदर्शनादव्ययत्वे च सर्वदा बाल्यादिप्राप्तेरसमञ्जसमेव, तथा यदि सर्वथाप्युत्पादव्ययवदेव तन्न केनापि प्रकारेण ध्रुव स्यात्तदाऽकृताभ्यागमकृतविप्रणाशप्राप्त्या पूर्वदृष्टानुस्मरणाभिलाषादिभावानामभावप्रसङ्गेन च सकलेहलोकपरलोकारम्भानुष्ठानानामभावतोऽसमञ्जसमेव ततो द्रव्यतयाऽस्य ध्रौव्यमित्युत्पादव्ययध्रौव्ययुक्तमतो द्रव्यमित्यादिमातृकापदानुयोगः । एकत्वासाधर्म्यश्चाभिधेयो जीवादिः स एषामस्ति त एकार्थिकाः शब्दास्तैरनुयोगः कथनमित्यर्थः, एकार्थिकानुयोगो यथा जीवद्रव्य प्रति जीवः प्राणीभूतः सत्त्व

इत्यादि । एकार्थिकानां वाऽनुयोगो यथा जीवनात् प्राणधारणाज्जीवः, प्राणानामुच्छ्वासादीनामस्तित्वात् प्राणी, सर्वदा भवनाद्भूतं, सर्वदा सत्त्वात्सत्त्व इत्यादि । क्रियते एभिरिति करणानि, तेषामनुयोगः करणानुयोगः, यथा हि-जीवद्रव्यस्य कर्तुर्विचित्रक्रियासु साधकतमानि कालस्वभावनियतिपूर्वकृतानि, नैकाकी जीवः किञ्चन कर्तुमलमिति । मृद्द्रव्यं वा कुलालचक्रचीवरदण्डादिकं कारणकलापमन्तरेण न घटलक्षणं कार्यं प्रति घटते इति तस्य तानि करणानीति द्रव्यस्य करणानुयोगः । द्रव्यं ह्यर्पितं विशेषितं यथा जीवद्रव्यं किंविधं ? संसारीति, संसार्यपि त्रसरूपं तदपि पञ्चेन्द्रियं तदपि नररूपमित्यादि, अनर्पितमविशेषितमेव, यथा जीवद्रव्यमिति ततश्चार्पितञ्च तदनर्पितञ्चेत्यर्पितानर्पितं द्रव्यं भवतीति द्रव्यानुयोगः । तथा भावितं-वासितं द्रव्यान्तरसंसर्गतः, अभावितमन्यथैव । यथा जीवद्रव्यं भावितं किञ्चित्, तच्च प्रशस्तभावितमितरभावितञ्च, प्रशस्तभावितं संविग्नभावितमप्रशस्तभावितमितरभावितम् । तद्द्विविधमपि वामनीयमवामनीयञ्च, तत्र वामनीयं यत्संसर्गजं गुणं दोषं वा संसर्गान्तरेण वमति, अवामनीयमन्यथा, अभावितं त्वसंसर्गप्राप्तं प्राप्तसंसर्गं वा यद्वज्रतुल्यत्वं न वासयितुं शक्यमिति, एवं घटादिकं द्रव्यमपि, ततश्च भावितं चाभावितञ्च भाविताभावितमेवंभूतो विचारो द्रव्यानुयोग इति । बाह्याबाह्यम्, तत्र जीवद्रव्यं बाह्यं चैतन्यधर्मेणाकाशास्तिकायादिभ्यो विलक्षणत्वात् तदेवाबाह्यममूर्तत्वादिना धर्मेणामूर्तत्वादुभयेषामपि, चैतन्येन वाऽबाह्यं जीवास्तिकायात्, चैतन्यलक्षणत्वादुभयोरपि, अथवा घटादिद्रव्यं बाह्यं कर्मचैतन्यादित्वबाह्यमाध्यात्मिकमिति यावत्, एवमन्यो द्रव्यानुयोगः । शाश्वताशाश्वतम्, तत्र जीवद्रव्यमनादिनिधनत्वाच्छाश्वतम्, तदेवापरापरपर्यायप्राप्तितोऽशाश्वतमित्येवमन्यो द्रव्यानुयोग । यथा वस्तु तथा ज्ञानं यस्य तत्तथाज्ञानं सम्यग्दृष्टि जीवद्रव्यं तस्यैवावितथज्ञानत्वात्, अथवा यथा तद्वस्तु तथैव ज्ञानमवबोधः प्रतीतिर्यस्मिंस्तत्तथाज्ञानं घटादिद्रव्यं घटादितयैव प्रतिभासमानं जैनाभ्युपगतं वा परिणामि परिणामितयैव प्रतिभासमानमित्येवमन्यो द्रव्यानुयोगः । अतथाज्ञानं मिथ्यादृष्टिजीवद्रव्यमसद्भावद्रव्यं वा वक्रतयाऽवभासमानमेकान्तवाद्यभ्युपगतं वा वस्तु, तथाहि एकान्तेन नित्यमनित्यं वा वस्तु तैरभ्युपगतं प्रतिभाति च तत्परिणामितयेति तदतथाज्ञानमित्येवमन्यो द्रव्यानुयोग इति ॥ २२२ ॥

अथाज्ञानप्रस्तावान्मिथ्यात्वमाह—

**धर्माधर्ममार्गामार्गजीवाजीवसाध्वसाधुमुक्तामुक्तेषु विपर्ययसंज्ञा मिथ्यात्वम् ॥ २२३ ॥**

**धर्मेति,** धर्मे-कषच्छेदादिविशुद्धे सम्यक्श्रुते आप्तवचनलक्षणेऽधर्मसंज्ञा स्वयं एव पुरुषा रागादिमन्तोऽसर्वज्ञाश्च पुरुषत्वादस्मदादिवदित्यादि प्रमाणतोऽनाप्ताः तदभावात्तेदुपदिष्टं शास्त्रं धर्म इत्यादिकुविकल्पवशादनागमबुद्धिरिति । अधर्मे श्रुतलक्षणविहीनत्वादनागमेऽपौरुषेयादौ धर्मसंज्ञा आगमबुद्धिर्मिथ्यात्वं विपर्यस्तत्वादिति । मार्गेऽमार्गसंज्ञेति प्रतीतम् । अमार्गे निर्वृतिपुरीं प्रति अवाध्यति वस्तुतत्त्वापेक्षया विपरीतश्रद्धानज्ञानानुष्ठानरूपे मार्गसंज्ञा—कुवासनातो मार्गबुद्धिरिति । जीवेषु पृथिव्यादिष्वजीवसंज्ञा यथा न भवन्ति पृथिव्यादयो जीवाः उच्छ्वासादीनां प्राणिधर्माणामनुपलम्भात्,

घटवदिति । अजीवेषु आकाशपरमाण्वादिषु जीवसंज्ञा पुरुष एवेदं सर्वमित्याद्यभ्युपगमात्, तथा 'क्षितिजलपवनहुताशनयजमानाकाशचन्द्रसूर्याख्याः इति मूर्तयो महेश्वरसम्बन्धिन्यो भवन्त्यष्टौ' इति। साधुषु ब्रह्मचर्यादिगुणान्वितेषु असाधुसंज्ञा, एते हि कुमारप्रव्रजिता नास्त्येषां गतिरपुत्रत्वात् स्नानादिविरहितत्वाद्वेत्यादिविकल्पात्मिका । असाधुषु षड्जीवनिकायवधानिवृत्तेष्वौद्देशिकादिभोजिष्वब्रह्मचारिषु साधुसंज्ञा, यथा साधव एते सर्वपापप्रवृत्ता अपि ब्रह्ममुद्राधारित्वादित्यादिविकल्परूपा । मुक्तेषु सकलकर्मकृतविकारविरहितेष्वनन्तज्ञानदर्शनसुखवीर्ययुक्तेषु अमुक्तसंज्ञा, न सन्त्येवेदृशा मुक्ताः मुक्तस्य विध्यातदीपककल्पत्वात्, आत्मन एव वा नास्तित्वादित्यादिविकल्परूपा । तथाऽमुक्तेषु सकर्मसु लोकव्यापारप्रवृत्तेषु मुक्तसंज्ञा, यथा 'अणिमाद्यष्टविधं प्राप्य ह्यैश्वर्यं कृतिनः सदा । मोदन्ते निर्वृतात्मानस्तीर्णाः परमदुस्तर'मित्यादिविकल्परूपेति ॥ २२३ ॥

पूर्वोक्तानां सुखं न कदाचिदपीति सुखं निरूपयति—

**आरोग्यदीर्घायुराढ्यत्वकामभोगसन्तोषास्तित्वशुभभोगनिष्क्रमानाबाधानि सुखानि ॥ २२४ ॥**

**आरोग्येति,** आरोग्यं नीरोगता, दीर्घमायुः चिरंजीवित्वं शुभम्, आढ्यत्वं धन-पतित्वं सुखकारणत्वात् सुखरूपम्, अथवा आढ्यैः क्रियमाणा पूजाऽऽढ्यत्वम्, कामः-शब्दरूपलक्षणः, भोगः गन्धरसस्पर्शस्वरूपः, संक्लेशपूर्वकसुखजनकत्वात् सन्तोषः अल्पेच्छता, तत्सुखमेव, आनन्दरूपत्वात्सन्तोषस्य, उक्तञ्च 'आरोग्गसारियं माणुसत्तणं सच्चसारिओ धम्मो। विज्जा निच्छियसारा सुहाइं सन्तोससाराइं ॥' इति, अस्तित्वं येन येन यदा यदा प्रयोजनं तदा तदा तस्य सत्त्वम् अस्यानन्दहेतुत्वात्सुखरूपता, शुभभोगः अनिन्दिता विषयेषु भोगक्रिया सा सुखमेव सातोदयसम्पाद्यत्वात्, निष्क्रमः, अविरतिजम्बालान्निष्क्रमणं प्रव्रज्येत्यर्थः, भवस्थानां हि निष्क्रमणमेव सुखं निराबाधस्वायत्तानन्दरूपत्वात्, शेषसुखानि च दुःखप्रतीकारमात्रत्वात्सुखाभिमानजनकत्वाच्च न तत्त्वतः सुखं भवतीति । अनाबाधं—जन्मजरामरणक्षुत्पिपासाद्याबाधारहितं सर्वोत्तमं मोक्षसुखमित्यर्थः ॥ २२४ ॥

निष्क्रमणसुखं हि चारित्रसुखं तच्चानुपहतमनाबाधसुखाय, अतः चारित्रस्यैतत्साधनस्य भक्तादेर्ज्ञानादेश्चोपघातकं निरूपयति—

**उद्गमोत्पादनैषणापरिकर्मपरिहरणाज्ञानदर्शनचारित्राप्रीतिकसंरक्षणविषय उपघातो विशुद्धिश्च ॥ २२५ ॥**

**उद्गमेति,** आधाकर्मादिना षोडशविधेनोद्गमेन चारित्रस्य विराधनं भक्तादेर्वा अकल्प्यता उद्गमोपघातः, एवं धात्र्यादिदोषलक्षणयोत्पादनया शङ्कितादिभेदयैषणया उपघ... परिकर्म तेनोपघातः, स्वाध्यायस्य श्रमादिना शरीरस्य संयमस्य वे... अलाक्षणिकस्याकल्प्यस्य चोपकरणस्याऽऽसेवा परिहरणा तयोपघातः, ... शङ्कादिभिर्दर्शनोपघातः, समितिभङ्गादिभिश्चारित्रोपघातः, ...

शरीरादिविषये मूर्च्छा तया उपघातः परिग्रहविरतेरिति संरक्षणोपघातः । विशुद्धिश्च–भक्तादेर्निरवद्यता उद्गमादिविशुद्धिः, परिकर्मणा वस्त्रादिसीवनलक्षणेन क्रियमाणेन विशुद्धिर्या संयमस्य सा परिकर्मविशुद्धिः परिहरणया–वस्त्रादेः शास्त्रीययाऽऽसेवनया विशुद्धिः परिहरणाविशुद्धिः ज्ञानादित्रयविशुद्धयविशुद्धिः परिहरणया–वस्त्रादेः शास्त्रीययाऽऽसेवनया विशुद्धिः परिहरणाविशुद्धिः ज्ञानादित्रयविशुद्धयः स्वाचारपरिपालनात्, अप्रीतिकस्य विशोधिस्थाननिवर्त्तनात्, संरक्षणं संयमार्थमुपध्यादेस्तेन विशुद्धिश्चारित्रस्येति संरक्षणविशुद्धिरिति ॥ २२५ ॥

एवंविधविशुद्धियुतं सत्यमेव भाषत इति तन्निरूपयति—

**जनपदसम्मतस्थापनानामरूपप्रतीत्यव्यवहारभावयोगौपम्यविषयं सत्यम् ॥ २२६ ॥**

जनपदेति, सन्तः प्राणिनः पदार्था मुनयो वा तेभ्यो हितं सत्यं दशविधम्, यथा–सत्यपदं सर्वत्र सम्बन्धनीयम्, जनपदेषु–देशेषु यद्यदर्थवाचकतया रूढं देशान्तरेऽपि तत्तदर्थवाचकतया प्रयुज्यमानं सत्यमवितथमिति जनपदसत्यम्, यथा कोङ्कणादिषु पयः पिच्चं नीरमुदकमित्यादि, सत्यत्वञ्चास्यादुष्टविवक्षाहेतुत्वान्नानाजनपदेष्विष्टार्थप्रतिपत्तिजनकत्वाद्व्यवहारप्रवृत्तेः, एवमन्यत्रापि भावना कार्या । सम्मतसत्यं–कुमुदकुवलयोत्पलतामरसानां समाने पङ्कसमुद्भवे गोपालादीनामपि सम्मतमरविन्दमेव पङ्कजमिति, अतस्तत्र सम्मततया पङ्कजशब्दः सत्यः कुवलयादावसत्यः असम्मतत्वात् । स्थाप्यत इति स्थापना यल्लेप्यादिकर्माऽर्हदादिविकल्पेन स्थाप्यते तद्विषये सत्यं स्थापनासत्यम्, यथाऽजिनोऽपि जिनोऽयमनाचार्योऽप्याचार्योऽयमिति, नामसत्यं–यथा कुलमवर्द्धयन्नपि कुलवर्द्धन उच्यते । रूपसत्यं यथा प्रपञ्चयतिः प्रव्रजितरूपं धारयन् प्रव्रजित उच्यते न चासत्यताऽस्येति । प्रतीत्यसत्यं–वस्त्वन्तरमाश्रित्य सत्यम्, यथाऽनामिकाया दीर्घत्वं ह्रस्वत्वञ्चेति, तथा ह्यनन्तपरिणामस्य द्रव्यस्य तत्तत्सहकारिकारणसन्निधाने तत्तद्रूपमभिव्यज्यत इति सत्यता । व्यवहारसत्यता–यथा दह्यते गिरिः, गलति भाजनमित्यादि, अत्र च गिरिगततृणादिदाहे व्यवहारः प्रवर्त्तते, उदके च गलति सतीति । भावसत्यं भूयिष्ठशुक्लादिपर्यायमाश्रित्य शुक्ला बलाकेति, सत्यपि हि पञ्चवर्णसम्भवे शुक्लवर्णोत्कटत्वात् शुक्लेति । योगसत्यं–सम्बन्धतो यथा दण्डयोगाद्दण्डी, छत्रयोगाच्छत्री एवोच्यते । औपम्यसत्यं–उपमैवौपम्यं तेन सत्यं यथा समुद्रवत्तडागं देवोऽयं सिंहस्त्वमिति ॥ २२६ ॥

सत्यविपक्षं मृषा मिश्रञ्चाह—

**क्रोधमायालोभप्रेमद्वेषहासभयाख्यायिकोपघाताश्रिता मृषा, उत्पन्नविगतमिश्रजीवाजीवमिश्रानन्तपरीत्ताद्धाद्धाद्धाविषया मिश्रा भाषा ॥२२७॥**

क्रोधेति, क्रोधविषया भाषा मृषा, यथा क्रोधाभिभूतोऽदासमपि दासमभिधत्ते, मानविषया यथा मानाध्मातः कश्चित् केनचिदल्पधनोऽपि पृष्टः सन्नाह–महाधनोऽहमिति, मायाविषया यथा मायाकारप्रभृतय आहुः–नष्टो गोलक इति, लोभाश्रयेण यथा वणिक्प्रभृतीनामन्यथा क्रीतमेवेत्थं क्रीतमित्यादि, प्रेमाश्रयेण यथा अतिरक्तानां दासोऽहं तवेत्यादि, द्वेषनिश्रितं यथा–मत्सरिणा गुणवत्यपि निर्गुणोऽयमित्यादि, हासविषया यथा कन्दर्पिकाणां कस्मिंश्चित्कस्यचित्सम्बन्धिनि गृहीते पृष्टानां

न दृष्टमित्यादि, भयाश्रया यथा तस्करादिगृहीताना तथा तथाऽसमञ्जसाभिधानम्, आख्यायिकाश्रिता—यथा तत्प्रतिबद्धोऽसत्प्रलाप, उपघात प्राणिवधस्तदाश्रयेण यथा अचौरे चौरोऽयमित्यभ्याख्यानमिति । सत्यासत्ययोगाद्यद्वचन तदाह्—उत्पन्नेति, उत्पन्नविषया मिश्रा यथैक नगरमधिकृत्य अस्मिन्नद्य दशदारका उत्पन्ना इत्यभिदधत , तन्न्यूनाधिकभावे व्यवहारतोऽस्य सत्यमृषात्वात्, श्वस्ते दास्यामीत्यभिधाय पश्चात्तदपि दत्तवतो लोके मृषात्वादर्शनादनुत्पन्नेष्वेवादत्तेऽनेन वा मृषात्वसिद्धे, सत्या क्रियाभावेन सर्वथा व्यत्ययात्, एवमग्रेऽपि भावनीयम्, विगतविषया यथा एक ग्राममधिकृत्यास्मिन्नद्य दशवृद्धा विगता इत्यभिदधतो न्यूनाधिकभावे मिश्रम् । उत्पन्नविगतलक्षण मिश्रञ्च यथैक पत्तनमधिकृत्यास्मिन्नद्य दशदारका जाता दश च वृद्धा विगता इत्यभिदधतस्तन्न्यूनाधिकभावे । जीवविषय मिश्र यथा जीवन्मृतकृमिराशौ जीवराशिरिति, अजीवानाश्रित्यमिश्र यथा तस्मिन्नेव प्रभूतमृतकृमिराशावजीवराशिरिति, जीवाजीवविषय मिश्र यथा तस्मिन्नेव जीवन्मृतकृमिराशौ प्रमाणनियमेनैतावन्तो जीवन्त्येतावन्तश्च मृता इत्यभिदधतस्तन्न्यूनाधिकत्वे । अनन्तविषय मिश्र यथा मूलकन्दादौ परीतपत्रादिमत्यनन्तकायोऽयमित्यभिदधत । परीतविषय—यथाऽनन्तकायलेशवति परीते परीतोऽयमित्यभिदधत । कालविषय सत्यासत्य यथा कश्चित् कस्मिंश्चित् प्रयोजने सहायांस्त्वरयन् परिणतप्राये भास्करे एव रजनी वर्त्तत इति ब्रवीति । अद्धा दिवसो रजनी वा तदेकदेश प्रहरादि, अद्धाद्धाविषय मिश्र यथा कश्चित् कस्मिंश्चित् प्रयोजने प्रहरमात्र एव मध्याह्न इत्याहेति ॥ २२७ ॥

सत्यभाषण हि सकलप्राणिना सुखावहमशस्त्ररूपत्वात् शस्त्रमेव हि दुःखावहमिति तन्निरूपयति—

## अग्निविषलवणस्नेहक्षाराम्लदुष्प्रयुक्तमनोवाक्कायाविरतयः शस्त्राणि॥२२८॥

अग्नीति, शस्यते हिंस्यतेऽनेनेति शस्त्र हिंसक वस्तु तच्च द्विधा द्रव्यतो भावतश्च, तत्र द्रव्यतो यथा अग्नि —अनल, स च विसदृशानलापेक्षया स्वकायशस्त्र भवति पृथिव्याद्यपेक्षया परकायशस्त्रम् । विष स्थावरजङ्गमभेद लवण प्रसिद्धम्, स्नेहस्तैलघृतादि, क्षारो भस्मादि, अम्ल–काञ्जिकम्, भावस्वरूपन्तु शस्त्र यथा दुष्प्रयुक्तमकुशल मनस्तथाविधा वाक् तथाविध शरीर, कायस्य हि हिंसाप्रवृत्तौ शस्त्रादेरुपकरणत्वात्तद्ग्रहण विज्ञेयम् । अविरतिरप्रत्याख्यानमिति ॥ २२८ ॥

अविरत्यादेर्दोषत्वात्तत्प्रस्तावाद्दोषविशेषानाह—

## तज्जातमतिभङ्गप्रशास्तृपरिहरणस्वलक्षणकारणहेतुसंक्रमणनिग्रहवस्तुदोषा दोषाः ॥ २२९ ॥

तज्जातेति, एते हि दोषा गुरुशिष्ययोर्वादिप्रतिवादिनोर्वा वादाश्रया इव लक्ष्यन्ते,तत्र तस्य गुर्वादेर्जात—जातिः प्रकारो वा जन्मममर्मकर्मादिलक्षण तज्जात तदेव दूषणमिति कृत्वा दोषस्तज्जातदोषः यथाऽपकुलादिना दूषणमित्यर्थ , अथवा प्रतिवाद्यादेः सकाशाज्जातः क्षोभा मुखस्तम्भादिरूपो दोषस्तज्जातदोष । निजमतेर्विनाशः विस्मृत्यादिलक्षणो यो दोषो मतिभङ्गदोपः । प्रशास्तानुशासकः सभापतिः सभानायको सभ्यो वा, तस्मात्प्रद्विष्टादुपेक्षकाद्वा दोषः प्रतिवादिनो अथवा-

**अनुकम्पासङ्ग्रहभयकारुण्यलज्जागौरवाधर्मधर्मविषयं करिष्यति कृतमिति बुद्धिविषयश्च दानम् ॥ २३० ॥**

अनुकम्पेति, अनुकम्पा-कृपा तया दानं दीनानाथविषयमनुकम्पादानम्, अनुकम्पातो यद्दानं तदनुकम्पैव, उपचारात्, उक्तञ्च 'कृपणेऽनाथदरिद्रे व्यसनप्राप्ते च रोगशोकहते। यद्दीयते कृपार्थमनुकम्पा तद्भवेद्दानम्' इति। सङ्ग्रहणं सङ्ग्रहः—व्यसनादौ सहायकरणं तदर्थं दानं संग्रहदानम्, यद्वा अभेदाद्दानमपि संग्रह उच्यते, आह च 'अभ्युदये व्यसने वा यत्किञ्चिद्दीयते सहायार्थम्। तत्सङ्ग्रहतोऽभिमतं मुनिभिर्दानं न मोक्षाय ॥' इति, भयाद्यद्दानं तद्भयदानम्, भयनिमित्तात्वाद्दानमपि भयमुपचारात्, उक्तञ्च 'राजारक्षपुरोहितमधुमुखमावल्लदण्डपाशिषु च। यद्दीयते भयार्थात्तद्भयदानं बुधैर्ज्ञेयम् ॥' इति, कारुण्य-शोकस्तेन पुत्रवियोगादिजनितेन तदीयस्यापि तल्पादेः स जन्मान्तरे सुखितो भवत्विति वासनातोऽन्यस्य वा यद्दानं तत्कारुण्यदानं कारुण्यजन्यत्वाद्वा दानमपि कारुण्यमुपचारात्, लज्जया ह्रिया दानं यत्तल्लज्जादानम्, उक्तञ्च 'अभ्यर्थितः परेण तु यद्दानं जनसमूहमध्यगतः। परचित्तरक्षणार्थं लज्जायास्तद्भवेद्दानम् ॥' इति। गौरवेण-गर्वेण यद्दीयते तद्गौरवदानम्, उक्तञ्च 'नटनर्तमुष्टिकेभ्यो दानं सम्बन्धिबन्धुमित्रेभ्यः। यद्दीयते यशोऽर्थं गर्वेण तु तद्भवेद्दानम् ॥' इति, अधर्मपोषकं दानमधर्मदानम्, अधर्मकारणत्वाद्वाऽधर्म एवेति, उक्तञ्च 'हिंसानृतचौर्योद्यतपरदारपरिग्रहप्रसक्तेभ्यः। यद्दीयते हि तेषां तज्जानीयादधर्माय ॥' इति, धर्मकारणं यद्दानं तद्धर्मदानं धर्म एव वा, उक्तञ्च 'समतृणमणिमुक्तेभ्यो यद्दानं दीयते सुपात्रेभ्यः। अक्षयमतुलमनन्तं तद्दानं भवति धर्माय ॥' इति, करिष्यति कञ्चनोपकारं ममायमिति बुद्ध्या यद्दानं तत्करिष्यतीति दानमुच्यते। कृतं ममानेन तत्प्रयोजनमिति तत्प्रत्युपकारार्थं यद्दानं तत्कृतमिति, उक्तञ्च 'शतशः कृतोपकारो दत्तञ्च सहस्रशो ममानेन। अहमपि ददामि किञ्चित्प्रत्युपकाराय तद्दानम् ॥' इति ॥ २३० ॥

दानधर्मेऽपि सुस्थितत्वात् प्रत्याख्यानधर्ममाह—

**अनागतातिक्रान्तकोटीसहितनियंत्रितसाकारानाकारपरिमाणकृतनिरवशेषसकेतकाद्धारूपं प्रत्याख्यानम् ॥ २३१ ॥**

अनागतेति, प्रत्याख्यानं निवृत्तिरित्यर्थः, अनागतकरणादनागतं—पर्युषणादावाचार्यादिवैयावृत्त्यकरणान्तरायसद्भावादारत एव तत्तपःकरणम्। अतिक्रान्तं अतीते पर्युषणादौ करणात्। कोटीभ्यां परस्य चतुर्थादेरन्तविभागोऽपरस्य चतुर्थादेरेवारम्भविभाग इत्येवं लक्षणाभ्यां सहितं—युक्तं कोटीसहितं मिलितोभयप्रत्याख्यानकोटेश्चतुर्थादेः करणमित्यर्थः। नितरां यन्त्रितं नियन्त्रितं—प्रतिज्ञातदिनादौ ग्लानत्वाद्यन्तरायभावेऽपि नियमात् कर्त्तव्यमिति हृदयम्, एतच्च प्रथमसंहननस्यैवेति। आक्रियन्त इत्याकाराः प्रत्याख्यानापवादहेतवोऽनाभोगाद्याः, तैः सहितम्। अविद्यमाना आकारा—महत्तराद्यो निष्प्रयोजनत्वात् प्रतिपत्तुर्यस्मिंस्तदनाकारम्, तत्राप्यनाभोगसहसाकारावाकारौ स्यातां, मुखेऽङ्गुल्यादिप्रक्षेपसम्भवात्। परिमाणं सङ्ख्यानं दत्तिकवलगृहभिक्षादीनां कृतं यस्मिंस्तत्परिमाणकृतम्। निरवशेषमपि अशनाद्याहारजातं यस्मात्तन्निरवशेषं निरवशेषं वा सर्वमशनादि तद्विषय-

स्याग्निरवशेषमिति । चैतन केवश्चिद्दसङ्कुष्ठमुष्टिमणिगृहादिकं स एव केवलं तत्सहितं सकेतकम् । अद्धा कालः पौरुष्यादिकालमानमाश्रित्येति भावः ॥ २३१ ॥

प्रत्याख्यानस्य साधुसामाचारीत्वादन्यामपि सामाचारीं निरूपयति—

**इच्छामिथ्यातथाकारावश्यकीनैषेधिक्यापृच्छनाप्रतिपृच्छाछन्दनानिमंत्रणोपसम्पदः सामाचार्यः ॥ २३२ ॥**

**इच्छेति,** सव्यवहारः सामाचारी, इच्छाकारः बलाभियोगमन्तरेण करणम्, इच्छापूर्वकं करणं न बलाभियोगपूर्वकमित्यर्थः । मिथ्याकारो मिथ्याक्रिया तथा च संयमयोगे वितथाचरणे विदितजिनवचनसाराः साधवस्तत्क्रियावैतथ्यप्रदर्शनाय मिथ्याकारं कुर्वते मिथ्याक्रियेयमिति । तथाकरणं तथाकारः स च सूत्रप्रश्नादिगोचरः यथा भवद्भिरुक्तं तथैवेदमित्येवंस्वरूपः, अयञ्च पुरुषविशेषविषय एव प्रयोक्तव्यः । अवश्यकर्त्तव्यैर्योगैर्निष्पन्नाऽऽवश्यकी, एतत्प्रयोग आश्रयान्निर्गच्छत आवश्यकयोगयुक्तस्य साधोर्भवति । नैषेधिकी—व्यापारान्तरनिषेधरूपा, प्रयोगश्चास्या आश्रये प्रविशत इति । आपृच्छनमापृच्छा सा विहारभूमिगमनादिषु प्रयोजनेषु गुरोः कार्या । प्रतिपृच्छा—प्रतिप्रश्नः, सा च प्राग्नियुक्तेनापि करणकाले कार्या पूर्वं निषिद्धेन वा प्रयोजनतस्तदेव कर्तुकामेनेति । छन्दना प्राग्गृहीतेनाशनादिना कार्या । निमन्त्रणा—अगृहीतेनैवाशनादिना भवन्तमहमशनादिकमानयामीत्येवंरूपा । उपसम्पत्—इतो भवदीयोऽहमित्यभ्युपगमः सा च ज्ञानदर्शनचारित्रार्थतस्त्रिधा, तत्र ज्ञानोपसम्पत् सूत्रार्थयोः पूर्वगृहीतयोः स्थिरीकरणार्थं तथा विस्मृतसन्धानार्थं तथा प्रथमतो ग्रहणार्थं उपसम्पद्यते दर्शनोपसम्पदप्येवं किन्तु दर्शनप्रभावकसम्मत्यादि शास्त्रविषया, चारित्रोपसम्पच्च वैयावृत्त्यकरणार्थं क्षपणार्थञ्चोपसम्पद्यमानस्येति ॥ २३२ ॥

दर्शनविषयाप्युपसम्पद्भवति तच्च दर्शनं सरागसम्यग्दर्शनमपीति तन्निरूपयति—

**निसर्गोपदेशाज्ञासूत्रबीजाधिगमविस्तारक्रियासंक्षेपधर्मरुचयः सरागसम्यग्दर्शनानि ॥ २३३ ॥**

**निसर्गेति,** सरागस्य—अनुपशान्ताक्षीणमोहस्य यत्सम्यग्दर्शनं तत्त्वार्थश्रद्धानं तद्यथा । तत्र निसर्गः—स्वभावस्तेन रुचिः—तत्त्वाभिलाषरूपाऽस्येति निसर्गतो रुचिरिति वा निसर्गरुचिः, यो हि जातिस्मरणप्रतिभादिरूपया स्वमत्याऽवगतान् सद्भूतान् जीवादिपदार्थान् श्रद्धाति स निसर्गरुचिः । उपदेशो गुर्वादिना कथनम्, तेन रुचिर्यस्येत्युपदेशरुचिः, यो हि जिनोक्तानेव जीवादीनर्थान् तीर्थकरशिष्यादिनोपदिष्टान् श्रद्धत्ते स उपदेशरुचिः । आज्ञा—सर्वज्ञवचनं, तयारुचिर्यस्य स तथा, यो हि प्रतनुरागद्वेषमिथ्याज्ञानतयाऽऽचार्यादीनामाज्ञयैव कुग्रहाभावाज्जीवादि तथेति रोचते माषतुषादिवत् स आज्ञारुचिः । सूत्रेण रुचिर्यस्य स सूत्ररुचिः, यो हि सूत्रागममधीयानस्तेनैवाङ्गप्रविष्टादिना सम्यक्त्वं लभते गोविन्दवाचकवत् स सूत्ररुचिः बीजमिव बीजं यदेकमप्यनेकार्थप्रतिबोधोत्पादकं वचस्तेन रुचिर्यस्य स बीजरुचिः यस्य ह्येकेनापि जीवादिना पदेनावगतेनानेकेषु पदार्थेषु रुचिरुपैति स बीज

रुचिः । येन ह्याचारादिकं श्रुतमर्थतोऽधिगतं भवति सोऽभिगमरुचिः । विस्तारो व्यासः, ततो रुचिर्यस्य स, येन हि धर्मास्तिकायादिद्रव्याणां सर्वपर्यायाः सर्वैर्नयप्रमाणैर्ज्ञाता भवन्ति स विस्ताररुचिः, ज्ञानानुसारिरुचित्वात् । क्रियानुष्ठाने रुचिर्यस्य, यस्य दर्शनाद्याचारानुष्ठाने भावतो रुचिरस्ति स क्रियारुचिः । संक्षेपः संग्रहः तत्र रुचिर्यस्य, यो ह्यप्रतिपन्नकपिलादिदर्शनो जिनप्रवचनानभिज्ञश्च संक्षेपेणैव चिलातिपुत्रवदुपशमादिपदत्रयेण तत्त्वरुचिमवाप्नोति स संक्षेपरुचिः । धर्मे श्रुतादौ रुचिर्यस्य, यो हि धर्मास्तिकायं श्रुतधर्मं चारित्रधर्मं च जिनोक्तं श्रद्धत्ते स धर्मरुचिरिति ॥ २३३ ॥

अयञ्च सम्यग्दृष्टिर्दशानामपि संज्ञानां क्रमेण व्यवच्छेदं करोतीति तदाह—

## आहारभयमैथुनपरिग्रहक्रोधमानमायालोभलोकौघाः संज्ञाः ॥२३४॥

आहारेति, संज्ञानं संज्ञा, आभोग इत्यर्थः, मनोविज्ञानमित्यन्ये, संज्ञायते वा आहाराद्यर्थी जीवोऽनयेति संज्ञा वेदनीयमोहनीयोदयाश्रया ज्ञानदर्शनावरणक्षयोपशमाश्रया च विचित्रा आहारादिप्राप्तये क्रियैवेत्यर्थः, सा चोपाधिभेदाद्भिद्यमाना दशप्रकारा भवतीति, तत्र क्षुद्वेदनीयोदयात्कवलाद्याहारार्थं पुद्गलोपादानक्रियैव संज्ञायतेऽनयेति आहारसंज्ञा, भयवेदनीयोदयाद्भयोद्भ्रान्तस्य दृष्टिवदनविकाररोमाञ्चोद्भेदादिक्रियैव संज्ञायतेऽनयेति भयसंज्ञा, पुंवेदाद्युदयान्मैथुनाय स्त्र्याद्यङ्गालोकनप्रसन्नवदनस्तम्भितोरुवेपथुप्रभृतिलक्षणा च क्रियैव संज्ञायतेऽनयेति मैथुनसंज्ञा, लोभोदयात् प्रधानभवकारणाभिष्वङ्गपूर्विका सचित्तेतरद्रव्योपादानक्रिया च संज्ञायतेऽनयेति परिग्रहसंज्ञा, क्रोधोदयात्तदावेशगर्भा प्ररूक्षमुखनयनदन्तच्छदचेष्टैव संज्ञायतेऽनयेति क्रोधसंज्ञा, मानोदयादहङ्काराद्यात्मिकोत्सेकादिपरिणतिरेव संज्ञायतेऽनयेति मानसंज्ञा, मायोदयेनाशुभसंक्लेशादनृतसम्भाषणादिक्रियैव संज्ञायतेऽनयेति मायासंज्ञा, लोभोदयाल्लालसत्वान्वितासचित्तेतरद्रव्यप्रार्थनैव संज्ञायतेऽनयेति लोभसंज्ञा, मतिज्ञानाद्यावरणक्षयोपशमाच्छब्दाद्यर्थगोचरा सामान्यावबोधक्रियैव संज्ञायतेऽनयेत्योघसंज्ञा, तद्विशेषावबोधक्रियैव संज्ञायतेऽनयेति लोकसंज्ञा, ततश्चौघसंज्ञा दर्शनोपयोगः, लोकसंज्ञा ज्ञानोपयोग इति ॥ २३४ ॥

संज्ञावन्तो व्यपगतास्तेऽपि भवन्तीति सामान्येन धर्मं निरूपयति—

## ग्रामनगरराष्ट्रपाखण्डकुलगणसङ्घश्रुतचारित्रास्तिकाया धर्माः ॥२३५॥

ग्रामेति, जनपदाश्रया ग्रामास्तेषां तेषु वा धर्मः—समाचारो व्यवस्थेति ग्रामधर्मः, स प्रतिग्रामं भिन्नः, अथवा ग्रामः इन्द्रियग्रामो रूढस्तद्धर्मो विषयाभिलाषः । नगरधर्मो नगराचारः सोऽपि प्रतिनगरं प्रायो भिन्न एव, राष्ट्रधर्मो देशाचारः, पाखण्डधर्मः पाखण्डिनामाचारः, कुलधर्मः—उग्रादिकुलाचारः, अथवा कुलं चान्द्रादिकमार्हतानां गच्छसमूहात्मकं तस्य धर्मः सामाचारी, गणधर्मो मल्लादिगणव्यवस्था, जैनानां वा कुलसमुदायो गणः कोटिकादिस्तद्धर्मः तत्सामाचारी, सङ्घधर्मो गोष्ठीसमाचारः, आर्हतानां वा गणसमुदायरूपश्चतुर्वर्णो वा सङ्घस्तद्धर्मस्तत्समाचारः, श्रुतमेवाचारादिकं दुर्गतिप्रपतज्जीवधारणाद्धर्मः श्रुतधर्मः, चयरिक्तीकरणाच्चारित्रं तदेव धर्मश्चारित्रधर्मः, अस्तयः प्रदेशास्तेषां कायो राशिरस्तिकायः स एव धर्मः, गतिपर्याये जीवपुद्गलयोर्धारणादित्यस्तिकायधर्म इति ॥२३५॥

सोऽयं धर्मः स्थविरैः कृतो भवतीति तानाह—

**ग्रामनगरराष्ट्रप्रशास्तृकुलगणसंघजातिश्रुतपर्यायसम्बन्धिनः स्थविराः ॥ २३६ ॥**

ग्रामेति, दुर्व्यवस्थितं जनं सन्मार्गे स्थापयन्ति—स्थिरीकुर्वन्तीति स्थविराः, तत्र ये ग्रामनगरराष्ट्रेषु व्यवस्थाकारिणो बुद्धिमन्त आदेयाः प्रभविष्णवस्ते तत्स्थविराः, प्रशासति शिक्षयन्ति ये ते प्रशास्तारः—धर्मोपदेशकाः, ते च स्थविराः। कुलस्य गणस्य संघस्य च लौकिकस्य लोकोत्तरस्य च ये व्यवस्थाकारिणस्तद्भञ्जकस्य निग्राहकाः स्थविरास्ते तथा। षष्टिवर्षप्रमाणजन्मपर्याया जातिस्थविराः। समवायाद्यङ्गधारिणः श्रुतस्थविराः विंशतिवर्षप्रमाणप्रव्रज्यापर्यायवन्तः पर्यायस्थविरा इति ॥ २३६ ॥

प्राग्स्थविरादयः संसारिण इति तत्पर्यायविशेषानाह—

**बालक्रीडामन्दबलप्रज्ञाहायनीप्रपञ्चाप्राग्भारामुङ्मुखीशायनीभेदा दशा ॥ २३७ ॥**

बालेति, यत्र काले मनुष्याणां वर्षशतमायुः स कालो वर्षशतायुष्कः, तत्र यः पुरुषः सोऽप्युपचाराद्वर्षशतायुष्को मुख्यवृत्त्या वर्षशतायुषि पुरुषे गृह्यमाणे पूर्वकोट्यायुष्कपुरुषकाले वर्षशतायुषः पुरुषस्य कस्यचित्कुमारत्वेऽपि बालादिदशदशकप्रमासिः स्यात्, न चैवम्, अत उपचार एव युक्तः, वर्षदशकप्रमाणाः कालकृता अवस्था दशा, वर्षशतायुर्ग्रहणं विशिष्टतरदशस्थानकानुरोधात्, विशिष्टतरत्वञ्च वर्षदशकप्रमाणत्वात्, अन्यथा पूर्वकोट्यायुषोऽपि बालाद्या दशावस्था भवन्त्येव, केवलं दशवर्षप्रमाणा न भवन्ति, बहुवर्षा वा अल्पवर्षा वा स्युरिति। तत्र बालस्येयमवस्था धर्मधर्मिणोरभेदाद्बाला जातमात्रस्य जन्तोः प्रथमा दशा सुखदुःखानामत्यन्तविज्ञानाभावात्। क्रीडाप्रधाना दशा क्रीडा द्वितीया कामभोगेषु तीव्रमत्यनुदयात्। विशिष्टबलबुद्धिकार्योपदर्शनासमर्था भोगाननुभवितुं च समर्था यस्यामवस्थायां सा मन्दा तृतीया भोगोपार्जने मन्दत्वात्। यस्यां पुरुषस्य बलं भवति सा बलयोगाद्बला चतुर्थी बलदर्शनसामर्थ्यात्। ईप्सितार्थसम्पादनविषयायाः कुटुम्बाभिवृद्धिविषयाया वा बुद्धेर्योगाद्दशापि प्रज्ञा पञ्चमी, हापयति इन्द्रियाण्यपटूनि करोति यस्यां दशायां सा हायनी षष्ठी, कामेषु विरक्तत्वादिन्द्रियाणां क्षीणशक्तित्वाच्च। प्रपञ्चयति—स्फारयत्यारोग्यादिति प्रपञ्चा सप्तमी रोगनालोद्भवेः, प्राग्भारं ईषदवनतं गात्रं यस्यां भवति सा प्राग्भारा अष्टमी सङ्कुचितवलिचर्मत्वात्, मोचनं—मुक् जराराक्षसीसमाक्रान्तशरीरगृहस्य जीवस्य मुचं प्रति मुखं यस्यां सा मुङ्मुखी नवमी, शाययति निद्रावन्तं करोति यस्यां सा शायनी दशमी हीनभिन्नस्वरत्वाद्दीनत्वाद्दुर्बलत्वाच्चेति ॥ २३७ ॥

अथ मङ्गलरूपं भगवन्तं महावीरं विघ्नविघाताय स्मरन् दशाऽऽश्चर्याण्याह—

**उपसर्गगर्भहरणस्त्रीतीर्थाभव्यपर्षत्कृष्णावरकंकागमनचन्द्रसूर्यावतरणहरिवंशकुलोत्पत्तिचमरोत्पाताष्टशतसिद्धासंयतपूजा आश्चर्याणि ॥ २३८ ॥**

**उपसर्गेति,** आ–विस्मयतश्चर्यन्तेऽवगम्यन्ते इत्याश्चर्याण्यद्भुतानि, तत्रोपसृज्यते क्षिप्यते च्याव्यते प्राणी धर्मादेभिरित्युपसर्गा देवादिकृतोपद्रवा, ते च भगवतो महावीरस्य छद्मस्थकाले केवलकाले च नरामरतिर्यक्कृता अभूवन्, इदञ्च किल न कदाचिद्भूतपूर्वं तीर्थकरादि अनुत्तरपुण्यसम्भारत्वया नोपसर्गभाजनमपि तु सकलनरामरतिरश्चां सत्कारादिस्थानमेवेति अनन्तकालभाव्ययमर्थो लोकेऽद्भुतभूत इति । गर्भस्य–उदरसत्त्वस्य हरण–उदरान्तरसंक्रामणं गर्भहरणम्, एतदपि तीर्थकरापेक्षयाऽभूतपूर्वं सद्भगवतो महावीरस्य जातम्, पुरन्दरादिष्टेन हरिणेगमेषिदेवेन देवानन्दाभिधानब्राह्मण्युदरात्त्रिशलाभिधानाया राजपत्न्या उदरे सङ्क्रमणात्, एतदप्यनन्तकालभावित्वादाश्चर्यमेवेति । स्त्री योषित्, तस्यास्तीर्थकरत्वेनोत्पन्नाया तीर्थं द्वादशाङ्गं सङ्घो वा, तीर्थं हि पुरुषसिंहाः पुरुषवरगन्धहस्तिनस्त्रिभुवनेऽप्यव्याहतप्रभावाः प्रवर्त्तयन्ति, इह त्ववसर्पिण्यां मिथिलानगरीपतेः कुम्भकराजस्य दुहिता मल्ल्यभिधाना एकोनविंशतितमतीर्थकरस्थानोत्पन्ना तीर्थं प्रवर्तितवतीत्यनन्तकालजातत्वादस्य भावस्याश्चर्यतेति । चारित्रधर्मस्यायोग्या पर्षत्–तीर्थकरसमवसरणश्रोतृलोकः अभव्यपर्षत्, श्रूयते हि भगवतो वर्द्धमानस्य जृम्भिकग्रामनगराद्बहिरुत्पन्नकेवलस्य तदनन्तरं मिलितचतुर्विधदेवनिकायविरचितसमवसरणस्य भक्तिकुतूहलाकृष्टसमायातानेकनरामरविशिष्टतिरश्चां स्वस्वभाषानुसारिणाऽतिमनोहारिणा महाध्वनिना कल्पपरिपालनायैव धर्मकथा बभूव, यतो न केनापि तत्र विरतिः प्रतिपन्ना, न चैतत्तीर्थकृतः कस्यापि भूतपूर्वमितीदमाश्चर्यम् । कृष्णस्य नवमवासुदेवस्यापरकङ्का–राजधानी गतिविषया जातेति अजातपूर्वत्वादाश्चर्यम्, श्रूयते हि पाण्डवभार्या द्रौपदी धातकीखण्डभरतक्षेत्रापरकङ्काराजधानीनिवासिपद्मराजेन देवसामर्थ्येनापहृता, द्वारकावतीवास्तव्यश्च कृष्णो वासुदेवो नारदादुपलब्धवृत्तः समाराधितसुस्थिताभिधानलवणसमुद्राधिपतिदेवः पञ्चभिः पाण्डवैः सह द्वियोजनलक्षप्रमाणं जलधिमतिक्रम्य पद्मराजं रणविमर्देन विजित्य द्रौपदीमानीतवान्, तत्र च कपिलवासुदेवो मुनिसुव्रतजिनात्कृष्णवासुदेवागमनवार्तामुपलभ्य स बहुमानं कृष्णदर्शनार्थमागतः, कृष्णश्च तदा समुद्रमुल्लङ्घयति स्म ततस्तेन पाञ्चजन्यः पूरितः कृष्णेनापि तथैव ततः परस्परशङ्खशब्दश्रवणमजायतेति । भगवतो महावीरस्य वन्दनार्थमवतरणमाकाशात्समवसरणभूम्यां चन्द्रसूर्ययोः शाश्वतविमानोपेतयोरभूदेतदप्याश्चर्यमेवेति । हरेः पुरुषविशेषस्य वंशः–पुत्रपौत्रादिपरम्परा हरिवंशः तल्लक्षणं यत्कुलं तस्योत्पत्तिः, कुलं ह्यनेकधा अतो हरिवंशेन विशिष्यते, एतदप्याश्चर्यमेवेति, श्रूयते हि भरतक्षेत्रापेक्षया तृतीयं हरिवर्षाख्यं मिथुनकक्षेत्रं तत केनापि पूर्वविरोधिना व्यन्तरसुरेण मिथुनकमेकं भरतक्षेत्रे क्षिप्तं तेन पुण्यानुभावाद्राज्यं प्राप्तं ततो हरिवर्षजातहरिनाम्नः पुरुषाद्यो वंशः स तथेति । चमरस्य–असुरकुमारराजस्योत्पतनमूर्ध्वगमनं चमरोत्पातः सोऽप्याकस्मिकत्वादाश्चर्यम्, श्रूयते हि चमरचञ्चाराजधानीनिवासी चमरेन्द्रोऽभिनवोत्पन्नः सन्नूर्ध्वमवधिनाऽऽलोकयामास, ततः स्वशीर्षोपरि सौधर्मेऽव्यवस्थितं शक्रं ददर्श, ततो मत्सराध्मातः शक्रतिरस्काराहितमतिरिहागत्य भगवन्तं महावीरं छद्मस्थावस्थैकरात्रिकीं प्रतिमां प्रतिपन्नं सुंसुमारनगरोद्यानवर्तिनं सबहुमानं प्रणम्य भगवंस्त्वत्पादपङ्कजं मे शरणमरिपराजितस्येति विकल्प्य विरचितघोररूपो लक्षयोजनमानशरीरः परिघरत्नं प्रहरणं परितो भ्रामयन् गर्जनास्फोटनं देवानासयन् उत्पपात, सौधर्मावतंसकविमानवेदिकायां पादन्यासं कृत्वा शक्रमाक्रो-

ायामास, शक्रोऽपि कोपाज्ज्वल्यमानस्फारस्फुरत्स्फुलिङ्गशतसमाकुलं कुलिशं तं प्रति मुमोच, स च यात् प्रतिनिवृत्य भगवत्पादौ शरणं प्रपेदे, शक्रोऽप्यवधिज्ञानाद्भगवत्तद्व्यतिकरस्तीर्थकराशातनाभयात् ीघ्रमागत्य वज्रमुपसञ्जहार, बभाण च मुक्तोऽस्यहो भगवतः प्रसादान्नास्ति मत्तस्ते भयमिति । ष्टाभिरधिकं शतमष्टशतं तच्च ते सिद्धाश्च-निर्वृताः अष्टशतसिद्धाः, इदमप्यनन्तकालेनाभवदित्याश्चर्यमिति, ासंयता असंयमवन्त आरम्भपरिग्रहप्रसक्ता अब्रह्मचारिणस्तेषु पूजा सत्कारः, सर्वदा हि किल ंयता एव पूजार्हाः, अस्यां त्ववसर्पिण्यां विपरीतं जातमित्याश्चर्यमिति ॥ २३८ ॥

* * *

स्थानाङ्गजलधिमध्याद्विमला मुक्ताः समुद्धृता एताः ।
नूनं बालमतीनां मानसमोदं वितन्वन्तु ॥

* * *

इति श्रीतपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजय-
कमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजय-
लब्धिसूरिणा सङ्कलितायां सूत्रार्थमुक्तावल्यां स्थानाङ्ग-
लक्षणा चतुर्थी मुक्तासरिका वृत्ता ।

———

## अथ समवायमुक्तासरिका।

अथ समवायाङ्गस्य सारार्थमाख्यातुमाह—

**उक्तो जीवादीनामेकत्वादिक्रमः ॥ १ ॥**

उक्तेति, स्थानाङ्गसारवर्णनावसर इति शेषः, कथञ्चिदात्मा एकः प्रदेशार्थतयाऽसंख्यातप्रदेशोऽपि प्रतिक्षणं पूर्वस्वभावत्यागपरस्वभावग्रहणयोगेनानन्तभेदोऽपि द्रव्यार्थतया कालत्रयानुगामिचैतन्यमात्रापेक्षया एकः, अजीवोऽपि प्रदेशार्थतया संख्येयासंख्येयानन्तप्रदेशोऽपि तथाविधैकपरिणामरूपद्रव्यार्थापेक्षया एकः, एवं दण्डक्रियादीनामप्येकरूपत्वं त्रसस्थावरादिभेदेन द्वैविध्यादिकमप्युक्तमेव, अत्र च यदनुक्तं तेषामेवात्र किञ्चित्समवायः क्रियत इति भावः ॥ १ ॥

जीवाद्याश्रयभूतं क्षेत्रमवलम्ब्याह—

**जम्बूद्वीपाप्रतिष्ठाननरकपालकविमानमहाविमानानि एकयोजनशतसहस्रमानानि ॥ २ ॥**

जम्बूद्वीपेति, जम्ब्वा सुदर्शनापरनाम्न्याऽनादृतदेवावासभूतयोपलक्षितो द्वीपो जम्बूप्रधानो वा द्वीपः सर्वद्वीपानां धातकीखण्डादीनां सर्वसमुद्राणां लवणोदादीनां सर्वात्मनाऽभ्यन्तरः सकलतिर्यग्लोकमध्यवर्ती आयामेन विष्कम्भेन च योजनशतसहस्रप्रमाणः जम्बूद्वीपानां बहुत्वेऽपि उक्तप्रमाण एक एवेत्यर्थः । अप्रतिष्ठाननरकः सप्तमनरकपृथिवीरूपः पञ्चानां कालादीनां नरकावासानां मध्यवर्ती नरकावासः, यत्र महारम्भाः कुटुम्बिनो चक्रवर्तिनो वासुदेवाः तन्दुलमत्स्यप्रभृतयो माण्डलिको राजानश्चातिनियमेन गच्छन्ति सोऽपि आयामविष्कम्भतः एकयोजनशतसहस्रमानः, पालकं यानविमानं सौधर्मेन्द्रसम्बन्ध्याभियोगिकपालकाभिधानदेवकृतं वैक्रियं पारियानिकमिति यदुच्यते, इदमपि तावन्मानम् तथा सर्वार्थसिद्धमहाविमानमपि तावन्मानमिति ॥ २ ॥

ज्योतिष्काश्रयेणाह—

**आर्द्राचित्रास्वातय एकैकाः ॥ ३ ॥**

आर्द्रेति, नक्षत्राण्यष्टाविंशतिः, अभिजिदादीन्युत्तराषाढापर्यवसानानि, सर्वेषां कालविशेषाणामादौ चन्द्रयोगमधिकृत्याभिजिन्नक्षत्रस्य प्रवर्तमानत्वात्, सर्वेषामपि हि सुषमसुषमादिरूपाणां कालविशेषाणामादियुगम्, तस्य चादि श्रावणे मासि बहुलपक्षे प्रतिपदि तिथौ बालवकरणेऽभिजिति नक्षत्रे चन्द्रेण सह योगमुपगच्छति, एतानि सर्वाणि नक्षत्राणि प्रत्येकं द्वे द्वे, तारकापेक्षया तु आर्द्रादयः प्रत्येकं एकैकाः त्रितारा अश्विनी भरणी च, षट्तारा कृत्तिका, रोहिणी पञ्चतारा, मृगशिरा त्रितारा, पञ्चतारा पुनर्वसू, त्रितारः पुष्यः, आश्लेषा षट्तारा, सप्ततारा मघा, फाल्गुनीद्वयमपि द्वि द्वि तारकम्, पञ्चतारा हस्ता विशाखा च, चतुस्तारा अनुराधा, त्रितारा ज्येष्ठा, एकादशतारा मूला, चतुस्तारा

पूर्वाषाढा उत्तराषाढा च, त्रितारा अभिजित् श्रवणा च, धनिष्ठा पञ्चतारा शततारा शतभिषा द्वितारा पूर्वाप्रोष्ठपदा उत्तराप्रोष्ठपदा च द्वाविंशतितारा रेवतीति ॥ ३ ॥

नक्षत्राणां देवविशेषत्वात् देवानां स्थितिविशेषानाचष्टे—

**एकपल्योपमस्थितयः रत्नप्रभानैरयिका असुरकुमाराश्चमरवलिवर्ज-भवनवासिनोऽसंख्येयवर्षायुस्संज्ञिपञ्चेन्द्रियतिर्यग्योनिका असंख्येयवर्षायु-ष्कगर्भव्युत्क्रान्तिकसंज्ञिमनुष्याः वानव्यन्तरदेवाः सौधर्मकल्पदेवा ईशान-कल्पदेवाश्च ॥ ४ ॥**

**एकेति,** एकं पल्योपमं स्थितिर्येषान्ते, केचन नैरयिकाः रत्नप्रभापृथिव्यामेकपल्योपमस्थितयो यदन्ते सा च चतुर्थे प्रस्तरे मध्यमाऽवसेया उत्कर्षेणैषा स्थितिस्तु एकं सागरोपमम् । असुरकुमाराणा-न्तूत्कर्षेण स्थितिः साधिकमेकं सागरोपमम् । असुरकुमारेन्द्रवर्जितानां भवनवासिनां देवानां केषाञ्चित् मध्यमा एकपल्योपमं स्थितिः, उत्कृष्टा तु देशोने द्वे पल्योपमे तथाविधतिर्यग्योनिकानामेकं पल्योपमं स्थितिः सा च हैमवतैरण्यवतवर्षयोरुत्पन्नानां विज्ञेया वानव्यन्तरा अपि देवा एव ग्राह्या, न तु देव्यस्तासामर्धपल्योपमस्थितित्वात् सौधर्मे कल्पे देवशब्देन देवा देव्यश्च गृहीताः, सौधर्मे हि पल्यो-पमाद्धीनतरा स्थितिर्जघन्यतोऽपि नास्ति, इयञ्च प्रथमप्रस्तरे जघन्याऽवसेया । ईशानकल्पदेवा इत्य-त्रापि देवा देव्यश्च ग्राह्याः तत्र हि सातिरेकपल्योपमाद्न्या जघन्यतः स्थितिरेव नास्ति ॥ ४ ॥

तथा—

**द्वित्रिपल्योपमस्थितिका अपि ॥ ५ ॥**

**द्वीति,** रत्नप्रभाया नैरयिकाणां द्विपल्योपमा स्थितिश्चतुर्थप्रस्तरे मध्यमा असुरेन्द्रवर्जभवनवा-सिनां द्वे देशोने पल्योपमे स्थितिरौदीच्यनागकुमारादीनाश्रित्य तथाविधतिरश्चां मनुष्याणाञ्च हरिवर्ष-रम्यकवर्षजन्मनां द्विपल्योपमा स्थितिरिति एवमन्यत्रापि भाव्यम् । रत्नप्रभानारकाणां असुरकुमाराणां सौधर्मेशानकल्पदेवानान्तु त्रिचतुःपञ्चषट्सप्ताष्टनवादिपल्योपमानि स्थितयः ॥ ५ ॥

स्थित्यनुसारेण देवानामुच्छ्वासादीनाह—

**यावत्सागरोपमस्थितिकस्य देवस्य तावदर्धमासैरुच्छ्वासस्तावद्वर्षस-हस्रैराहारः ॥ ६ ॥**

**यावदिति,** यथा ये देवाः सागरादिलोकहितावसानं विमानमासाद्य देवत्वेनोत्पन्ना न तु देवीत्वेन तासां सागरोपमस्थितेरसम्भवात् तेषां देवानामेकं सागरोपमं स्थितिः विमानमेतस्मिन्नन्तिमे प्रस्तरे, येषाञ्चैकसागरोपमं स्थितिः ते देवा एकसार्धमासस्यान्ते उच्छ्वसन्ति निःश्वसन्ति वा तेषामेकस्य वर्षसहस्रस्यान्ते आहारार्थमाहारपुद्गलानां ग्रहणमाभोगतो भवति अनाभोगतस्तु प्रतिसमयमेव ग्रहणं विग्रहगतेरन्यत्र भवति । ये शुभादि सौधर्मावतंसकावसानं विमानमासाद्य देवत्वेनोत्पन्नाः तेषामुत्कर्षेण

सागरोपमे स्थितिः। तथाविधानां द्वयोरर्धमासयोरन्ते उच्छ्वासादयः द्वयोर्वर्षसहस्रयोरन्ते आहारपुद्गलग्रहणम्। ये देवा आभङ्करादि चन्द्रोत्तरावतंसकावसानं विमानमासाद्य देवत्वेनोत्पन्नास्तेषामुत्कर्षेण त्रीणि सागरोपमाणि स्थितिः त्रयाणामर्धमासानामन्ते उच्छ्वासादयः त्रयाणां वर्षसहस्राणामन्ते आहारपुद्गलग्रहणम्। कृष्टादि कृष्टयुत्तरावतंसकावसानं विमानमासाद्य ये देवत्वेनोत्पन्नास्तेषामुत्कर्षेण चत्वारि सागरोपमाणि स्थितिः, तदनुसारेणोच्छ्वासादयः। वातसुवातादि वायुत्तरावतंसकावसानं विमानमासाद्य ये देवत्वेनोत्पन्नास्तेषामुत्कर्षेण पञ्च सागरोपमाणि स्थितिः। स्वयम्भूस्वयम्भूरमणादि वीरोत्तरावतंसकावसानं विमानमासाद्य देवत्वेनोत्पन्नानामुत्कर्षेण षट् सागरोपमाणि स्थितिः समसमप्रभादि सनत्कुमारावतंसकान्तं विमाने देवत्वेनोत्पन्नानामुत्कर्षेण सप्त सागरोपमाणि स्थितिः, अर्चिरर्चिमाल्यादि अनुत्तरावतंसकावसाने विमाने देवत्वेनोत्पन्नानामुत्कर्षेण अष्ट सागरोपमाणि स्थितिः। पक्ष्मसुपक्ष्मादि रुचिरोत्तरावतंसकावसाने विमाने देवत्वेनोत्पन्नानामुत्कर्षेण नव सागरोपमाणि स्थिति, घोषसुघोषादि ब्रह्मलोकावतंसकावसाने विमाने देवत्वेनोत्पन्नानामुत्कर्षतो दश सागरोपमाणि स्थितिः एवमग्रेऽपि भावनीयम् ॥ ६ ॥

चित्तसमाधिमन्तरेण विशिष्टदेवगत्यभावात्तत्स्थानान्याह—

## धर्मचिन्तास्वप्नदर्शनसञ्ज्ञिज्ञानदेवदर्शनावधिज्ञानदर्शनमनःपर्यवकेवलज्ञानदर्शनकेवलिमरणानि दश चित्तसमाधिस्थानानि ॥ ७ ॥

**धर्मचिन्तेति,** चित्तस्य मनसः समाधिः—समाधानं प्रशान्तता तस्य स्थानानि-आश्रया भेदा वा चित्तसमाधिस्थानानि, तपोविशेषयुतानां ज्ञानदर्शनचारित्रलक्षणसमाधिमाप्तानां धर्मशुक्लध्यानं ध्यायमानानां साधूनां यदाप्यतीतकालेऽसमुत्पन्नपूर्वाणि दशचित्तसमाधिस्थानानि भवन्तीति भावः। तत्र धर्मो नाम स्वभावः जीवाजीवद्रव्याणां तद्विषया चिन्ता-सत्यं धर्मं ज्ञातुं किममी जीवादयो नित्याः उतानित्याः, रूपिण उतारूपिण इत्यादिरूपा, अथवा धर्मचिन्ता यथा सर्वे कुसमया अशोभना अनिर्वाहकाः पूर्वापरविरुद्धाः, अतः सर्वधर्मेषु शोभनतरोऽयं धर्मो जिनप्रणीत इत्येवं रूपा इत्येकम्। इयञ्च कल्याणभागी तस्य साधोः पूर्वमतीते कालेऽनुपजाता तदुत्पादे ह्यपार्धपुद्गलपरावर्त्तान्ते कल्याणस्यावश्यम्भावात्, अस्याञ्च प्रयोजनं परोक्षद्रव्यस्वभावं श्रुतादि वा ज्ञपरिज्ञया विज्ञाय प्रत्याख्यानपरिज्ञया परिहारः। स्वप्नदर्शनं यथा भगवतो वर्धमानस्वामिनः प्रज्ञप्त्यां प्रतिपादितं स्वप्नफलम्, सर्वथा निर्व्यभिचारं तस्य भवनम्, अवश्यम्भाविनो मुक्त्यादेः शुभस्वप्नफलस्य अनुभवनाय साधोः स्वप्नदर्शनमुपजायते, कल्याणसूचकात्तथाभूतदर्शनाच्च चित्तसमाधिर्भवतीति द्वितीयं चित्तसमाधिस्थानम्। सञ्ज्ञिज्ञान-सञ्ज्ञानं सञ्ज्ञा सा च यद्यपि हेतुवाददृष्टिवाददीर्घकालिकोपदेशभेदेन क्रमेण विकलेन्द्रियसम्यग्दृष्टिसमनस्कसम्बन्धित्वात् त्रिधा भवति तथापीह दीर्घकालिकोपदेशसञ्ज्ञा ग्राह्या, सा यस्यास्ति स सञ्ज्ञी समनस्कः तस्य ज्ञानं सञ्ज्ञिज्ञानम्, तच्चेहाधिकृतसूत्रान्यथानुपपत्तेर्जातिस्मरणमेव, तस्य तदसमुत्पन्नपूर्वं पूर्वभवान् स्मर्तुं समुत्पद्यते, स्मृतपूर्वभवस्य च संवेगात् समाधिरुत्पद्यते इति समाधिस्थानमेतत् तृतीयम्, देवदर्शनं—देवाद्धिस्तस्य गुणित्वाद्दर्शनं ददाति, तच्च तस्यासमुत्पन्नपूर्वं प्रधानपरिवारादि-

रूपा दिव्या देवर्द्धिर्विशिष्टा शरीराभरणादिदीप्तिं उत्तमवैक्रियकरणादिप्रभावं दर्शयितुं समुत्पद्यते, देवदर्शनाद्यागमार्थेषु श्रद्धानदार्ढ्यं धर्मे बहुमानश्च भवतीति तत्तश्चित्तसमाधिरिति देवदर्शनं चित्तसमाधिस्थानं चतुर्थम्। अवधिज्ञानं वदति तस्यासमुत्पन्नपूर्वं मर्यादया नियतद्रव्यक्षेत्रकालभावरूपेण लोकज्ञानाय समुत्पद्यते तत्तश्चित्तसमाधिर्भवतीति पञ्चमम्। एवमवधिदर्शनमपीति षष्ठम्। मनःपर्यवज्ञानम्—तत्तस्यासमुत्पन्नपूर्वं अर्धतृतीयद्वीपसमुद्रेषु संज्ञिनां पञ्चेन्द्रियाणां पर्याप्तकानां मनोगतभावज्ञानाय समुत्पद्यते इति सप्तमम्। केवलज्ञानं तस्यासमुत्पन्नपूर्वं लोकालोकस्वरूपवस्तुज्ञानाय समुत्पद्यते समाधिभेदत्वाच्च केवलज्ञानस्य चित्तसमाधिस्थानता, इह चामनस्कतया केवलिनश्चित्तं चैतन्यमवसेयमित्यष्टमम्। तथा केवलदर्शनं नवमम्। केवलिमरणं तस्यासमुत्पन्नपूर्वं सर्वदुःखप्रहाणाय भवेत्, इदं तु केवलिमरणं सर्वोत्तमसमाधिस्थानमेवेति दशममिति ॥ ७ ॥

अथ समाध्यन्तरेण श्रावकप्रतिमानामभावात् ता आह—

**दर्शनश्रावककृतव्रतकर्मसामायिकपौषधोपवासरात्रिपरिमाणप्रकटप्रकाशभुक्तसचित्तारम्भप्रेष्योद्दिष्टभक्तपरिज्ञातश्रमणभूता एकादशोपासकप्रतिमाः ॥ ८ ॥**

दर्शनश्रावकेति, श्रमणान् ये उपासन्ते सेवन्ते ते उपासकाः—श्रावकास्तेषां प्रतिमा—प्रतिज्ञा अभिग्रहरूपा उपासकप्रतिमा, तत्र दर्शनं सम्यक्त्वं प्रतिपन्नः श्रावको दर्शनश्रावकः, प्रतिमाप्रकरणेऽप्यत्र तद्वतोऽभिधानमभेदोपचारात्, एवमुत्तरत्रापि, सम्यग्दर्शनस्य शङ्कादिशल्यरहितस्याणुव्रतादिगुणविकलस्य योऽभ्युपगमः मासं यावत्, सा प्रतिमा प्रथमा, सम्यग्दर्शनादिप्रतिपत्तिश्चास्य पूर्वमप्यासीत्, केवलमिह राजाभियोगादिवर्जनेन नाभियोगाद्यपवादवर्जितत्वेन यथाविधसम्यग्दर्शनाचारविशेषपालनाभ्युपगमेन च प्रतिमात्वम्। कृतव्रतकर्मा—येनाणुव्रतादीनां श्रवणज्ञानवाञ्छाप्रतिपत्तिर्द्विमासपर्यन्तं कृता स प्रतिपन्नदर्शनः कृतव्रतकर्मा, प्रतिपन्नाणुव्रतादिरिति भावः इतीयं द्वितीया। कृतसामायिकः येन देशतः सावद्ययोगपरिवर्जननिरवद्ययोगासेवनस्वभावं सामायिकं विहितं स कृतसामायिकः, तदेव प्रतिपन्नपौषधस्य दर्शनव्रतोपेतस्य प्रतिदिनमुभयसन्ध्यं मासत्रयं यावत्सामायिककरणमिति तृतीया प्रतिमा। पोष—पुष्टिं धत्ते कुशलधर्माणां यदाहारत्यागादिकमनुष्ठानं तत्पोषधं तेनोपवसनम्—अवस्थानं अहोरात्रं यावदिति पौषधोपवासः, यद्वा पौषधं पर्वदिनमष्टम्यादि, तत्रोपवासः—अभक्तार्थः पौषधोपवास इति, इयं व्युत्पत्तिरेव, प्रवृत्तिस्त्वस्य शब्दस्य आहारशरीरसत्कारब्रह्मचर्याव्यापारपरिवर्जनेष्विति, तत्र कृतपौषधोपवासः पौषधोपवासे निरत—आसक्त इत्यर्थः, एवंविधश्रावकस्य चतुर्थी प्रतिमा, अयमत्र भावः पूर्वप्रतिमात्रयोपेतः अष्टमीचतुर्दश्यमावास्यापौर्णमासीष्वाहारपौषधादि चतुर्विधं पौषधं प्रतिपद्यमानस्य चतुरो मासान् यावच्चतुर्थी प्रतिमा भवतीति। तथा पञ्चमीप्रतिमायामष्टम्यादिषु पर्वस्वेकरात्रिकप्रतिमाकारी भवति, तथा शेषदिनेषु कृतरात्रिपरिमाणः रात्रौ कृतं स्त्रीणां तद्भोगानां वा परिमाणं—प्रमाणं येन तथाविधः, दिवा तु ब्रह्मचारी, अयं भावः दर्शनव्रतसामायिकाष्टम्यादि पौषधोपेतस्य पर्वस्वेकरात्रिकप्रतिमाकारिणः शेषदिनेषु दिवा ब्रह्मचारिणो रात्रावब्रह्मपरिमाणकृतोऽस्ना-

स्यारात्रिभोजिनोऽबद्धकच्छस्य पञ्च मासान् यावत् पञ्चमी प्रतिमा भवति । प्रकटप्रकाशभुक्, न निशायामत्ति किन्तु प्रकटे प्रकाशे दिवा अशनाद्यभ्यवहरति, अब्रह्माव प्रतिपक्षकोक्तानुष्ठानयुक्तस्य ब्रह्मचारिणि षण्मासान् यावत् षष्ठीप्रतिमा भवतीति । सचित्तपरिज्ञात सचेतनाहारः परिज्ञात वस्तुस्वरूपपरिज्ञानात् प्रत्याख्यातो येन स सचित्तपरिज्ञात, श्रावक, पूर्वोक्तप्रतिमाषट्कानुष्ठानयुक्तस्य प्रासुकाहारस्य सप्त मासान् यावत्सप्तमी प्रतिमा भवतीति । आरम्भपरिज्ञान, आरम्भ पृथिव्याद्युपमर्दनलक्षण परिज्ञात तथैव प्रत्याख्यात येनासौ, समस्तपूर्वोक्तानुष्ठानयुक्तस्यारम्भवर्जनमष्टौ मासान् यावदष्टमीप्रतिमेति । प्रेष्यपरिज्ञातः, प्रेष्या आरम्भेषु व्यापारणीया परिज्ञाता तथैव प्रत्याख्याता येन स, पूर्वोक्तानुष्ठानयत आरम्भ परैरप्यकारयतो नवमासान् यावन्नवमी प्रतिमा भवतीति । उद्दिष्टभक्तपरिज्ञात -तमेव श्रावकमुद्दिश्य कृतोदनादेर्ज्ञानपूर्वं परित्यक्ता, पूर्वोक्तगुणयुक्तस्य आधाकर्मिकभोजनपरिहारवतः क्षुरमुण्डितशिरसः शिखावतो वा केनापि किञ्चिद्गृहव्यतिकरे पृष्टस्य तज्ज्ञाने सति जानामीति अज्ञाने च सति न जानामीति ब्रुवाणस्य दश मासान् यावदुत्कर्षेण एवंविधविहारस्य दशमी प्रतिमेति । श्रमणभूत —श्रमणो निर्ग्रन्थ, तद्वत् तदनुष्ठानात्स श्रमणभूत पूर्वोक्तसमग्रगुणोपेतस्य क्षुरमुण्डस्य कृतलोचस्य वा गृहीतसाधुनेपथ्यस्य ईर्यासमित्यादिक साधुधर्ममनुपालयतो भिक्षार्थं गृहिकुलप्रवेशे सति श्रमणोपासकाय प्रतिमाप्रतिपन्नाय भिक्षा दत्तेति भाषमाणस्य कस्त्वमिति कस्मिंश्चित् पृच्छति प्रतिमाप्रतिपन्न श्रमणोपासकोऽहमिति ब्रुवाणस्यैकादशमासान् यावदेकादशी प्रतिमेति ॥ ८॥

विहितप्रतिमस्य सम्भोगसम्भवात्तान्निरूपयति—

## उपधिश्रुतभक्तपानाञ्जलिप्रग्रहदाननिकाचनाभ्युत्थानकृतिकर्मवैयावृत्त्यसमवसरणसन्निषद्याकथाप्रबन्धा द्वादश सम्भोगाः ॥ ९ ॥

**उपधीति,** सम् एकीभूय समानसमाचाराणा साधूना भोजन सम्भोगः स चोपध्यादिलक्षणविषयभेदात् द्वादशविधा, तत्रोपधिर्वस्त्रपात्रादिस्त साम्भोगिक साम्भोगिकेन सार्द्धमुद्गमोत्पादनैषणादोषैर्विशुद्ध गृह्णन् शुद्ध, अशुद्ध गृह्णन् प्रेरित प्रतिपन्नप्रायश्चित्तो वारत्रय यावत्सम्भोगार्हश्चतुर्थवेलाया प्रायश्चित्त प्रतिपद्यमानोऽपि विसम्भोगार्ह इति, विसम्भोगिकेन पार्श्वस्थादिना वा संयत्या वा सार्धमुपधि शुद्धमशुद्ध वा निष्कारण गृह्णन् प्रेरित प्रतिपन्नप्रायश्चित्तोऽपि वेलात्रयस्योपरि न सम्भोग्यः, एवमुपधेः परिकर्म परिभोग वा कुर्वन् सम्भोग्यो विसम्भोग्यश्चेति । साम्भोगिकस्यान्यसाम्भोगिकस्य वोपसम्पन्नस्य श्रुतस्य वाचनाप्रच्छनादिक विधिना कुर्वन् तथा शुद्ध, तस्यैवाविधिनोपसम्पन्नस्यानुपसम्पन्नस्य वा पार्श्वस्थादेर्वा स्त्रिया वा वाचनादि कुर्वन् तथैव वेलात्रयोपरि विसम्भोग्यः । भक्तपानमुपधिद्वारवद्विज्ञेयम्, परन्तु भोजन दान च परिकर्म परिभोगयो स्थाने वाच्यमिति । साम्भोगिकानामन्यसाम्भोगिकाना वा सविमाना प्रणाममञ्जलिप्रग्रह नमः क्षमाश्रमणेभ्य इति भणन आलोचनासूत्रार्थनिमित्तनिषद्याकरणञ्च कुर्वन् शुद्धः पार्श्वस्थादेरेतानि कुर्वन् तथैव सम्भोग्यो विसम्भोग्यश्चेति । दान, यत्र साम्भोगिकः साम्भोगिकाय अन्यसाम्भोगिकाय वा शिष्यगण यच्छन् शुद्धः, निष्कारण विसम्भोगिकस्य पार्श्वस्थादेर्वा संयत्या वा त यच्छस्तथैव सम्भोग्यो विसम्भोग्यश्चेति । निकाचन

छन्दना निमंत्रणमित्यनयोरन्तरम्, तत्र शय्योपध्याहारैः शिष्यगणप्रदानेन स्वाध्यायेन च साम्भोगिकः साम्भोगिकं निमन्त्रयन् शुद्धः, शेषं तथैव । अभ्युत्थानमासनत्यागरूपम्, तत्राभ्युत्थानं पार्श्वस्थादेः कुर्वंस्तथैवासम्भोग्य, अभ्युत्थानस्योपलक्षणत्वात् किंकरवाणि-आपूर्णकम्लानावस्थाया किं विश्रामणादि करोमीत्येवं प्रश्नलक्षणा, अभ्यासकरण-पार्श्वस्थादिधर्मोद्युतस्य पुनस्तत्रैव संस्थापनलक्षणं, तथा अविभक्ति-परस्परभावलक्षणां कुर्वन्नशुद्धोऽसम्भोग्यश्चापि, एता वेव च साऽऽधाय कुर्वन् शुद्धः सम्भोग्यश्चेति । कृतिकर्म-वन्दनं विधिना कुर्वन् शुद्धः, इतरथा तथैवासम्भोग्य । तत्र चाय विधिः-यः साधुर्यो येन सत्यदेह उत्थानादिकर्तुमशक्तः स सूत्रमेवास्खलितादिगुणोपेतमुच्चारयति, एवमायथाशक्तिनमनादि यच्च करोति सम्यगेवेयं चाशठप्रवृत्तिवन्दनविधिरिति भावः । वैयावृत्य-आहारोपधिदानादिना प्रश्रवणादिमात्रकार्पणादिनाऽधिकरणोपशमनेन सहायदानेन चोपष्टम्भकरणं तस्मिंश्च विषये सम्भोगासम्भोगौ भवतः । समवसरण-जिनजन्मरथानुयानपट्टयात्रादिषु यत्र बहवः साधवो मिलन्ति तत्समवसरणम्, इह च क्षेत्रमाश्रित्य साधूनां साधारणोऽवग्रहो भवति वसतिमाश्रित्य साधारणोऽसाधारणश्चेति, अनेन चान्येऽप्यवग्रहा उपलक्षिता, ते चानेके-यथा वर्षावग्रहः ऋतुबद्धावग्रहो वृद्धवासावग्रहश्चेति, एकैकश्चाय साधारणावग्रहः प्रत्येकावग्रहश्चेति द्विधा, तत्र यत् क्षेत्रं वर्षाकल्पाद्यर्थं युगपद् द्व्यादिभिः साधुभिर्भिन्नगच्छस्थैरनुज्ञाप्यते स साधारणो यत्तु क्षेत्रमेके साधवोऽनुज्ञाप्याश्रिताः स प्रत्येकावग्रह इति, एव चैतेष्ववग्रहेषु आकुट्टयाऽनाभोग्य सचित्तं शिष्यमचित्तं वा वस्त्रादि गृह्णन्तोऽनाभोगेन च गृहीतं तदनर्पयन्तः समनोज्ञा अमनोज्ञाश्च प्रायश्चित्तिनो भवन्त्यसम्भोग्याश्च, पार्श्वस्थादीनां चावग्रह एव नास्ति तथापि यदि तत् क्षेत्रं मुक्त्वाऽन्यत्रैव च संविग्ना निर्वहन्ति तदस्तत्क्षेत्रं परिहरन्त्येव, अथ पार्श्वस्थादीनां क्षेत्रं विस्तीर्णं संविग्नाश्चान्यत्र न निर्वहन्ति तदस्तत्रापि प्रविशन्ति, सचित्तादि च गृह्णन्ति प्रायश्चित्तिनोऽपि न भवन्तीति । सन्निषद्या-आसनविशेषः, सा च सम्भोगासम्भोगकारणं भवति, तथाहि सन्निषद्यागत आचार्यो निषद्यागतेन साम्भोगिकाचार्येण सह श्रुतपरिवर्तनां करोति शुद्धः, अथामनोज्ञपार्श्वस्थादिसाध्वीगृहस्थैः सह तदा प्रायश्चित्ती भवति, तथाऽक्षनिषद्यां विनाऽनुयोगं कुर्वतः शृण्वतश्च प्रायश्चित्तं तथा निषद्यामुपविष्टः सूत्रार्थौ पृच्छति अतिचारान् वाऽऽलोचयति यदि तदा तथैवेति । कथा-वादादिका पञ्चधा तस्याः प्रबन्धन-प्रबन्धेन करणम्-कथाप्रबन्धनं तत्र सम्भोगासम्भोगौ भवतः, तत्र मतमभ्युपगम्य पञ्चावयवेन त्र्यवयवेन वा वाक्येन यत्तत्समर्थनं स छलजातिविरहितो भूतार्थान्वेषणपरो वादः, स एव छलजातिनिग्रहस्थानपरो जल्प, यत्रैकस्य पक्षपरिग्रहोऽस्ति नापरस्य सा दूषणमात्रप्रवृत्ता वितण्डा, तथा प्रकीर्णकथा चतुर्थी, सा चोत्सर्गकथा द्रव्यास्तिकनयकथा वा, निश्चयकथा पञ्चमी सा चापवादकथा पर्यायास्तिकनयकथा वेति, तत्राद्यास्तिस्रः कथाः श्रमणीवर्जैः सह करोति, ताभिः सह कुर्वन् प्रायश्चित्ती, चतुर्थवेलायाञ्चालोचयन्नपि विसम्भोगार्ह इति ॥ ९ ॥

विसम्भोगार्हेण साम्भोगिकत्व पापायाव क्रियास्थानान्याह—

अर्थानर्थहिंसाकस्माद्दृष्टिविपर्यासमृषावादादत्तादानाध्यात्मिकमानमित्रद्वेषमायालोभैर्यापथिकप्रत्ययदण्डास्त्रयोदशक्रियास्थानानि ॥ १० ॥

**अर्थेति,** क्रिया–कर्मबन्धनिबन्धनचेष्टा तस्याः स्थानानि भेदाः क्रियास्थानानि, तत्रार्थाय–शरीरस्वजनधर्मादिप्रयोजनाय दण्डः–त्रसस्थावरहिंसा अर्थदण्डः, तद्विलक्षणोऽनर्थदण्डः, हिंसामाश्रित्य हिंसितवान् हिनस्ति हिंसिष्यति चाऽयं वैरिकादिर्मामित्येव प्रणिधानेन दण्डो विनाशनं हिंसादण्डः, अकस्मात्–अनभिसन्धिनोऽन्यवधाय प्रवृत्त्या दण्डः–अन्यस्य विनाशोऽकस्माद्दण्डः, दृष्टेर्बुद्धेर्विपर्यासिका, विपर्यासिता वा दृष्टिर्दृष्टिविपर्यासिका मतिभ्रमः तेन दण्डः प्राणिवधो दृष्टिविपर्यासिकादण्डः, मित्रावैरमित्रादिबुद्ध्या हननमिति भावः, मृषावादः–आत्मपरोभयार्थमलीकवचनं तदेव प्रत्ययः कारणं यस्य दण्डस्य स मृषावादप्रत्ययः, एवमदत्तादानप्रत्ययोऽपि, आध्यात्मिको बाह्यनिमित्तानपेक्षः मनसि भयशोकादिभव इत्यर्थः, मानप्रत्ययः जात्यादिमदहेतुकः, मित्रद्वेषप्रत्ययः–मातापित्रादीनामल्पेऽप्यपराधे महादण्डनिवर्त्तनम्, मायाप्रत्ययो मायानिबन्धनः, एवं लोभप्रत्ययोऽपि, ऐर्यापथिकः–केवलयोगप्रत्ययः कर्मबन्धः उपशान्तमोहादीनां सातवेदनीयबन्ध इति ॥ १० ॥

क्रियास्थानाभावाय पूर्वज्ञानं भवतीति तान्याह—

**उत्पादाग्रायणीयवीर्यास्तिनास्तिप्रवादज्ञानप्रवादसत्यप्रवादात्मप्रवादकर्मप्रवादप्रत्याख्यानविद्यानुप्रवादावन्ध्यप्राणायुःक्रियाविशाललोकबिन्दुसाराणि चतुर्दशपूर्वाणि ॥ ११ ॥**

**उत्पादेति,** तीर्थंकरस्तीर्थप्रवर्त्तनकाले गणधरान् सकलश्रुतार्थावगाहनसमर्थानधिकृत्य पूर्वं पूर्वगतसूत्रार्थं भाषते ततस्तानि पूर्वाण्युच्यन्ते, गणधराः पुनस्तत्र रचनां विदधते आचारादिक्रमेण स्थापयन्ति, तत्रोत्पादपूर्वं सर्वद्रव्याणां सर्वपर्यायाणाञ्चोत्पादमधिकृत्य प्ररूपणा क्रियते, तस्य पदपरिमाणमेका पदकोटी । अग्रायणीयं अग्रं परिमाणं तस्यायनं गमनं परिच्छेद इत्यर्थः, तस्मै हितमग्रायणीयं, सर्वद्रव्यादिपरिमाणपरिच्छेदकारीति भावार्थः, तत्र हि सर्वद्रव्याणां सर्वपर्यायाणां सर्वजीवविशेषाणाञ्च परिमाणमुपवर्ण्यते, तस्य पदपरिमाणं षण्णवतिपदशतसहस्राणि । वीर्यप्रवादः–तत्र सकर्मेतराणां जीवानामजीवानाञ्च वीर्यमुच्यते तस्य पदपरिमाणं सप्ततिपदशतसहस्राणि । अस्तिनास्तिप्रवादः–तत्र यद्वस्तु लोकेऽस्ति धर्मास्तिकायादि, यच्च नास्ति खरशृङ्गादि तत्प्रवदति, अथवा सर्वं वस्तु स्वरूपेणास्ति पररूपेण नास्तीति प्ररूपणं क्रियते, तस्य पदपरिमाणं षष्टिः पदशतसहस्राणि । ज्ञानप्रवादः–मतिज्ञानादिभेदभिन्नं ज्ञानं, पञ्चप्रकारं सप्रपञ्चं वदति, तस्य पदपरिमाणमेका पदकोटी पदेनैकेन न्यूना । सत्यप्रवादः–सत्यं संयमो वचनं वा तत्सत्यं संयमं वचनं वा प्रकर्षेण वदतीति सत्यप्रवादः तस्य पदपरिमाणमेका पदकोटी षड्भिः पदैरधिका । आत्मानं जीवमनेकधा नयमतभेदेन यत्प्रवदतीत्यात्मप्रवादः तस्य पदप्रमाणं षड्विंशतिपदकोट्यः । कर्मज्ञानावरणीयादिकमष्टप्रकारं प्रकृतिस्थित्यनुभागप्रदेशादिभेदैः सप्रपञ्चं वदतीति कर्मप्रवादः तस्य पदपरिमाणमेका कोटी अशीतिश्च पद् सहस्राणि । प्रत्याख्यानं सप्रभेदं यद्वदति तत्प्रत्याख्यानप्रवादः तस्य प्रमाणं चतुरशीतिपदलक्षाणि । विद्यामनेकातिशयसम्पन्नामनुप्रवदति साधनानुकूल्येन सिद्धिप्रकर्षेण चेति विद्यानुप्रवादः तस्य पदपरिमाणमेका पदकोटी दश च पदलक्षाः । वन्ध्यं निष्फलं न विद्यते यत्र तदवन्ध्यं, यत्र सर्वेऽपि ज्ञानतपःसंयमादयः शुभफलाः सर्वे च प्रमा-

दादयोऽग्रसफला वर्ण्यन्ते, तस्य पदपरिमाणं षड्विंशतिपदकोट्यः । प्राणाः पञ्चेन्द्रियाणि त्रीणि मानसादीनि बलानि, उच्छ्वासनिःश्वासौ चायुश्च यत्र चैतानि सप्रभेदमुपवर्ण्यन्ते तदुपचारत प्राणायु, तस्य पदपरिमाणमेका पदकोटी षट्पञ्चाशच्च पदलक्षाणि । क्रिया कायिक्यादय संयमक्रियाश्छन्दःक्रियादयश्च याभिः प्ररूप्यमाणाभिर्विशालं, क्रियाविशालम्, तस्य पदपरिमाणं नवपदकोट्यः । लोकबिन्दुसारं–लोके जगति श्रुतलोके वा अक्षरस्योपरि बिन्दुरिव सारं सर्वोत्तमं सर्वाक्षरसन्निपातलब्धिहेतुत्वाल्लोकबिन्दुसारम्, तस्य पदपरिमाणमर्द्धत्रयोदशपदकोट्यः ॥ ११ ॥

एतद्विराधकाः परमाधार्मिककृतपीडां सहन्तीति तानाह—

**अम्बाम्बरिषीश्यामशबलरौद्रोपरौद्रकालमहाकालासिपत्रधनुःकुम्भवालुकावैतरणीखरस्वरमहाघोषाः पञ्चदश परमाधार्मिकाः ॥ १२ ॥**

अम्बेति, परमाश्च तेऽधार्मिकाश्च परमाधार्मिकाः सङ्क्लिष्टपरिणामवशात् असुरनिकायान्तर्वर्तिनो ये तिसृषु पृथिवीषु नारकान् कदर्थयन्ति, ते च व्यापारभेदेन पञ्चदश भवन्ति, तत्र यः परमाधार्मिको देवो नारकान् हन्ति पातयति बध्नाति नीत्वा चाम्बरतले विमुञ्चति सोऽम्ब इत्यभिधीयते, यो नारकान् निहतान् कल्पनिकाभिः खण्डशः कल्पयित्वा भ्राष्ट्रपाकयोग्यान् करोति सोऽम्बरिषी, यस्तु रज्जुहस्तप्रहारादिना शातनपातनादि करोति वर्णतश्च श्यामः स श्यामः, यश्चान्त्रवसाहृदयकालेयकादीन्युत्पाटयति वर्णतश्च कर्बुरः स शबल, यश्शक्तिकुन्तादिषु नारकान् प्रोतयति स रौद्रत्वाद्रौद्रः, यस्तु तेषामङ्गोपाङ्गानि भनक्ति सोऽत्यन्तरौद्रत्वादुपरौद्रः, यः कण्ड्वादिषु पचति वर्णतः कालश्च स कालः, यः श्लक्ष्णमांसानि खण्डयित्वा खादयति वर्णतश्च महाकालः स महाकालः, यः खड्गाकारपत्रवद्वनं विकुर्व्य तत्समाश्रितान्नारकानसिपत्रपातनेन तिलशश्छिनत्ति सोऽसिपत्रः, यो धनुर्विमुक्तार्धचन्द्रादिबाणैः कर्णादीनां छेदनभेदनादि करोति स धनुः, यः कुम्भादिषु तान् पचति स कुम्भः, यः कदम्बपुष्पाकारासु वज्राकारासु वैक्रियवालुकासु तप्तासु चणकानिव तान् पचति स वालुकः, यः पूयरुधिरत्रपुताम्रादिभिरतितापात् कल्कलायमानैर्भृतां विरूपं तरणं प्रयोजनमस्या इति वैतरणीति यथार्थां नदीं विकुर्व्य तत्तारणेन नारकान् कदर्थयति स वैतरणी, यो वज्रकण्टकाकुलं शाल्मलीवृक्षं नारकमारोप्य खरस्वरं कुर्वन्तं कुर्वन् वा कर्षति स खरस्वरः, यस्तु भीतान् पलायमानान् नारकान् पशूनिव वाटेषु महाघोषं कुर्वन्निरुणद्धि स महाघोष इति ॥ १२ ॥

तीव्रकषायैर्भवन्ति परमाधार्मिका इति कषायानाह—

**अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसञ्ज्वलनक्रोधमानमायालोभाः षोडशकषायाः ॥ १३ ॥**

अनन्तेति, कष्यन्ते बाध्यन्ते प्राणिनोऽनेनेति कषं कर्म भवो वा तदायो लाभ यतस्ते कषायाः मोहनीयपुद्गलविशेषोदयसम्पाद्यजीवपरिणामविशेषाः क्रोधमानमायालोभाः, अनन्तं भवमनुबन्धाव्यविच्छिन्नं करोतीत्येवंशीलोऽनन्तानुबन्धी अनन्तो वाऽनुबन्धो यस्येत्यनन्तानुबन्धी सम्यग्दर्शनसहभावि-

क्षमादिस्वरूपोपशमादिचरणलवविघाती चारित्रमोहनीयत्वात्तस्य न चोपशमादिभिरेव चारित्री, अल्पत्वात्, यथाऽनरको न सुखी, किन्तु भवत्येव, तथा महता मूलगुणादिरूपेण चारित्रेण चारित्री । न विद्यते प्रत्याख्यानमणुव्रतादिरूपं यस्मिन् सोऽप्रत्याख्यानो देशविरत्यावारकः । सर्वविरतिं यो वृणोति स प्रत्याख्यानः, सञ्ज्वलयति दीपयति सर्वसावद्यविरतिमिति सञ्ज्वलनः ॥ १३ ॥

स सद्भावासद्भावाभ्यां संयमासंयमौ भवत इति तावाह—

पृथिव्यप्तेजोवायुवनस्पतिकायद्वित्रिचतुःपञ्चेन्द्रियाजीवकायप्रेक्षोपेक्षापहृत्याप्रमार्जनमनोवाक्कायविषयौ संयमासंयमौ ॥ १४ ॥

पृथिवीति, पृथिव्यादिविषयेभ्यः संघट्टपरितापोपद्रावणेभ्य उपरमः तत्तत्संयमः, तद्विपरीतोऽसंयमः, अजीवकायासंयमो विकटसुवर्णबहुमूल्यवस्त्रपात्रपुस्तकादिग्रहणम्, तदुपरमः तत्संयमः, प्रेक्षायामसंयमः स्थानोपकरणादीनामप्रत्युपेक्षणमविधिप्रत्युपेक्षणं वा, उपेक्षाऽसंयमोऽसंयमयोगेषु व्यापारणं संयमयोगेष्वव्यापारणं वा, अपहृत्यासंयमः अविधिनोच्चारादीनां परिष्ठापनतो यः सः, अप्रमार्जनासंयमः पात्रादेरप्रमार्जनयाऽविधिप्रमार्जनया वेति, मनोवाक्कायानामसंयमास्तेषामकुशलानामुदीरणानीति, असंयमविपरीतः संयम इति ॥ १४ ॥

संयमिनामेवाष्टादशस्थानानि भवन्तीति तान्याह—

व्रतषट्ककायषट्काकल्पगृहिभाजनपर्यङ्कनिषद्यास्नानशोभावर्जनानि अष्टादशनिर्ग्रन्थानां सक्षुद्रकव्यक्तानां स्थानानि ॥ १५ ॥

व्रतषट्केति, सह क्षुद्रकैर्व्यक्तैश्च ये ते तेषाम्, तत्र क्षुद्रका वयसा श्रुतेन वाऽव्यक्ताः, व्यक्तास्तु ये वयःश्रुताभ्यां परिणताः, तेषां स्थानानि परिहारसेवाश्रयवस्तूनि । तत्र व्रतषट्क—महाव्रतानि रात्रिभोजनविरतिश्च, कायषट्कं पृथिवीकायादि, अकल्प—अकल्पनीयपिण्डशय्यावस्त्रपात्ररूपं, गृहिभाजन—स्थाल्यादि, पर्यङ्क—मञ्चकादि, निषद्या स्त्रिया सहासनम्, स्नान—शरीरक्षालनम्, शोभावर्जनं प्रसिद्धमिति ॥ १५ ॥

संयमिनां स्थानपुष्टिकरत्वाद्दृष्टान्तप्रतिपादकाध्ययनान्याह—

उत्क्षिप्तसंघाटकाण्डककूर्मशैलकतुम्बरोहिणीमल्लीमाकन्दीचन्द्रमोदाग्रवोदकमण्डूकतैतलीनन्दिफलापरकङ्काकीर्णसुसमापुण्डरीकज्ञातानि ज्ञाताध्ययनानि ॥ १६ ॥

उत्क्षिप्तेति, ज्ञातानि दृष्टान्ताः तत्प्रतिपादकान्यध्ययनानि षष्ठाङ्गप्रथमश्रुतस्कन्धवर्त्तीनि, तत्र मेघकुमारजीवेन हस्तिभवे वर्तमानेन यः पाद उत्क्षिप्तस्तेनोत्क्षिप्तेनोपलक्षितं मेघकुमारचरितमुत्क्षिप्तमेवोच्यते, उत्क्षिप्तमेव ज्ञातमुदाहरणं विवक्षितार्थसाधनमुत्क्षिप्तज्ञातम्, ज्ञातता चास्यैव भावनीया, दयादिगुणवन्तः सहन्त एव देहकष्टम्, उत्क्षिप्तैकपादो मेघकुमारजीवहस्ती वेति, एतदर्थाभिधायकं सूत्रमधीयमानत्वादध्ययनमुच्यते । एवं सर्वत्र । संघाटक—श्रेष्ठिचौरयोरेकबन्धनबद्धत्वम्, इदमप्यभीष्ट-

र्थज्ञापकत्वाद् ज्ञातम्, एवमौचित्येन सर्वत्र ज्ञातशब्दो योज्यः, यथायथञ्च ज्ञातत्वं प्रत्यध्ययनं तदर्थावगमादवसेयम्। अण्डक—मयूराण्डम्, कूर्मः कच्छपः, शैलको राजर्षि, तुम्बश्चालावु, रोहिणी श्रेष्ठिवधूः, मल्ली एकोनविंशतितमजिनस्थानोत्पन्ना तीर्थंकरी, माकन्दी नाम वणिक्, तत्पुत्रौ माकन्दीशब्देनेह गृहीतौ, चन्द्रमा इति च, दावद्रव समुद्रतटे वृक्षविशेष, उदक नगरपरिखाजल, तदेव ज्ञातमुदाहरणमुदकज्ञातम्, मण्डूक—नन्दनमणिहारिश्रेष्ठिजीवः, तेतलीसुताभिधानोऽमात्य इति, नन्दिफल—नन्दिवृक्षाभिधानतरुफलानि, अपरकका—धातकीखण्डभरतक्षेत्रराजधानी, आकीर्णा जात्याः समुद्रमध्यवर्तिनोऽश्वाः, सुसमा—सुसमाऽभिधाना श्रेष्ठिदुहिता, अपरञ्च पुण्डरीकज्ञातमेकोनविंशतितममिति ॥ १६ ॥

पूर्वोक्ताध्ययनावासितान्तःकरणानां न समाधिपरिपाक इति असमाधिस्थानान्याह—

**द्रुताप्रमार्जितदुष्प्रमार्जितचार्यतिरिक्तशय्यासनिकराज्ञिकपरीभाषिस्थविरभूतोपघातिकसञ्ज्वलनक्रोधनपृष्ठिमांसाशिकावधारयितृनवोत्पादयितृपुरातनोदीरयित्रकालस्वाध्यायिसरजस्कपाणिपादकलहशब्दभेदकरसूरप्रमाणभोज्येषणाऽसमिता असमाधिस्थानानि ॥ १७ ॥**

द्रुतेति, समाधिश्चेतसः स्वास्थ्य तदभावोऽसमाधिर्ज्ञानादिभावप्रतिषेधः, अप्रशस्तो भाव इत्यर्थः, तस्याः स्थानानि पदानि, यैर्हि आसेवितैरात्मपरोभयानामिह परत्रोभयत्र वाऽसमाधिरुत्पद्यते तान्यसमाधिस्थानानि, तत्र द्रुतंतो यो हि द्रुत द्रुत सयमात्मविराधनानिरपेक्षो व्रजति आत्मान प्रपतनादिभिरसमाधौ योजयति, अन्यांश्च सत्त्वान् घ्नन्समाधौ योजयति सत्त्ववधजनितेन च कर्मणा परलोकेऽप्यात्मानमसमाधौ योजयति, अतो द्रुतगन्तृत्वसमाकुलतया चलाधिकरणत्वादसमाधिस्थानम्, एव भुञ्जानो भाषमाण. प्रतिलेखनाञ्च कुर्वन्नात्मविराधना संयमविराधनाञ्च प्राप्नोति, तिष्ठन्, आकुञ्चनप्रसारणादिक वा द्रुत द्रुत कुर्वन् पुन पुनरनवलोकयन्नप्रमार्जयन् आत्मविराधनाञ्च प्राप्नोति, इति द्रुत चारित्व प्रथम स्थानम्। अप्रमार्जितेऽवस्थाननिषीदनत्वग्वर्तनशयनोपकरणनिक्षेपोच्चारादिप्रविष्ठापन कुर्वञ्ज्ञात्मादिविराधना लभते इत्यप्रमार्जितचारी, एव दुष्प्रमार्जितचार्यपि। अतिरिक्ता—अतिप्रमाणा शय्या वसतिरासनानि च पीठकादीनि यस्य सन्ति सोऽतिरिक्तशय्यासनिक, स चातिरिक्तायां शय्यायां सभाशालादिरूपायामन्येऽपि कार्पटिकादय आवसन्तीति तैः सहाधिकरणसम्भवादात्मपरयोरसमाधौ योजयतीति, एवमासनाधिक्येऽपि वाच्यम्। राज्ञिकपरीभाषी-आचार्यादिपूज्यगुरुपरिभवकारी, अन्यो वा महान् कश्चिज्जातिश्रुतपर्यायाद्वा शिक्षयति त परिभवत्यवमन्यते जात्यादिभेदस्थानैः, एवञ्च गुरु परिभवन् आक्षोपतापं वा कुर्वन् आत्मानमन्यांश्चासमाधौ योजयत्येव। स्थविरोपघातिक—स्थविरा आचार्यादिगुरवः तानाचारदोषेण शीलदोषेणावज्ञादिभिर्वा उपहन्तीत्येव शीलः। भूतोपघातिकः भूतान्येकेन्द्रियादीन्युपहन्तीत्येवशील, प्रयोजनमन्तरेण ऋद्धिरससातगौरवैर्वा विभूषानिमित्त वा आधाकर्मादिक वाऽप्रष्टाळम्बनेऽपि समाददान, अन्यद्वा तादृश किञ्चिद्भाषते वा करोति येन भूतोपघातो भवति। सञ्ज्वलनः प्रतिक्षण रोषण, स च तेन क्रोधेनात्मीय चारित्र सम्यक्त्व वा हन्ति ज्वलति

या दहनवत् । क्रोधनः—सकृत्क्रुद्धोऽत्यन्तक्रुद्धो भवति, अनुपशान्तवैरपरिणाम इति भावः । पृष्ठिमांसाशिनः—पराङ्मुखस्य परस्यावर्णवादकारी, अगुणभाषीति भावः, स चैव कुर्वन् आत्मपरोभयेषाञ्च इह परत्र चासमाधौ योजयत्येव । अवधारयिता—अभीक्ष्णं शङ्कितस्याप्यर्थस्य निःशङ्कितस्येव एवमेवायमित्येवं वक्ता, अथवा अवहारयिता—परगुणानामपहारकारी यथा तथा हास्यादिकमपि परं प्रति तथा भणति दासश्चौरस्त्वमित्यादि अदासादिकमपि । नवोत्पादयिता नवानामनुत्पन्नानां प्रकरणादधिकरणानां कलहानामुत्पादयिता, तांश्चोत्पादयन्नात्मानं परञ्चासमाधौ योजयति, यद्वा नवान्यधिकरणानि यन्त्रादीनि तेषामुत्पादयिता । पुरातनोदीरयिता—पुरातनानां कलहानां क्षमितव्यवशमितानां मर्षितत्वेनोपशान्तानां पुनरुदीरयिता भवति । अकालस्वाध्यायी—अकाले स्वाध्यायं यः करोति, तत्र काल—उत्कालिकसूत्रस्य दशवैकालिकादिकस्य सन्ध्याचतुष्टयं त्यक्त्वाऽनवरतं भणनम् । कालिकस्य पुनराचाराङ्गादिकस्योद्धाटपौरुषीं यावद्भणनम्, दिवसस्यावसानयामं निशायाश्चाद्ययामञ्च त्यक्त्वा अपरस्त्वकाल एव । सरजस्कपाणिपादः—यः सचेतनादिरजोगुण्डितेन दीयमानां भिक्षां गृह्णाति तथा स्थण्डिलादौ सङ्क्रामन् पादौ न प्रमार्ष्टि, अथवा तथाविधकारणे सचित्तादिपृथिव्या कम्पादिनाऽनन्तरितायामासनादि करोति, स चैव कुर्वन् संयमेऽसमाधिना आत्मानं संयोजयति । कलहकरः—आक्रोशनादिना येन कलहो भवति तत्करोति, स चैवंविधो हि असमाधिस्थानं भवति । शब्दकरः—सुप्तेषु प्रहरमात्रादूर्ध्वं रात्रौ महता शब्देनोल्लापस्वाध्यायादिकारको गृहस्थभाषाभाषको वा वैरात्रिकं वा कालग्रहणं कुर्वन् महता शब्देनोल्लपति । भेदकरः—येन कृतेन गच्छस्य भेदो भवति मनोदुःखमुत्पद्यते तथा भाषते वा । सूरप्रमाणभोजी—सूर्योदयादस्तसमयं यावदशनपानाद्यभ्यवहारी, उचितकाले स्वाध्यायादि न करोति प्रतिप्रेरितो रुष्यति, अजीर्णं च महाहारेऽसमाधिं सञ्जायत इति दोषः । एषणाऽसमितः—एषणायां समितश्चापि संयुक्तोऽपि नानेषणां परिहरति, प्रतिप्रेरितश्चासौ साधुभिः सह कलहायते, अनेषणीयमपरिहरन् जीवोपरोधे वर्तते, एवञ्चात्मपरयोरसमाधिकरणादसमाधिस्थानम् ॥ १७ ॥

असमाधिमान् शबलो भवतीति शबलानाह—

हस्तकर्ममैथुनरात्रिभोजनाधाकर्मराजपिण्डक्रीतादिपुनःपुनःप्रत्याख्यातभुग्गणान्तरसङ्क्रमणत्र्यधिकोदकलेपकृन्मायास्थानत्रयकृत्सागारिकपिण्डभुगाकुट्टिप्राणातिपातमृषावादादत्तादानकृदनन्तरितसचित्तपृथिव्युपयोगबीजादिमत्स्थितिमूलादिभुग्दशोदकलेपकृद्दशमायास्थानकृच्छीतोदकव्यात्तपाणिदत्ताहारभोजिनः शबलाः ॥ १८ ॥

हस्तकर्मेति, यैः क्रियाविशेषैर्निमित्तभूतैश्चारित्रं कर्बुरं भवति तद्योगात्साधवोऽपि शबला इति व्यपदिश्यन्ते ते च—हस्तकर्म—वेदविकारविशेषमुपशमं कुर्वन् कारयन्ननुजानन् वा शबलो भवतीत्येकः, मैथुनमतिक्रमव्यतिक्रमातिचारैस्त्रिभिः प्रकारैर्दिव्यादित्रिविधं सेवमानः शबलो भवतीति द्वितीयः, रात्रिभोजनं दिवागृहीतं दिवाभुक्तमित्यादिभिश्चतुर्भङ्गकैरतिक्रमादिभिश्च भुञ्जानः शबलः,

आधाकर्म आधाय साधुप्रणिधानेन यत्तु सचेतनमचेतनं क्रियते अचेतनं वा पच्यते तदाधाकर्म भुञ्जानः शबलः, राजपिण्डो नृपाहारस्तद्भुञ्जानः शबलः क्रीतादि द्रव्यादिना क्रीतं साध्वर्थमुद्धारानीतं प्रामित्यं अनिच्छतोऽपि पुरुषादेः सकाशात् साध्वर्थं गृहीतं तानुञ्जानः सबलामिभि साधुदानाय स्वस्थानात् अभिमुखमानीय दीयमानञ्च भुञ्जानः शबलः। पुनः पुनः प्रत्याख्यायभुक्-अभीक्ष्णं प्रत्याख्यायाशनादि भुञ्जानः। गणान्तरसङ्क्रमण-षण्णां मासानामन्तः एकतो गणादन्यं गणं सङ्क्रामन् शबलो निरालम्बत्वात्। त्र्यधिकोदकलेपकृत्-मासस्यान्तः त्रीनुदकलेपान् कुर्वन्, उदकलेपश्च नाभिप्रमाणजलावगाहनम्। मायास्थानत्रयकृत्-मासस्य मध्ये त्रीणि मायास्थानानि तथाविधप्रयोजनमन्तरेणातिगूढमातृस्थानानि कुर्वन्। सागारिकपिण्डभुक्-वसतिदाता सागारिकस्तत्पिण्डभोजी, आकुट्टिप्राणातिपातकृत्-उपेत्य पृथिव्यादिकं हिंसन्नित्यर्थः। आकुट्टया मृषावादकृत्-तथाऽऽकुट्टयाऽऽदत्तादानकृत्। आकुट्टयैवानन्तरिताया पृथिव्या स्थानं वा नैषेधिकीं वा चेतयन् कायोत्सर्गं स्वाध्यायभूमिं वा कुर्वन्। आकुट्टयैव सचित्तसरजस्काया पृथिव्या सचित्तवत्या शिलाया लेष्टौ वा कोलावासे दारुणि स्थानादि कुर्वन्, तथा तथैव सबीजादौ-बीजहरितनीहारादिसहिते स्थानादि कुर्वन्। मूलादिभुक्-मूलकन्दत्वक्प्रवालपत्रफलबीजहरितादीनां भोजनं कुर्वन्। दशोदकलेपकृत्-संवत्सरस्य मध्ये दश उदकलेपान् कुर्वन्। दशमायास्थानकृत्, वर्षस्यान्तर्दश मायास्थानानि कुर्वन्। शीतोदकेन व्यापारितेन हस्तेनागलत्रिन्दुना भाजनेन वा दीयमानं अशनादि भुञ्जानः॥ १८॥

शबलत्वञ्च क्षुधादिपरीषहाणां सहिष्णुत्वाभावे स्यादिति परीषहस्वरूपाण्याचष्टे—

**बुभुक्षापिपासाशीतोष्णदंशमशकाचेलारतिस्त्रीचर्यानिषद्याशय्याक्रोशवधयाचनाऽलाभरोगतृणस्पर्शमलसत्कारप्रज्ञाऽज्ञानदर्शनविषयाः परीषहाः॥ १९॥**

**बुभुक्षेति,** परीति समन्तात्स्वहेतुभिरुदीरिता मार्गाच्यवननिर्जरार्थं साध्वादिभिः सह्यन्ते ये ते परीषहाः, सुगमम्, भोक्तुमिच्छा बुभुक्षा, पातुमिच्छा पिपासा तृट्, शीतोष्णे प्रतीते, दंशाश्च मशकाश्च दंशमशकाः उभयेऽप्येते चतुरिन्द्रिया महत्त्वामहत्त्वकृतश्चैषां विशेषः, यद्वा दंशो दशनं तत्प्रधाना मशका दंशमशकाः एते च यूकामत्कुणमत्कोटकमक्षिकादीनामुपलक्षणमिति। चेलानां वस्त्राणां बहुधनवनीनावदावसुप्रमाणानां सर्वेषां वाऽभावोऽचेलत्वम्, सर्वाभावो जिनकल्पिकानाम्। अरतिर्मानसो विकारः, स्त्री प्रतीता, चर्या-ग्रामादिष्वनियतविहारित्वम्। निषद्या-सोपद्रवेतरा स्वाध्यायभूमिः, शय्या-मनोज्ञामनोज्ञवसतिः संस्तारको वा, आक्रोशो दुर्वचनम्, वधो यष्ट्यादिताडनम्, याचना-भिक्षणं तथाविधे प्रयोजने मार्गणं वा, अलाभरोगौ प्रतीतौ, तृणस्पर्शः संस्तारकाभावे तृणेषु शयानस्य, मलः शरीरवस्त्रादेः, सत्कारः वस्त्रादिपूजनाभ्युत्थानादिसम्पादनेन सन्माननं। प्रज्ञा-स्वयं विमर्शपूर्वको वस्तुपरिच्छेदः, ज्ञानं सामान्येन मत्यादि, तदभावोऽज्ञानम्, दर्शन-सम्यग्दर्शनं तदेव क्रियावादिनां विचित्रमतश्रवणेऽपि सम्यक् परिषह्यमाणं निश्चलचित्ततया धार्यमाणो दर्शनपरीषहः, यद्वा दर्शनशब्देन दर्शनव्यामोहहेतुरैहिकामुष्मिकफलानुपलम्भादिरिह गृह्यते, ततः स एव परीषहो दर्शनपरीषहः॥ १९॥

तदादर्शकागमविशेषाश्रयेणाह—

समयवैतालीयोपसर्गस्त्रीपरिज्ञानरकविभक्तिवीरस्तुतिकुशीलपरिभाषिकवीर्यधर्मसमाधिमार्गसमवसरणयाथात्म्यग्रन्थयमतीतगाथापुण्डरीकक्रियास्थानाहारपरिज्ञाऽप्रत्याख्यानक्रियाऽनगारश्रुतार्द्रकीयनालन्दीयानिसूत्रकृताङ्गाध्ययनानि ॥२० ॥

समयेति, सूत्रकृताङ्गस्य प्रथमे श्रुतस्कन्धे समयादिषोडशाध्ययनानि, द्वितीये च पुण्डरीकादि सप्ताध्ययनानि भवन्ति ॥ २० ॥

एवंविधागमोपदेष्टॄन् सकलजगद्वन्द्यान् निर्जितनिखिलारिगणानाह—

ऋषभाजितसम्भवाभिनन्दनसुमतिपद्मप्रभसुपार्श्वचन्द्रप्रभसुविधिशीतलश्रेयांसवासुपूज्यविमलानन्तधर्मशान्तिकुन्थ्वरमल्लीनाथमुनिसुव्रतनमिनेमिपार्श्ववर्धमाना देवाधिदेवास्तीर्थकृतः ॥ २१ ॥

ऋषभेति, तीर्यते भवोदधिरनेन अस्मादस्मिन्निति वा तीर्थं हेतुताच्छील्यानुलोमतो ये भावतीर्थं कुर्वन्ति गुणतः प्रकाशयन्ति च ते तीर्थकराः, तत्र हेतौ—सद्धर्मतीर्थकरणहेतव. 'कृञो हेतुताच्छील्यानुलोम्येषु' (उ २ २० पाणि०) इत्यादिना टप्रत्ययविधानात्तीर्थकरा , यथा यशस्करी विद्यादि । ताच्छील्ये—कृतार्था अपि तीर्थकरनामकर्मोदयत समग्रप्राणिगणानुकम्पापरतया च सद्धर्मतीर्थदेशकत्वात्तीर्थकराः, भरतादिक्षेत्रे प्रथमनरनाथकुलकरादिवदिति । आनुलोम्ये—स्त्रीपुरुषबालवृद्धस्थविरकल्पिकजिनकल्पिकादीनामनुरूपोत्सर्गापवाददेशनया अनुलोमसद्धर्मतीर्थकरणात्तीर्थकरा , यथा वचनकर इत्यादि, एवम्भूतास्तीर्थकरा अत एव सर्वासुमतां हितस्य मोक्षार्थस्य करणात्सर्वप्राण्युत्तमत्वाद्देवाधिदेवा,—ते च ऋषभादय·—चतुर्विंशतितीर्थंकरा ॥ २१ ॥

एतेषां तीर्थकृतां जन्मभूमिषु निष्क्रमणचरणज्ञानोत्पत्तिनिर्वाणभूमिषु देवलोकभवनेषु मन्दिरेषु नन्दीश्वरद्वीपादौ पातालभवनेषु यानि शाश्वतानि चैत्यानि तेषु अष्टापदादौ च यथासम्भवमभिगमनवन्दनपूजागुणोत्कीर्त्तनादितो मौनीन्द्राणां तीर्थकृतां ज्ञानात्मनः प्रवचनस्य यथावस्थिताशेषपदार्थाविर्भावकतया सम्यग्भावयतोऽहिंसादिधर्माणामेव तीर्थकृत्प्रवचने शोभनत्वमिति च भावयत प्रशस्तभावनासद्भावाद्भावना निरूपयति—

ईर्यासमितिर्मनोवाग्गुप्ती आलोकितपात्रभोजन निक्षेपणासमितिरनुविचिन्त्यभाषणता क्रोधलोभभयहास्यविवेका अवग्रहानुज्ञापनाऽनुज्ञाते सीमापरिज्ञानं तत्र स्वयमेवावग्रहानुज्ञापना साधर्मिकावग्रहमनुज्ञाप्य वासस्तदनुज्ञया भक्ताद्युपभोगः स्त्र्यादिसंसक्तशयनादिवर्जन तत्कथेन्द्रियविलोकनपूर्व-

**क्रीडितस्मरणवर्जनानि प्रणीताहारवर्जनं पञ्चेन्द्रियरागोपरतयः पञ्चविंशतिर्भावना महाव्रतस्य ॥ २२ ॥**

ईर्येति, ईर्या गमनं तत्रोपयुक्तो भवेत्, असमितो हि प्राणिनो हिंस्यात्। संयतः समाहितमनाः दुष्टं मनः प्रवर्त्तयेत्, दुष्टं हि मनः नियम्यमाणं कायसंलीनतादिकेऽपि सति कर्मबन्धाय सम्पद्यते, श्रूयते हि प्रसन्नचन्द्रो राजर्षिर्मनोगुप्त्यभावितादिंसास्रवो हिंसामकुर्वन्नपि सप्तमनरकपृथिवीयोग्यं कर्म निर्मितवानिति। एवं वाचमप्यदुष्टां प्रवर्त्तयेत्, दुष्टां प्रवर्त्तयन् जीवान् विनाशयेत् साधुः सर्वकालं सम्यगुपयुक्तः सन्नवलोक्य भुञ्जीत गृह्णीत वा पानभोजनम्, अयमर्थः—प्रतिगृहं पात्रमध्यपतितपिण्डश्चक्षुराद्युपयुक्तेन वस्त्वागन्तुकसत्त्वरक्षणार्थं प्रत्यवेक्षणीयः, आगत्य च वसतौ पुनः प्रकाशवति प्रदेशे स्थित्वा सुप्रत्यवेक्षितं पानभोजनं विधाय प्रकाशप्रदेशावस्थितेन महति पात्रे भोक्तव्यम्, अनवलोक्य भुञ्जानस्य हि प्राणिहिंसा सम्भवतीति। पात्रादेरागमानुसारेण प्रत्यवेक्षणप्रमार्जनपूर्वमादाननिक्षेपौ कार्यौ, तत्र प्रमादी हि सत्त्वव्यापादनं विदध्यादिति प्रथममहाव्रतस्य पञ्च भावनाः। अनुविचिन्त्यसम्यग्ज्ञानपूर्वकं पर्यालोच्य भाषको वक्ता, अनालोचितभाषी हि कदाचिन्मृषाप्यभिदधीत ततश्चात्मनो वैरपीडादयः सत्त्वोपघातश्च भवेत्। तथा च क्रोधं लोभं भयमेव वा परिहरेत् स एव मुनिर्दीर्घरात्रं मोक्षमवलोकनशील सन् सर्वकालं निश्चयेन मृषापरिवर्जकः स्यात्, तत्परवशो हि वक्ता स्वपरनिरपेक्षो यत्किञ्चनभाषी मृषाऽपि भाषेत। एवं हास्यमपि वर्जयेत्, हास्येन ह्यनृतमपि ब्रूयादिति द्वितीयमहाव्रतस्य। तृतीयस्य तु अवग्रहानुज्ञापना, तत्र चानुज्ञाते सीमापरिज्ञानम्, ज्ञातायाश्च सीमायाः स्वयमेवावग्रहस्य पश्चात्स्वीकरणम्, साधर्मिकाणां—गीतार्थसमुदायविहारिणां संविग्नानामवग्रहो मासादिप्रमाणतः पञ्चक्रोशादिक्षेत्ररूपस्तमेषामनुज्ञाप्य तत्र वसतौ वस्तव्यम्, सामान्यञ्च यद्भक्तादि तदाचार्यादिकमनुज्ञाप्य तस्य परिभोजनमिति। चतुर्थस्य च स्त्रीभिस्सह परिचयं न कुर्यात्तत्संसक्तवसतिवद्दुपभुक्तशयनासनादिसेवनेन, अन्यथा ब्रह्मव्रतभङ्गः स्यात्, तथाऽवगततत्त्वो मुनिः क्षुद्रामप्रशस्तां स्त्रीविषयां कथां न कुर्यात्, तत्कथासक्तस्य हि मानसोन्मादः सम्पद्येत, तथा स्त्रियः तदङ्गान्यपि सस्पृहं न प्रेक्षेत, निरन्तरमनुपमवनितावयवविलोकने हि ब्रह्मबाधासम्भवः, पूर्वं गृहस्थावस्थायां स्त्रिया सह क्रीडादीन् न संस्मरेत्, तथाऽऽहारे गुप्तः स्यात्, न पुनः स्निग्धमतिमात्रं भुञ्जीत यतो निरन्तरदुग्धस्निग्धमधुररसप्रीणितः प्रधानधातुपरिपोषणेन वेदोदयाद्ब्रह्मापि सेवेत, अतिमात्राहारस्तु न केवलं ब्रह्मव्रतविलोपविधायित्वाद्वर्जनं किन्तु कायक्लेशकारित्वादपीति। पञ्चमव्रतभावनाश्च—यो हि साधुः शब्दरूपरसगन्धाभोगतानिन्द्रियविषयीभूतान् सम्प्राप्य मनोज्ञेष्वभिष्वङ्गं प्रद्वेषञ्चामनोज्ञेषु न करोति स एव विदितसत्त्वो जितेन्द्रियः, अन्यथा शब्दादिषु मूर्च्छादिसद्भावाद्व्रतविराधना भवेदिति ॥ २२ ॥

एतद्भावना अन्तरेण मोहनीयप्रकृतिसद्भावस्य नियतत्वमाह—

**मिथ्यात्वमोहनीयषोडशकषायस्त्रीपुनपुंसकवेदहास्यारतिरतिभयशोकजुगुप्सा अभवसिद्धिकाना जीवानाम् सदैवसत्तायाम् ॥ २३ ॥**

**मिथ्यात्वमोहनीयेति,** मोहयति सदसद्विकलं करोत्यात्मानमिति मोहनीयम्, यथा हि मद्यपानमूढः प्राणी सदसद्विकलो भवति तथाऽनेनापि कर्मणा मूढो जन्तुरपि तथा भवति, तच्च दर्शनचारित्रमोहनीयभेदभिन्नम्। कषायाः पूर्वोक्ताः षोडशविधाः, यद्वशात् स्त्रियाः पुंस्यभिलाषः पुरुषस्य स्त्रियं प्रत्यभिलाषः नपुंसकस्य तदुभयं प्रत्यभिलाषो भवति ते स्त्रीवेदपुंवेदनपुंसकवेदाः। यदुदयात् सनिमित्तमनिमित्तं वा हसति तत्कर्म हास्यम्, मोहनीयकर्मभेदः। यदुदयाज्जीवस्य सचित्ताचित्तेषु बाह्यद्रव्येषु अरतिं मोहनीयजो मनोविकारः रतिर्वोत्पद्यते तदरतिरतिकर्मणी नोकषायवेदनीयकर्मभेदौ। यदुदयेन भयवर्जितस्यापि जीवस्येहलोकादिसप्तप्रकारं भयमुत्पद्यते तद्भयकर्म मोहान्तर्गता नोकषायरूपा प्रकृतिः। येन शोकरहितोऽपि प्रियविप्रयोगादिविकलचेतोवृत्तितयाऽऽक्रन्दनादि करोति तच्छोकः कर्म नोकषायवेदनीयकर्मभेदः। यदुदयात् सनिमित्तमनिमित्तं वा जीवस्याशुभवस्तुविषया जुगुप्सा भवति तज्जुगुप्सामोहनीयम् स्त्रीवेदादयः सर्वा नोकषायप्रकृतयः, भवैर्नास्ति सिद्धिर्येषां तेषामेतानि कर्माणि सदैव स्युर्यद्यपि भवसिद्धिकानामपि भवावस्थाया भवन्ति तथापि न सदैव चरमे भवे तदभावादिति ॥२३॥

तत्सत्ताविरोध्यनगारगुणानाचष्टे—

**व्रतपञ्चकपञ्चेन्द्रियनिग्रहक्रोधमानमायालोभविवेकभावकरणयोगसत्यक्षमावैराग्यमनोवाक्कायसमाहरणताज्ञानदर्शनचारित्रसम्पन्नतावेदनामारणान्तिकातिसहनताः अनगारगुणाः ॥ २४ ॥**

**व्रतपञ्चकेति,** अनगाराणां साधूनां गुणाश्चारित्रविशेषरूपाः, तत्र महाव्रतानि इन्द्रियनिग्रहाश्च पञ्च क्रोधादिविवेकाश्चत्वारः, सत्यानि त्रीणि, तत्र भावसत्यं शुद्धान्तरात्मता, करणसत्यं यत्प्रतिलेखनाक्रियां यथोक्तां सम्यगुपयुक्तः कुरुते, योगसत्यं-योगानां मनःप्रभृतीनामवितथत्वम्, क्षमा द्वेषसन्निवस्याप्रीतिमात्रस्याभावः, अथवा क्रोधमानयोरुदयनिरोधः, क्रोधमानविवेकशब्दाभ्यां तदुदयप्राप्तयोस्तयोर्निरोधोऽभिहित इति न पुनरुक्तता, वैराग्यं अभिष्वङ्गमात्रस्याभावः, अथवा मायालोभयोरनुदयः, मनोवाक्कायानां समाहरणता अकुशलानां निरोधरूपा, ज्ञानादिसम्पन्नता, तिस्रः, वेदनातिसहनता शीताद्यतिसहनम्, मारणान्तिकातिसहनता—कल्याणमित्रबुद्ध्या मारणान्तिकोपसर्गसहनमिति ॥ २४ ॥

अनगारविशेषाणां विशिष्टदेवगतिसम्भवात् तद्गतियोग्यकर्माण्याह—

**देवगतिपञ्चेन्द्रियवैक्रियतैजसकार्मणसमचतुरस्रवैक्रियाङ्गोपाङ्गवर्णगन्धरसस्पर्शदेवानुपूर्व्यगुरुलघूपघातपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकयशःकीर्त्तिनिर्माणनामानि स्थिरास्थिरयोः शुभाशुभयोरादेयानादेययोरन्यतरच्च देवगतिं बध्नन्नाम्न उत्तरप्रकृतीर्बध्नाति, एवं नैरयिकोऽपि नानात्वं तु अप्रशस्तविहायोगतिहुण्डास्थिरदुर्भगाशुभदुःस्वरानादेयायशःकीर्त्तिनिर्माणनामभिः ॥ २५॥**

**देवगतीति,** स्पष्टम्, स्थिरास्थिरयोः शुभाशुभयोरादेयानादेययोश्च परस्परं विरोधित्वेनैकदा बन्धाभावादन्यतरदित्युक्तम्, नारकोऽपि विंशतिस्ता एव प्रकृतयोऽष्टानान्तु स्थानेऽष्टावन्या बध्नाति ॥ २५ ॥

प्रोक्तनरकगतिकर्मबन्धनिदानभूतानि शास्त्राण्याह—

**सूत्रवृत्तिवार्त्तिकभेदानि भौमोत्पातस्वप्नान्तरिक्षाङ्गस्वरव्यञ्जनलक्षणश्रुतानि विकथाविद्यामन्त्रयोगान्यतीर्थिकप्रवृत्तानुयोगश्रुतानि पापश्रुतानि ॥ २६ ॥**

**सूत्रेति,** पापोपादानहेतुभूतानि श्रुतान्येतानि, तत्र भौम-भूमिविकारदर्शनादेवास्मादिदं भवतीत्यादि फलाभिधानप्रवृत्तं निमित्तशास्त्रम्—तच्च सूत्रवृत्तिवार्त्तिकभेदत्त्रयवत्, एवमुत्पातादीन्यपि त्रिभेदानि, तत्राङ्गवर्जितानां सूत्रं सहस्रप्रमाणं वृत्तिर्लक्षप्रमाणा वार्त्तिकं वृत्तेर्व्याख्यानरूपं कोटिप्रमाणम् अङ्गस्य तु सूत्रं लक्षं वृत्तिः कोटिः वार्त्तिकन्त्वपरिमितमिति । उत्पातश्रुतं सहजरुधिरवृष्ट्यादिलक्षणोत्पातफलनिरूपकं निमित्तशास्त्रम् । स्वप्न—स्वप्नफलप्रकाशकम्, अन्तरिक्ष—आकाशजन्यग्रहयुद्धाविर्भावफलनिवेदकम्, अङ्ग—शरीरावयवप्रमाणस्पन्दितादिविकारफलोद्भावकम्, स्वर—जीवाजीवाश्रितस्वरस्वरूपफलाभिधायकम्, व्यञ्जन-मषादिव्यञ्जनफलोपदर्शकम्, लक्षणं लाञ्छनाद्यनेकविधलक्षणव्युत्पादकमिति चतुर्विंशतिः, तथा विकथानुयोगः—अर्थकामोपायप्रतिपादनपराणि कामन्दकवात्स्यायनादीनि भरतादीनि वा शास्त्राणि । विद्यानुयोगः—रोहिणीप्रभृतिविद्यासाधनाभिधायकानि शास्त्राणि, मन्त्रानुयोगः—चेटकादिमन्त्रसाधकाभिधायकानि शास्त्राणि, योगानुयोगः—वशीकरणादिकानि हरमेखलादियोगाभिधायकशास्त्राणि, अन्यतीर्थिकेभ्यः कपिलादिभ्यः सकाशाद्यः प्रवृत्तः स्वकीयाचारवस्तुतत्त्वानां विचारः सोऽन्यतीर्थिकप्रवृत्तानुयोग इति ॥ २६ ॥

पापश्रुतप्रसक्ता च महामोहनीयस्थानपातेवेति मोहनीयस्थानान्याह—

**त्रिंशन्महामोहनीयस्थानानि महावीरेण प्रवेदितानि ॥ २७ ॥**

**त्रिंशदिति,** मोहनीयमष्टप्रकारं कर्म विशेषतश्चतुर्थी प्रकृतिर्वा तस्य स्थानानि निमित्तानि, वक्ष्यमाणानि समवसरणस्थेन महावीरेण प्रवेदितानि यानि स्थानानि तानि स्त्री वा पुरुषो वा समाचरन् पुनः पुनः शठाध्यवसायितया मोहनीयं कर्म प्रकरोतीति भावः, तत्र स्त्रीपुरुषगृहस्थपाषण्डिप्रभृतीन् त्रसान् वारिमध्ये प्रविश्योदकेन शस्त्रभूतेन पादादिना आक्रम्य मारयति मार्यमाणस्य महामोहोत्पादकत्वात्संक्लिष्टचित्तत्वात् भवशते दुःखवेदनीयमात्मना महामोहं प्रकरोतीति त्रससमारणेनैकं मोहनीयस्थानम् । प्राणिनां मुखादि हस्तेन सपिधायावरुध्य चान्तर्नदन्तं मारयति स महामोहं प्रकरोति । वैश्वानरं प्रज्वाल्य महामण्डपवाटादि जनमवरुध्य मारयति स महामोहकृत् । उत्तमाङ्गादौ खड्गमुद्गरादिना प्रहृत्य प्राणिनाशको महामोहकरः । आर्द्रचर्मादिमयेन शीर्षावेष्टनेन यः कश्चित्त्रसान् वेष्टयित्वा मारयति स महामोहविधाता । मायया यो वाणिजकादिवेषं विधाय पथि गच्छता सह गत्वा विजने तं मारयति ततः उपहासादि च करोति स महामोहकृत् । यः प्रच्छन्नाचारवान् स्वकीयदुष्टाचारगोप-

तया परकीयभार्यां ब्रजेत् स महामोहं विधत्ते । योऽविद्यमानदुश्चेष्टितं निजकृतमृषिघातादि दुष्ट-व्यापारारोपाद्भ्रंशयति सोऽपि तथा । योऽनृतमेतदिति जानानोऽपि सभायां किञ्चित्सत्यानि बहुस-त्यानि सत्यमृषारूपाणि वाक्यानि भाषते स तथा । यो विचक्षणोऽमात्योऽनायकराजदारान् अर्थागम-द्वारान् वा ध्वंसयित्वा नायकं वा संक्षोभ्य तद्भोगान् विदारयति अनुकूलयितुं समीपमागच्छन्तमपि नायकं प्रतिकूलैर्वचोभिरवरुध्य विशिष्टान् भोगान् विदारयति सोऽपि तथा । योऽकुमारब्रह्मचारी सन् कुमारभूतोऽहं कुमारब्रह्मचार्यहमिति वदन् स्त्रीषु गृद्धः सोऽप्येवम् । यः स्त्रीगृद्धोऽब्रह्मचारी सन् तत्काल एव ब्रह्मचारी साम्प्रतमहमित्यतिधूर्त्ततया परप्रवञ्चनाय वदति स तथा । यो जीविकालाभेन राजादि सेवते राजादेः सत्कोऽयमिति लब्धप्रतिष्ठश्च तस्यैव राजादेर्वित्ते लुभ्यति सोऽपि तथा । राजादिनेश्वरी-कृतो यो लब्धसम्पत्तिरुपकारकारकराजादिविषये दुष्टान्तःकरणोऽन्तरायं करोति सोऽप्येवम् । यः पोषयितारं सेनापतिं राजानं वाऽमात्यं वा धर्मपाठकं वा विहिनस्ति सोऽप्येवम्, तन्मरणे बहुजना-दुःस्थता प्रसङ्गात् । यो राष्ट्रस्य नायकं सति प्रयोजने निगमस्याशाकारं बहुयशसं श्रेष्ठिनञ्च हन्ति स महामोहं विधत्ते । बहुजननायकं प्रावचनिकादिपुरुषं हेयोपादेयवस्तुस्तोमप्रकाशकं हत्वा महामोहं प्रकरोति । भवविजिगीषुं प्रव्रजितं संयतं सुसमाहितं व्रतचारित्रधर्माद्यो भ्रंशयति सोऽपि तथा । ज्ञानाद्य-नेकातिशयसम्पन्नत्वेन भुवनत्रये प्रसिद्धान् जिनान् प्रत्यवर्णवादी यः सोऽपि तथा । न्यायमार्गस्य सम्य-ग्दर्शनादेर्द्विष्टोऽपकरोति यः तथाऽन्यांश्च तत्र द्वेषेण वासयति स तथा । आचार्योपाध्यायादीन् निज-शिक्षकान् अल्पज्ञाना एते इति ज्ञानतः, अन्यतीर्थिकसंसर्गकारिण इति दर्शनतः, मन्दधर्माणः पार्श्व-स्थादिस्थानवर्त्तिन इति चारित्रतश्च निन्दति स तथा । श्रुतदानग्लानावस्थाप्रतिचरणादिभिरुपकृतानाचा-र्यादीन् यो विनयाहारौषध्यादिभिर्न प्रत्युपकरोति, नासेवते मानवांश्च सोऽप्येवम् । अबहुश्रुतो यः श्रुतवानहमनुयोगधरोऽहमित्यात्मानं श्लाघते स महामोहकारी । अतपस्वी य आत्मानं तपस्विनं कथयति स तथा । यः कश्चिदाचार्यादिः समर्थः ग्लाने उपस्थिते उपदेशेनौषधादिदानेन च स्वतोऽन्यतश्चोपकारं 'समर्थोऽपि सन् ममाप्येष किञ्चनापि करोतीति' विद्वेषेण असमर्थोऽयं बालत्वादिना किं कृतेनास्य ? पुनरुपकर्तुमशक्तत्वादिति लोभेन न करोति सोऽतथा कौटिलीयादिहिंसाप्रवर्त्तकशास्त्राणि राजकथादीनि यन्त्रादीनि च पुनःपुनः प्रयुङ्क्ते यः सोऽपि सर्वतीर्थनाशनाय प्रवृत्तेस्तथा । यः श्लाघायै निमित्तवशी-करणादिप्रयोगान् प्रयुनक्ति सोऽपि तथा । यः पारलौकिकभोगेष्वतृप्यन् मानुष्यकान् भोगानभिलषति सोऽपि तथा । यो देवानां ऋद्धिद्युतियशोवर्णबलवीर्यप्रभृतिष्ववर्णवान् सोऽप्येवम् । यो देवानपश्य-न्नपि पश्यामीति ब्रूते जिनस्येव च पूजामर्थयते गोशालकवत् सोऽपि महामोहं प्रकरोतीति ॥ २७ ॥

महामोहनीयस्थानानामनासेवी सिद्धो भवतीति तद्गुणानाह—

आभिनिबोधिकश्रुतावधिमनःपर्यवकेवलज्ञानचक्षुरचक्षुरवधिकेवलद-र्शनावरणनिद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानर्द्धिसातासातवेदनीयद-र्शनचारित्रमोहनीयनारकतिर्यङ्मनुष्यदेवायुरुच्चनीचगोत्रशुभाशुभनामदान-लाभभोगोपभोगवीर्यान्तरायक्षयाः सिद्धादिगुणाः ॥ २८ ॥

**आभिनिबोधिकेति,** सिद्धानामादौ-सिद्धत्वप्रथमसमय एव गुणा सिद्धादिगुणा, ते चाभिनिबोधिकावरणादि स्वस्वरूपा, दर्शनावरणनवकायुष्कचतुष्कज्ञानावरणीयपञ्चकान्तरायपञ्चकवेद-नीयद्वयमोहनीयद्वयगोत्रद्वयनामद्वयानि क्षीणत्वविशेषितत्वेन मोक्तव्यनामानि एकत्रिंशत्संख्याकानि सिद्धादिगुणरूपाणि भवन्तीति भाव ॥ २८ ॥

ते गुणाः कथं सम्भवन्तीत्यत्र कारणभूतान् प्रशस्तयोगानाहे—

## आलोचननिरपलापदृढधर्मत्वाद्य. प्रशस्तयोगसङ्ग्रहा. ॥ २९ ॥

**आलोचनेति,** योगा मनोवाक्कायाना व्यापारास्ते प्रशस्ता शुभा तेषा शिष्याचार्याणाम् आलोचननिरपलापादिना प्रकारेण ये सङ्ग्रहास्ते द्वात्रिंशद्विधा, तथथा—प्रशस्तमोक्षसाधनयोगसङ्ग्र-हाय शिष्येणाचार्याय सम्यगालोचना दातव्येत्यालोचना, आचार्योऽपि मोक्षसाधकयोगसङ्ग्रहायैव दत्तायामालोचनाया नान्यस्मै कथयेदिति निरपलाप, तदर्थमेव द्रव्यादिभेदास्वापत्सु साधुना सुतरा दृढधर्मिणा भाव्यमिति दृढधर्मता, तदर्थमेव परसाहाय्यानपेक्ष तपो विधेयमित्यनिश्रितोपधानता, ग्रहण धर्मग्रहणरूपा प्रत्युपेक्षाद्यासेवनात्मिका च शिक्षाऽऽसेवितव्येति शिक्षा, निष्प्रतिकर्मशरीरेणासेवनायेति निष्प्रतिकर्मता, यश पूजार्थितेनामप्रकाशयद्भिस्तपः कार्यं यथाऽन्यो न जानाति तथा तपः कार्यमित्यर्थं इति अज्ञातता, अलोभेन यत्न कार्य इत्यलोभता, परीषहादिजय कार्य इति तितिक्षा, आर्जवं कर्तव्यमित्यार्जवम्, सयमवता भवितव्यमिति शुचित्वम्, सम्यग्दर्शनशुद्धो भवेदिति सम्यग्दृष्टित्वम्, चेतस. स्वास्थ्य कार्यमिति समाधि, निमाय आचारोपगत स्यादित्याचार., निर्मानो विनयोपगतो भवेदिति विनयित्वम्, धृतिप्रधाना मतिरदैन्यरूपा कार्येति धृतिमतित्वम्, ससारभय मोक्षाभिलाषो वा भवेदिति सवेगित्वम्, मायाशल्य न कुर्यादित्यप्रणिधिः, सदनुष्ठान कर्तव्यमिति सुविधि, आस्रवनिरोध. कार्य इति सवर, स्वकीयदोषस्य निरोध कार्य इत्यात्मदोषोपसहार, समस्तविषयवैमुख्य भावयेदिति सर्वकामविरक्तता, मूलगुणविषयमुत्तरगुणविषयञ्च प्रत्याख्यान कार्यमिति प्रत्याख्याने, द्रव्य-भावभेदभिन्नो व्युत्सर्गः कार्य इति व्युत्सर्गित्वम्, प्रमादवर्जन कार्यमित्यप्रमादित्वम्, क्षणे क्षणे सामा-चार्यनुष्ठान कार्यमिति लवालव., ध्यान कार्यमिति ध्यानसवरयोग, मारणान्तिकेऽपि वेदनोदये न क्षोभ कार्य इति उदितमारणान्तिकत्वम्, सङ्गानाञ्च ज्ञपरिज्ञाप्रत्याख्यानपरिज्ञाभेदभिन्ना परिज्ञा कार्-येति सङ्गपरिज्ञा, प्रायश्चित्तकरणञ्च कार्यमिति प्रायश्चित्तकरणम्, मरणान्तकाले आराधना कार्ये-त्याराधना, एते प्रशस्तयोगसङ्ग्रहनिमित्तत्वात् योगसङ्ग्रहा इति ॥ २९ ॥

प्रशस्तयोगाभावे आशातना भवन्तीति ता आह—

## शैक्षस्य रात्निकेऽविनया आशातनास्त्रयस्त्रिंशत् ॥ ३० ॥

**शैक्षस्येति,** आ सामस्त्येन ज्ञानादिगुणा शात्यन्तेऽपध्वस्यन्ते याभिस्ता आशातना:—तत्र शैक्षस्य—शिक्षायोग्यस्य—अल्पपर्यायस्य रात्निके बहुपर्याये आचार्यादिविषये येऽविनया —अयोग्यव्यव-हारा त्रयस्त्रिंशद्विधा —यथा, बहुपर्यायस्याऽऽसन्नगमन यथा रजोऽवकिरः स्यात् तथा, एवं तस्य पुरतो गमन तथा समपार्श्वे यथा भवति तथा समश्रेण्या गमनम्, एवमासन्नस्थिति. पुर स्थितिः

…वस्थितिः, तथाऽऽसन्न निषीदनं पुरो निषीदनं पार्श्वतो निषीदनम्, विचारभूमिं गतयोः शैक्षस्य …रमाचमनम्, पूर्वं गमनागमनालोचनम्, रात्निकेन रात्रौ को जागर्त्तीति पृष्टे तद्वचनाश्रवणम्, …त्निकस्य पूर्वमाऽपनीय कथनं शैक्षस्य पूर्वतरमालपनम्, लब्धाशनादे पूर्वमेवालोचनम्, अन्यस्य …उपदर्शनम्, अन्यस्य निमन्त्रणम्, अनापृच्छ्याऽन्यस्मै दानम्, प्रधानतरस्य स्वयं भोजनम्, क्वचि- …योजने व्याहरतो रात्निकस्य वचसोऽप्रतिश्रवणम्, रात्निकस्य पुरतो रूक्षया शब्देन बहुधा भाष- …म्, व्याहृतेन मस्तकेन वन्दे इति वक्तव्ये किं भणसीति कथनम्, रात्निके प्रेरयति सति कस्त्वं प्रेर- …यामिति भणनम्, आर्य ! ग्लानं किं न प्रतिचरसीति उक्ते त्वं किं न त्वं प्रतिचरसीत्यभिधानम्, धर्मं …कथयति गुरौ अन्यमनस्कताऽऽसेवनम् कथयति गुरौ न स्मरसीति कथनम्, धर्मकथाया आच्छेदनम्, …भिक्षावेला वर्त्तत इति वदन् पर्षदो भेदनम्, गुरुपर्षदोऽनुत्थितायास्तथैव व्यवस्थिताया धर्मस्य कथ- …नम्, गुरोः संस्तारकस्य पादेन घट्टनम्, गुरुसंस्तारके निषीदनम्, उच्चासने निषीदनम्, समासने निषीदनम्, आलपतो रात्निकस्य आसनादि स्थित एव प्रतिश्रवण आगत्य हि प्रत्युत्तरं देयमिति शैक्ष- स्याऽऽशातनाः ॥ ३० ॥

आशातनाप्रतिपादकस्यातिशयानाह—

**तीर्थकरस्यातिशया अवर्द्धमानकेशनिरामयशरीरपाण्डुरमांसशोणि- तादयः ॥ ३१ ॥**

**तीर्थकरस्येति**, अवृद्धिस्वभावास्तीर्थकृतः केशा श्मश्रूणि रोमाणि नखाश्च, नीरोगं निर्मलञ्च शरीरम्, गोक्षीरपाण्डुरं मांसशोणितम्, पद्मोत्पलगन्धिनावुच्छ्वासनिःश्वासौ, अभ्यवहरणमूत्रपुरीषो- त्सर्गौ च मांसचक्षुषाऽदृश्यौ, आकाशगतं धर्मचक्रम्, आकाशगतं छत्रत्रयम्, प्रकाशे प्रकीर्णके श्वेतवरचामरे, सपादपीठं आकाशमिवाच्छस्फटिकमयं सिंहासनम्, अतितुङ्गलघुपताकातिमनोहरस्येन्द्र- ध्वजस्य जिनस्य पुरतो गमनम्, यत्र यत्र भगवन्तस्तिष्ठन्ति तत्र तत्र सदैव पत्रसंछन्नपुष्पफलोप- शोभितछत्रघण्टापताकालङ्कृताशोकवरपादपोऽभिसञ्जायते, ईषत्पश्चाद्भागे मस्तकप्रदेशे प्रभापटलं येन दशदिशोऽन्धकारेऽपि प्रभासन्ते, अतिसमरमनोहरभूप्रदेश , अधश्शिरसः कण्टका , अविपरीताः सुख- स्पर्शा ऋतव , संवर्त्तकवातेन सुखस्पर्शेन शीतलेन सुवासितेन योजनं यावत् क्षेत्रशुद्धिः, उचितबिन्दु- पातेन निहतरजोरेणुर्गन्धोदकवर्षाकरो मेघ , जानूत्सेधप्रमाणमात्र पञ्चवर्णोर्ध्वमुखप्रभूतपुष्पप्रकर', कालागुरुप्रवरकुन्दुरुक्कतुरुष्कधूपगन्धद्रव्योद्भूतातिसौरभगन्धाद्‌तिमनोहरं तन्निषीदनस्थानम्, उपर्युक्तस्थानद्वये अमनो- ज्ञशब्दाद्यभावो मनोज्ञानां प्रादुर्भावश्चेति द्वयं वा, व्यासुर्वर्वो भगवतो हृदयंगमो यो जानाति योजनगामी स्वरः, अर्धमागधीभाषातो धर्माख्यानम्, षण्णां भाषाविशेषाणां मध्ये या मागधी नाम भाषा साऽस- माश्रितस्वकीयसमग्रलक्षणाऽर्धमागधीत्युच्यते, तस्याश्चार्यानार्यदेशोत्पन्नानां द्विपदचतुष्पदमृगपशुप- क्षिसरीसृपाणां आत्मनो भाषात्वेन परिणमनम्, पूर्वबद्धवैरा अपि देवासुरादय प्रसन्नचित्ता धर्मं त निशमयन्ति, अन्यतीर्थिकप्रावचनिका अपि भगवन्तं वन्दन्ते, आगतास्सन्तोऽर्हतः पादमूले निष्प्रति- वचना भवन्ति, यत्र यत्र भगवानास्ते तत्र तत्र पञ्चविंशतियोजनेषु धान्याद्युपद्रवकारि प्रचुरमूषकादि-

यत्कर्म तपसा च विराजते । तपोवीर्येण युक्तश्च तस्माद्वीर इति स्मृतः ॥' इति, इतरवीरापेक्षया महाश्चासौ वीरश्च महावीरः, अस्यामवसर्पिण्यां चतुर्विंशतेस्तीर्थकराणां मध्ये चरमतीर्थकरः । तस्य आर्याणां षट्त्रिंशत्सहस्राणि श्रमणीसम्पत् कु पृथिवी तस्यां स्थितत्वात् कुन्थुः सप्तदश तीर्थकरः, यद्यपि सर्वेऽपि भगवन्तः पृथिव्यां स्थिता एव तथापि अस्य जननीस्वप्ने कुस्थे मनोहरेऽभ्युन्नते महीप्रदेशे स्तूपं रत्नविचित्रं दृष्ट्वा प्रतिबुद्धवती, अतो हेतोर्भगवान्नामतः कुन्थुजिनः, तस्य गणाः सप्तत्रिंशत्, गणधराश्च सप्तत्रिंशत्, आवश्यके तु गणधरा त्रयस्त्रिंशत् श्रूयन्ते । सुचिरूलापात् पश्यति सर्वभावानिति पार्श्वः त्रयोविंशस्तीर्थंकरः, तस्य पुष्पचूलाप्रमुखाः अष्टत्रिंशत्सहस्राऽऽर्यिका अभवन् । नमेश्चैकोनचत्वारिंशत आधोऽवधिकशतानि, आधोऽवधिकाः नियतक्षेत्रविषयावधिज्ञानिनः, तेषां शतानीत्यर्थः । धर्मचक्रस्य नेमिवन्नेमि, गर्भस्थे मातारिष्टरत्नमयनेमेर्दर्शनादरिष्टनेमिः, द्वाविंशस्तीर्थंकरः, तस्य आर्यपक्षिणीप्रमुखाणि चत्वारिंशदार्यासहस्राणि अभवन् । नमेश्चैकचत्वारिंशदार्यिकासहस्राणि ॥ ३३ ॥

उपर्युक्तसम्पत्तिधरमहावीरस्य श्रमणकालमानमाह—

**द्विचत्वारिंशद्वर्षाणि साधिकानि श्रामण्यपर्यायो महावीरस्य ॥ ३४ ॥**

द्विचत्वारिंशदिति, छद्मस्थपर्याये द्वादशवर्षाणि षण्मासा अर्धमासश्चेति, केवलिपर्यायस्तु देशोनानि त्रिंशद्वर्षाणीति द्विचत्वारिंशद्वर्षाणि साधिकानि महावीरस्य श्रामण्यपर्याय इति ॥ ३४ ॥

उपर्युक्तश्रामण्यपर्यायवता महावीरेणोक्ता नारकावाससंख्या आह—

**प्रथमचतुर्थपञ्चमपृथिवीषु त्रिचत्वारिंशत्शतसहस्राणि नरकावासाः ॥ ३५ ॥**

प्रथमेति, रत्नप्रभापङ्कप्रभाधूमप्रभाभिधानासु पृथिवीष्वित्यर्थः, आवसन्ति येषु ते आवासाः, नरकाश्च ते आवासाश्च नरकावासाः, तत्र रत्नप्रभायाः प्रथमपृथिव्यास्त्रयोदशप्रस्तराः, प्रस्तरा नाम वेश्मभूमिकाकल्पाः, तत्र प्रथमे प्रस्तरे पूर्वादिषु दिक्षु प्रत्येकमेकोनपञ्चाशन्नरकावासाः, चतसृषु विदिक्षु प्रत्येकमष्टचत्वारिंशत्, मध्ये च सीमन्तकाख्यो नरकेन्द्रकः, सर्वसंख्यया प्रथमप्रस्तरे नरकावासानामावलिकाप्रविष्टानामेकोननवत्यधिकानि त्रीणि शतानि, शेषेषु च द्वादशसु प्रस्तरेषु प्रत्येकं यथोत्तरं दिक्षु विदिक्षु च एकैकनरकावासहानिभावात् अष्टकाष्टकहीना नरकावासाः, ततः सर्वसंख्यया रत्नप्रभायां पृथिव्यामावलिकानरकावासाश्चतुश्चत्वारिंशच्छतानि त्रयस्त्रिंशदधिकानि, शेषास्तु एकोनत्रिंशल्लक्षाणि पञ्चनवतिसहस्राणि पञ्चशतानि सप्तषष्ट्यधिकानि प्रकीर्णकाः, उभयमीलने त्रिंशल्लक्षा नरकावासानाम् । पङ्कप्रभायां चतुर्थपृथिव्यां सप्त प्रस्तराः, प्रथमे प्रस्तरे प्रत्येकं दिशि षोडशावलिकाप्रविष्टा नरकावासाः, विदिशि पञ्चदश, मध्ये चैको नरकेन्द्रकः, सर्वसंख्यया च पञ्चविंशं शतम्, शेषेषु षट्सु प्रस्तरेषु पूर्ववत्प्रत्येकं क्रमेणाधोऽधोऽष्टकाष्टकहानिः, ततः सर्वसंख्यया तत्रावलिकाप्रविष्टा नारकावासाः सप्तशतानि सप्तोत्तराणि, शेषास्तु पुष्पावकीर्णका नवलक्षा नवनवतिसहस्राणि द्वे शते त्रिनवत्यधिके, उभयमीलने नरकावासानां दशलक्षाः । धूमप्रभायां पञ्चमपृथिव्यां पञ्चप्रस्तराः, प्रथमे च प्रस्तरे एकैकस्यां दिशि नव नव आवलिकाप्रविष्टा नारकावासाः, विदिश्यष्टौ मध्ये चैको नरकेन्द्रकः, इति

सर्वसङ्ख्यया एकोनसप्ततिः, शेषेषु च चतुर्षु प्रस्तरेषु पूर्ववत् प्रत्येकं क्रमेणाधोऽधोऽष्टकाष्टकहानिः, तत्र सर्वसङ्ख्यया तत्रावलिकाप्रविष्टा नरकावासा द्वे शते पञ्चपञ्चाधिके, शेषाः पुष्पावकीर्णका द्वे लक्षे नवनवतिसहस्राणि सप्तशतानि पञ्चत्रिंशदधिकानि, उभयमीलने सर्वसङ्ख्यया तिस्रो लक्षा नरकावासाः, प्रथमचतुर्थपञ्चमपृथिवीनरकावाससङ्ख्यानां मीलने च त्रिचत्वारिंशच्छतसहस्राणीति ॥ ३५ ॥

ऋषिभाषिताध्ययनेष्वपि नारकावासवर्णनात्तान्याह—

## ऋषिभाषिताध्ययनानि चतुश्चत्वारिंशत् ॥ ३६

**ऋषीति,** पश्यन्तीति ऋषयोऽतिशयज्ञानवन्तः, गणधरव्यतिरिक्ताः शेषा जिनशिष्याः, यद्वा ऋषयः प्रत्येकबुद्धसाधवः, ते चात्र नेमिनाथतीर्थवर्त्तिनो नारदाद्यो विंशतिः, पार्श्वनाथतीर्थवर्त्तिनः पञ्चदश, वर्धमानस्वामितीर्थवर्त्तिनो दश, तैर्भाषितानि अध्ययनानि कालिकश्रुतविशेषभूतानि अङ्गबाह्यानि भवन्तीति भावः ॥ ३६ ॥

ऋषयः समयक्षेत्रे भवन्तीति समयक्षेत्रादिप्रमाणमाह—

## समयक्षेत्रं सीमन्तक उडुविमानमीषत्प्राग्भारपृथिवी च पञ्चचत्वारिंशद्योजनशतसहस्राण्यायामविष्कम्भेण ॥ ३७ ॥

**समयक्षेत्रमिति,** समयः कालस्तेनोपलक्षितं क्षेत्रं समयक्षेत्रं मनुष्यक्षेत्रमित्यर्थः, कालो हि दिनमासादिरूपः सूर्यगतिसमभिव्यङ्ग्यो मनुष्यक्षेत्र एव न परतः, परतो हि नादित्याः सञ्चरिष्णवः, इदञ्च क्षेत्रमायामविष्कम्भेण पञ्चचत्वारिंशद्योजनशतसहस्रम्, परिक्षेपेण चैका योजनकोटी द्वाचत्वारिंशत् शतसहस्राणि त्रिंशत्सहस्राणि किञ्चिद्विशेषाधिकैकोनपञ्चाशद्युते द्वे योजनशते । प्रथमपृथिव्याः प्रथमप्रस्तरे मध्यभागवर्त्ती वृत्तो नरकेन्द्रः सीमन्तक उच्यते, तस्यापि प्रमाणमायामविष्कम्भेण तावदेव सौधर्मेशानयोः प्रथमप्रस्तरवर्त्तिचतसृणां विमानावलिकानां मध्यभागवर्त्ति वृत्तं विमानकेन्द्रकमुडुविमानकम् । ईषदल्पः रत्नप्रभाद्यपेक्षया प्राग्भारः उच्छ्रयादिलक्षणो यस्याः सा ईषत्प्राग्भारा, ऊर्ध्वलोकाग्रस्थः सिद्धानां निवासभूतः पृथिवीभेदः, स च शङ्खदलचूर्णवत् श्वेतः उत्तानच्छत्रसंस्थानसंस्थितः श्वेतसुवर्णमयः । मध्ये बाहल्यन्तु अष्टयोजनप्रमाणम्, सा च पृथिवी परितो हीयमाना चरमान्तेषु सकलदिग्विभागवर्त्तिषु पर्यन्तप्रदेशेषु मक्षिकापत्रादपि तनुतरी, अत्रैव सिद्धा उपरि भागविशेषे निवसन्तीति सिद्धालय इत्यप्युच्यत इति ॥ ३७ ॥

समयक्षेत्र एव दृष्टिवादादेः प्रादुर्भावात्तमाह—

## दृष्टिवादस्य मातृकापदानि ब्राह्मीलिप्यां मातृकाक्षराणि च षट्चत्वारिंशत् ॥ ३८ ॥

**दृष्टिवादस्येति,** जिनप्रणीतवस्तुतत्त्वप्रतिपत्तिर्दृष्टिः, तस्या वादो दृष्टिवादः द्वादशाङ्गरूपः, तस्य सकलवाङ्मयस्याकारादिमातृकापदानीव दृष्टिवादार्थप्रसवनिबन्धनत्वेन मातृकापदानि-उत्पादव्ययध्रौव्यलक्षणानि, तानि च सिद्धश्रेणिमनुष्यश्रेण्यादिना विषयभेदेन कथमपि भिद्यमानानि षट्चत्वारिंशद्भवन्तीति सम्भाव्यते । ब्राह्मी ऋषभदेवस्य सुमङ्गलाया देव्या भरतेन सह जाता पुत्री,

लिपिः पुस्तकादावक्षरविन्यासः, साचाष्टादशप्रकारापि ब्राह्म्या या दर्शिताऽक्षरलेखनप्रक्रिया सा ब्राह्मीलिपि, तस्यां लेख्यविधौ मातृकाक्षराणि षट्चत्वारिंशत्, तानि चाकारादीनि हकारान्तानि क्षकार-सहितानि ऋ ॠ ऌ ॡ ळ इत्येव तदक्षरपञ्चकवर्जितानि समाम्नायन्त इति ॥ ३८ ॥

सूत्ररूपेण तस्य प्रतिपादकमाह—

## अग्निभूतिः सप्तचत्वारिंशद्वर्षस्यान्तोऽनगारो ॥ ३९ ॥

अग्निभूतिरिति, श्रीमतो महावीरस्य द्वितीयो गणधरो मगधदेशजो गौतमगोत्रः कृत्तिकानक्षत्रेऽग्निभूतिः, पिताऽस्य वसुभूतिर्माता पृथिवी तस्यागारवासः सप्तचत्वारिंशद्वर्षाणि, आवश्यके तु षट्चत्वारिंशद्वर्षाण्युक्तानि, सप्तचत्वारिंशत्तमवर्षस्यापूर्णत्वात्तत्राविवक्षा कृता, समवायाङ्गे चापूर्णस्यापि पूर्णत्वविवक्षया सप्तचत्वारिंशद्वर्षाण्युक्तानि । सूत्रेऽन्तशब्दो मध्यपरः । अस्य छद्मस्थपर्यायो द्वादशवर्षाणि जिनपर्यायः षोडशवर्षाणि ॥ ३९ ॥

गणधरविषयकवक्तव्यत्वादत्रापि तदेवाह—

## धर्मजिनस्याष्टचत्वारिंशद्गणा गणधराश्च ॥ ४० ॥

धर्मजिनस्येति, अथ पञ्चदशतीर्थंकर दुर्गतौ प्रपतन्त सत्त्वसमूहं धारयतीति धर्मः, गर्भस्थेऽस्मिन् जननी दानादिधर्मपरा जातेति नाम्ना धर्मः, अस्य गणास्तावन्मात्राः, गणाश्चैकवाचनाऽऽचारक्रियास्थानाम् । गणधरा अपि तावन्तः, अनुत्तरज्ञानदर्शनादिधर्मगणं धरन्तीति गणधराः, आवश्यके तु त्रिचत्वारिंशद् गणा गणधराश्च पठ्यन्ते ॥ ४० ॥

गणधरप्रकाशितप्रतिमानिक्षेपमाह—

## सप्तसप्तकिकाभिक्षुप्रतिमा एकोनपञ्चाशद्रात्रिंदिवैः ॥ ४१ ॥

सप्तसप्तकिकेति, यमनियमव्रतयस्थित कृतकारितानुमोदितपरिहारेण भिक्षते इत्येवंशीलो भिक्षुः पचनपाचनसावद्यानुष्ठानरहिततया निर्दोषाहारभोजी साधुः, नामस्थापनाद्रव्यभावैः स निक्षेप्यः, नामस्थापने सुगमे, द्रव्यभिक्षुः आगमतो नोआगमतश्च, ज्ञाताऽनुपयुक्त आद्यः, द्वितीयस्तु त्रिविधः, ज्ञशरीर भव्यशरीर तदुभयव्यतिरिक्तश्च, भिक्षुपदार्थज्ञस्य जीवापेतं शरीरं ज्ञशरीरम्, भूतभावत्वात् । यस्तु बालको नेदानीं भिक्षुशब्दार्थमवबुध्यते भोत्स्यतेऽनेनैव शरीरेण तस्य शरीरं भव्यशरीरं भाविभावत्वात् । तदुभयव्यतिरिक्तश्च त्रिधा, एकभविक , बद्धायुष्क , अभिमुखनामगोत्रश्च, यो नैरयिकस्तिर्यङ्मनुष्यो वा देवो वाऽनन्तरभवे भिक्षुर्भावी स एकभविकः । येन भिक्षुपर्यायनिमित्तमायुर्बद्धं स बद्धायुष्कः, यस्य भिक्षुपर्यायप्रवचनाभिमुखे नामगोत्रे कर्मणी स चाऽऽर्यक्षेत्रे मनुष्यभवे भाविभिक्षुपर्याये समुगमानः, यद्वा स्वजनधनादि परित्यज्य गुरुसमीपे प्रव्रज्याप्रतिपत्त्यर्थं स्वगृहाद्बहिर्गच्छति सोऽभिमुखनामगोत्रः । भावभिक्षुर्द्विधा, आगमतो नोआगमतश्च, आगमतो भिक्षुशब्दार्थवेत्ता तत्र चोपयुक्तः । नोआगमतस्तु सम्यक् त्रिविधं त्रिविधेन समस्तसावद्याद्युपरतस्संयतः । गृहस्था अन्यतीर्थिकलिङ्गिनो वा न नोआगमतो भावभिक्षवः, भिक्षुशब्दप्रवृत्तिनिमित्तस्य तत्राभावात्, भिक्षुशब्दस्य हि द्वे निमित्ते, व्युत्पत्तिनिमित्तं प्रवृत्तिनिमित्तञ्च, भिक्षत इत्येवंशीलो भिक्षुरिति व्युत्पत्त्या भिक्षणं व्युत्पत्तिनिमित्तम्, तेन भिक्षणेनैकार्थे समवायितया यदुपलक्षितमिह परलोकाशंसाविप्रमुक्ततया यमनि-

यमेषु व्यवस्थितस्य तत्प्रवृत्तिनिमित्तम्, तेन भिक्षमाणेऽभिक्षमाणे वा भिक्षौ भिक्षुशब्दः प्रवर्तते, उभयत्रापि तस्य प्रवृत्तिनिमित्तसद्भावात्, अन्यत्र च गृहस्थादौ न प्रवर्तते, नवकोट्यपरिशुद्धाहारभोजितया तेषु यथोक्तस्य प्रवृत्तिनिमित्तस्याभावात्, नहि गमनक्रियामात्राद्गौ, किन्तु गमनेनैकार्थसमवायितया यदुपलक्षितं सास्नादिमत्त्वं तद्योगाद्गौरेवेति । तेषां प्रतिमा—अभिग्रहविशेषः, सप्त सप्तकदिनानि यस्यां सा सप्तसप्तकिका, सप्तसु सप्तकेषु सप्त सप्त दिनानि भवन्तीति सा एकोनपञ्चाशता दिनैर्भवति, तत्र प्रथमे सप्तके प्रतिदिवसमेकैका भिक्षा गृह्णाति, द्वितीये सप्तके प्रतिदिवसे द्वे द्वे भिक्षे, तृतीये सप्तके प्रतिदिवसं तिस्रस्तिस्रः, चतुर्थे चतस्रश्चतस्रः, पञ्चमे पञ्च पञ्च, षष्ठे षट् षट्, सप्तमे सप्त सप्तेति सप्तसप्तकिकायां भिक्षापरिमाणं षण्णवतं शतम् ॥ ४१ ॥

प्रतिमावहनेनोग्रतपश्चारेहदन्तो भवन्तीति तथाविधानाह—

**मुनिसुव्रतस्य पञ्चाशदार्यिकासहस्राणि, अनन्तजिनः पुरुषोत्तमश्च पञ्चाशद्धनुर्देहमानः ॥ ४२ ॥**

**मुनिसुव्रतस्येति,** मनुते जगत्त्रिकालावस्थामिति मुनिः जीवाजीवलक्षणं लोकं यथार्थोपयोगेन द्रव्यास्तिकपर्यायास्तिकस्वभावगुणपर्यायैर्निमित्तोपादानकारणकार्यभावोत्सर्गापवादपद्धत्या जानाति मुनिः, (नाममुनिः स्थापनामुनिः सुगमः, द्रव्यमुनिः ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात्त्रिविधोऽनुपयुक्तः लिङ्गमात्रद्रव्यक्रियावृत्तिसाध्योपयोगशून्यस्य प्रवर्तनविकल्पादिषु कषायनिवृत्तस्य परिणतिचक्रेऽसंयमपरिणतस्य द्रव्यमुनित्वम् । भावमुनिः चारित्रमोहनीयक्षयोपशमक्षायिकोत्पन्नसहजपरमपरमात्मनिष्ठत्वपरिणतिविकल्पप्रवृत्तिषु द्वादशकषायोद्रेकमुक्तः, नैगमसङ्ग्रहव्यवहारनयैः द्रव्यक्रियाप्रवृत्तद्रव्याश्रवविरक्तस्य मुनित्वम्, ऋजुसूत्रनयेन भावाभिलाषसङ्कल्पोपगतस्य, शब्दसमभिरूढैवम्भूतनयैः प्रमत्तात् क्षीणमोहं यावत् परिणतौ सामान्यविशेषचक्रे स्वतत्त्वैकत्वपरमशमतामृतरतस्य मुनित्वम्) शोभनानि व्रतानि यस्य स सुव्रतः, मुनिश्चासौ सुव्रतश्चेति तथा, एवं गर्भस्थेऽस्य जननी मुनिवत्सुव्रता जातेति मुनिसुव्रतः विंशतितमस्तीर्थङ्करः, अस्य पिता सुमित्रः, माता पद्मा, असौ नवमे भवे जिनो जातः, अस्य श्रमणाः त्रिंशत्सहस्राणि, आर्यिकाः पञ्चाशत्सहस्राणि, त्रिंशद्वर्षसहस्राणि सर्वायुः, विंशतिधनुर्देहमानञ्चेति । अनन्तकर्मांशजयात् अनन्तानि वा ज्ञानादीन्यस्येत्यनन्तः, अस्य जनन्या रत्नविचित्रमतिप्रमाणं दामस्वप्ने दृष्टमतोऽनन्तः, चतुर्दशस्तीर्थङ्करः, अस्य पिताऽयोध्यालङ्कारः सिंहसेनः, माता सुयशाः, त्रिंशद्वर्षलक्षाणि सर्वायुः, षट्षष्टिसहस्राणि श्रमणाः, लक्षमेकमष्टौ शतान्यार्यिकाः, पञ्चाशद्धनुर्देहमानञ्च । पुरुषोत्तमोऽयं चतुर्थो वासुदेवः, वासुदेवाश्चावसर्पिण्यां नव भवन्ति, अनन्तजिनकालभावी पुरुषोत्तमो वासुदेवः पञ्चाशद्धनुर्देहमान इति ॥ ४२ ॥

एते कर्मणां क्षयं करिष्यन्तीति तान्याह—

**दर्शनावरणनामकर्मणोरेकपञ्चाशत्प्रकृतिकत्वम् ॥ ४३ ॥**

**दर्शनेति,** सामान्यार्थबोधो दर्शनं तदावृणोति यत्तद्दर्शनावरणीयम्, तच्च चक्षुर्दर्शनावरणीयादिभेदेन नवविधम्, नामकर्मापि द्विचत्वारिंशद्विधं मिलित्वोभयकर्मणी एकपञ्चाशदुत्तरप्रकृतिके भवतः ॥ ४३ ॥

तथा—

**ज्ञानावरणनामान्तरायाणाञ्च द्विपञ्चाशत्प्रकृतिकत्वम् ॥ ४४ ॥**

ज्ञानेति, विशेषार्थविषय ज्ञानमावृणोतीति ज्ञानावरण देशसर्वज्ञानावरणरूप मतिज्ञानावरणादि-ञ्चविधम्, नाम द्विचत्वारिंशद्विधम्, अन्तरा दातृप्रतिग्राहकयोरन्तर्भाण्डागारिकवद्विघ्नहेतुतया अयते गच्छतीत्यन्तरायम् प्रत्युत्पन्नविनाशि आगामिलब्धव्यपथप्रतिरोधकञ्च दानान्तरायादि पञ्चविधमिति सर्वमेलने द्विपञ्चाशद्भवन्तीति ॥ ४४ ॥

द्विष्टकर्मणामुदयात्सम्मूर्च्छिमा भवन्तीति तद्विशेषमाह—

**सम्मूर्च्छिमोर परिसर्पाणां त्रिपञ्चाशद्वर्षसहस्राणि स्थितिः ॥ ४५ ॥**

सम्मूर्च्छिमेति, समूर्च्छन समूर्च्छा तया निर्वृत्ताः सम्मूर्च्छिमाः, तथाविधकर्मोदयात् गर्भमन्तरेणैव ये उत्पद्यन्ते ते सम्मूर्च्छिमाः, प्रसिद्धबीजाभावेन पृथिव्या वर्षोद्भवास्तथाविधतृणादयः, न चैते न सम्भवति, दग्धभूमौ बीजासत्त्वेऽपि तेषां सम्भवात्, तथा पद्मिनीशृङ्गाटकपाठाशैवलादिवनस्पतयः, शलभपिपीलिकामक्षिकाऽऽशालिकादयश्च, उरसा-वक्षसा ये परिसर्पन्ति सञ्चरन्ति ते उर परिसर्पा नरगादय, सम्मूर्च्छिमाश्च ते उर परिसर्पाश्च तेषां त्रिपञ्चाशद्वर्षसहस्राणि स्थितिरुत्कर्षेण, जघन्येन त्वन्तर्मुहूर्तम्, इयञ्च स्थिति तादृशा पर्याप्तकानाम्, अपर्याप्तकानान्तु तेषां जघन्येनोत्कर्षेण चान्तर्मुहूर्तम्, एव सम्मूर्च्छिमस्थलचरपञ्चेन्द्रियतिर्यग्योनिकानामपि तावत्येव स्थितिः ॥ ४५ ॥

सम्मूर्च्छिमा अधमास्तद्विपर्ययेणोत्तमानाह—

**भरतैरवतयो प्रत्येकमुत्सर्पिण्यां चतुःपञ्चाशदुत्तमपुरुषा एवमवसर्पिण्यामपि ॥ ४६ ॥**

भरतेति । जम्बूद्वीपगतभरतैरवतहैमवतहैरण्यवतहरिरम्यकमहाविदेहलक्षणसप्तवर्षषट्के भरतवर्षे ऐरवतवर्षे चेत्यर्थः, उत्सर्पन्ति वर्धयन्त्यरकापेक्षया भावानित्युत्सर्पिणी शुभभाववर्धकोऽशुभभावहानिकारको दशसागरोपमकोटीकोटिपरिमाण. कालविशेषः, एवमवसर्पयति भावानित्यवसर्पिणी, साव मानेय, अत्रापि समस्ता शुभा भावा क्रमेणानन्तगुणतया हीयन्ते, अशुभा भावाश्च क्रमेणानन्तगुणतया परिवर्द्धन्ते, उत्तमाश्च ते पुरुषाश्चोत्तमपुरुषाः, पू शरीर तत्र शयनाभिवसनात् पुरुषः, तत्र नामपुरुष, पुरुष इति नामैव, स्थापनापुरुष. प्रतिमादि, द्रव्यपुरुष पुरुषत्वेन य उत्पत्स्यते उत्पन्नपूर्वो वा, उभयव्यतिरिक्तश्च मूलगुणनिर्मितः-पुरुषप्रायोग्याणि द्रव्याणि, उत्तरगुणनिर्मितः तदाकारवन्ति तान्येव । एवमभिलापपुरुष —यथा पुरुष इति, पुल्लिङ्गवृत्त्यभिधामात्र वा, यथा घट. पट इत्यादि । चिह्नपुरुष —पुरुषाकृतिर्नपुंसकात्मा श्मश्रुप्रभृतिपुरुषचिह्नयुक्त । वेदपुरुषः—पुरुषवेदानुभवनप्रधानः स च स्त्रीपुनपुंसकसम्बन्धिषु त्रिष्वपि लिङ्गेषु भवतीति । एवमुत्तमपुरुषो मध्यमपुरुषो जघन्यपुरुषश्च, तत्रोत्तमपुरुषो धर्मपुरुषो भोगपुरुष कर्मपुरुषश्चेति त्रिविध, धर्मः क्षायिकचारित्रादिस्तदर्जनपरः पुरुषो धर्मपुरुष अर्हदादि, भोगा मनोज्ञशब्दादयस्तत्परो भोगपुरुषः चक्रवर्त्यादि, कर्माणि महारम्भादिसम्पाद्यानि नरकायुष्यादीनि तत्पर कर्मपुरुषो वासुदेवादिः, एते उत्तमपुरुषाः प्रत्येकमुत्सर्पिण्यां

चतुर्विंशतितीर्थंकरा द्वादशचक्रवर्तिनो नव वासुदेवा नव बलदेवाश्चेति मिलित्वा चतुःपञ्चाशदुत्तमपुरुषा एवमवसर्पिण्यामपि। उग्रा भोगा राजन्याश्च मध्यमपुरुषाः, दासा भृतका भागवन्तश्चेति जघन्यपुरुषा इति ॥ ४६ ॥

उत्तमेष्वपि वासुदेवा नरकमेव यान्तीति तदावासानाह—

## प्रथमद्वितीयपृथिव्योः पञ्चपञ्चाशन्नरकावासशतसहस्राणि ॥ ४७ ॥

प्रथमेति, प्रथमाया पृथिव्या त्रिंशन्नरकलक्षाणि पूर्वं व्याख्यातान्येव, शर्कराप्रभाया द्वितीयपृथिव्यामेकादश प्रस्तटा, नरकपटलानि अधोऽधो द्वौ द्वौ हीनानीति वचनात्, तत्र प्रथमे प्रस्तटे चतसृषु दिक्षु षट्त्रिंशदावलिकाप्रविष्टा नरकावासा, विदिक्षु पञ्चत्रिंशत्, मध्ये चैको नरकेन्द्रक', सर्वसंख्यया द्वे शते षण्णवत्यधिके, शेषेषु दशसु प्रस्तटेषु प्रत्येकं क्रमेणाधोऽधोऽष्टाष्टकहानि प्रतिदिक्षु चैकैकनरकावासहाने', तदेवमत्र सर्वसंख्ययाऽऽवलिकाप्रविष्टा नरकावासा षड्विंशतिशतानि पञ्चनवत्यधिकानि, शेषाश्चतुर्विंशतिलक्षाः सप्तनवतिसहस्राणि त्रीणि शतानि पञ्चोत्तराणि पुष्पावकीर्णका। उभयमीलने पञ्चविंशतिलक्षाणि नरकावासानामिति पृथिवीद्वयलक्षयोर्मीलनेन पञ्चपञ्चाशन्नरकावासशतसहस्राणि भवन्तीति ॥ ४७ ॥

नारकिणोऽपि पतितागन्तव्यमार्गो यान्ति नक्षत्रादिभिरिति तत्संख्यामाह—

## जम्बूद्वीपे षट्पञ्चाशन्नक्षत्राणि चन्द्रयुक्तानि ॥ ४८ ॥

जम्बूद्वीप इति, समयक्षेत्रबहिर्वर्त्तिपल्लस्येव जम्बूद्वीपव्यावृत्ते धातकीखण्डादिसर्वद्वीपानां लवणोदादिसर्वसमुद्राणां सर्वात्मनाऽभ्यन्तरे सकलतिर्यग्लोकमध्यवर्त्तिनि सर्वद्वीपेभ्यः क्षुल्लके योजनलक्षप्रमाणे पुष्करकर्णिकासंस्थानसंस्थितेऽस्मिन् जम्बूद्वीपे द्वौ चन्द्रौ प्रभासेते, सूर्यकान्ताभ्यामपर दीपशिखाद्वीपौ चन्द्राभ्यां प्रकाश्यमानत्वात्, एकैकस्य च चन्द्रस्याष्टाविंशतिनक्षत्रपरिवारभावात्, तानि नक्षत्राणि स्वयं नियतमण्डलचारित्वेऽनियतानेकमण्डलचारिणा निजमण्डलक्षेत्रमागतेन चन्द्रेण सह प्रासरन्ति प्रासुरन्ति प्राप्स्यन्ति च, ततश्च चन्द्रद्वयापेक्षया षट्पञ्चाशन्नक्षत्राणि योगकर्त्तृणीति ॥ ४८ ॥

चन्द्रादीनां चरित्रवर्णना गणिपिटकेष्वस्तीति तद्विशेषमाह—

## गणिपिटकानामाचारचूलिकावर्जानि सप्तपञ्चाशदध्ययनानि आचारसूत्रकृतस्थानाङ्गानाम् ॥ ४९ ॥

गणीति, गणः गच्छो गुणगणो वाऽस्यास्तीति गणी आचार्यः, तस्य पिटकमिव पिटकानि सर्वस्वभाजनानि, अथवा गणिनामर्थपरिच्छेदानां पिटकमेव पिटकानि स्थानानि तेषामाचारसूत्रकृतस्थानाङ्गानामध्ययनानि, आचारे प्रथमश्रुतस्कन्धे नवाध्ययनानि द्वितीये षोडश, निशीथाध्ययनस्य प्रस्थानान्तरत्वेनेहानाश्रयणात्। सूत्रकृते द्वितीयाङ्गे प्रथमश्रुतस्कन्धे षोडश द्वितीये सप्त स्थानाङ्गे दश, परन्तु आचारस्य प्रथमाङ्गस्य चूलिका सर्वान्तिममध्ययनं विमुक्त्यभिधानं तद्वर्जनात् सप्तपञ्चाशदध्ययनानि भवन्ति ॥ ४९ ॥

आचाराङ्गादीनां निह्नवादिकर्तुर्नरकगतिप्रायोग्यकर्मबन्धान्नरकावासबद्धकर्माण्याह—

**प्रथमद्वितीयपञ्चमपृथिवीषु निरयावासा अष्टपञ्चाशत् शतसहस्राणि ज्ञानावरणवेदनीयायुर्नामान्तरायाणाञ्चाष्टपञ्चाशदुत्तरप्रकृतिकत्वम् ॥ ५० ॥**

**प्रथमेति,** प्रथमायां त्रिंशल्लक्षाणि द्वितीयायां पञ्चविंशतिः पञ्चम्यां त्रीणीति सर्वाण्यष्टपञ्चाशल्लक्षाणि । ज्ञानावरणस्य पञ्च वेदनीयस्य द्वे आयुषश्चतस्रो नाम्नो द्विचत्वारिंशत् अन्तरायस्य पञ्चेति सर्वा अष्टपञ्चाशदुत्तरप्रकृतयः ॥ ५० ॥

कर्मणां स्थितिनियतत्वेन स्थितेश्च कालनियन्त्रिततया तद्विशेषमाह—

**चन्द्रवर्षस्य प्रत्येकमृतव एकोनषष्टिरात्रिंदिवमानाः ॥ ५१ ॥**

**चन्द्रवर्षस्येति,** नक्षत्रचन्द्रर्त्वादित्याभिवर्धितसंवत्सरेषु यश्चन्द्रसंवत्सरः चन्द्रगतिमङ्गीकृत्य भवति तत्र द्वादशमासाः षड् ऋतवो भवन्ति, तत्र कृष्णप्रतिपदमारभ्य पौर्णमासीपरिसमाप्तिं यावत्तावत्कालप्रमाणश्चान्द्रो मासः, स च मास एकोनत्रिंशद्रात्रिंदिवानि द्वात्रिंशच्च षष्टिभागा अहोरात्रस्येत्येवं प्रमाणः, द्वाभ्यां ताभ्याञ्च मासाभ्यामृतुर्भवति तत एकोनषष्टिरहोरात्राण्यसौ भवति, यद्यपि द्विषष्टिभागद्वयमधिकं तत्र विवक्षितम् ॥ ५१ ॥

सूर्यगतिपरिमाणविशेषादपि ऋतूनां भावात्सूर्याश्रयेण गतिविशेषमाह—

**उदिते स्थाने षष्टिमुहूर्तैरुदेति सविता पुनः ॥ ५२ ॥**

**उदित इति,** स्थानं चारभूमिर्मण्डलम्, तानि मण्डलानि सर्वसंख्यया चतुरशीत्यधिकमण्डलशतम्, जम्बूद्वीपे पञ्चषष्टिः लवणे समुद्रे एकोनविंशत्यधिकं शतम्, एकैकस्य मण्डलस्य विष्कम्भोऽष्टचत्वारिंशदेकषष्टिभागा योजनस्य, मण्डलत्वञ्चैषां मण्डलसदृशत्वात्, न तु तात्त्विकम्, मण्डलप्रथमक्षणे यद्व्याप्तं क्षेत्रं तत्समश्रेण्येव यदि पुरः क्षेत्रं व्याप्नुयात् तदा तात्त्विकी मण्डलता स्यात्, तथा च सति पूर्वमण्डलादुत्तरमण्डलस्य योजनद्वयमन्तरं न स्यात्, सूर्यमण्डलक्षेत्रञ्च चक्रवालविष्कम्भतोऽवसेयम्, तत्र सूर्यः सर्वाभ्यन्तरं सर्वबाह्यञ्च सकृदेव सङ्क्रामति शेषाणि तु द्वौ वारान्, सूर्यः पञ्चपञ्चयोजनसहस्राणि द्वे चैकपञ्चाशे योजनशते एकोनत्रिंशतञ्च षष्टिभागान् योजनस्यैकैकेन मुहूर्तेन गच्छति, सर्वमपि हि मण्डलमेकेनाहोरात्रेण द्वाभ्यां सूर्याभ्यां परिसमाप्यते, प्रतिसूर्यञ्चाहोरात्रगणने परमार्थतो द्वावहोरात्रौ भवतः, द्वयोश्चाहोरात्रयोः षष्टिर्मुहूर्ताः, ततो मण्डलपरिरयस्य षष्ट्या भागे हृते यल्लभ्यते तन्मुहूर्तगतिप्रमाणम्, सर्वाभ्यन्तरमण्डलपरिरयः त्रीणि लक्षाणि पञ्चदशसहस्राणि एकोननवत्यधिकानि योजनानामिति । अस्मिन् सर्वाभ्यन्तरे मण्डले दिवसोऽष्टादशमुहूर्तप्रमाणः, भरतक्षेत्रगतानाञ्च मनुष्याणां सप्तचत्वारिंशता योजनसहस्रैर्द्वाभ्यां त्रिषष्ट्यधिकाभ्यां योजनशताभ्यां एकविंशत्या च षष्टिभागैर्योजनस्य सर्वाभ्यन्तरमण्डलचारचरणकाले सूर्यः उदयमानः चक्षुर्गोचरमायाति ॥ ५२ ॥

कालविशेषमाधिकृत्यैवाह—

**ऋतुमासेन युगस्यैकषष्टिः ऋतुमासाः ॥ ५३ ॥**

**ऋतुमासेनेति,** ऋतुर्हि लोकरूढ्या षष्ट्यहोरात्रप्रमाणो द्विमासात्मकस्तस्यार्धं मासोऽपि ऋतुर-

यवये समुदायोपचारात्, ऋतुरेव मासः परिपूर्णत्रिंशदहोरात्रप्रमाण ऋतुमास कर्ममासः सावनमास इति वा व्यवह्रियते, युगश्च चन्द्रश्चन्द्रोऽभिवर्द्धितश्च द्रोऽभिवर्द्धितश्चेति पञ्चभिः संवत्सरैर्निष्पन्न कालविशेषः स च प्रमाणेनाष्टादशशतानि त्रिंशदुत्तराण्यहोरात्राणां भवति, तस्य च प्रमाणस्य त्रिंशता भागाहारे लब्धा एकषष्टि ऋतुमासा इति ॥ ५३ ॥

युगस्य चन्द्रमासगर्भितत्वेन चन्द्रस्य प्रतिदिनावस्थामाह—

## पक्षयोः प्रत्यह चन्द्रो द्विषष्टिभागान् हीयते वर्द्धते च ॥ ५४ ॥

**पक्षयोरिति,** कृष्णशुक्लपक्षयोरित्यर्थ, चन्द्रमसो वृद्ध्यपवृद्धी अष्टौ मुहूर्त्तशतानि पञ्चाशीत्यधिकानि, एकस्य मुहूर्त्तस्य त्रिंशत द्वाषष्टिभागान् यावत् । एकस्य चन्द्रमासस्य मध्ये एकस्मिन् पक्षे चन्द्रमसो वृद्धिरेकस्मिंश्चापवृद्धि, चन्द्रमासस्य परिमाणमेकोनत्रिंशद्रात्रिन्दिवानि एकस्य रात्रिंदिवस्य द्वात्रिंशद्द्वाषष्टिभागा, रात्रिंदिव च त्रिंश मुहूर्त्तकरणायमेकोनत्रिंशता गुण्यते, जातान्यष्टौ शतानि सप्तत्यधिकानि मुहूर्त्तानाम् । येऽपि द्वाषष्टिभागा रात्रिंदिवस्य तेऽपि मुहूर्त्तसत्क भागकरणार्थं त्रिंशता गुण्यन्ते, जातानि नवशतानि षष्ट्यधिकानि तेषा द्वाषष्ट्या भागो ह्रियते लब्धाः पञ्चदश मुहूर्त्ताः ते मुहूर्त्तराशौ प्रक्षिप्यन्ते जातानि मुहूर्त्तानामष्टौ शतानि पञ्चाशीत्यधिकानि शेषाश्च त्रिंशद्द्वाषष्टिभागा मुहूर्त्तस्य । तत्र चन्द्रश्चत्वारि मुहूर्त्तशतानि द्वाचत्वारिंशदधिकानि षट्चत्वारिंशतञ्च द्वाषष्टिभागान् मुहूर्त्तस्य यावदपवृद्धि गच्छति–राहुविमानप्रभया रज्यते, प्रतिपत्तिथौ परिसमाप्नुवत्या परिपूर्णं प्रथम पञ्चदश भाग यावद्रज्यते, एव द्वितीयादितिथिषु यावत्पञ्चदश्या तिथेः परिसमाप्नुवत्या परिपूर्णं पञ्चदशभाग यावत्, तस्याश्च पञ्चदश्याश्चरमसमये चन्द्र सर्वात्मना राहुविमानप्रभया रक्तो भवति, यस्तु षोडशो भागो द्वाषष्टिभागद्वयात्मकोऽनावृत्त तिष्ठति स स्तोकत्वाददृश्यत्वाच्च न गण्यते ॥ ५४ ॥

ननु जम्बूद्वीपे पञ्चषष्टिः सूर्यमण्डलानामुक्ता, तत्र कुत्र कियन्ति मण्डलानि वर्त्तन्त इत्यत्राह—

## निषधे नीलवति च त्रिषष्टिस्सूर्यमण्डलानि ॥ ५५ ॥

***निषध इति,*** *महाविदेहस्य दक्षिणस्या हरिवर्षस्योत्तरस्या पौरस्त्यलवणोदस्य पश्चिमाया पश्चिमलवणसमुद्रस्य पूर्वस्या जम्बूद्वीपे निषधो नाम वर्षधरपर्वतश्चत्वारियोजनशतानि ऊर्ध्वोच्चत्वेन योजनशतान्युद्वेधेन भूमवेशेन मेरुवर्जसमयक्षेत्रगिरीणां स्वोच्चत्वचतुर्थांशेनोद्वेधत्वात्, षोडशयोजनसहस्राणि द्विचत्वारिंशदधिकानि अष्टौ च योजनशतानि द्वौ चैकोनविंशतिभागौ योजनस्य विष्कम्भेण वर्त्तते, महाहिमवतो द्विगुणविष्कम्भमानत्वात्, यत्र बहूनि कूटानि निषधसस्थानसस्थितानि, यत्र च निषधो नाम देवोऽधिपतिरत्रमुद्रहति, तत्पर्वतस्य चोपरि तथा महाविदेहस्योत्तरेण रम्यकवर्षस्य दक्षिणेन पूर्वलवणसमुद्रस्य, पश्चिमेन पश्चिमलवणोदस्य पूर्वेण निषधसमानमानो नीलवन्नाम वर्षधरपर्वतो नीलवन्नामकदेवाधिष्ठितो वर्त्तते तस्य चोपरि त्रिषष्टिः सूर्यमण्डलानि भवन्ति, हरिवर्षजीवाकोट्या रम्यकजीवाकोट्याञ्च द्वे मण्डले भवत ॥ ५५ ॥*

केचित्प्रतिमाविशेषकृतो ज्योतिष्कदेवत्वेनोत्पद्यन्त इति प्रतिमाविशेषमाह—

## अष्टाष्टमिका प्रतिमा चतुःषष्टिरात्रिंदिवप्रमाणा ॥ ५६ ॥

अष्टेति, अष्टावष्टमानि दिनानि यस्यां साऽष्टाष्टमिका, यस्यां ह्यष्टौ दिनाष्टकानि भवन्ति, प्रतिमा-भिक्षूणामभिग्रहविशेषः, अष्टौ अष्टकानि यतोऽसौ भवति अतश्चतुष्षष्टया रात्रिंदिवैः सा पालिता भवति, तथा प्रथमेऽष्टके प्रतिदिनमेकैका भिक्षा द्वितीये द्वे द्वे यावदष्टमे अष्टावष्टाविति सङ्कलनया द्वे शते भिक्षाणामष्टाशीत्यधिके भवतः ॥ ५६ ॥

प्रतिमावाहका अवश्यं वैमानिका भवन्तीति तद्वक्तव्यतामाह—

## सौधर्मावतंसकस्य प्रतिदिशं पञ्चषष्टिर्भौमानि ॥ ५७ ॥

सौधर्मेति, सौधर्मः शक्रेन्द्रपालितः प्रथमदेवलोकः, तस्य मध्यभागवर्ति शक्रनिवासभूतं विमानं सौधर्मावतंसकम्, अत्र हि कल्पे चतुर्दिक्षु चत्वारि विमानानि मध्ये च पञ्चमं सौधर्मावतंसकम्, तस्यादेकैकस्यां दिशि प्रकराभ्यर्णवर्तीनि नगराकाराणि भौमानि पञ्चषष्टिर्भवन्ति ॥ ५७ ॥

वैमानिकेषु सूर्यचन्द्रप्रकाशाभावात्प्रकाशकपक्षेन तत्सङ्ख्यामाह—

## षट्षष्टिश्चन्द्राः सूर्याश्च मानुषक्षेत्रस्य दक्षिणार्धमुत्तरार्धञ्च प्रभासयन्ति ॥ ५८ ॥

षट्षष्टिरिति, जम्बूद्वीपधातकीखण्डपुष्करवरद्वीपार्धरूपा द्वीपा द्वौ च लवणोदधिकालोदधिरूपौ समुद्रौ मानुषं क्षेत्रं तत्रैव मनुष्याणामुत्पत्तेर्मरणाच्च, अत्रैव सुषमसुषमादयः कालविभागाः, मानुषक्षेत्रात् परवस्तु सर्वमपि देवारण्यं देवानां क्रीडास्थानम्, न तत्र जन्मतो मनुष्या नापि कोऽपि तत्र कालविभागः, मानुषक्षेत्रे चन्द्रसूर्यग्रहनक्षत्रतारागणा विचरणशीलाः, शेषेषु द्वीपसमुद्रेषु ज्योतिश्चक्रं सदाऽवस्थानशीलम्। तथा च द्वौ चन्द्रौ जम्बूद्वीपे चत्वारो लवणसमुद्रे द्वादश धातकीखण्डे द्विचत्वारिंशत्कालोदधिसमुद्रे द्विसप्ततिश्च पुष्करार्धे, सर्वे चैते द्वात्रिंशदधिकं शतम्, एतदर्धेन षट्षष्टिर्दक्षिणपङ्क्तौ षट्षष्टिश्चोत्तरपङ्क्तौ स्थिताः, एवं सूर्या अपि, एवञ्चेहलोके मानुषे चन्द्रसूर्याणां चतस्रः पङ्क्तयः, द्वे पङ्क्ती चन्द्राणां द्वे च सूर्याणाम्, एकैका च पङ्क्तिः षट्षष्टिः, एकः किल सूर्यो जम्बूद्वीपे मेरोर्दक्षिणभागे चारं चरन् वर्तते एक उत्तरभागे, एकश्चन्द्रमा मेरोरुत्तरभागे, एकोऽपरभागे, तत्र यो मेरोर्दक्षिणभागे सूर्यश्चारं चरन् वर्तते तदा तत्समश्रेणिव्यवस्थितौ द्वौ दक्षिणभागे सूर्यौ लवणसमुद्रे षट् धातकीखण्डे एकविंशतिः कालोदे षट्त्रिंशदभ्यन्तरपुष्करार्धे, अस्यां सूर्यपङ्क्तौ षट्षष्टिः सूर्या जाताः, उत्तरभागेऽपि तथा, चन्द्रा अपि पूर्वभागेऽपरभागे च तथा। एते सूर्याश्चन्द्राश्चानवस्थितमण्डला यथायोगमन्यस्मिन्नन्यस्मिन् मण्डले सञ्चरन्तः प्रदक्षिणावर्तमण्डला मेरुं लक्षीकृत्य परिभ्रमन्ति, तेषां प्रदक्षिणावर्तगतेः प्रत्यक्षत एवोपलभ्यमानत्वात् ॥ ५८ ॥

नक्षत्राणां चन्द्रस्वामित्वात्तदाश्रयेण मासभेदमाह—

## नक्षत्रमासेन मीयमानस्य युगस्य सप्तषष्टिर्नक्षत्रमासाः ॥ ५९ ॥

नक्षत्रमासेनेति, येन कालेन चन्द्रो नक्षत्रमण्डलं भुङ्क्ते स नक्षत्रमासः, स च सप्तविंशतिरहोरात्राणि एकविंशतिश्चाहोरात्रस्य सप्तषष्टिभागाः। सप्तषष्टिभागकरणार्थं ते सप्तषष्ट्या गुण्यन्ते, जाताष्टादशशतान्यष्टोत्तराणि, तत्र उपरितना एकविंशतिः सप्तषष्टिभागास्तत्र प्रक्षिप्यन्ते, जातान्यष्टादश

शतानि त्रिंशदधिकानि, युगस्यापि सम्बन्धिनस्त्रिंशदधिकाष्टादशशतप्रमाणा यहोरात्राणि सप्तपष्ट्या गुण्यन्ते, जात एको लक्षो विंशतिसहस्राणि षट् शतानि दशोत्तराणि, एतेषामष्टादशशतैस्त्रिंशदधिकैश्च द्रू-माससत्कैर्द्वाषष्टिभागरूपैर्भागो ह्रियते, लब्धाः सप्तषष्टिमासा ॥ ५९ ॥

नक्षत्रमासानां समयक्षेत्रभावित्वात्समयक्षेत्रविशेषस्य धातकीखण्डस्य वक्तव्यतामाह—

**धातकीखण्डेऽष्टषष्टिश्चक्रवर्त्तिविजया राजधान्य उत्कर्षेणार्हन्तश्चक्रवर्त्तिबलदेववासुदेवाश्च ॥ ६० ॥**

धातकीखण्ड इति, यद्यपि चक्रवर्त्तिनां वासुदेवानां नैकदाऽष्टषष्टिः सम्भवति, जघन्यतोऽप्येकैकस्मिन् महाविदेहे चतुर्णां चतुर्णां तीर्थकरादीनामवश्यम्भावस्य स्थानाङ्गादावभिहितत्वात्, एकक्षेत्रे चक्रवर्त्ती वासुदेवश्चैकदा भवतो न च अष्टषष्टिरेवोत्कर्षतश्चक्रवर्त्तिनां वासुदेवानां चाष्टषष्ट्यां विजयेषु भवति तथापीहैकसमयाविवक्षणात् कालभेदभाविनां चक्रवर्त्त्यादीनां विजयभेदेनाष्टषष्टिर-विरुद्धेति ॥ ६० ॥

समयक्षेत्रविशेषवक्तव्यतानन्तरं तत्सामान्याश्रयेण वर्षादीनाह—

**वर्षाणि वर्षधराश्च मेरुवर्जा एकोनसप्ततिः समयक्षेत्रे ॥ ६१ ॥**

वर्षाणीति, भरतहैमवतहरिवासमहाविदेहरम्यकहैरण्यवतैरवतानि क्षेत्राणि सप्त, तत्राद्यानि त्रीणि मेरोर्दक्षिणेन, अन्त्यानि त्रीणि तस्योत्तरेण महाविदेहश्च मेरोः पूर्वेण पश्चिमेन च, वर्षं क्षेत्रविशेष धारयतो-व्यवस्थापयत इति वर्षधराः, ते च हिमवान् महाहिमवान् नीलवान् रुक्मी रूप्यः शिखरी मन्दरश्चेति सप्त, आद्यास्त्रयो मेरोर्दक्षिणेन ततस्त्रय तस्योत्तरेण मेरुर्मध्ये, इत्येकमेरुपेक्षया वर्षाणि वर्षधरपर्वताश्च त्रयोदश, मेरुवर्जनात्, समयक्षेत्रे पञ्च मन्दरा इति तदपेक्षया पञ्चषष्टिर्वर्षाणि वर्षधराश्च, चत्वार इषुकाराः, सर्वसंख्यया चैकोनसप्ततिरिति ॥ ६१ ॥

समयक्षेत्र एव कर्मणामुत्कर्षस्थितिलाभात्सर्वकर्ममूलभूतमोहनीयस्थितिमाह—

**मोहनीयकर्मणोऽबाधोनिकास्थितिः कर्मनिषेकः सप्ततिसागरोपमकोटीकोट्यः ॥ ६२ ॥**

मोहनीयकर्मण इति, शुभाशुभाध्यवसायी जीवो हि पुण्यपापात्मकस्य कर्मणो योग्य नातिबादरं नातिसूक्ष्मं न वा स्वावगाढप्रदेशेभ्यो भिन्नप्रदेशावगाढं कर्मवर्गणागतं द्रव्यं तैलाभ्यक्तगात्रः पुरुषो रेणुमिव रागद्वेषक्लिन्नस्वरूपो रुचकवर्ज्जे सर्वात्मप्रदेशैर्गृह्णाति, शुभाशुभादिविशेषणाविशिष्टमेव गृह्णन् तत्क्षणमेव शुभमशुभं वा कुरुते, परिणामाश्रयकर्मणां तथाविधस्वभावत्वात्, जीवस्य हि शुभोऽशुभो वा परिणामस्तथाविधोऽस्ति यद्वशात् ग्रहणसमय एव कर्मणां शुभत्वमशुभत्वं जनयति, जीवस्यापि कर्माश्रयभूतस्य स कोऽपि स्वभावोऽस्ति येन शुभाशुभत्वेन परिणमयन्नेव कर्म गृह्णाति, तथा कर्मणोऽपि स स्वभावः कश्चिद्वर्त्तते येन शुभाशुभपरिणामान्वितेन जीवेन गृह्यमाणमेवैतद्रूपेण परिणमति, तथा प्रकृतिस्थित्यनुभागवैचित्र्यं प्रदेशानामल्पबहुभागवैचित्र्यञ्च कर्मणो ग्रहणसमय एव करोति तत्राध्यवसायविशेषगृहीतस्य कर्मदलिकस्य यत्स्थितिकालनियमनं स स्थितिबन्धः, स्थितिश्च द्विविधा

कर्मत्वापादनमात्ररूपा, अनुभवरूपा च, तत्र कर्मत्वापादनरूपा स्थितिमधिकृत्य मोहनीयस्य कर्मण उत्कृष्टस्थितिः सप्ततिसागरोपमकोटीकोट्यः, अनुभवरूपामङ्गीकृत्य तु अबाधोनिका, येषां हि कर्मणां यावत्यः सागरोपमकोटीकोट्यः तेषां तावन्ति वर्षशतान्यबाधाकालः, स च कालो मोहनीयस्य सप्तवर्षसहस्ररूपः तदानीञ्च कर्म नोदयं यातीति तदूना सप्ततिः सागरोपमकोटीकोट्योऽनुभवरूपा स्थितिः, कर्मदलिकनिषेकोऽपि तत्रैव, तावन्मात्र एव, कर्मदलिकनिषेको नाम ज्ञानावरणीयादिकर्मदलिकस्य पूर्वनिषिक्तस्यानुभवनार्थमुदये प्रवेशनम्, तत्र सर्वस्मिन्नपि बध्यमाने कर्मणि निजमबाधाकालं परित्यज्य ततो दलिकनिक्षेपं करोति, तत्र प्रथमायां स्थितौ समयलक्षणायां प्रभूततरं द्रव्यं कर्मदलिकं निषिञ्चति, तत ऊर्ध्वं द्वितीयसमये विशेषहीनं तृतीयसमये विशेषहीनमेवं यावदुत्कृष्टस्थितिकर्मदलिकं तावद्विशेषहीनं निषिञ्चति, अयञ्च कर्मनिषेकः ॥ ६२ ॥

स्थितिः कालविशेषः स च सूर्यावृत्तेर्भवतीत्यावृत्तिमानमाह—

## सूर्यश्चतुर्थचन्द्रसंवत्सरस्य हेमन्ते एकसप्ततिदिनेऽतिक्रान्ते आवृत्तिं करोति ॥ ६३ ॥

सूर्य इति, प्रथमतश्चन्द्रसंवत्सरत्रये दिनानां सहस्रं द्विनवतिः षड्द्विषष्टिभागा भवन्ति, आदित्यसंवत्सरे दिनानां शतत्रयं षट्षष्टिश्च भवन्ति, तत्त्रितये च सहस्रमष्टनवत्यधिकं भवति, चन्द्रयुगमादित्ययुगञ्चाषाढ्यामेकं पूर्यतेऽपरञ्च श्रावणकृष्णप्रतिपद आरभ्यते, एवञ्चादित्ययुगसंवत्सरत्रयापेक्षया चन्द्रयुगसंवत्सरत्रयं पञ्चभिर्दिनैः षट्पञ्चाशता च दिनद्विषष्टिभागैरूनं भवतीति कृत्वाऽऽदित्ययुगसंवत्सरत्रयं श्रावणकृष्णपक्षस्य चन्द्रदिनषट्के साधिके पूर्यते, चन्द्रयुगसंवत्सरत्रयं त्वाषाढ्याम्, ततश्च श्रावणकृष्णपक्षसप्तमदिनादारभ्य दक्षिणायनेनादित्यश्चरन् चन्द्रयुगचतुर्थसंवत्सरस्य चतुर्थमासान्तभूतायां अष्टादशोत्तरशततमदिनभूतायां कार्त्तिक्यां द्वादशोत्तरशततमे स्वकीयमण्डले चरति, ततश्चान्यान्येकसप्ततिमण्डलानि तावत्स्वेव दिनेषु मार्गशीर्षादीनां चतुर्णां हेमन्तमासानां सम्बन्धिषु चरति, ततो द्विसप्ततितमे दिने माघमासे बहुलपक्षत्रयोदशीलक्षणे सूर्यो दक्षिणायनान्निवृत्त्योत्तरायणेन चरतीति ॥

ज्योतिश्चारविज्ञानमपि कलात्मकमतस्ता आह—

## लेखगणितरूप्यनाट्यादयो द्वासप्ततिकलाः ॥ ६४ ॥

लेखेति, कला विज्ञानं सा च कलनीयभेदाद्द्विसप्ततिर्भवति, तद्यथा—लेखनं लेखोऽक्षरविन्यासः, तद्विषया कलापि लेख एवोच्यते, एवं सर्वत्र, स च लेखो द्विधा लिपिविषयभेदात्, लाटादिदेशभेदतस्तथाविधविचित्रोपाधिभेदतो वा लिपिरनेकविधा, तथाहि पत्रवल्ककाष्ठदन्तलोहताम्ररजतादयोऽक्षराणामाधारास्तथा लेखनोत्कीर्णनस्यूतव्यूतछिन्नभिन्नदग्धसङ्क्रान्तितोऽक्षराणि भवन्तीति । विषयापेक्षयाऽप्यनेकधा, स्वामिभृत्यपितृपुत्रगुरुशिष्यभार्यापतिशत्रुमित्रादीनां लेखविषयाणामप्यनेकत्वात्तथाविधप्रयोजनभेदाच्च । अक्षरदोषाश्चैते 'अतिकार्श्यमतिस्थौल्यं वैषम्यं पङ्क्तिवक्रता । अतुल्यानां च सादृश्यमभागोऽवयवेषु च' इति । गणितं—सङ्ख्यानं सङ्कलिताद्यनेकभेदं पाटीप्रसिद्धम् । रूप्यं—लेप्यशिलासुवर्णमणिवस्त्रचित्रादिषु रूपनिर्माणम् । नाट्यं—साभिनयनिरभिनयभेदभिन्नं ताण्डवम् । गीतं—गन्धर्वकला—गानविज्ञानम् । वाद्यं—ततविततादिभेदम् । स्वरगतं—गीतमूलभूतानां षड्जऋषभादिस्वराणां

द्वाह उपशान्तस्तेन शीतल इति नाम । पञ्चविंशतिपूर्वसहस्राणि कुमारत्वे राज्ये च पञ्चाशदिति गृहवासोऽस्य पञ्चसप्ततिः पूर्वसहस्राणि, ततः प्रव्रज्य केवलीभूतः, व्रतपर्यायोऽस्य पञ्चविंशतिः पूर्वाणां सहस्राणि । शान्तिः भरतवर्षे वर्त्तमानावसर्पिण्यां जातः षोडशतीर्थकरः, अस्मिन् गर्भगते पूर्वं यन्महदशिवमासीत्तस्योपशमो जातस्तेन कारणेन शान्तिजिनः, अस्य भगवतः कुमारत्वे पञ्चविंशतिवर्षसहस्राणि माण्डलिकत्वेऽपि पञ्चविंशतिवर्षसहस्राणि चक्रित्वे पञ्चविंशतिसहस्राणि श्रामण्ये च पञ्चविंशतिवर्षसहस्राणि दीक्षापर्यायः सर्वायुश्च वर्षलक्षमेकं जातम् ॥ ६६ ॥

तीर्थपतिप्रोक्तभवनावासानाह—

## विद्युत्कुमाराणां षट्सप्ततिर्भवनावासलक्षाणि ॥ ६७ ॥

**विद्युदिति,** भवनवासिनां देवानां दशस्वपि निकायेषु संपीड्य चिन्त्यमानानि सर्वाण्यपि भवनानि सप्तकोट्यो द्वासप्ततिश्च शतसहस्राणि, एतानि चाशीतिसहस्राधिकलक्षयोजनबाहल्याया रत्नप्रभाया अध उपरि च प्रत्येकं योजनसहस्रमेकं मुक्त्वा यथासम्भवमावासा इति, शेषेऽष्टसप्ततिसहस्राधिकलक्षयोजनप्रमाणे मध्यभागेऽवगन्तव्यानि, अन्ये त्वाहुर्नवयोजनसहस्राणामधस्ताद्भवनानि, अन्यत्र चोपरितनमधस्तनञ्च योजनसहस्रं मुक्त्वा सर्वत्रापि यथासम्भवमावासा इति, तत्रासुरकुमारादीनां दक्षिणोत्तरदिग्भाविनां सर्वसंख्यया भवनानि चतुःषष्टिशतसहस्राणि, नागकुमाराणां चतुरशीतिलक्षाः, सुवर्णकुमाराणां द्विसप्ततिलक्षाः, वायुकुमाराणां षण्णवतिर्लक्षाः, द्वीपकुमारदिक्कुमारोदधिकुमारविद्युत्कुमारस्तनितकुमाराग्निकुमाराणां षण्णामपि दक्षिणोत्तरदिग्वर्त्तिलक्षणयुग्मरूपाणां प्रत्येकं षट्सप्ततिर्लक्षा भवन्ति भवनानाम्, एषाञ्च सर्वेषामप्येकत्र मीलने प्रागुक्ता संख्या भवन्तीति ॥ ६७ ॥

देवाधिकाराद्गर्दतोयादिपरिवारमाह—

## गर्दतोयतुषितानां परिवारः सप्तसप्ततिसहस्राणि ॥ ६८ ॥

**गर्दतोयेति,** ब्रह्मलोकस्याधस्तात् रिष्टाख्यो विमानप्रस्तटो वर्त्तते, एतस्य आखाटकवत् समचतुरस्रसंस्थानसंस्थिता अष्ट कृष्णराजयः कालपुद्गलपङ्क्तियुक्तक्षेत्रविशेषा वर्त्तन्ते, एतासामष्टानां कृष्णराजीनामष्टस्ववकाशेषु राजीद्वयमध्यलक्षणेषु अष्टौ लोकान्तिकविमानानि भवन्ति, एषु चाष्टविधेषु लोकान्तिकविमानेषु सारस्वतादित्यवह्निवरुणगर्दतोयतुषिताव्याबाधाग्नेयनामानोऽष्टविधा देवनिकाया भवन्ति तत्र गर्दतोयानां तुषितानाञ्च देवानामुभयपरिवारसंख्यामीलनेन सप्तसप्ततिर्देवसहस्राणि परिवारः ॥६८॥

परिवारः स्वामिनो भवति अतः सुवर्णद्वीपकुमारावाससंख्यापूर्वकं स्वामिनमाह—

## अष्टसप्तत्या सुवर्णद्वीपकुमारावासशतसहस्राणां वैश्रवणो महाराजा ॥ ६९ ॥

**अष्टसप्तत्या इति,** सोमयमवरुणवैश्रवणाभिधानानां लोकपालानां चतुर्थ उत्तरदिक्पालो वैश्रवणः, स हि वैश्रवणदेवनिकायानां सुवर्णकुमारदेवदेवीनां द्वीपकुमारदेवदेवीनां व्यन्तरव्यन्तरीणामाधिपत्यं करोति, तदाधिपत्याच तन्निवासानामप्याधिपत्यमसौ करोतीत्युच्यते, तत्र सुवर्णकुमाराणां दक्षिणस्यामष्टत्रिंशद्भवनलक्षाणि द्वीपकुमाराणाञ्च चत्वारिंशदिति सर्वमष्टसप्ततिरिति ॥ ६९ ॥

त्रिविशिष्टस्थितत्वाद्वैश्रमणस्य विशुपस्थितेस्तद्द्वारान्तरमाह—

**विजयादिद्वाराणामन्योन्यमन्तरं सातिरेकाण्येकोनाशीतियोजनसहस्राणि ॥ ७० ॥**

**विजयेति,** जम्बूद्वीपस्य जगत्याश्चत्वारि द्वाराणि विजयवैजयन्तजयन्तापराजिताभिधानानि चतुश्चतुर्योजनविष्कम्भानि गव्यूतपृथुलद्वारशाखानि क्रमेण पूर्वादिदिक्षु भवन्ति, तेषां द्वारस्य चान्योऽन्यमेकोनाशीतियोजनसहस्राणि सातिरेकाणीत्येवंलक्षणं व्यवधानरूपमन्तरं भवति, जम्बूद्वीपपरिधेः ३१६२२७ योजनानि क्रोशाः ३ धनूंषि १२८ अङ्गुलानि १३ सार्धानीत्येवंलक्षणस्यापकर्षितद्वारद्वारशाखाविष्कम्भस्य चतुर्विभक्तस्यैवफलत्वादिति ॥ ७० ॥

द्वारान्तरस्य परिमाणरूपत्वेन परिमाणविशेषमाह—

**श्रेयांसस्त्रिपृष्ठोऽचलश्चोर्ध्वत्वेनाशीतिधनुर्देहमानः ॥ ७१ ॥**

**श्रेयांस इति,** अस्यामवसर्पिण्यां जात एकादशो जिनः श्रेयांसः, स एकविंशतिवर्षलक्षाणि कुमारत्वे तावन्त्येव प्रव्रज्यायां द्विचत्वारिंशद्राज्य इति चतुरशीतिमायुः पालयित्वा सिद्धः, तस्य देहमानमुत्सेधाङ्गुलेनाशीतिधनुः, आत्माङ्गुलेन च सर्वे जिनाश्चतुर्विंशतिरपि विंशत्यधिकशताङ्गुलप्रमाणदेहाः, श्रेयांसजिनकालभावी त्रिपृष्ठो वासुदेवः प्रथमः चतुरशीतिवर्षलक्षायुष्कः, चत्वारि लक्षाणि कुमारत्वे, शेषन्तु महाराज्ये। अचलो बलदेवोऽपरविदेहे सलिलावतीविजये वीतशोकायां नगर्यां जितशत्रोः राज्ञो मनोहारीभार्यायामुत्पन्नः ॥ ७१ ॥

देहस्य सारं व्रतधारणं चेति व्रतात्मकप्रतिमाविशेषमाह—

**नवनवमिकायां प्रतिमायामेकाशीतिरात्रिंदिनानि ॥ ७२ ॥**

**नवेति,** नव नवमानि दिनानि यस्यां सा, नवसु नवकेषु नव नवमदिनानि भवन्ति तस्याश्च प्रतिमायां एकाशीती रात्रिंदिनानि भवन्ति, नवानां नवकानामेकाशीतिरूपत्वात्, तत्र प्रथमे नवके प्रतिदिनमेकैका भिक्षा, एवमेकोत्तरया वृद्ध्या नवमे नवके नव नवेति सर्वासां पिण्डने चत्वारि पञ्चोत्तराणि भिक्षाशतानि भवन्ति ॥ ७२ ॥

प्रतिमाप्रतिपादकमहावीरस्य गर्भसङ्क्रमणकालमाह—

**महावीरो द्व्यशीत्यहोरात्रातिक्रमे त्र्यशीतितमे दिने गर्भाद्गर्भान्तरं नीतः ॥ ७३ ॥**

**महावीर इति,** चतुर्विंशतितमस्तीर्थंकरो महावीरः स देवानन्दाब्राह्मणीकुक्षितः त्रिशलाभिधानक्षत्रियाकुक्षिं आषाढशुक्लषष्ठ्या आरभ्य द्व्यशीत्यां रात्रिदिवेष्वतिक्रान्तेषु त्र्यशीतितमे दिने वर्तमाने आश्वयुजकृष्णत्रयोदश्यां अर्हदादयः अन्त्याधमतुच्छदरिद्रकृपणभिक्षाककुलेषु न कदाप्युत्पद्यन्ते किन्तु उग्रभोगराजन्येक्ष्वाकुक्षत्रियहरिवंशादिकुलेषु विशुद्धजातिकुलवंशेष्वेवेति विचिन्तितवता देवेन्द्रेण प्रेषितेन हरिनैगमेषिणा नीतः ॥ ७३ ॥

तदुक्तत्वेन नरकावासयोनिप्रमुखानां संख्यामाह—

## चतुरशीतिलक्षाणि नरका योनिप्रमुखानि च ॥ ७४ ॥

**चतुरिति,** 'तीसा य पण्णवीसा पणरस दसेव तिन्नि य हवंति । पचूणसयसहस्सं पंचेव अणुत्तरा निरया ॥' इति नरकावाससंख्याविभागः । योनयो जीवोत्पत्तिस्थानानि ता एव प्रमुखानि द्वाराणि योनिप्रमुखानि तान्यपि चतुरशीतिलक्षप्रमाणानि 'पुढवि दग अगणि मारुय एक्केके सत्त जोणिलक्खाओ । वण पत्तेय अणंते दस चउदस जोणिलक्खाओ ॥ विगलिंदिएसु दो दो चउरो य नारयसुरेसु । तिरिएसु हुंति चउरो चोद्दसलक्खा उ मणुएसु ॥' इत्युक्ते., तथाहि युवन्ति-भवान्तरसंक्रमणकाले तैजसकार्मणशरीरवन्तः सन्तो जीवा औदारिकादिशरीरप्रायोग्यपुद्गलस्कन्धैर्मिश्रीभवन्त्यस्मिन्निति योनिः, तत्र पृथिव्यप्तेजोमरुतां मध्यान्निधन्येकैकस्मिन् समूहे सप्त सप्त योनिलक्षा भवन्ति, तद्यथा—सप्त पृथिवीनिकाये सप्तोदकनिकाये सप्ताग्निनिकाये सप्त वायुनिकाये, वनस्पतिकायो द्विविधः, प्रत्येकोऽनन्तकायश्च, तत्राद्यनिकाये दशयोनिलक्षाः, अन्त्ये चतुर्दश, विकलेन्द्रियेषु द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियरूपेषु प्रत्येकं द्वे द्वे योनिलक्षे, चतस्रो योनिलक्षा नारकाणां चतस्रो देवानां तिर्यक्षु पञ्चेन्द्रियेषु चतस्रो योनिलक्षाः चतुर्दश योनिलक्षा मनुष्येषु, सर्वसंख्यामीलने च चतुरशीतिर्योनिलक्षा भवन्तीति । न चानन्तानां जीवानामुत्पत्तिस्थानमप्यनन्तं स्यादिति वाच्यम्, सकलजीवाधारभूतस्यापि लोकस्य केवलमसंख्येयप्रदेशात्मकत्वात्, येन प्रत्येकसाधारणजन्तुशरीराण्यसंख्येयान्येव, ततो जीवानामानन्त्ये कथमुत्पत्तिस्थानानन्त्यम् । भवतु तर्ह्यसंख्येयानीति चेन्न केवलिदृष्टेन केनचिद्वर्णादिधर्मेण सदृशानां बहूनामपि तेषामेकयोनित्वस्येष्टत्वात्, ततोऽनन्तानामपि जन्तूनां केवलिविवक्षितवर्णादिसादृश्यतः परस्परभावच्चि तया च चतुरशीतिलक्षसंख्या एव योनयो भवन्ति न हीनाधिका इति ॥ ७४ ॥

योनिपरिभ्रमणनिवर्तकविशिष्टज्ञानक्रियोद्योतकोद्देशनकालानाह—

## सचूलिकाचारस्य पञ्चाशीतिरुद्देशनकालाः ॥ ७५ ॥

**सचूलिकेति,** द्वितीयश्रुतस्कन्धयुक्तस्याचाराङ्गस्य नवाध्ययनात्मकप्रथमश्रुतस्कन्धस्य पञ्चाशीतिरुद्देशनकाला भवन्ति, तत्र प्रथमश्रुतस्कन्धे नवस्वध्ययनेषु क्रमेण सप्त षट् चत्वारश्चत्वारः षट् पञ्चाष्ट चत्वारः सप्त चेति उद्देशनकालाः, द्वितीयश्रुतस्कन्धे तु प्रथमचूलिकायाः सप्तस्वध्ययनेषु क्रमेणैकादश त्रयस्त्रयः चतुर्षु द्वौ द्वौ द्वितीयायाः सप्तैकसराणि अध्ययनान्येव तृतीयैकाध्ययनात्मिका, एवं चतुर्ष्वपीति सर्वमीलने पञ्चाशीतिरिति, निशीथन्तु भिन्नप्रस्थानमिति न गृह्यते ॥ ७५ ॥

उद्देशानन्तरमनुज्ञा भवतीति तद्विषयगणधरानाह—

## सुविधेर्गणा गणधराश्च षडशीतिः ॥ ७६ ॥

**सुविधेरिति,** भारतेऽस्यामवसर्पिण्यां जातः पुष्पदन्तापरनामको नवमस्तीर्थकरः, गर्भकालेऽस्य माता सम्यगाचारे रताऽतः सुविधिरिति नाम जातम्, शतधनुर्देहमानः, अस्य श्रामण्यपर्यायः अष्टाविंशतिपूर्वाङ्गहीनैकपूर्वलक्षप्रमाणः, अस्य गणाः षडशीतिगणधराश्च तावन्तः, प्रतिगणधरं भिन्नभिन्नवाचनाचारक्रियाकत्वात् ॥ ७६ ॥

गणधरोक्तमन्तरविशेषमाह—

**मेरुपूर्वान्तगोस्तूभचरमान्तयोरन्तरं सप्ताशीतिरष्टाशीतिश्च योजनसहस्राणि ॥ ७७ ॥**

**मेर्विति,** मेरोः पौरस्त्यान्ताद्गोस्तुभस्यावासपर्वतस्य पश्चिमचरमान्तं यावदन्तरं सप्ताशीति योजनसहस्राणि, पूर्वान्ताज्जम्बूद्वीपान्तः पञ्चचत्वारिंशद्योजनसहस्राणि द्विचत्वारिंशद्योजनसहस्राणि लवणजलधिमवगाह्य गोस्तूभो वेलंधरनागराजावासपर्वतः प्राच्यां दिशि वर्ततेऽत उक्तमन्तरं भवति, गोस्तूभस्य पूर्वचरमान्तविवक्षायां तु गोस्तूभस्य सहस्रयोजनविष्कम्भत्वात्तस्यापि मीलनेनाष्टाशीतियोजनसहस्राण्यन्तरं भवतीति ॥ ७७ ॥

मेरौ ऋषभेति शाश्वतनामधृन्मूर्त्तेः सत्त्वात्तत्संबन्धादृषभनिर्वाणकालमाह—

**ऋषभजिनोऽवसर्पिणीसुषमदुःषमायामेकोननवतिपक्षशेषे संसारदुःपरतः ॥ ७८ ॥**

**ऋषभेति,** ऋषभोऽर्हन्नेकं वर्षसहस्रं छद्मस्थपर्यायं पूरयित्वैकं पूर्वलक्षं वर्षसहस्रोनं केवलिपर्यायं प्राप्य चतुरशीतिपूर्वलक्षाणि सर्वायुरुपभुज्य माघमासकृष्णपक्षत्रयोदशीदिने दशभिरनगारसहस्रैः सार्धं सपरिवृतोऽष्टापदशैलशिखरे चतुर्दशेन भक्तेनापानकेन पद्मासनेन निषण्णोऽस्यामवसर्पिण्यां सुषमदुःषमायामेकोननवतिपक्षेषु शेषेषु नक्षत्रेणाभिजिता योगमुपागते चन्द्रे पूर्वाह्णकालसमये कालं गतः सर्वदुःखप्रहीणो जातः ॥ ७८ ॥

तीर्थकरसाम्यात्तद्विशेषमाह—

**अजितस्य शान्तिनाथस्य च गणा गणधराश्च नवतिर्नवतिवर्षाणि च स्वयम्भुवो विजयः ॥ ७९ ॥**

**अजितस्येति,** सुगमम्, स्वयम्भूरस्यामवसर्पिण्यां जातस्तृतीयो वासुदेवस्तस्य नवतिवर्षाणि पृथिवीसाधनव्यापारः ॥ ७९ ॥

तीर्थकृतामपि वैयावृत्त्यं भवतीति वैयावृत्त्यमाह—

**परवैयावृत्यकर्मप्रतिमा एकनवतिः ॥ ८० ॥**

**परेति,** परेषां स्वव्यतिरिक्तानां वैयावृत्त्यकर्मणि भक्तपानादिभिरुपष्टम्भक्रियाविषये प्रतिमा अभिग्रहविशेषाः, एतानि प्रतिमात्वेनाभिहितानि क्वचिदपि नोपलब्धानि केवलं विनयवैयावृत्त्यभेदा एते सम्भवन्ति, तथाहि—दर्शनगुणाधिकेषु सत्कारादिर्दशधा विनयः, तत्र सत्कारो वन्दनादिः, अभ्युत्थान—आसनत्यागः, सन्मानो—वस्त्रादिपूजनम्, आसनाभिग्रहः—तिष्ठत एवासनानयनपूर्वकमुपविशतात्रेति भणनम्, आसनानुप्रदान—आसनस्य स्थानात् स्थानान्तरसञ्चारणम्, कृतिकर्म अञ्जलिप्रग्रहो गच्छतोऽनुगमनं स्थितस्य पर्युपासनमागच्छतोऽभिमुखगमनम्। तथा तीर्थकरादीनां पञ्चदशानां पदानामनाशातनादिपदचतुष्टयगुणितत्वे षष्टिविधोऽनाशातनाविनयो भवति। औपचारिकविनयः सप्तधा अभ्यासासन—उपचरणीयस्यान्तिकेऽवस्थानम्, छन्दोऽनुवर्त्तन—अभिप्रायानुवृत्तिः, कृतप्रतिकृतिः

प्रतिमया छटघष्ठविधका मुनयो नन्दनवनादौ यान्तीति प्रतिमाविशेषमाह—

दशदशमिका भिक्षुप्रतिमा रात्रिंदिवशतेनेति ॥ ८७ ॥

दशेति, दश दशमानि यस्या सा दशदशमिका यस्यां हि दिनानां दशदशकानि भवन्ति, दशदशकानि शतं दिनानां, तत्र च प्रथमे दशके प्रतिदिनमेकैका भिक्षा द्वितीये द्वे द्वे एवं यावद्दशमे दश दशेत्येवं सर्वभिक्षासंकलने सार्द्धपञ्चशतानि भिक्षामानम्। इतिशब्दः सङ्ख्याक्रमेण स्थानवर्णनसमाप्तिसूचकः, पञ्चाशदादिवृद्ध्या कोटीकोट्यन्तानां समवायोऽस्य ग्रन्थस्य सारूपत्वान्न निरूप्यत इति भावः ॥ ८७ ॥

अमीषां स्थानानां द्वादशाङ्गे निरूपणाद्द्वादशाङ्गाश्रयेणाह—

आचारगोचरविनयवैनयिकस्थानगमनचंक्रमणप्रमाणयोगनियोजनभाषासमितिगुप्तिशय्योपधिभक्तपानोद्गमोत्पादनैषणाविशुद्धिशुद्धाशुद्धग्रहणव्रतनियमतपउपधानान्याचाराङ्गे ॥ ८८ ॥

आचारेति, आचाराङ्गे हि निर्ग्रन्थानां श्रमणानामाचारो व्याख्यायते, तत्राचारो ज्ञानाद्यनेकभेदभिन्नः, गोचरो भिक्षाग्रहणविधिः, विनयो ज्ञानादिविनयः, वैनयिकं तत्फलं कर्मक्षयादि, स्थानकायोत्सर्गोपवेशनशयनभेदात्त्रिरूपम्, गमन—विहारभूम्यादिषु गतिः, चङ्क्रमण—उपाश्रयान्तरे शरीरश्रमव्यपोहार्थमितस्ततः सञ्चरणम्। प्रमाण—भक्तपानाभ्यवहारोपध्यादेर्मानम्, योगनियोजन—स्वाध्यायप्रत्युपेक्षणादिव्यापारेषु परेषां नियोजनम्, भाषा—संयतस्य भाषाः सत्याऽसत्याऽमृषारूपाः, समितयः—ईर्यासमित्याद्याः पञ्च, गुप्तयः—मनोगुप्त्यादयस्तिस्रः, शय्या—वसतिः, उपधिर्वस्त्रादिकः, भक्त—अशनं, पानं—उष्णोदकादीनि, उद्गमोत्पादनैषणानां दोषाणां विशुद्धिः, तया शुद्धानामेव ग्रहणम् तथाविधकारणेऽशुद्धानां ग्रहणम्। व्रतानि—मूलगुणाः, नियमाः—उत्तरगुणाः, तपउपधान—द्वादशविधं तपः एतत्सर्वं सुप्रपञ्चमभिधीयत इति ॥ ८८ ॥

अथ द्वितीयाङ्गवक्तव्यतामाह—

अचिरप्रव्रजितमुनिमनोगुणविशोधनाय स्वसमयसंस्थापकं सूत्रकृताङ्गम् ॥ ८९ ॥

अचिरेति, चिरप्रव्रजितास्तु मुनयो निर्मलमतयो भवन्ति, अहर्निशं शास्त्रपरिचयाद्बहुश्रुतसम्पर्काच्चेति। अचिरकालप्रव्रजिताश्च कुसमयश्रवणेन मोहिताः सन्दिग्धा वा भवेयुः, सोऽयं तेषां यो मनोगुणो बुद्धिपर्यायः स विपर्ययसंशयात्मकत्वेन कुत्सितप्रवृत्तिहेतुत्वादशुभकर्मफलः, तस्य विशोधनाय—निर्मलताधानाय त्रीणि त्रिषष्ठ्यधिकानि परसमयशतानि बहुभिः प्रकारैः प्रतिक्षेपं कृत्वा स्वसमयो—जैनसिद्धान्तः स्थाप्यते सूत्रकृतेन ॥ ८९ ॥

अथ तृतीयाङ्गवक्तव्यतामाह—

जीवादीनां द्रव्यगुणक्षेत्रकालपर्यवा एकादिविधवक्तव्यताश्च स्थाप्यन्ते स्थानेन ॥ ९० ॥

धर्मकथाः, दीर्घत्व सङ्घात्यात्, तत्रोदाहरणभूतमेघकुमारादीना नगरादयो व्याख्यायन्ते तथा धर्मे-वितयवरे विनयकरणजिनस्वामिशासनवरे प्रवचने प्रव्रजितानां संयमप्रतिज्ञापालने ये धृतिमतिव्यवसायास्तेषु दुर्बलाना तत्र धृतिश्चित्तस्वास्थ्य मतिर्बुद्धिः, व्यवसायोऽनुष्ठानोत्साहः, एव तपोनियमो नियन्त्रित तप , तपउपधान–अनियन्त्रित तपः, तत्र पराङ्मुखीभूताना घोरैः परीषहैः पराजितानामत एव प्रतिरुद्धसिद्धालयमार्गगतीना तुच्छेषु विषयसुखेष्वाशावशदोषेण मूर्च्छिताना विराधितज्ञानदर्शनचारित्राणा संसारेऽनन्तक्लेशरूपासु नारकतिर्यक्कुमानुषकुदेवत्वरूपासु दुर्गतिषु परिभ्रमण व्याख्यायते, तथा धीराणा सुगत्यादीनि च ॥ ९३ ॥

अथ सप्तमाङ्गवक्तव्यतामाविष्करोति–

**उपासकानां नगरादीनि शीलव्रतविरमणगुणप्रत्याख्यानपौषधोपवासश्रुतपरिग्रहतपउपधानप्रतिमाद्य उपासकदशासु ॥ ९४ ॥**

**उपासकानामिति,** व्याख्यायन्त इति वचनविपरिणामेनान्वयः, एवमग्रेऽपि । उपासकाः श्रावकाः, तद्गतक्रियाकलापप्रतिबद्धा दशाः–दशाध्ययनोपलक्षिता उपासकदशास्तासु उपासकाना नगरोद्यानचैत्यवनखण्डराजान , अम्बापितरौ समवसरणानि धर्माचार्या धर्मकथा ऐहलौकिकपारलौकिका ऋद्धिविशेषाः, तथा शीलव्रतानि–अणुव्रतानि, विरमणानि–रागादिविरतयः, गुणाः–गुणव्रतानि, प्रत्याख्यानानि नमस्कारसहितादीनि, पौषध –अष्टम्यादिपर्वदिन तत्रोपवसन–आहारशरीरसत्कारादित्यागः, श्रुतपरिग्रहाः प्रसिद्धाः, तपउपधानानि प्रतीतानि, प्रतिमाः–एकादशोपासकप्रतिमाः, उपसर्गाः–देवादिकृतोपद्रवाः, संलेखनाभक्तपानप्रत्याख्यानानि, पादपोपगमनानि, देवलोकगमनानि, सुकुलप्रत्यायाति , पुनर्बोधिलाभोऽन्तक्रिया चैते विशेषेणाऽऽख्यायन्ते ॥ ९४ ॥

अथाष्टमाङ्गवक्तव्यतामादर्शयति—

**अन्तकृतानां नगरादीनि क्षमामार्दवादीनि केवललाभः पादपोपगमनादीन्यन्तकृतदशासु ॥ ९५ ॥**

**अन्तकृतानामिति,** अन्तो विनाशः स च कर्मणस्तत्फलस्य वा संसारस्य, स कृतो यैस्तेऽन्तकृतास्ते च तीर्थकरादय , तेषा दशाः दशाध्ययनोपलक्षिताः तासु, अन्तकृताना नगरादीनि नगरोद्यानचैत्यवनराजानः अम्बापितरौ समवसरणादीनि च, तथा क्षमामार्दवार्जवशौचसत्यसप्तदशविधसंयमोत्तमब्रह्मचर्याकिञ्चन्यतपस्त्यागसमितिगुप्त्यादय , सर्वविरतिं प्राप्ताना जितपरीषहाणा घातिकर्मक्षये सति केवलस्य ज्ञानादेर्लाभः, यावद्रूपाणि प्रव्रज्यापर्यायस्तपोविशेषाश्रयणादिना मुनिभिः पालितो यत्र शत्रुञ्जयपर्वतादौ यावन्ति भक्तानि छेदयित्वा यो मुनिरन्तकृतो जातः तत्सर्वमत्राख्यायते ॥ ९५ ॥

अथ नवमाङ्गवक्तव्यता प्रकटीकरोति–

**अनुत्तरोपपातिकानां नगरादीनि समवसरणानि जिनातिशेषाः श्रमणोत्तमादीना वर्णका अनुत्तरविमानविषयसुखश्चानुत्तरोपपातिकदशासु ॥९६॥**

**अनुत्तरोपपातिकानामिति,** नास्माद्दुत्तरो विद्यत इत्यनुत्तरः, उपपतनमुपपातो जन्म,

अनुत्तरः प्रधानः संसारेऽन्यस्य तथाविधस्याभावादुपपातो येषां ते तथा, त एवानुत्तरोपपातिकास्तद्वक्तव्यताप्रतिपादका दशाः दशाध्ययनोपलक्षिता अनुत्तरोपपातिकदशा', तत्रानुत्तरोपपातिकाना—साधूना नगराण्युद्यानानि चैत्यानि वनखण्डा राजान एवमादयो वर्ण्यन्ते तथा परममाङ्गल्यत्वेन जगद्धितानि तीर्थकरसमवसरणानि जिनातिशेषा अत्रैव द्वात्रिंशसूत्रे उक्ता अतिशयाः जिनशिष्याणा श्रमणोत्तमाना गणधरादीना स्थिरयशसा परीषहवृन्दप्रमर्दकाना तपोदीप्तज्ञानचारित्रदर्शनाना प्रशस्तक्षमागुणध्वजाना श्लाघा आख्यायन्ते तथा ये यत्र यावन्ति च भक्तानि छेदयित्वा लब्ध्वा च समाधिमुत्तम जिनवरध्यानयोगयुक्ता उपपन्ना मुनिवरोत्तमा यथा अनुत्तरेषु प्राप्नुवन्ति चानुत्तरविमानेषु यथा विषयसुखं तत्सर्वमनुत्तरोपपातिकदशास्वाख्यायते ॥ ९६ ॥

अथ दशमाङ्गवक्तव्यता विशदीकरोति—

**प्रश्ना अप्रश्नाः प्रश्नाप्रश्ना विद्यातिशया यक्षादिभिः संवादादयः प्रश्नव्याकरणेषु ॥ ९७ ॥**

**प्रश्ना इति,** प्रश्नः प्रतीतः, तन्निर्वचन व्याकरणं प्रश्नानां व्याकरणानाञ्च योगात् प्रश्नव्याकरणानि, तत्राङ्गुष्ठबाहुप्रश्नादिका मन्त्रविद्याः प्रश्ना', या पुनर्विद्या मन्त्रविधिना जप्यमाना अपृष्टा एव शुभाशुभ कथयन्ति ता अप्रश्नाः, तथाऽङ्गुष्ठादिप्रश्नभाव तदभाव च प्रतीत्य या विद्या शुभाशुभ कथयन्ति ताः प्रश्नाप्रश्नाः, तथा अन्ये विद्यातिशया' स्तम्भस्तोभवशीकरणविद्वेषीकरणोच्चाटनादय', भवनपतिविशेषैर्नागसुपर्णैर्यक्षादिभिश्च सह साधकस्य वास्तविकाः शुभाशुभगताः संलापा एवमादयोऽत्र वर्ण्यन्ते ॥ ९७ ॥

अथैकादशाङ्गवक्तव्यतामाख्याति—

**शुभाशुभकर्मणां फलविपाको विपाकश्रुते ॥ ९८ ॥**

**शुभेति,** विपचनं विपाकः—शुभाशुभकर्मपरिणामस्तत्प्रतिपादक श्रुत विपाकश्रुतम्, तस्मिन् फलरूपो विपाको द्विविधो दुःखविपाकः सुखविपाकश्चेति, तत्र दुःखविपाकाना नगरोद्यानचैत्यवनखण्डराजानो मातापितरौ समवसरणानि धर्माचार्यो धर्मकथा नगरगमनानि संसारप्रबन्धो दुःखपरम्परा वर्ण्यन्ते तथा सुखविपाकाना नगरादयः समवसरणधर्माचार्यधर्मकथा इहपरलौकिकर्द्धयः प्रव्रज्याः श्रुतपरिग्रहास्तपोपधानानि परित्यागाः प्रतिमाः संलेखना' भक्तप्रत्याख्यानानि पादपोपगमनानि देवलोकगमनानि सुकुलप्रत्यायातिः, पुनर्बोधिलाभो तत्क्रिया उपवर्णिता विस्तरेण ॥ ९८ ॥

अथ द्वादशाङ्गवक्तव्यतां प्ररूपयति—

**दृष्टिवादे सर्वभावप्ररूपणा ॥ ९९ ॥**

**दृष्टीति,** दृष्टयो दर्शनानि, वदन वादः दृष्टीना वादो यत्रासौ दृष्टिवादः तत्र सर्वभावप्ररूपणा क्रियते, स समासतः पञ्चविधः परिकर्मसूत्राणि पूर्वगत अनुयोग चूलिका चेति, परिकर्म सप्तविधं सिद्धश्रेणिकापरिकर्म मनुष्यश्रेणिकापरिकर्म पृष्टश्रेणिकापरिकर्म अवगाहनाश्रेणिकापरिकर्म उपसम्पद्यश्रेणिकापरिकर्म विप्रत्यक्तश्रेणिकापरिकर्म च्युताच्युतश्रेणिकापरिकर्मेति षडादिमानि परिकर्माणि स्वसामयिकान्येव, गोशालकप्रवर्तिताऽऽजीविकपाखण्डिकसिद्धान्तमतेन पुनश्च्युताच्युतश्रेणिकापरिकर्मसहितानि सप्त, एतेषामुत्तरभेदतः त्र्यशीतिविधत्वम्। सूत्राणि ऋजुकादीनि द्वाविंशतिः, विभागतोऽष्टाशीतिः,

पूर्वगतं पूर्वसूत्रम् । मूलप्रथमानुयोगो गण्डिकानुयोगश्चेत्यनुयोगो द्विधा, तीर्थंकराणां प्रथमसम्यक्त्वावाप्तिलक्षणपूर्वभवादिगोचरो मूलप्रथमानुयोगः, एकवक्तव्यतार्थाधिकारानुगता वाक्यपद्धतयो गण्डिका उच्यन्ते तासामनुयोगः स अनेकविधः कुलकरतीर्थकरगणधरादिभेदात् । चूलिका चतुर्णां पूर्वाणां चूलिका, शेषाणि पूर्वाण्यचूलिकानीति ॥ ९९ ॥

अस्य द्वादशाङ्गस्य नित्यत्वं सम्भावयितुर्विराधयितुश्च फलमाचष्टे—

**अचलं नित्यं द्वादशाङ्गं विराध्यातीतेऽनागते चानन्ताः प्रत्युत्पन्ने संख्येयाः संसारमनुवर्त्तन्त आराध्य व्यतिव्रजन्ति च ॥ १०० ॥**

अचलमिति, इदं द्वादशाङ्गं गणिपिटकं न कदाचिन्नासीदनादित्वात्, न कदाचिन्न भवति सदैव भावात्, न कदाचिन्न भविष्यत्यपर्यवसितत्वात् किन्त्वभूच्च भवति च भविष्यति चेति त्रिकालभावित्वादचलमत एव मेर्वादिवद्ध्रुवमत एव नियतं पञ्चास्तिकायेषु लोकवचनवत्, नियतत्वादेव शाश्वतं समयावलिकादिषु कालवचनवत्, शाश्वतत्वादेव वाचनादिप्रदानेऽप्यक्षयं गङ्गासिंधुप्रवाहेऽपि पद्मह्रदवत्, अक्षयत्वादेवाव्ययं मानुषोत्तराद्बहिः समुद्रवत्, अव्ययत्वादेव स्वप्रमाणेऽवस्थितं जम्बूद्वीपादिवत्, अवस्थितत्वादेव च नित्यमाकाशवत् । इदं द्वादशाङ्गं विराध्य जीवाश्चतुरन्तं संसारकान्तारमनुपरिवर्त्तन्ते, इदं हि द्वादशाङ्गं सूत्रार्थोभयभेदेन त्रिविधम्, विराधनञ्चाज्ञाया अतश्च सूत्राज्ञयाऽभिनिवेशतोऽन्यथापाठादिलक्षणयाऽतीतकालेऽनन्ता जीवाश्चतुरन्तं संसारकान्तारमनुपरावृत्तवन्तो जमालिवत्, अर्थाज्ञयाऽभिनिवेशतोऽन्यथाप्ररूपणादिलक्षणया गोष्ठामाहिलवत्, उभयाज्ञया तु पञ्चविधाचारपरिज्ञानकरणोद्यतगुर्वादेशादेरन्यथाकरणलक्षणया गुरुप्रत्यनीकद्रव्यलिङ्गधार्यनेकश्रमणवत्, वर्त्तमाने काले विशिष्टविराधकमनुष्यजीवानां संख्येयत्वया संख्येया इत्युक्तम्, त्रिविधामाज्ञामाराध्य जीवाश्चतुर्गतिकसंसारोल्लङ्घनेन मुक्तिमवाप्ता अवाप्नुवन्ति, अवाप्स्यन्ति चानन्ता एवेति ॥१००॥

समवायाङ्गपयोधेरहमहमिकया समुत्थिता मुक्ताः ।
कस्य मनस्योत्कण्ठा नोद्दीपयति स्रजं कर्तुम् ॥

इति श्रीतपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा सङ्कलितायां सूत्रार्थमुक्तावल्यां समवायाङ्गलक्षणा पञ्चमी मुक्तासरिका वृत्ता ।